कार्येयुग्मायुक्ताप्रशस्यतइतिब्रह्मवैवर्त्तात्॥गौरीव्रतेतुविशेषमाहमाधवः॥मुहूर्त्तमात्रसत्वे
पिदिनेगौरीव्रतंपरे॥शुद्धाधिकायामप्येवंगणयोगप्रशंसनादिति॥चतुर्थ्यपिसर्वमतेगणे
शव्रतातिरिक्तापरैव॥युग्मवाक्यात्॥एकादशीतथाषष्ठीअमावास्याचतुर्थिका॥उपो
ष्यापरसंयुक्तापराःपूर्वेणसंयुताइति॥माधवीयेबृहद्वशिष्ठोक्तेश्च॥नागचतुर्थीमध्यान्ह
व्यापिनीपंचमीयुताचग्राह्येति॥माधवीयेनिर्णयामृतेचोक्तम्॥युगंमध्यंदिनेयत्रतत्रोपो
ष्यफणीश्वरान्॥क्षीरेणाप्याय्यपंचम्यांपूजयेत्प्रयतोनरः॥विषाणितस्यनश्यंतिनतं-
हिंसंतिपन्नगाइति॥माधवीयेदेवलोक्तेः॥युगंचतुर्थीपूर्वमध्यान्हव्याप्तौ॥पूर्वाअन्यपक्षेतुपरे
वपंचम्यांपूजोक्तेः॥गणेशव्रतेतुतृतीयायुतैव॥चतुर्थीतुतृतीयायांमहापुण्यफलप्रदा॥
कर्त्तव्याव्रतिभिर्वत्सगणनाथसुतोषिणी॥तिहेमाद्रौब्रह्मवैवर्त्तात्॥माधवीयेतु॥गणेश
व्रतेमध्यान्हव्यापिनीमुख्या॥चतुर्थीगणनाथस्यमातृविद्धाप्रशस्यते॥मध्यान्हव्यापि
नीचेत्स्यात्परतश्चेत्परेहनीतिबृहस्पतिवचनात्॥प्रातःशुक्लतिलैःस्नात्वामध्यान्हेपूज
येन्नृपेतितत्कल्पेभिधानाच्च॥तेनपरदिनेतद्व्याप्तौपरा॥अन्यथापूर्वेत्युक्तं॥वस्तुतस्तुभा
द्रशुक्लेचतुर्थ्यादौयत्रगणेशव्रतविशेषेमध्यान्हपूजोक्तातद्विषयाण्येवप्रागुक्तवच
नानिनतुसार्वत्रिकाणि॥संकष्टचतुर्थ्यादौबहूनांकर्मकालानांबाधापत्तेः॥तेनसर्वत्र
गणेशव्रतेपूर्वैवेतिसिद्धम्॥संकष्टचतुर्थीतुचंद्रोदयव्यापिनीग्राह्या॥दिनद्वयेतत्वेमातृ
योगस्यसत्वात्पूर्वैवेतिकेचित्॥अन्येतुदिनेमुहूर्तत्रयादिरूपस्यतृतीयायोगस्याभावा
त्परदिनेमाधवोक्तमध्यान्हव्याप्तिसत्वात्संपूर्णत्वाच्चपरेत्याचक्षते॥दिनद्वयेतदभावे
तुपरैवगौरीव्रतेपूर्वैव॥गणेशगौरीवहुलाव्यतिरिक्ताःप्रकीर्त्तिताः॥चतुर्थ्यःपंचमीविद्धा
देवतांतरयोगतइति॥मदनरत्नेब्रह्मवैवर्त्तात्॥पंचमीतुमाधवमतेसर्वापिपूर्वाचतुर्थी
संयुताकार्यापंचमीपरयानतु॥दैवेकर्मणिपित्र्येचशुक्लपक्षेतथासितइतिहारीतोक्तेः
॥हेमाद्रिमतेतुकृष्णापूर्वासितापरा॥कृष्णापूर्वयुतासितापरयुतास्यात्पंचमीतिदीपिको
क्तः॥वस्तुतस्तुहारीतोक्तिरुपवासविषया॥प्रतिपत्पंचमीचैवसावित्रीभूतदर्शमा
॥नवमीदशमीचैवनोपोष्याःपरसंयुताइतिब्रह्मवैवर्त्तात्॥यत्तु॥पचमीतुप्रकर्त्तव्या॥
षष्ठ्यायुक्तातुनारदेत्यापस्तंबीयंतन्नागपूजाविषयमित्यनंतभट्टनिर्णयामृतादयः॥च
मत्कारचिंतामणौच॥पंचमीनागपूजायांकार्याषष्ठीसमन्विता॥तस्यांतुतुषितानागा॥
इतरासचतुर्थिकेति॥तेननागपूजादौपरैव॥यत्तुमदनरत्नदिवोदासीययोःश्रावणांपं
चम्यतिरिक्तापूर्वेत्युक्तं॥श्रावणेपंचमीशुक्लासंप्रोक्तानागपंचमी॥तांपरित्यज्यपंच-
म्यश्चतुर्थीसहिताहिता॥इतिसंग्रहोक्तेः॥गणेशस्कंदयोगाभ्यांक्रमान्नागःशुभाशुभ
॥मित्रामित्रेतयोःपत्रेनागानामाखुवर्हिणामिति॥षट्त्रिंशन्मताच्चचतुर्थीयुतत्वमुक्तं
तदुपवासादिविषयम्॥यत्तेवाहने॥षष्ठीसर्वमतेस्कंदव्रतातिरिक्तापरैवयुग्मवाक्यात्
॥नागविद्धानकर्त्तव्याषष्ठीचैवकदाचनेतिस्कांदाच्च॥सप्तमीपूर्वैवयुग्मवाक्यात्॥ष-

ष्ठ्यायुतासप्तमीचकर्तव्यातातसर्वदेतिस्कांदाच्च निर्णयामृते॥षष्ठीचसप्तमीचैववारश्
श्चेदंशुमालिनः॥योगोयंपद्मकोनामसूर्य्यकोटिग्रहैःसमः॥अष्टमीतुसर्वमतेकृष्णा
पूर्वासितापरा॥व्रतमात्रेऽष्टमीकृष्णापूर्वाशुक्लाष्टमीपरेति॥माधवोक्तेः॥परयुक्शुक्ला
ष्टमीपूर्वयुक्कृष्णेति॥दीपिकोक्तेश्च॥शिवशक्त्युत्सवेतूत्तरा॥पक्षद्वयेप्युत्तरैवशिवश
क्तिमहोत्सवइतिमाधवोक्तेः॥दिवोदासीयेभविष्ये॥यदायदासिताष्टम्यांबुधवारोभवे
त्कचित्॥तदातदाहिसायाह्यएकभक्ताशनेनृप॥संध्याकालेतथाचैत्रेप्रसुप्तेचजना
र्दने॥बुधाष्टमीनकर्तव्याहंतिपुण्यंपुराकृतं॥नवमीतुसर्वमतेऽष्टमीयुग्मवाक्यात्॥न
कुर्यान्नवमींतातदशम्यांतुकदाचनेतिस्कांदाच्च॥दशमीतुपूर्वोत्तरावेतिहेमाद्रिः॥
कृष्णापूर्वोत्तराशुक्लादशम्येवंव्यवस्थितेतिमाधवः॥वस्तुतस्तुमुख्यानवमीयुतैवग्राह्या॥
दशमीतुप्रकर्तव्यासदुर्गाद्विजसत्तमेत्यापस्तंबोक्तेः॥यत्तु॥संपूर्णादशमीकार्यापूर्वयापर
यायवेति॥अंगिरसोक्तंतन्नवमीयुक्तालाभेऽत्रोदीपिकीयाशयेनोन्नेयं॥अथैकादशी॥
तत्रैकादश्युपवासोद्वेधा॥निषेधपरिपालनात्मकोव्रतरूपश्च॥तत्राद्यः॥नशंखेनपि
बेत्तोयंनखादेन्मत्स्यसूकरौ॥एकादश्यांनभुंजीतपक्षयोरुभयोरपिइतिकौर्मेदेवला
द्युक्तः॥अग्निपुराणेपि॥गृहस्थोब्रह्मचारीचआहिताग्निस्तथैववा॥एकादश्यांनभुं
जीतपक्षयोरुभयोरपीति॥नचात्रपर्युदासेनव्रतविधिस्तद्वेतुव्रतादिशब्दाभावात्
॥व्रतरूपस्तुब्रह्मवैवर्ते॥प्राप्तेहरिदिनेसम्यक्विधायनियमंनिशि॥दशम्यामुप
वासस्यप्रकुर्याद्वैष्णवंव्रतमिति॥इदंचशिवभक्तादिभिरपिकार्य्यम्॥वैष्णवोवाथ
शैवोवाकुर्य्यादेकादशीव्रतमितिशिवधर्मोक्तेः॥वैष्णवोवाथशैवोवासौरोप्येतत्स
माचरेदिति॥सौरपुराणाच्च॥सोपिद्वेधा॥नित्यःकाम्यश्च॥उपोष्यैकादशीनित्यं
पक्षयोरुभयोरपीतिगारुडोक्तेः॥पक्षेपक्षेचकर्तव्यमेकादश्यामुपोषणमिति
नारदोक्तेश्चनित्यता॥यदिच्छेद्विष्णुसायुज्यंश्रियंसंततिमात्मनः॥एकादश्यांन
भुंजीतपक्षयोरुभयोरपीति।कौर्मादिषुफलश्रुतेश्चकाम्यता॥उभयैकादशी
व्रतंचगृहस्थातिरिक्तानामेवनित्यं॥गृहस्थस्यतुशुक्लायामेवव्रतंनित्यंनकृ
ष्णायां॥एकादश्यांनभुंजीतपक्षयोरुभयोरपिवनस्थयतिधर्मोयंशुक्लामेवसदागृही
तिदेवलोक्तेः॥नचानेननिषेधपालनमेववनस्थयतिविषयेउपसंह्रियतेनतुव्रतमिति
वाच्यम्अस्यपर्युदासेनव्रतविधिपरत्वात्॥अन्यथापूर्वोक्ताग्निपुराणवचनेनिषेधपा
लनेगृहस्थस्याधिकारोक्तिविरोधःस्यात्॥निषेधस्यनिवृत्तिमात्रपरत्वेनविशेषानपे
क्षणादुपसंहारायोगात्॥अभावस्यधर्मत्वाभावाच्च॥तस्मादनेनसर्वेषामेकादशीव्र
तविधायिनांसामान्यवाक्यानांवनस्थयतिविषयेउपसंहाराद्गृहस्थस्यकृष्णायां
नित्यव्रतप्राप्तिः॥कथंतर्हि॥संक्रांत्यामुपवासंचकृष्णैकादशिवासरे।चंद्रसूर्यग्रहेचैव
नकुर्यात्पुत्रवान्गृहीतिनारदादिवचनेषुकृष्णानिषेधः॥प्राप्त्यभावादितिचेत्॥

सूयताम्॥शयनीबोधिनीमध्यगाकृष्णैकादशीभवेत्॥सैवोपोष्यागृहस्थेननान्याकृष्णाक
दाचनेति॥पाद्मेगृहस्थस्याषाढीकार्त्तिकीमध्यस्थायाःकृष्णा[illegible]पुत्रवतोनिषिध्यते
अन्यकृष्णायांतुनविधिः॥सर्वविधीनांवनस्थयतिषूपसंहारात्॥ननिषेधःप्राप्त्यभावा
त्॥शयनादिवाक्यंतुपुत्रगृहिगोचरमित्यनंतभट्टहेमाद्र्यादिग्रंथाः॥दीपिकापि॥असि
तानुशयनीबोधांतरस्थाप्यथोनस्यात्तामजिनोपीति॥मदनरत्नेभविष्येऽपि॥यथाशु
क्लातथाकृष्णाद्वादशीमेसदाप्रिया॥शुक्लागृहस्थैःकर्त्तव्याभोगसंतानवर्द्धिनी॥मुमुक्षु
भिस्तथाकृष्णानतेतेनोपदर्शितेति॥निषेधपालनंकाम्यव्रतंचसर्वकृष्णायांसर्वगृहिणां
संभवत्येव॥पुत्रवांश्चसभार्यश्चवंधुयुक्तस्तथैवच॥उभयोःपक्षयोःकाम्यव्रतंकुर्या
त्तुवैष्णवमितिनारदोक्तेः॥एतच्चसर्वंकालादर्शउक्तम्॥विधवायावनस्थस्ययतेश्चैका
दशीद्वये॥उपवासोगृहस्थस्यशुक्लायामेवपुत्रिणः॥भुजेर्निषेधःकृष्णायांसिद्धस्तस्य
ततोव्रतइति॥प्राच्यास्तुवैष्णवगृहस्थानांकृष्णापिनित्या॥नित्यंभक्तिसमायुक्तैर्नरैर्विष्णु
परायणैः॥पक्षेपक्षेचकर्त्तव्यमेकादश्यामुपोषणं॥सपुत्रश्चसभार्यश्चस्वजनोभक्तिसं
युतः॥एकादश्यामुपवसेत्पक्षयोरुभयोरपीतिनारदोक्तेरित्याहुः॥पुत्रशब्दश्चापत्यमात्र
वचनः॥नारायणवृत्तौ॥पुमांसएवमेपुत्राजायेरन्नित्यत्रापत्यमात्रवाचित्वोक्तेः॥जन
येद्बहुधापुत्रानितिलिंगात्॥पौत्रीमातामहस्तेनेतिमनूक्तेः॥पुत्र्याश्चापत्यमित्यर्थेस्त्री
भ्योढक्॥पौत्रेयइत्यापत्तेः॥पुमान्पुत्रोजायतइतिच॥उपवासनिषेधेविशेषोवायवी
येउक्तः॥उपवासनिषेधेतुकिंचिद्भक्ष्यंप्रकल्पयेत्॥नदुष्यत्युपवासेनउपवासफलंलभे
त्॥भक्ष्यंचतत्रोक्तं॥नक्तंहविष्यान्नमथौदनंचफलंतिलाःक्षीरमथांबुचाज्यम्॥यत्पंच
गव्यंयदिवापिवायुःप्रशस्तमत्रोत्तरमुत्तरंचेत्यलं॥तत्रदशमीवेधोद्विधा॥अरुणोदयवे
धःसूर्योदयवेधश्चेति॥आद्योगारुडे॥दशमीशेषसंयुक्तोयदिस्यादरुणोदयः॥नैवोपोष्यं
वैष्णवेनतद्दिनैकादशीव्रतमिति॥अरुणोदयस्वरूपंचमाधवीयेस्कांदे॥उदयात्प्राक्च
तस्रस्तुघटिकाअरुणोदयइतियदपि॥उदयात्प्राक्यदाविप्रमुहूर्त्तद्वयसंयुता॥संपूर्णैका
दशीनामतत्रैवोपवसेद्गृहीतिगारुडेसौरधर्मादिवचनं॥यच्चभविष्ये॥आदित्योदयवेला
याःप्राङ्मुहूर्त्तद्वयान्विता॥एकादशीतुसंपूर्णाविद्धान्यापरिकीर्त्तितेति॥तदप्युपसंहारन्याये
नदंडचतुष्टयपरमेव॥हेमाद्रावप्येवं॥यत्तुब्रह्मवैवर्त्तेचतस्रोघटिकाःप्रातररुणोदयनि
श्चयः॥चतुष्टयविभागोत्रवेधादीनांकिलोदितः॥अरुणोदयवेधःस्यात्सार्द्धंतुघटिकात्र
यं॥अतिवेधोद्विघटिकःप्रभासंदर्शनाद्रवेः॥महावेधोपितत्रैवदृश्यतेर्कोनदृश्यते॥तुरी
यस्तत्रविहितोयोगःसूर्योदयेबुधैरिति॥तदप्यव्यवहारादरुणोदयवेधविशेषपरमेवे
तिमाधवीयेमदनरत्नेच॥अन्यस्तूदयवेधः॥तथापिहेमाद्रौमाधवीयेगारुडे॥उदया
त्प्राक्त्रिघटिकाव्यापिन्येकादशीयदा॥संदिग्धैकादशीनामवर्ज्येयंधर्मकांक्षिभिः॥उद
यात्प्राङ्मुहूर्त्तेनव्यापिन्येकादशीयदा॥संयुक्तैकादशीनामवर्ज्येयंधर्मवृद्धये॥हेमा॥

द्वौरात्रेरंत्योऽष्टमभागोप्यरुणोदयउक्तः॥निशःप्रांतेतुयामौद्वौदेववादित्रवादने॥सारस्व
तान्ध्ययनेवारुणोदयउच्यतइतिस्मृतेः॥अत्रैकेएषांसर्वपक्षाणांमुहूर्त्तद्वयेनकोऽधिका
रान्निशःप्रांतइतिवचनाच्चरात्रिमानवशात्सार्धत्रिदंडादयोनेकेरुणोदयाः॥तदाहहेमा
द्रिः॥सार्धघटिकात्रयोन्निरष्टाविंशतिघटिकामानरात्रिविषयामहत्तरास्तुरात्रीरपेक्ष्यच
तस्रोघटिकास्त्वुक्तमिमाहुः॥तन्न॥अरुणोदयशब्दस्यानेकार्थत्वापत्तेः॥नचमुहूर्त्तद्व
यमर्थः दंडद्वयैकमुहूर्त्तादिद्वैधानांतथाप्यनुपपत्तेः॥नहितेषांयामार्धत्वमरुणोदयत्वं
चास्तिमुहूर्त्तद्वयस्ययामार्धस्यचचतस्रोघटिकास्त्वनेनोपसंहाराच्चनतदर्थः॥नचसा
र्धत्रिघटिकात्रयमित्यनेनापितदापत्तिःशंक्या॥तेनचतुर्दंडवेधस्यैवोक्तेः॥चतुर्दंडोर्ध्वघटी
दशमीसत्वेहिवेधस्तदर्थः॥द्विघटिकादौनद्योगाच्च॥यत्तुमतं।कियतारुणोदयेवेध
इत्यपेक्षायांसार्धघटिकात्रयनियमादरुणोदयेर्धघटिकातोन्यूनदशमीसत्वेनदोषइ
ति।तन्न॥द्विदंडादावपितदापत्तेः॥दशमीशेषसंयुक्तोयदिस्यादरुणोदयः॥नैवोपो
ष्यंवैष्णवेनतद्दिनेकादशीव्रतमितिगारुडेभविष्येचयोगमात्रेनिषेधात्॥नारदीयेपि॥
लववेधेपिविप्रेंद्रदशम्येकादशींत्यजेत्॥सुरायाबिंदुनास्पृष्टंगंगांभइवनिर्मलं॥स्कांदे
पि॥कलाकाष्ठादिगोप्येवंदृश्यतेदशमीविभो॥एकादश्यांनकर्तव्यंव्रतंराजन्कदाचने
ति।माधवोप्याह॥सोयंकलादिवेधोरुणोदयवेधेसूर्योदयवेधेचसमानइति॥निगमे
पि॥सर्वप्रकारवेधोयमुपवासस्यदूषकइति॥अतएवमाधवेनारुणोदयोर्धदंडोल्पद
शमीस्पर्शसंसृष्टा॥कल्पत्रयघटिकायोगेसंदिग्धा॥मुहूर्त्तमात्रेसंपृक्ताउदयेसंकीर्णे
त्युक्ता।अरुणोदयवेलायांदशमीयदिसंगता॥संदष्टैकादशींतांतुमोहिन्यैदत्तवान्
प्रभुरितिगोभिलाद्युक्तेः॥इत्युक्तंगारुडादेश्च॥सामान्यतोविशेषतश्चारुणोदयवेधो
निषिद्धः॥यत्त्वष्टमभागोरुणोदयइतिहेमाद्रिणोक्तम्यच्चमहत्तरायात्रीरितितत्पर
मतं।स्वयमेवदूषितंत्रितेप्युक्तं॥वेधतारतम्यंचदोषतारतम्यादुपपद्यतइति।दोष
तारतम्यंचप्रायश्चित्ततारतम्यादवगम्यते।तच्चोक्तंहेमाद्रौस्मृत्यंतरे।अज्ञानाद्यदि
वामोहात्कुर्याच्चैकादशींनरः॥दशमीशेषसंयुक्तांप्रायश्चित्तमिदंचरेत्॥हकूपादं
नरःक्षीत्वागांचदद्यात्सवत्सिकां॥सुवर्णस्यार्धकंदेयंतिलद्रोणसमन्वितं॥विधानांत
रंतत्रैव॥ब्राह्मणान्भोजयेत्त्रिंशत्तांचदद्यात्सवत्सिकां॥धरणस्यार्धकंदेयंतिलद्रोण॥
मथापिवेति॥अत्रवेधतारतम्यायवक्ष्यति।हेमाद्रिः॥निशःप्रांतेइत्यपिदोषाधिक्यार्थ
मेव॥तस्माच्चतुर्घटिकात्मकएवारुणोदयइतिसिद्धं॥तेनषट्पंचाशद्दंडानंतरंदश
मीप्रवेशेअरुणोदयवेधउक्तोभवति।अल्पोपितत्रैवकएवेनोक्तः॥उदयोपरिविद्धा
तुदशम्येकादशीयदि॥दानवेभ्यःप्रीणनार्थंदत्तवान्पाकशासनइति॥स्मृत्यंतरेपि।
दशम्याःप्रांतमादायपदोदेतिदिवाकरः॥तेनस्पष्टंहरिदिनंदत्तंजंभासुरायवैइति॥त
त्रारुणोदयवेधोवैष्णवविषयः॥तद्वाक्येषुवैष्णवग्रहणात्तत्स्वरूपंतुमाधवीयेस्कां

दे॥ परमापदमापन्नो हर्षे वा समुपस्थिते॥ नैकादशीं त्यजेद्यस्तु यस्य दीक्षास्ति वैष्णवी॥ विष्णु
र्पिताखिलाचारः स हि वैष्णव उच्यत इति॥ अत्रानेषामतिप्रसक्तेरव्यभिचाराद्वैष्णवदीक्षा
वत्त्वमेव वैष्णवत्वं॥ यद्यपि पित्रादेरागमदीक्षायां तन्मात्रस्यैव वैष्णवत्वं न तु पुत्रादेः॥ त
थापि स्वपारंपर्यप्रसिद्धमेव वैष्णवत्वं स्मार्तत्वं च मन्यंते वृद्धाः॥ तत्त्वसागरे भविष्ये॥ य
थाशुक्ला तथा कृष्णा यथा कृष्णा तथेतरा॥ तुल्यैते मन्यते यस्तु स वै वैष्णव उच्यते॥ के
चित्तु दशम्यां नवमीवेधमपि त्यजंति॥ तत्र मूलं मृग्यं॥ उदयवेधस्तु परिशेषात् स्मार्त
गोचरः॥ तदाह माधवः॥ अरुणोदयवेधोत्र वेधः सूर्योदये तथा॥ उक्तौ द्वौ दशमीवे
धौ वैष्णवस्मार्तयोः क्रमात्॥ हेमाद्रिस्तु॥ केषांचिदर्धरात्रेपि दशमीवेधमाह॥ अर्धरा
त्रे तु केषांचिद्दशम्या वेध इष्यते॥ कपालवेध इत्याहुराचार्या ये हरिप्रियाः॥ न तन्मम मतं य
स्मात् त्रियामा रात्रिरिष्यत इति ब्रह्मवैवर्तात्॥ अस्यार्थः॥ अनद्यतने लङिति सूत्रातीतायाः रात्रेः
पश्चिमं यामद्वयमागामिन्याः रात्रेः पूर्वं यामद्वयं दिवसश्च सकल एषोद्यतनः कालः॥ इत्युक्तं
महाभाष्ये स एव वर्तमानः काल एकादश्यहोरात्र उपोष्या॥ तन्मध्ये दशमीप्रवेशे विद्धा।
सा त्याज्या॥ अत एव हेमाद्रौ दशम्याः संगदोषेणार्धरात्रात्परेण तु॥ वर्जयेच्च तुरीयामा
न् संकल्पार्चनयोः सदेति॥ तत्र दोष उक्तः॥ चतुरो यामान् दिवसस्येत्यर्थः॥ स्वमते तु रा
त्रेस्त्रियामत्वात् प्रहरत्रय एव पूर्वशेषः॥ तेन चतुर्थप्रहर एव वेधो युक्तः॥ सोप्यरुणोदय
एव सूर्योदयं विना नैव स्नानदानादिकर्म इति मार्कंडेयपुराणात्॥ अत्र वोहमुख्यं क
ल्प इति कोशादरुणोदयमारभ्य सूर्यास्तप्रहरेस्तत्रैव निषेधः॥ तेन मते भेदाद्यवस्थे
ति केचित्॥ कैमुतिकन्यायेनारुणोदयवेधस्यैवेयं स्तुतिरिति तु माधवः॥ यस्तु दिक्
पंचदशभिस्तथेति वेधः स उपवासातिरिक्तविषय इति माधवः॥ सर्वप्रकारवेधोयमु
पवासस्य दूषकः॥ सार्धसप्तमुहूर्तस्तु योगो ग्रं बाधते व्रतमिति निगमादित्यलं॥ तत्र माध
वमते वैष्णवैररुणोदयविद्धा त्याज्या॥ यदा त्वेकादश्येव शुद्धा सती वर्धते द्वादशी वोभयं
वा तदा परैवोपोष्या॥ एकादशी द्वादशी वाधिका चेत्त्यज्यतां दिने॥ पूर्वं याहं तूत्तरं स्यादि
ति वैष्णवनिर्णयः॥ इति माधवोक्तेः॥ स्मार्तैस्तु सूर्योदयविद्धा त्याज्या॥ यदा त्वेकादशी
शुद्धा सती वर्धते द्वादशी च समा न्यूना वा तदा गृहस्थैः पूर्वा यतिभिरुत्तरा कार्या॥ प्रथमेह
नि संपूर्णा व्याप्याहोरात्रसंयुता॥ द्वादश्यां च तथा तात दृश्यते पुनरेव च॥ पूर्वा कार्या गृ
हस्थैश्च यतिभिश्चोत्तरा विभो इति स्कांदोक्तेः॥ वर्धमानोप्येवमाह॥ उभयवृद्धौ तु शुद्धो
विद्धा वा सर्वेषां परैव॥ संपूर्णैकादशी यत्र प्रभाते पुनरेव सा॥ सर्वैरेवोत्तरा कार्या पर
तो द्वादशी यदि इति नारदोक्तेः॥ द्वादशीमात्रवृद्धौ शुद्धायां सर्वैर्व॥ न चेदेकादशीविद्धो
द्वादशी परतः स्थिता॥ उपोष्यैकादशी तत्र यदीच्छेत्परमं पदमिति नारदोक्तेः॥ द्वाद
शीमात्रवृद्धौ तु शुद्धवृद्धेव व्यवस्थिते॥ शुद्धा पूर्वोत्तरा विद्धा स्मार्तनिर्णय ईदृशः॥ इति मा
धवोक्तेश्च॥ मदनरत्नेप्येवं॥ यत्तु॥ विद्धाप्यविद्धा विज्ञेया परतो द्वादशी न चेत्॥ अवि

द्वापिचविद्धास्यात्परतोद्वादशीयदीतिहेमाद्रौपद्मवचनम्॥तदेकादश्यांवृद्धौज्ञेयं॥तदु
क्तंमाधवेन॥एकादशीद्वादशीचेदुभयंवर्द्धतेयदा॥तदाश्वोदिनंत्याज्यंस्मार्त्तैर्ग्राह्यंपरं
दिनमितिविद्धैकादश्यांद्वादशीमात्रवृद्धौचसर्वेषांपरैव॥तत्रैवैकादशीमात्रवृद्धौगृहि
णःपूर्वांयतेरुत्तरा॥पूर्वोक्तपद्मोक्तेः॥एकादशीविवृद्धाचेच्छुक्लेकृष्णेविशेषतः॥उत्त
रांतुयतिःकुर्य्यात्पूर्वामुपवसेद्गृहीतिप्रचेतसोक्तेः॥एतच्छुद्धाविद्धातुल्यमितिमाधव
॥त्रयोदश्यांनलभ्येतद्वादशीयदिकिंचन॥उपोष्यैकादशीतत्रदशमीमिश्रितापिचे
तिस्कांदात्॥अविद्धानिनिषिद्धैश्चनलभ्यंतेदिनानितु॥मुहूर्तैःपंचभिर्विद्धाग्राह्यैवैका
दशीतिथिरितिऋष्यशृंगोक्तेः॥मुहूर्तपंचकमरुणोदयमारभ्यज्ञेयम्॥अन्यथोत्तरे
ऽह्निएकादश्यभावासंभवात्॥तथाचसएव॥सर्वत्रैकादशीकार्य्याद्वादशीमिश्रिता
नरैः॥प्रातर्भवतुवामाभूद्यस्मान्नित्यमुपोषणमिति॥यदपिहेमाद्रिणाशुद्धसमाशु
द्धन्यूनावाधिकद्वादशिकाचेत्सर्वेषांपरैवेत्युक्तंतदपिवैष्णवविषयम्॥स्मार्त्तानांतु
पूर्वैवेत्यविरोधः॥हेमाद्रिमतेतूच्यते॥तत्र॥शुद्धाविद्धाद्वयीनंदात्रेधान्यूनसमाऽधिकैः
षट्प्रकाराषुनस्त्रेधाद्वादश्यूनसमाधिकैरित्यष्टादशैकादशीभेदाः॥तत्रशुद्धाधिक
न्यूनद्वादशिकाशुद्धाधिकसमद्वादशिकाचसकामैःपूर्वानिष्कामैरुत्तराकार्य्या॥अथ
मेहनिसंस्पर्शोतिपूर्वोक्तस्कांदात्॥ऊनद्वादशिकायांतुविष्णुप्रीतिकामैरुपवासद्वयं
कार्यम्॥संस्पर्शैकादशीयत्रप्रभातेपुनरेवसा॥लुप्यतेद्वादशीतस्मिन्नुपवासःकथंभ
भवेत्॥उपोष्येद्वेतिथीतत्रविष्णुप्रीणनतत्परैरितिवृद्धवसिष्ठोक्तेः॥शुद्धन्यूनाःशुद्धा
धिकाशुद्धसमाविद्धन्यूनाविद्धसमावाधिकद्वादशिकाचेत्सर्वेषांपरैवेतिहेमाद्रिः॥
मदनरत्नेतुशुद्धाधिकापरासंस्पर्शैकादशीयत्रेतिपूर्वोक्तेः॥अमापूर्वा॥शुद्धायदास
माहीनासमाहीनाधिकोत्तरा॥एकादशीमुपवसेत्सशुद्धांवैष्णवीमपीतिस्कांदात्॥शु
द्धाएकादशी॥उत्तराद्वादशीनचेदेकादशीविष्णावितिनारदोक्तेश्च॥यत्तुअविद्धापिच
विद्धास्यादितिपाद्मंतच्छुद्धाधिकापरं॥यत्तुसंस्पर्शैकादशीन्याज्यापरतोद्वादशीयदि॥
उपोष्याद्वादशीशुद्धाद्वादश्यामेवपारणमित्यादितद्वैष्णवपरं॥स्मार्त्तानांतुपूर्वैवेत्युक्तं
॥विद्धन्यूनासमद्वादशिकातुमुमुक्षूणांपुत्रवतांचपरा॥अन्येषांपूर्वापुत्रवतोपिपूर्वे
तिमदनरत्नेविद्धन्यूनान्यूनद्वादशिकाचसैवसर्वैःकार्य्येतिहेमाद्रिः॥मुमुक्षूणांपरा
न्येषांपूर्वेतिमदनरत्ने॥विद्धसमासमद्वादशिकोनद्वादशिकाचमुमुक्षुभिः॥परा
न्यैःपूर्वैवकार्य्या॥दशमीमिश्रितापूर्वाद्वादशीयदिलुप्यते॥शुद्धैवद्वादशीराजन्नु
पोष्यामोक्षकांक्षिभिरितिव्यासोक्तेः॥मोक्षकांक्षिग्रहणादन्येषांपूर्वैव॥सर्वत्रैका
दशीकार्य्याद्वादशीमिश्रितानरैः॥प्रातर्भवतुवामावायतोनित्यमुपोषणमितिपा
द्मोक्तेः॥विद्धाधिकसमद्वादशिकाचसर्वेषांपूर्वैव॥पारणाहेनलभ्येतद्वादशीक
लयापिचेत्॥तदानींदशमीविद्धाप्युपोष्यैकादशीतिथिरितिऋष्यशृंगोक्तेश्च॥मा

धवमतेतु अत्र गृहिणां सर्वा॥ यतेरुत्तरा॥ विद्धाधिकन्यूनद्वादशिकामोक्षपापक्षयविष्णुप्रीति
कामैः परा कार्या॥ गृहस्थेन तु नक्तं कार्यं॥ एकादशी द्वादशी च रात्रिशेषे त्रयोदशी॥ उप
वासं न कुर्वीत पुत्रपौत्रसमन्वितः॥ इति कौर्मे दिनक्षये उपवासनिषेधात्॥ दशम्येकाद
शीविद्धा द्वादशी च क्षयंगता॥ क्षीणा सा द्वादशी ज्ञेया नक्तं तु गृहिणः स्मृतमिति॥ इदं शा
तातपोक्तेश्च॥ गृहिणः सर्वत्रोपवासः एकादश्यां शुद्धन्यूनत्वे शुद्धसमत्वे वा द्वादश्यां न्यू
नसमत्वयोरेकादश्यामुपवासः॥ यानि तु दशम्यनुगता हंति द्वादश द्वादशीफलं॥ धर्म.
पत्यधनायूंक्षित्रयोदश्यां तु पारणमिति कौर्मादीनि दशमीवेधत्रयोदशीपारणयो
र्निषेधकानि तानि विहितभिन्नपराणि॥ अत्र मूलवचनानि तद्व्यवस्था चाकरे ज्ञेया
यत्तु कालहेमाद्रौ॥ बहुवाक्यविरोधेन संदेहो जायते यदा॥ द्वादशी तु यदा ग्राह्या त्रयोद
श्यां तु पारणमिति मार्कंडेयोक्तेः॥ संदिग्धेषु च वाक्येषु द्वादशीं समुपोषयेत्॥ तथा वि
वादेषु च सर्वेषु द्वादश्यां समुपोषणं॥ पारणं च त्रयोदश्यामाज्ञेयं मामकी मुने इति पा
द्मोक्तेश्च॥ वेधसंदेहे ज्ञो निर्विदां विप्रतिपत्तौ वा परा कार्येत्युक्तम्। तद्देश्यमेव विषयमि
त्यलं बहुना॥ अथात्रोपयुक्तं किंचिदुच्यते॥ तत्र दशम्यामेकादशीयोगे दशमीमध्य
एव भोजनं कार्यम्॥ एकादश्यां न भुंजीतेति तस्या एव निमित्तत्वात्॥ निषेधस्तानिवृ
त्यात्मा कालमात्रमपेक्षत इति देवलोक्तेश्च॥ केचित्तु॥ एकादशीव्रतांगत्वेन सर्वेष्वे
कभक्तविधानाद्विधिस्पृष्टे च निषेधानवकाशात्काम्यव्रतांगे भोजने निषेधः त्र
वृत्ते तेनैकादशीमध्येपि सर्वदिने भोजनमित्याहुः॥ अत्राधिकारी माधवीये कात्याय
नोक्तः॥ अष्टवर्षाधिको मर्त्यो ह्यशीतिर्न्यूनवत्सरः॥ एकादश्यामुपवसेत्पक्षयोरुभ
योरपीति भविष्ये॥ ब्रह्मवैवर्ते। ब्रह्मचारी च नारी च शुक्लामेव सदा गृहीति॥ य
त्तु विष्णुपत्यो जीवति या नारी उपोष्य व्रतमाचरेत्॥ आयुष्यं हरते भर्तुर्नरकं चैव गच्छ
तीति तद्भर्तुरननुज्ञाविषयमिति प्रागुक्तम्॥ उपवासासामर्थ्ये तु मार्कंडेयकौर्मयोः
एकभक्तेन नक्तेन तथैवायाचितेन च॥ उपवासेन दानेन न निर्द्वादशिको भवेत्॥ अ
त्र एकभक्तेन यो मर्त्य उपवासव्रतं चरेदित्येकभक्तादिषूपवासशब्दस्तद्धर्मातिदेशार्थः
तेन तत्प्रयुक्ताः सर्वे धर्मास्तत्स्थानापन्नेपि भवन्ति॥ संकल्पमंत्रे चैकभक्तादिपदनो
हः कार्य इति मदनरत्ने॥ तथासामर्थ्ये प्रतिनिधिना कारयेदिति प्रागुक्तम्॥ व्रताक
रणे प्रायश्चित्तमाह। माधवीये कात्यायनः॥ अर्के पर्वद्वये रात्रौ चतुर्दश्यष्टमी दिवा॥
एकादश्यामहोरात्रं भुक्त्वा चांद्रायणं चरेदिति॥ अथ काम्यव्रतविधिर्बृहन्नारदीये।
दशम्यादिमहीपाल त्रिदिनं परिवर्जयेत्॥ गंधतांबूलपुष्पादि स्त्रीसंभोगं महायश
ः॥ तत्र दशम्यां विधिः कौर्मे॥ कांस्यं मांसं मसूरांश्च चणकान् कोरदूषकान्॥ शाकं
मधु परान्नं च त्यजेदुपवसन् स्त्रियं॥ तथा॥ शाकं मांसं मसूरांश्च पुनर्भोजनमैथुने॥
द्यूतमत्यंबुपानं च दशम्यां वैष्णवस्त्यजेत्॥ मदनरत्ने नारदीये॥ असारलवणाः सर्वे

हविष्यान्ननिषेविणः॥अवनीतल्पशयनाःप्रियासंगमवर्ज्जिताः॥व्रतघ्नमाहहेमाद्रौदे
वलः॥असकृज्जलपानाच्चसकृत्तांबूलचर्वणात्॥उपवासःप्रणश्येतदिवास्वापाच्च
मैथुनात्॥अशक्तौतुमदनरत्नेदेवलः॥अत्ययेचांबुपानेचनोपवासःप्रणश्यति॥अ
त्ययेकष्टे॥विष्णुरहस्ये॥गात्राभ्यंगंशिरोभ्यंगंतांबूलंचानुलेपनम्॥व्रतस्थोवर्ज्जये
त्सर्वंयच्चान्यत्ननिराकृतं॥एषुप्रायश्चित्तमुक्तंनिर्णयामृतेसंगृहे।स्तेनहिंसकयोःस
ख्यंकृत्वास्तेन्यंचहिंसनं॥प्रायश्चित्तंव्रतीकुर्य्याज्जपेन्नामशतत्रयं॥मिथ्यावादेदिवा
स्वापेबहुशोंबुनिषेवणे॥अष्टाक्षरंव्रतीजप्त्वाशतमष्टोत्तरंशुचिः॥ॐनमोनाराय
णायेत्यष्टाक्षरः॥तत्रैवपैठीनसिः॥तांबूलचर्वणेस्त्रीसंभोगेमांसनिषेवणे॥व्रतलो
पोनचेत्कुर्यात्कृच्छ्रमाबुद्धिवर्ज्जनमिति॥संभोगोऋतुकालादन्यत्र।रेतःसेकात्सं
भोगमृतेन्यत्रक्षयःस्मृतइतितत्रैवकात्यायनोक्तेःहेमाद्रौविशिष्टः॥उपवासेतथाश्राद्धे
नकुर्य्याद्दंतधावनं॥दंतानांकाष्ठसंयोगोदहत्यासप्तमंकुलम्॥काष्ठग्रहणान्मृल्लो
ष्टाद्यनिषेधइतिहेमाद्रिः॥विष्णुरहस्ये॥श्राद्धोपवासदिवसेखादित्वादंतधावनं॥
गायत्र्याशतसंपूतमंबुप्राश्यविशुद्ध्यति॥निर्णयामृतेव्यासः॥वर्ज्जयेत्पारणेमांसव्र
ताहेप्यौषधंसदेति॥एकादश्यांश्राद्धप्राप्तौकात्यायनआह॥उपवासोयदानित्यः
श्राद्धंनैमित्तिकंभवेत्॥उपवासंतदाकुर्य्यादाघ्रायपितृसेवितं॥मातापित्रोःक्षयेप्रा
प्तेभवेदेकादशीयदि॥अभ्यर्च्यपितृदेवांश्चआजिघ्रेत्पितृसेवितमिति॥हेमाद्र्या
दिसर्वनिबंधेष्वेवमतेनैकादशीनिमित्तकंश्राद्धंद्वादश्यांकार्यमितिवदंतःपरास्ताः॥
किंच॥महालये॥सपक्षःसकलःपूज्यःश्राद्धषोडशकंप्रतीतिश्रुतेःषोडशत्वं॥पौषे
कादश्यांचमन्वादिश्राद्धस्याहापरिज्ञानेचतत्सैकादश्यांविहितश्राद्धबाधनमेव
स्यात्॥यदपिस्मृतिचंद्रिकायांपठंति॥अन्नाश्रितानिपापानितद्दोतुर्हेतुरेवच॥
मज्जंतिपितरस्तस्यनरकेशाश्वतीःसमाइति॥तस्यापिरागप्राप्तभुजिगोचरस्यवै
धंश्राद्धगोचरयतामहत्साहसमित्यलम्॥योपिअकृतश्राद्धनिचयाजलपिंडविना
कृताइतिलघुनारदीयेएकादश्यांश्राद्धनिषेधःसमातापितृभिन्नविषयः॥सर्ववा
क्येनग्रहणात्॥निचयश्राद्धप्रतिग्रहः॥अव्रतघ्नमाह॥मदनरत्नेदेवलः॥सर्वभूत
भयंव्याधिःप्रमादोगुरुशासनं॥अव्रतघ्नानिपठ्यंतेसकृदेतानिशास्त्रतः॥स्कांदेपि॥
अष्टौतान्यव्रतघ्नानिआपोमूलंफलंपयः॥हविर्ब्राह्मणकाम्याचगुरोर्वचनमौष
धं॥नारदीये॥अनुकल्पोनृणांप्रोक्तःक्षीणानांवरवर्णिनि॥मूलंफलंपयस्तोयमु
पभोग्यंभवेच्छुभे॥नत्वेवभोजनंकेचिदेकादश्यांबुधैःस्मृतं॥अस्यापवादः॥श
यनेचप्रबुद्धत्यानेमत्यार्श्वपरिवर्त्तने॥नरोमूलफलाहारीहृदिशल्यंसमार्पयेत्॥इ
दंचातिसंकष्टविषयम्॥एतेचाविरोधिनोनिर्णयाःसर्वव्रतेष्वज्ञेयाः॥तत्रैकाद
श्यांसंकल्पः॥गृहीत्वोदुंबरंपात्रंवारिपूर्णमुदङ्मुखः॥उपवासंतुगृह्णीयात्यद्वा॥

नागदैवतमश्लेषा॥मस्तकोमृगशिरः॥प्रथमपाद इत्यन्योसचसर्वेषां॥अथेष्टिकालः॥गो
भिलः॥पक्षांताउपवस्तव्याःपक्षादयोभियष्टव्याइति॥उपवासोन्वाधानं॥तत्रमध्यान्हे
तत्पूर्वंवा॥पर्वप्रतिपत्संधौतद्दिनेयागः॥पूर्वान्हेवायमध्यान्हेयदिपर्वसमाप्यते॥उपो
ष्यतत्रपूर्वेद्युस्तदहर्यागइष्यतेइतिलौगाक्षिवचनात्॥अत्रचद्वेधाविभागः॥आवर्त
नात्पूर्वान्होह्यपरान्हस्ततःपरः॥मध्यान्हस्तनयोःसंधिर्यदावर्तनमुच्यतइति मदनर
त्नेवचनात्॥मध्यान्हादूर्ध्वंसंधौमाधवमतेपरेह्नियागः॥अपरान्हेथवारात्रौयदिपर्व
समाप्यते॥उपोष्यतस्मिन्नहनिश्वोभूतेयागइष्यते॥इतिलौगाक्षिणोक्तेः॥हेमाद्रिस्तुप
रान्हसंधावपिपरदिनेप्रतिपच्चतुर्थांशेचंद्रोदये चासतिद्वितीयादिष्वंशेक्षयेसति पू
र्वेद्युर्यागः॥पर्वणोंशेद्वितीयेतुयष्टव्यंतुद्विजातिभिः॥द्वितीयासहितंयस्मादृषयस्त्या
श्वलायनाइति॥द्वितीयेत्विति तुर्येमुतिकन्यायेनतुर्यांशपरं॥तुरीयेत्वितिपूर्वयाशि
पाठःस्पष्टार्थएव॥तथा॥भूतायंचदर्शीदर्शाद्वितीयासयगामिनी॥चतुर्दशीरमायां
स्याभूतेकव्यादिकीक्रियेतिबौधायनवचनात्चेत्स्वचिवान्॥मदनरत्नेपि॥चतुर्दशी
चतुर्थांशात्रमावास्यानदृश्यते॥श्वोभूतेप्रतिपच्चेत्स्यात्पूर्वांतत्रैवकारयेदिति॥यत्तुमा
धवः॥यस्तुवाजसनेयीस्यात्तस्यसंधिदिनात्पुरा॥नकाप्यन्वाहितिःकिंतुसदासंधिदि
नेहिसेत्याह॥यच्चकालादर्शेप्युक्तं॥आवर्तनादधःसंधियद्यन्वाधायतद्दिने॥परेद्युरि
ष्टिरित्याहुर्विप्रावाजसनेयिनइति॥यच्चमदनरत्ने॥मध्यंदिनात्स्यादहनीहनीहयस्मि
न्प्राक्पर्वणःसंधिरियंतृतीया॥सारवर्द्धिकावाजसनेयिमत्यातस्यामुपोष्याथपरेद्यु
रिष्टिरिति॥एतत्पौर्णमासीपरमिति॥तन्नैव॥आवर्तनोर्ध्वमर्वागस्ताद्रात्रौवासमाप्तेद्म
ध्यान्हर्वाक्समाप्तातृतीयेत्यर्थः॥तत्कर्कभाष्यदेवजानीश्रीअनंतभाष्यादिसकलात
च्छाखीयग्रंथविरोधाद्दानादराच्चेयेत्स्यम्॥पौर्णमास्यांविशेषमाहकात्यायनः॥संधि
श्चेत्संगवादूर्ध्वंप्राक्पर्यावर्तनाद्रवेः॥सापौर्णमासीविज्ञेयासद्यःकालविधौनरैः॥अ
मायांविशेषमाहबौधायनः॥द्वितीयात्रिमुहूर्ताचेत्प्रतिपद्यापरान्हिकी॥अन्वाधानंच
तुर्दश्यांपरतःसोमदर्शनात्॥कात्यायनश्च॥यजनीयेन्हिसोमश्चेद्वारुण्यांदिशिदृश्य
तेतत्रव्याहृतिभिर्हुत्वादंडत्याद्विजानयइति॥एतच्चबौधायनवाजसनेयिविषयंतेत्तिरी
यस्तुतौतुचंद्रदर्शनेपियागउक्तः॥एषावैसुमनानामेष्टिर्यमद्येजानंपश्चाच्चंद्रमाअभ्यु
देत्यस्मिन्नेवास्मैलोकेभ्रातृव्यं भवतीति॥

श्रुत्यंतरेपि॥यदहःपश्चाच्चंद्रमाअभ्युदेतितदहर्यजे
त्निर्मांल्लोकानभ्युदेतीतिमदनरत्नेप्येवम्॥आपस्तंबभाष्यार्थसंग्रहेप्येवम्॥अतः
पक्षद्वयस्यस्वसूत्राद्व्यवस्थितिर्नत्वाहृषयंत्याश्वलायनोइतिपूर्वान्हिसंधिविषयमि
तिमाधवः॥शेषपर्वणीष्टौविशेषमाह॥माधवीयेगार्ग्यः॥प्रतिपद्यप्रतिष्टायांयदिवे।
ष्टिःसमाप्यते॥पुनःप्रणीयतत्रान्येष्टिःकर्तव्यायागवित्तमैः॥गृह्यसारेन्त्यीयन्नियमःइति

द्वादश्योरेकात्वेतंत्रेणोपवासः॥पार्थकेतुशक्तस्योपवासद्वयं॥एकादशीमुपोष्यैवद्वाद
शींसमुपोषयेदितिविष्णुरहस्यात्॥अशक्तौतुद्वादश्यामेव॥एवमेकादशींभुक्त्वाद्वाद
शींसमुपोषयेत्॥पूर्ववासरजंपुण्यंसर्वंमाप्नोत्यसंशयमितितत्रैवोक्तेः॥यदान्वल्पा
द्वादशीतदेवोक्तंमात्स्येयदाभवतिस्वल्पापिद्वादशीपारणादिने॥उषःकालेद्वयंकु
र्य्यात्प्रातर्मध्यान्हिकंतदा॥नारदीये॥अल्पायामथविप्रेंद्रद्वादश्यामरुणोदये॥स्ना
नार्चनक्रियाकार्य्यादानहोमादिसंयुताइति॥संकटेतुमाधवीयेवलः॥संकटेविषमे
प्राप्तेद्वादश्यांपारयेत्कथं॥अद्भिस्तुपारणंकुर्यात्पुनर्भुक्तंनदोषकृदिति॥संकटेत्र
योदश्यांश्राद्धप्रदोषादौ॥अत्रकेचिदाहुः॥अपकर्षवाक्यान्यनाहिताग्निविषयाणि
॥अग्निहोत्रादीनांतुश्रौतत्वेनापकर्षायोगादिति॥द्वादश्यांचप्रथमपादमतिक्रम्य
पारणंकार्य्यं॥द्वादश्याःप्रथमःपादोहरिवासरसंज्ञितः॥तमतिक्रम्यकुर्वीतपार
णंविष्णुतत्परइतिनिर्णयामृतेमदनरत्नेच॥विष्णुधर्मोक्तेः॥अत्रकेचित्संगिरन्ते
॥यदाभूयसीद्वादशीतदापिप्रातर्मुहूर्त्तत्रयेपारणंकार्यम्॥सर्वेषामुपवासानांप्रा
तरेवहिपारणमितिवचनादिति॥अस्मद्गुरवस्तु॥वहूनांकर्मकालानांविनाकारणं
वाधापत्तेःप्रागुक्तवचनैश्चाल्पद्वादश्यामेवापकर्षविधानादपरान्हएवकार्य्यम्॥
प्रातःशब्दस्तुसायंप्रातर्द्विजातीनामशनंश्रुतिचोदितमितिवदपरान्हवाचित्वेप्युप
पन्नः॥नचवाक्यवैयर्थ्यं॥पुनर्भोजनसायंपारणनिवृत्त्यर्थत्वात्तस्येत्याहुः॥प्रमादेन
एकादश्युपवासातिक्रमेऽपरार्केवाराहे॥एकादशीविष्णुनाचेद्द्वादशीपरतःस्थिता।
उपोष्याद्वादशीतत्रयदीच्छेत्परमंपदमितिकेचित्तु॥विष्णुनाचेदितिपठंति॥अत्रावि
शेषतोनियमास्सर्वव्रतेषुवोद्धव्याः॥अन्येचनवरात्रेवक्ष्यंतइतिदिक्॥इतिश्रीराम
कृष्णभट्टात्मजकमलाकरभट्टकृतेनिर्णयसिंधौएकादशीनिर्णयः॥०द्वादशीतु
पूर्वैवयुग्मवाक्यात्॥द्वादशीतुप्रकर्त्तव्याएकादश्यायुताप्रभो॥इतिस्कांदाच्च॥त्र
योदशीतुसर्वमतेशुक्ला॥पूर्वाकृष्णोत्तरा॥त्रयोदशीतिथिःपूर्वासितोथासितःप
श्चादितिदीपिकोक्तेः॥शुक्लात्रयोदशीपूर्वापराकृष्णत्रयोदशीतिमाधवाच्च॥चतु
र्दशीतुसर्वमतेकृष्णापूर्वाशुक्लोत्तरा॥उपवासेचतुर्दश्यपिपरेतिमदनरत्ने॥पौ
र्णिमामावास्येतुसावित्रीव्रतंविनापरेग्राह्ये॥भूतविद्धेनकर्त्तव्येदर्शपूर्णेकदाच
न॥वर्जयित्वामुनिश्रेष्ठसावित्रीव्रतमुत्तममितिब्रह्मवैवर्त्तात्॥अमायांयोगवि
शेषमाह॥परार्केशातातपः॥अमावास्यांभवेद्वारोयदाभूमिसुतस्यवै॥जान्हवी
स्नानमात्रेणगोसहस्रफलंलभेत्॥अमावासोमवारेणरविवारेणसप्तमी॥चतु
र्थीभौमवारेणविषुवत्सदृशंफलं॥तत्रैवव्यासः॥सिनीवालीकुहूर्वापियदिसोम
दिनेभवेत्॥गोसहस्रफलंदद्यात्स्नानंचेन्मौनिनाकृतं॥हेमाद्रौवृहन्मनुः॥श्र
वणाश्विधनिष्ठार्द्रानागदैवतमस्तके॥यद्यमारविवारेणव्यतीपातःसउच्यते॥

नागदैवतमश्लेषा॥मस्तको मृगशिरः॥त्र्यमपाद इत्यन्येषांचसर्वेषां॥अथेष्टिकालः॥गो१
भिलः॥पक्षांताउपवस्तव्याः पक्षादयोभियष्टव्याइति॥उपवासोऽन्वाधानं॥तत्रमध्यान्हे
तत्पूर्वंवा॥पर्वप्रतिपत्संधौतद्दिनेयागः॥पूर्वान्हेवायमध्यान्हेयदिपर्वसमाप्यते॥उपो
ष्यतत्रपूर्वेद्युस्तदहर्यागइष्यतेइतिलौगाक्षिवचनात्।अत्रचद्वेधाविभागः॥आवर्त्त
नात्पूर्वान्होह्यपरान्हस्ततःपरः॥मध्यान्हस्तनयोःसंधिर्यदावर्त्तनमुच्यतइति मदनर
त्नेवचनात्।मध्यान्हादूर्ध्वसंधौमाधवमतेपरेन्हियागः॥अपरान्हेथवारात्रौयदिपर्व
समाप्यते॥उपोष्यतस्मिन्नहनिश्वोभूतेयागइष्यते॥इतिलौगाक्षिणोक्तेः हेमाद्रिस्तु प
रान्हसंधावपिपरदिनेप्रतिपच्चतुर्थांशेचंद्रोदये चासतिद्वितीयादिष्वंशंनक्षयेसतिपू
र्वेद्युर्यागः॥पर्वणोंशेद्वितीयेतुयष्टव्यंतुद्विजातिभिः॥द्वितीयासहितंयस्मादृषयंन्या५
श्वलायनाइति॥द्वितीयेत्वितितुकैमुतिकन्यायेनतुर्य्यांशपरं॥तुरीयेत्विति शूलपाणि
पाठःस्पष्टार्थएव॥तथा॥भूतायंचदर्शोऽपर्णा द्वितीयासयगामिनी॥चरुरिष्टिरमायां
स्याभ्रूतेकव्यादिकीक्रियेतिबौधायनवचनात्चेत्यपिवान्॥मदनरत्नेपि॥चतुर्दशी
चतुर्यामाअमावास्यानदृश्यते॥श्वोभूतेप्रतियच्चेत्स्यात्पूर्वोत्तेनैवकारयेदिति॥यत्तुमा
धवः॥यस्तुवाजसनेयीस्यात्तस्यसंधिदिनात्पुरा॥नकाप्यन्वाहितिःकिंतुसदासंधिदि
नेहिसेत्याह॥यच्चकालादर्शेप्युक्तं॥आवर्त्तनादधःसंधियद्यन्वाधायतद्दिने॥परेद्युरि
ष्टिरित्याहुर्विप्रावाजसनेयिनइति॥यच्चमदनरत्ने॥मध्यंदिनात्स्यादहनीहनीह्यस्मि
न्प्राक्पर्वणःसंधिरियंतृतीया॥साखर्विकावाजसनेयिमन्यातस्यामुपोष्याथपरेद्यु
रिष्टिरिति॥एतन्पौर्णमासीयरमितितन्नैव॥आवर्त्तनोर्ध्वमर्वागस्ताद्रात्रौवासमाप्तेर्म
ध्यान्हदर्वाक्समाप्तातृतीयेत्यर्थः॥तत्कर्कभाष्यदेवजानीश्रीअनंतभाष्यादिसकलात
न्छाखीयग्रंथविरोधाद्द्वानादरणीयेत्यम्॥पौर्णमास्यांविशेषमाहकात्यायनः॥संधि
श्चेत्संगवादूर्ध्वप्राक्पर्य्यावर्त्तनाद्रवेः॥सापौर्णमासीविज्ञेयासद्यःकालविधौनरैः॥ अ
मायांविशेषमाहबौधायनः॥द्वितीयात्रिमुहूर्त्ताचेत्प्रतिपद्यापराह्निकी॥अन्वाधानंच
तुर्दश्यांपरतःसोमदर्शनात्॥कात्यायनश्च॥यजनीयेन्हिसोमश्चेद्वारुण्यांदिशिदृश्य
तेतत्रव्याहृतिभिर्हुत्वादंडंदद्याद्द्विजातयइति॥एतच्चबौधायनवाजसनेयिविषयंतेत्तिरी
यस्तुनैतुचंद्रदर्शनेपियागउक्तः॥एषावैसुमनानामेष्टिर्यमद्येजानंपश्चाच्चंद्रमाअभ्यु
देत्यस्मिन्नेवास्मैलोकेऋद्धंभवतीति॥
श्रुत्यंतरेपि॥यदहःपश्चाच्चंद्रमाअभ्युदेतितदहर्यजे
न्निर्मोक्षोकान्नभ्युदेतीतिमदनरत्नेप्येवम्॥आपस्तंबभाष्यार्थसंग्रहेप्येवम्॥अतः
पक्षद्वयस्यस्वसूत्राद्व्यवस्थितिरितिनत्वाहृषयंत्याश्वलायनाइतितुपूर्वान्हिसंधिविषयमि
तिमाधवः॥शेषपर्वणीष्टौविशेषमाह॥माधवीयेगार्ग्यः॥प्रतिपद्यप्रतिष्ठायांयदिवे
ष्टिःसमाप्यते॥पुनःप्रणीयचाग्नौष्टिःकर्त्तव्यायागवित्तमैः॥गृह्याग्नेर्नोयन्नियमःइति

मदनरत्नेपारिजातः॥एवंपर्वान्त्यांशः॥प्रतिपदश्चत्रयोदशःयागकालउक्तः॥कश्चित्प्रतिपत्तुर्यांशेपियागःसंधिर्यद्यपराह्णेस्यात्तदायागंप्रातःपरेहनि॥कुर्वीत॥प्रतिपद्यागेचतुर्थेपितदुष्यतीतिरह्शानातयोक्तेःएतत्पौर्णिमापरमितिमदनरत्ने॥पर्वणिप्रतिपदःस्वयस्पष्टेश्चांहेप्रक्षिप्यसंधिर्ज्ञेयंतदाहमाधवः॥वृद्धिःप्रतिपदोयास्तितदर्द्धंपर्वणिक्षिपेत्।क्षयस्यार्द्धंतथाक्षिप्त्वासंधिनिर्णयतांसदेति॥कात्यायनोपि॥परेन्हिघटिकान्यूनास्तथैवाभ्यधिकाश्चयाः॥तदर्द्धंक्षिप्त्वापूर्वस्मिन्ह्रासवृद्धीप्रकल्पयेदिति॥एवंस्मार्त्तेस्थालीपाकेज्ञेयं॥तत्रेष्टिस्थालीपाकावाधानगृहप्रवेशनीयःहोमानंतरभाविन्यांपौर्णमास्यांप्रारंभणीयौ॥नतुदर्शे॥यद्यारंभेमलमासपौषमासशुक्रास्तादिभवति॥तदाप्यारंभःकार्यः॥यत्तितु॥उपरागोधिमासश्चयदिप्रथमपर्वणि॥तथामलिम्लुचेपौषेनत्वारंभणमिष्यते॥गुरुभार्गवयोर्मौढ्येचंद्रसूर्यग्रहेतथेति॥संग्रहवचनानि॥जाड्यालस्यादिनातिक्रांतमुख्यकालप्रारंभविषयाणि॥नामकर्मचदर्शेष्टिंयथाकालंसमाचरेत्॥अतिपातेसतितयोःप्रशस्तेमासिपुण्यभेत्वपरार्केगर्गवचनादिति॥प्रयोगपारिजाते॥उक्तंचैतत्प्रयोगरत्नेभट्टैः॥कालादर्शेतुनामकर्मचजातेष्टिमितिपाठः॥याज्ञिकाः॥आधानानंतरंपौर्णमासीचेन्मलमासगा॥तस्यामारंभणीयादीन्नकुर्वीतकदाचनेति॥त्रिकांडमंडनवचनान्मुख्यकालएव॥विभ्रष्टेष्टिम्।कृत्वारंभंकुर्यादित्याहुः॥कालादर्शेस्मृतिसंग्रहेपि॥आरंभदर्शपौर्णमास्योरग्निहोत्रस्यचादिमं॥प्रतिष्ठापंचकर्माद्याःमलमासेविवर्जयेदिति॥अथविकृतिः॥तत्रापस्तंबः॥यदीष्ट्यायदिपशुना यदिसोमेनयजेत॥सोमावास्यायांपौर्णमास्यांवेति।अत्रप्रकृतितःकालेसिद्धेपिसद्यःकालताविधेयासंगतोक्तेः॥अत्रपौर्णमास्यमावस्याशब्दाभ्यांतदंत्यक्षणोगृह्यते॥तेनतदंत्यहोरात्रइत्यर्थमाह॥रामांडारः॥माधवोपि॥इष्ट्यादिविकृतिःसर्वापर्वण्येवेतिनिर्णयः॥अत्रविशेषमाहत्रिकांडमंडनःकात्यायनश्च॥आवर्त्तनात्प्राक्पदियर्वसंधिःस्यात्तदातस्मिन्प्रकृतिंविकृत्याःतदेवयागःपरतोयदिस्यात्तस्मिन्विकृत्याःप्रकृतेःपरेद्युरिति॥धूर्तस्वाम्यादयोप्येवमाहुः॥यत्तुस्येतिसांगायाःविकृतेःपर्वकालत्वादावर्त्तनात्प्राक्संधौसंधिमभितोयजेतेतिप्रकृतेःप्रतिपदिसमाप्तिनियमात्॥प्रकृत्यनंतरंप्रतिपदिविकृत्ययोगात्॥श्वर्वेद्युर्विकृतिरित्युक्तंतंत्ररत्नेपार्थसारथिना॥यद्यपिप्रकृतेःश्वस्त्वादश्वमन्वेस्यादित्यापस्तंवेनोक्तं॥तथापिहेतुवादेनश्रुतिमूलत्वाभावादंगंवासमभिव्याहारादिति॥वदमामाण्यमितितदाशयः॥आग्रयणेतुविशेषंवक्ष्यामः॥अत्वारंभणीयात्तुचतुर्दश्यांकार्येतिहिरण्यकेशिसूत्रेणोमात्तदत्नीयेअन्येषांपर्वण्येव॥पशौसोमेचकालांतरमप्याहकात्यायनः॥अमावास्येनवाहविषेष्ट्वानक्षत्रेवेति॥शुक्लपक्षेकृत्तिकादिविशाखांतेषुदेवनक्षत्रेष्वितिकेशवस्वामीव्याचख्यौ॥चातुर्मास्येष्वपिद्वादशाहंयथाप्रयोगपक्षयोर्नक्षत्रेप्यारंभः यावज्जीवसांवत्सरप्रयोगयोस्तुफाल्गुन्यांचैत्र्यांवाआरंभः॥पशौतुविशेषमाह॥कात्यायनः॥

अर्द्धरात्रो भवति नियतपर्वसंधिपरस्तात्कत्वात्तस्मिन्नहनि तु पशुसंघ एवद्व्यहं वा॥ आरभ्याथ
प्रकृतिरथ चेत्पर्वसंधिः पुरस्तात्कत्वात्तस्मिन्प्रकृतिमथ तु स्यामस्तुःस्य एव॥ अधिकारपशु
त्वग्नीषोमीयेन सवनीयेन वा समानतंत्रो वा कार्य इति त्रिकांडमंडनः॥ सोमे त्वापस्तंबः॥ अमावा
स्यायां दीक्षायजनीये वामावास्यायां यजनीये वा सुत्यमहः
मास्यां यजनीये वा सुत्यमहरिति॥ लाट्यायनसूत्रेऽपि॥ पूर्वपक्षस्य प्रथमेहनि दीक्षेत दर्शे वा
॥ एवं पक्षः शुक्लपक्षः॥ नक्षत्रयोगमपीत्ययमर्थः॥ चैत्र्यादिपूर्णिमाया।
श्चित्रादिनक्षत्रयोगे दीक्षेतेति॥ आधानं तु पर्वणि नक्षत्रेषु चोक्तं॥ तत्र पर्व तत्कं गार्हपत्यमा
दधातीत्यादिकर्मकालव्यापि ग्राह्यं॥ दिनद्वये तत्त्वे परं ग्राह्यं संकलस्य पर्वणि लाभात्॥ एवं
नक्षत्रयोगेन देवयाह्यं॥ यत्र त्रीणि सन्निपतिता
तु नक्षत्रं च बलीय इति हिरण्यकेशिसूत्रात्॥ वसंते ब्राह्मणोऽग्नीनादधीतेत्यादि॥ रे
णुकारिकायां तु॥ माघादि पंचमासेषु श्रावणे चाश्विने तथा॥ मार्गशीर्षे शुक्लपक्षे आधा
नमथ कारयेदित्युक्तं॥ अत्र मूलं मृग्यं॥ आधाननक्षत्राणि त्वापस्तंबसूत्रे॥ कृत्तिका रो
हिणी मृगशीर्ष पुनर्वसु पुष्य पूर्वा उत्तरा पूर्वाषाढोत्तराषाढा हस्त चित्रा विशाखानुराधा श्र
वणोत्तराभाद्रपदा इति॥ सोमपूर्वाधाने विशेषमाहापस्तंबः॥ सोमेन यक्ष्यमाण आदधी
॥ त नर्त्तुं न नक्षत्रमिति॥ अत्र प्रकरणादाधानकालबाधः॥ तेन सोमस्य वसंतकाल
त्वान्बाध्यते॥ इति रुद्रदत्तवृत्तौ॥ नारायणवृत्तौ चोक्तं॥ धूर्तस्वामी तु॥ सोमस्यापि यक्रतु
त्वस्यापि नक्षत्रेदिति॥ लिखनादुभयकालबाधं मन्यते॥ श्रीरामांडारस्तु कालांतरविधा
नेवा सर्वकालानादरो वेति पक्षद्वयमुक्तवान्॥ तत्राद्ये कृत्तिकादिकालांतरस्य यथाधा
संताद्यबाधेन विधानं॥ तथा सोमेष्ट्युदगयनपूर्वपक्षपुण्याह सन्निपाते यज्ञकाले।
नादेश इति॥ छांदोगसूत्रोक्तोदगयनसोमाभिसंधिरूपकालांतरविधानादुदगयनं त्व
पेक्ष्यत इत्युक्तं॥ द्वितीयपक्षे तु यदैवैनं कालांतरविधानादुदगयनं त्वपेक्ष्यत इत्युक्तं॥
पनमेदिति सर्वकालानादर उक्त इति भरद्वाजसू
त्रात् सर्वशब्दस्य विश्वजित्सर्वपृष्ठ इतिवत्तद्द्वयोरप्रयोगात्सर्वकालबाध इति॥ तेन दक्षि
णायनेऽपि भवतीत्युक्तं॥ षड्गुरुभाष्ये देवशानभाष्ये तंत्ररत्ने च षट्स्वपि ऋतुषु भवती
त्युक्तमिति दिक्॥ श्राद्धं त्वमावास्यां त्रेधा विभक्तदिनतृतीयांशो योऽपराह्णभागस्तद्व्या
पिनी साग्निकैर्ग्राह्या॥ पिंडान्वाहार्यकं श्राद्धं क्षीणे राजनि शस्यते॥ वासरस्य तृतीयेंशे ना
तिसंध्यासमीपतः॥ इति कात्यायनोक्तेः॥ दर्शश्राद्धं तु यत्प्रोक्तं पार्वणं तत्प्रकीर्तितं।
अपराह्णे पितॄणां च तत्र दानं प्रशस्यत इति शातातपोक्तेश्च॥ दिनद्वये तत्र
व्यापी दर्शो ग्राह्यः॥ यद्युभयेद्युरेव विहितः सर्वापराह्णस्थित इति दीपिकोक्तेः॥ यत्तु का
र्ष्णाजिनिः॥ भूतविद्धाममावास्यां मोहादज्ञानतोऽपि वा॥ श्राद्धकर्मणि ये कुर्युस्तेषामायुः
प्रहीयत इति॥ तदपराह्णे चतुर्दशीवेधपरमिति श्राद्धहेमाद्रिः॥ अपराह्णव्यापिपरमिति

माधवः॥दिनद्वयेपराह्णव्याप्त्यभावेशतोव्याप्तौचतिथिक्षयेसर्वैतिहेमाद्रिः॥यदाचतुर्दशीया
मंतुरीयमनुदृश्येत्॥अमावास्याक्षीयमाणातदैवश्राद्धमिष्यतइतिकात्यायनोक्तेःचतुर्द
श्याश्चतुर्थेयामेदर्शःदृश्येत्।चतुर्दशीयामत्रयंस्यादित्यर्थः।क्षीयमाणापरदिनेपराह्ण
व्यापिनीनेत्यर्थः॥व्यतिरेकमाह।वर्द्धमानाममावास्यांलक्षयेदपरेहनि॥यामांस्त्रीनधि
कांस्ताविपितृयज्ञस्ततोभवेत्।ततःश्राद्धंच।दिनद्वयेपराह्णव्याप्तौतिथिद्वैधेचहारी
तः॥त्रिमुहूर्त्तीचकर्त्तव्यापूर्वास्वर्वाचवह्वृचैः॥कुहूरध्वर्युभिःकार्यायथेष्टंसामगैरितिभिः
।त्रिमुहूर्त्तीभावेतुपूर्वानेत्यर्थः॥पिंडपितृयज्ञस्तुकात्यायनैर्योगदिनात्पूर्वेद्युःकार्यः।प्र
योगांगत्वात्।पिंडपितृयज्ञइतितत्सूत्रात्॥व्याख्यातंचैतत्कर्काचार्यैः॥पूर्वेद्युरेवदर्शात्
पिंडपितृयज्ञोनपश्चात्कुतःअंगत्वात्॥तथाचश्रुतिः॥तस्मात्पूर्वेद्युःपितृभ्यःक्रियतेउ
त्तरमहर्देवान्यजंतइति॥पूर्वेद्युःपितृभ्योयज्ञंनिष्टणीयन्तिप्रातर्देवेभ्यःप्रतन्वतइति
च।तेनतन्मतेंगमेवासौ॥तदुक्तं।अंगंवासमभिव्याहारादिति।तेनकर्कमतेचतुर्दशीयु
क्तदर्शेपिंडपितृयज्ञइति।श्रीअनंतभाष्येतुपरेद्युरित्युक्तं॥अत्रहेधाप्याचारोदृश्यते॥
आपस्तंबानांतुपरदिनेमुहूर्त्तमपिदर्शसत्वेतत्रैवपितृयज्ञः॥तदाहापस्तंबः॥अमावा
स्यायांयदहश्चंद्रमसंनपश्यंतितदहःपिंडपितृयज्ञंकुरुतइति।अस्यारुद्रदत्तीयाव्या
ख्या।पिंडैर्युक्तःपितृयज्ञःपिंडपितृयज्ञः।सचकर्मांतरंनतुदर्शशेषः।यथावक्ष्यति।पितृय
ज्ञःस्वकालविधानादनंगंस्यादिति॥तेचयदहश्चंद्रमसंनपश्यंतियंचदर्शंप्रतिपदि
वातदहःकुरुते॥यदहस्तयोःसंधिस्तदहरित्यर्थइति॥श्रीरामाण्डारोप्याह॥पिंडपितृय
ज्ञस्तुपर्वसंधिमदहोरात्रावपराह्णइति॥अतःसर्वसंधिदिनेहिपितृयज्ञः॥एतनपथश्रुति
रपि।यदेवैषनपुरस्तान्नपश्चाद्दृश्येऽथपितृभ्योददातीतिपर्वसंधिदिनेहिसर्वतःपश्चा
द्वाचंद्रोनदृश्यतएवेत्यर्थः॥तत्रायोढोपिपितृयज्ञेप्रशंस्यदृश्यमानेप्ययोध्यश्चोभूतेय
ज्ञइत्याह॥हेमाद्रिस्तुअमावास्याशाद्ग्लिथिवचनएव॥पर्वोक्तापस्तंबसूत्रेयदुक्तंन
पश्यंतीतितत्रक्षयोभिप्रेतः॥अतश्चतुर्दश्यांचंद्रस्यक्षीणत्वात्तद्युक्तदर्शेपितृयज्ञः।पि
तृयज्ञंतुनिर्वर्त्यविप्रश्चंद्रक्षयेऽग्निमानितिमनूक्तेः।यदुक्तं।यदहस्त्वेवदर्शनन्नेतिचंद्रमा
तत्क्षयायेक्षयात्तेयंक्षीणोराजनिचेत्ययीति॥यदुक्तं॥दृश्यमानेपितच्चतुर्दश्यपेक्षयेक्ष।
याश्रेयंक्षीणोराजनिचेत्ययीति॥यदुक्तं॥दृश्यमानेपितच्चतुर्दश्यपेक्षयेतिचकात्यायनो
क्तेः॥दृश्यमानेप्येकइतिगोभिलोक्तेः॥यस्यांसंध्यागतःसोमोमृणालमिवदृश्यते॥अ
पराह्णेक्षयस्तस्यांपिंडानांकरणंध्रुवमिति॥हारीतोक्तेश्च॥चंद्रक्षयकालश्चोक्तः॥का
त्यायनेन॥अष्टमेंशेचतुर्दश्याःक्षीणोभवतिचंद्रमाः॥अमावास्याष्टमेंशेतुपुनःकिल
भवेदणुरितितेनपूर्वेद्युरेवपितृयज्ञइत्यविवादः॥कर्काचार्यैरप्यपराह्णेपिंडपितृयज्ञःचं
द्रादर्शनेमावास्यायामिति॥कात्यायनसूत्रेऽदर्शनेनक्षयएवोक्तः॥तस्मिन्क्षीणेददा
तीतिश्रुतेः॥अतस्तन्मतेचतुर्दशीयुक्तदर्शेपितृयज्ञेसतिपरदिनेयागोर्थात्सिद्धः॥तदे

तस्यैवोत्कृष्टमपि हेमाद्रिकालादिव्याख्यानमापस्तंबेरनभ्युपगमात् कात्तीयबौधायना।दिविषयं॥ आश्वलायनानामपि शेषपर्वणि पिंडपितृयज्ञः॥तथा च सूत्रम्॥ अमावास्यामपराह्णे पिंडपितृयज्ञ इति अत्र नारायणवृत्तिः॥ अमावास्याशब्दः प्रतिपत्पंचदश्योः संधिवचनोप्यत्रापराह्णशब्दः समन्वयात्तद्युक्तोहोरात्रे वर्तते॥ तस्यापराह्णे चतुर्थे भागे पिंडपितृयज्ञः कार्यः॥ श्रौपवसथ्ये यजनीये वाह निपरान्होरात्रसंध्यौ तिथिसंधिः स्यात्तदौपवसथ्य एवाह निक्रियत इति॥ अत एव मुहूर्तमप्यमावास्या प्रतिपद्यपि चेद्भवेत् तदन्नमक्षयं ज्ञेयं पर्वशेषं तु पर्ववदिति हेमाद्रौ वचनं पिंडपितृयज्ञपरमुक्तं॥ प्रयोगपारिजाते॥ अयं च स्मार्त्ताग्निमतां संपूर्णो दर्शश्राद्धव्यतिषंगेण कार्यः व्यतिषंगो नाम मोभयोस्सहानुष्ठानं॥ एतच्च स्थालीपाकेन सह पिंडार्थं मुहृत्येति॥ सूत्रे द्रष्टव्यं निष्टनोक्तं॥ खंडपर्वणि तु केचिदाहुः॥ पूर्वेन्हि पिंडपितृयज्ञव्यतिषंगेण श्राद्धं कृत्वा परेन्हि केवलः पिंडपितृयज्ञः कार्यः॥ इति निष्टनोक्तं च पूर्वेद्युर्मासिमासि परेद्युर्वा पार्वणम्॥ काम्यमाभ्युदयेष्टम्यामेकोद्दिष्टमथाष्टमम् इत्युदाहृत्य पूर्वेद्युश्चतुर्षु स्थालीपाकादुद्धृत्याग्नौ करणमित्युक्तेर्दर्शश्राद्धे स्थालीपाको नियत इति गम्यते॥ स्थालीपाकश्च पितृयज्ञ एवेति पूर्वेद्युर्दिने व्यतिषंगः सिद्धः॥ प्रयोगपारिजाते तु वार्षिकश्राद्धेरपि व्यतिषंग उक्तः॥ किमुत दर्शश्राद्धस्यान्ये त्याय विदस्त्वाहुः सूत्रस्य वृत्तेश्च संपूर्णदर्शविषयत्वात्॥ खंडपर्वणि पूर्वदिने केवलश्राद्धं परदिने च केवलः पितृयज्ञः कार्यः॥ अत एवोक्तं वृत्तिकृता नाना नाप्येवं स्थालीपाकश्चोद्यते सर्वश्राद्धेषु प्रसंगादिति॥ प्रयोगपारिजातोक्तिरप्येतद्विषयैव पूर्वेद्युर्दिने च श्राद्धेग्नौ करणमेव न यागहोमः॥ चतुर्थ्यादिषु साग्नीनामन्होहोमो विधीयते॥ पित्र्ये ब्राह्मणहस्ते साद्युत्तरेषु चतुर्थ्यादीतिपरिशिष्टे नियमात्॥ न च लौकिकाग्नौ पक्वस्य कथं गृह्याग्नौ होमः॥ नान्याग्नौ पक्वमन्याग्नौ जुहुयादिति निषेधात्॥ मैवम्॥ श्राद्धस्य गृह्यत्वेन मात्रौपचनाग्नौ वा कर्तव्यत्वात्॥ तस्मात्पूर्वेद्युः केवलश्राद्धं न व्यतिषंगः॥ इदमेव च युक्तं॥ आहिताग्निना तु सर्वाधानिनाद्धाधानिना वा संपूर्णे खंडे वा दर्शे श्रौताग्नौ पृथगेव पितृयज्ञः कार्यो न तु दर्शश्राद्धव्यतिषंगेणेति विस्तरभीतेर्विरराम॥ संपूर्णदर्शे च विशेषमाह लौगाक्षिः॥ पक्षांतं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः॥ पिंडयज्ञं ततः कुर्यात्ततोन्वाहार्यकं बुधः इति पक्षांतं कर्मान्वाधानम्॥ अन्वाहार्य्यकं दर्शश्राद्धम्॥ अयमेव सायं होमोत्तरं पितृयज्ञकालो ज्ञेयः॥ तस्यापि कात्यायनेन होमानंतरमनारंभो वेत्याम्नानात्॥ पिंडपितृयज्ञाकरणे प्रायश्चित्तमाह पराशरमाधवीये कात्यायनः॥ पितृयज्ञात्यये चैव वैश्वदेवात्ययेपि च॥ अनिष्ट्वा नवयज्ञेन नवान्नप्राशने तथा॥ भोजनेयति तान्नस्य चरुर्वैश्वानरो भवेदित्यलम्॥ प्रकृतमनुसरामः॥ निरग्निकादिभिस्त्वमावास्यापराह्णव्याप्त्यलाभे कुतपकालव्यापिनी ग्राह्या॥ भृतविद्धाप्यमावास्या प्रतिपन्मिश्रिता पिवा॥ पित्र्ये कर्मणि विद्वद्भिर्ग्राह्या कुतपकालिकी इति हारी

तोक्तेः॥इदंचनिरग्निकादिविषयं॥सिनीवालीद्विजैःकार्यासाग्निकैःपितृकर्मणि॥स्त्रीभिः
शूद्रैःकुहूःकार्यातथाचानग्निकैर्द्विजैरितिलौगाक्षिवचनात्॥अत्रसाग्निरौपासनाग्निर
पीतिमदनपारिजातेउक्तम्॥कुतपश्चापराह्नव्याप्त्यलाभेनुकल्पः॥अपराह्नद्वयव्यापी
यदिदर्शस्तिथिक्षये॥आहिताग्नेःसिनीवालीनिरग्न्यादेःकुहूर्मता॥इतिजाबालिनाभावे
विधानात्॥तेनसाग्नीनांनिरग्नीनांवापराह्नव्याप्त्यैवमुख्यातिथिसाम्यवृद्धिक्षयैः स
मव्याप्तौखर्वादिनानिर्णयः॥वैषम्येधिकादिनद्वयेपराह्नस्पर्शेकुतपव्यापिनीतिमा
धवः॥इदमेवयुक्तम्॥हेमाद्र्यादिमतेकुतपव्याप्त्यैवनिरग्न्यादेर्मुख्या॥सिनीवालीदृष्ट
चंद्रातथाचव्यासः॥दृष्टचंद्रासिनीवालीनष्टचंद्राकुहूःस्मृतेति॥पूर्वदिनेपरदिनेएवव्या
प्तित्वेसैवग्राह्या॥अंशव्याप्तित्वेवैषम्येधिककालव्यापिनीग्राह्या॥दिनद्वयेंशतःस
मव्याप्तौतिथिक्षयेपूर्वावृद्धौसाम्येचपरा॥तिथिक्षयेसिनीवालीतिथिवृद्धौकुहूःस्मृता॥
साम्येपिचकुहूर्ज्ञेयावेदवेदांगवेदिभिरितिप्रचेतोवचनात्॥दिनद्वयेसंपूर्णाकुतप
व्याप्तिस्तुतिथिवृद्धावेवभवतीत्यनंतरवचनात्पूर्वेवेति॥कुतपस्तु॥अह्नोमुहूर्त्ताविः
ज्ञेयादशपंचचसर्वदा॥तत्राष्टमोमुहूर्त्तोयःसकालःकुतपःस्मृतइतिमात्स्योक्तेः॥तु
लादानपितृदेवप्रीत्यर्थोपवासादौतुपराह्णेत्यन्यत्रविस्तरः॥दर्शेचमासिकवार्षिकादि
श्राद्धप्राप्तौकालादर्शे विशेषउक्तः॥दर्शस्यचोदकुंभस्यदर्शमासिकयोरपि॥नित्यस्य
चाब्दिकस्यापिदार्शिकाब्दिकयोरपीत्युक्त्वा॥सम्पातेदेवताभेदाच्छ्राद्धयुग्मंसमाचरे
त्॥निमित्तानियतश्चात्रसर्वानुष्ठानकारणमितिनिर्णयदीपे॥नष्टचंद्रेयदाकालेक्षयाह
दिवसोभवेत् वैश्वदेवंक्षयश्राद्धंकुर्यात्प्राग्दर्शकर्मणः॥अमाश्राद्धंचानुपनीतोपिकुर्या
त् श्राद्धशूलपाणौ॥अमावास्याष्टकाकृष्णपक्षपंचदशीषुचेत्युपक्रम्यएतच्चानुपनीतो
पिकुर्यात्सर्वेष्वपर्वसु॥श्राद्धंसाधारणंनामसर्वकामफलप्रदं॥भार्याविरहितोप्येत
त्प्रवासस्थोपिनित्यशः॥शूद्रोप्यमंत्रवत्कुर्यादनेनविधिनाबुधइतिमात्स्योक्तेः॥अ
माश्राद्धातिक्रमेप्रायश्चित्तमुक्तमृग्विधाने॥त्र्युवाचंजपेन्मंत्रंशतवारंदिनेदिने॥अ
माश्राद्धंयदानास्तितदासंसर्गमेतितत्॥अत्रसर्वोक्तसाग्निकपदेनाहिताग्निःस्मार्त्ताग्नि
मांश्चगृह्यते॥विच्छिन्नाग्निकादिश्चनिरग्निकः॥तथाचहेमाद्रिरग्नौकरणप्रकरणे॥सा
ग्निरथावनग्निस्तुद्विजपाणावथाप्सुवा॥कुर्यादग्नौक्रियांनित्यंलौकिकेनेतिनिश्चितमि
ति॥स्मृतिवाक्यमुदाहृत्यास्वीकृतोपासनतयासमुच्छिन्नाग्नितयाभार्याविधुरतया
वाग्निरहितस्यद्विजपाणौजलादौवाहोमइत्याचचक्षे॥मदनपारिजातेप्येवम्॥इद
मेवसाग्निकानग्निकस्वरूपंसर्वत्रज्ञेयम्॥अथग्रहणंनिर्णीयते॥तत्रचंद्रग्रहणेयस्मि
न्यामेग्रहणंतस्मात्पूर्वंप्रहरत्रयंनभुंजीत॥सूर्यग्रहेतुप्रहरचतुष्टयंनभुंजीत॥सूर्य
ग्रहेतुनाश्नीयात्पूर्वंयामचतुष्टयं॥चंद्रग्रहेतुयामांस्त्रीन्बालवृद्धातुरैर्विनेति॥माधवी
येवृद्धगौतमोक्तेः॥ग्रहणंतुभवेदिंदोःप्रथमादधियामतः॥भुंजीतावर्त्तनात्पूर्वंप्रथमेप्र

यमादधः।इतिमार्कंडेयोक्तेश्चअपवादः॥ननुचंद्रग्रहेयामचतुष्टयनिषेधउचितोनतुसू॰
र्य्यग्रहेसूर्य्योदयात्प्राक्भोजनाप्राप्तेः॥मैवं॥वचनस्यप्रथमयामेसूर्यग्रहेसतिपूर्वेद्युः
पूर्वरात्रेभोजननिषेधपरत्वात्॥चंद्रसूर्यग्रहेविशेषमाहमाधवीयेवृद्धवशिष्ठः अस्तोद
येविधोःपूर्वंनाहर्भोजनमाचरेदिति॥द्वयोर्ग्रस्तास्तेतुमाधवीयेव्यासः॥अमुक्तयोरस्त
गयोरद्यात्दृष्ट्वापरेहनीति॥विष्णुधर्मेपि॥अहोरात्रंनभोक्तव्यंचंद्रसूर्य्यग्रहौयदा॥
मुक्तिंदृष्ट्वातुभोक्तव्यंस्नानंकृत्वाततःपरम्॥अहोरात्रनिषेधःसूर्यस्यग्रस्तास्तेमदनरत्ने
गार्ग्यः॥संध्याकालेयदाराहुर्ग्रसतेशशिभास्करौ॥तदहर्नैवभुंजीतरात्रावपिकदाचन
॥सायंसंध्यायांसूर्य्यस्यग्रस्तास्तेपूर्वेह्निरात्रौचनभोक्तव्यं प्रातःसंध्यायांचंद्रस्यग्रस्तो।
स्तेपूर्वरात्रावुत्तरेह्निचनभोक्तव्यमित्यर्थः।चंद्रग्रस्तास्तउत्तरदिनेसंध्याहोमादौनदो
षःतदाहोशनाः॥ग्रस्तेवास्तंगतेत्विंदौज्ञात्वामुक्तयवधारणं॥स्नानहोमादिकंकार्यंभुं
जीतेंद्रस्येपुनः॥एतदनाहिताग्निविषयं॥अपराह्णेव्रतेपायनीयमश्नीतइति॥कात्याय
नोक्तेर्व्रतस्यश्रौतत्वेनविहितत्वेनचप्रबलत्वात्॥अद्विर्व्रतंकुर्य्यादितिनिर्णयदीपः।राग
प्राप्तभोजनेकालनियमोयम्॥तेनज्वरादाविवनभोजनमिति॥कर्कानुसारिणः॥बा
लवृद्धातुराणांनुग्रहयामात्पूर्वमेकयामोनिषिद्धः॥सायान्हेग्रहणंचेत्स्यादपरान्हेनभो
जनं॥अपरान्हेनमध्यान्हेमध्यान्हेनतुसंगवे॥भुंजीतसंगमेचेत्स्यान्नपूर्वंभोजनक्रि
येतिमार्कंडेयोक्तेः॥इदंचबालादिविषयं॥बालवृद्धातुरैर्विनेतिपृथ्वीचंद्रोक्तेः।विधकालेग्रह
णेवापक्वमन्नंत्याज्यं॥सर्वेषामेववर्णानांसूतकंराहुदर्शने॥स्नात्वाकर्माणिकुर्वीत
श्रितमन्नंविवर्जयेदिति॥हेमाद्रौषट्त्रिंशन्मतात्॥शृतमितितदंतरितस्योपलक्षणम्
॥नवश्राद्धेसुयच्छिष्टंग्रहपर्युषितंचयदितिमिताक्षरायांवचनात्।भार्गवार्चनदीपिका
यांज्योतिर्निबंधेचमेधातिथिः।आरनालंपयस्तक्रंदधिस्नेहाज्यपाचितं॥मणिक।
स्थोदकंचैवनदुष्येद्राहुसूतकेमन्वार्थमुक्तावल्यां॥अन्नंपक्वमिहत्याज्यंस्नानंसव।
स्त्रंग्रहे॥वारितक्रारनालादितिलदर्भैर्नदुष्यति॥जलेत्वदोषोगांगविषयः॥ग्र
होषितंजलंपीत्वापादकृच्छ्रंसमाचरेदितितत्रैव।चतुर्विंशतिमतेअन्यजलस्यदो
षोक्तेः।विधकालेग्रहणेवाभोजनेप्रायश्चित्तमुक्तंमाधवीयेकात्यायनेन॥चंद्रसूर्य्य
ग्रहेभुक्त्वाप्राजापत्येनशुद्ध्यति।तस्मिन्नेवदिनेभुक्त्वात्रिरात्रेणैवशुद्ध्यतीति॥ग्रह
णेचत्रिरात्रमेकरात्रंवोपवासःश्रेयोर्थिनाकार्यः॥एकरात्रमुपोष्यैवंस्नात्वादत्त्वाच
शक्तितः॥कंचुकादिवसर्पस्यनिवृत्तिःपापकोशतः॥त्रिरात्रंसमुपोष्यैवंग्रहणेचंद्र
सूर्य्ययोः॥स्नात्वादत्त्वाचविधिवन्मोदतेब्रह्मणासहेतिहेमाद्रौलैंगोक्तेः॥इदंचपुत्र
निरिक्तविषयं॥आदित्येहनिसंक्रांतौग्रहणेचंद्रसूर्ययोः॥पारणंचोपवासंचनकु
र्यात्पुत्रवान्गृहीतिजैमिनिवचनात्॥यदातुरवेर्ग्रस्तास्तस्तदापुत्रिणःप्रहरद्वयंहि
त्वाबालादिवद्भोजनंनतूपवासः॥सायान्हेग्रहणंचेत्स्यादितिपूर्वोक्तमार्कंडेयवच॰

नात्॥सायाह्नेसंगवेश्रीयात् शारदेसंगवादधः॥मध्याह्नेपरतोश्रीयान्नोपवासोरविग्र
हेइतिस्मृतेश्चेतिहेमाद्रिः॥शारदोपराह्णः॥माधवमतेतुपुत्रिणोपितत्रोपवासएव॥
अहोरात्रंनभोक्तव्यमितिसर्वोक्तनिषेधस्यतेनापिपालनीयत्वात्॥उपवासनिषेध
स्तुव्रतरूपोपवासपरः॥कृष्णैकादशीनिषेधवदिति॥मदनरत्नेप्येवं॥इदमेवचयुक्तं
॥वर्द्धमानस्तु॥अहोरात्रंनभोक्तव्यमितिशातातपीयाये॥सूर्याचंद्रमसोर्लोकानस
यानुयातिमानवइति॥फल्गुनेर्मुक्तदर्शनेउपवासःकाम्योनत्वयंनिषेधइत्याहत
न्न॥अत्रव्रतत्वेपिप्रागुक्तविष्णुधर्मेनिषेधावश्यंभावात्॥तथाव्यासः॥रविग्रहःसू
र्यवारेसोमेसोमग्रहस्तथा॥चूडामणिरितिख्यातस्तत्रदत्तमनंतकम् १ वारेष्वन्येषु
यत्पुण्यंग्रहणेचंद्रसूर्ययोः॥तत्पुण्यंकोटिगुणितंयोगेचूडामणौस्मृतं॥अत्रचा
द्यंतयोःस्नानंकुर्यात्॥ग्रस्यमानेभवेत्स्नानंग्रस्तेहोमोविधीयते॥मुच्यमानेभवेद्दानं
मुक्तेस्नानंविधीयते॥इतिहेमाद्रौवचनात्॥स्नानंस्यादुपरागादौमध्येहोमःसुरार्च
नमितिमत्स्येवचनाच्च॥सर्वेषामेववर्णानांसूतकंराहुदर्शने॥सचैलंचभवेत्स्नानं।
सूतकान्नंचवर्जयेदितिवृद्धवशिष्ठोक्तेश्च॥सचैलत्वंमुक्तिस्नानपरमितिमदनरत्ने
उक्तंभार्गवार्चनदीपिकायाम्॥चतुर्विंशतिमते॥मुक्तौयस्तुनकुर्वीतस्नानंग्रहणसू
तके॥ससूतकीभवेत्तावद्यावत्स्यादपरोग्रहः॥इदंचस्नानममंत्रकंकार्यमिति स्मृ
तिरत्नावल्याम्॥तत्रतीर्थविशेषोभारते॥गंगास्नानंतुकुर्वीतग्रहणेचंद्रसूर्ययोः॥म
हानदीषुचान्यासुस्नानंकुर्याद्यथाविधि॥महानदीष्वपिमासविशेषेकाश्चिदुक्ताः॥
प्रयागेदेविकायांवासन्निहत्यांचवारणम्।सरस्वतीचंद्रभागाकौशिकीतापिकीत।
था॥सिंधुर्गंडकिकाचैवसरयूःकार्त्तिकादिनः॥मूलंहेमाद्रौस्पष्टम्॥व्यासः॥इंदो
र्लक्षगुणंपुण्यंरवेर्दशगुणंततः॥गंगातोयेतुसंप्राप्तेइंदोःकोटीरवेर्दश॥गवांको
टिसहस्रस्ययत्फलंलभतेनरः॥तत्फलंलभतेमर्त्योग्रहणेचंद्रसूर्ययोः॥असंभवे
तुमाधवीयेशंखः॥वापीकूपतडागेषुगिरिप्रस्रवणेषुच॥नद्यांनदेदेवखातेसरसी
षूद्धृतांबुनि॥उष्णोदकेनवास्नायाद्ग्रहणेचंद्रसूर्ययोः॥अत्रतारतम्यमाहमार्कंडे
यः॥शीतमुष्णोदकात्पुण्यमपारक्यंपरोदकात्॥भूमिष्ठमुद्धृतात्पुण्यंततःप्रस्रव
णोदकं॥ततोपिसारसंपुण्यंततोपुण्यंनदीजलं॥तीर्थतोयंततःपुण्यंमहानद्यंतु
पावनं॥ततस्ततोपिगंगांबुपुण्यंपुण्यस्ततोंबुधिरिति॥उष्णोदकमातुरविषयम्
॥तथागोदावरीमहापुण्याचंद्रेराहुसमन्विते॥सूर्येचराहुणाग्रस्तेतमोभूतेम।
हामुने॥नर्मदातोयसंस्पर्शेकृतकृत्याभवंतिहि॥पृथ्वीचंद्रोदयेप्रभासखंडे॥गा
वोनागाःस्तिलाधान्यंरत्नानिकनकंमही॥संप्रदायकुरुक्षेत्रेयत्फलंलभ्यतेनरैः
तद्दिदंग्रहणेभोधौस्नानाद्भवतियद्गुणं॥तत्रैवसौरपुराणेतुधिस्नानमुपक्रम्यादा
नानियानिलोकेषुविख्यातानि मनीषिभिः॥तेषांफलमवाप्नोतिग्रहणेचंद्रसूर्य

णः।देवीपुराणे।।गंगाकनखलंपुण्यंप्रयागंपुष्करंतथा।।कुरुक्षेत्रंमहापुण्यंराहुग्रस्तेदि
वाकरे।।स्नानासंभवेस्मरणंवाकार्यं।।स्मृत्वाशतगुणंफलंदृष्ट्वासर्वाघनाशनं।।स्पृष्ट्वागो
रेवपुण्यंतुपीत्वासौत्रामणींलभेत्।।स्नात्वावाजिमखंपुण्यंप्राप्नुयादविचारतः।रविचंद्रोप
रागेचस्वपतेचोत्तरेतथेति।।मार्कंडेयोक्तेः।।अत्रश्राद्धमाहऋष्यशृंगः।।चंद्रसूर्यग्रहेयस्तु
श्राद्धंविधिवदाचरेत्।।तेनैवसकलापृथ्वीदत्ताविप्रस्यवैकरे।।भारते।।सर्वस्वेनापिकर्त
व्यंश्राद्धंवैराहुदर्शने।।अकुर्वाणस्तुनास्तिक्यात्पंकेगौरिवसीदति।।विष्णुः।राहुदर्शन
दत्तंहिश्राद्धमाचंद्रतारकं।।इदंचामान्नेनहेम्नावाकार्यंनत्वन्नेन।।आपद्यनग्नौतीर्थेच
चंद्रसूर्यग्रहेतथा।।आमश्राद्धंप्रकुर्वीतहेमश्राद्धमथापिवेति।शातातपोक्तेरिति।।हेमाद्रि
माधवादयः।।अपरार्कस्तुएतद्द्विजानांपाकाभावेदृष्टव्यंतीर्थश्राद्धवत्।।पाकाभावेद्विजा
तीनामामश्राद्धंविधीयतइतिसुमंतूक्तेः।।सैंहिकेयोयदासूर्यंग्रसतेपर्वसंधिषु।।गजच्छा
यातुसाप्रोक्तातस्यांश्राद्धंप्रकल्पयेत्।।घृतेनभोजयेद्विप्रान्घृतंभूमौसमुत्सृजेदिति।।वा
यवीयोक्तेश्चेत्याह।।विज्ञानेश्वरोप्याह।।ग्रहणश्राद्धेभोक्तुर्दोषोदातुस्त्वभ्युदयइति।।सू
तकेमृतकेभुंक्तेगृहीतेशशिभास्करे।।छायायांहस्तिनश्चैवनभूयःपुरुषोभवेदित्यापस्त
वेभोजननिषेधाच्च।।अयंचनिषेधःश्राद्धभोक्तुःहस्तिच्छायासाहचर्यात्।अत्रग्रहण
निमित्तकश्राद्धेनैवामासंक्रांत्यादिनिमित्तकानांसिद्धिः।दार्शिकालभ्ययोरपीतिकालाद
र्शोक्तेः।अत्राशौचमध्येपिस्नानश्राद्धादिकार्यमेव।।सूतकेमृतकेचैवनदोषोराहुदर्शने।।ता
वदेवभवेच्छुद्धिर्यावन्मुक्तिर्नदृश्यतइतिमाधवीयेवृद्धवशिष्ठोक्तेः।स्नात्वाकर्मपरित्यागोरा
होरन्यत्रसूतकेइतिव्याघ्रपदोक्तेश्च।।कालादर्शेअंगिराः।।सर्वेवर्णाःसूतकेपिमृतकेरा
हुदर्शने।।स्नात्वाश्राद्धंप्रकुर्वीरन्दानंशाठ्यविवर्जितं।।मदनपारिजातेप्येवं।।तेनस्ना
नमात्रंप्रकुर्वीतदानंश्राद्धंविवर्जितमितिनिर्मूलंवदंतोगौडाःपरास्ताः।।इयंचशुद्धिर्वि
शेषान्मंत्रदीक्षापुरश्चरणादिसर्वस्मार्तकर्मविषया।।मदनरत्नेप्येवं।।रजस्वलायास्तु
भार्गवार्चनदीपिकायां।सूर्योदयनिबंधे।।नसूतकादिदोषोस्तिग्रहेहोमजपादिषुग्रस्ते
स्नायादुदक्यापितीर्थादुद्धृत्यवारिणेति।।अत्रस्नानेनैमित्तिकेप्राप्तेनारीयदिरजस्वला।
पात्रांतरिततोयेनस्नानंकृत्वाव्रतंचरेदित्यादिमिताक्षरोक्तोविधिर्ज्ञेयः।।तथाग्रहणरा
त्रावपिश्राद्धादिकार्यं।।ग्रहणोद्वाहसंक्रांतियात्रार्तिप्रसवेषुच।।दानंनैमित्तिकंज्ञेयंरा
त्रावपितदिष्यतइतिअपरार्केव्यासोक्तेः।।चंद्रग्रहेतथारात्रौस्नानंदानंप्रशस्यतइतिदे
वलोक्तेश्च।।यत्तुज्योतिःशास्त्रगर्गोदिनेचंद्रग्रहोरात्रौचसूर्यग्रहस्तदास्नानादिनका
र्यम्।।सूर्यग्रहोयदारात्रौदिवाचंद्रग्रहस्तथा।।तत्रस्नानंनकुर्वीतदद्याद्दानंचनक्वचिदि
तिषट्त्रिंशन्मतात्।ग्रहणदिनेवार्षिकश्राद्धप्राप्तौतुप्रयोगपारिजातेगोभिलः।।दर्शेर
विग्रहेपित्रोःप्रत्याब्दिकमुपस्थितं।।अन्नेनासंभवेहेम्नाकुर्यादामेनवासुतइति।।अत्र
दर्शरविपदंसुतशब्दःप्रदर्शनार्थः।न्यायसाम्यात्।तेनचंद्रग्रहेपिसपिंडादिवार्षिकम्।

न्यादिना तद्दिन एव कार्यमिति मदनपारिजाते व्याख्यातं ॥ पृथ्वीचंद्रोदयेप्येवं ॥ तेन यानि श्रा
मश्राद्धं प्रकुर्वीत मासं संवत्सरादृते इति ॥ अन्नेनैवाह्निकं कुर्याद्धेम्ना वामेन न क्वचिदिति म
रीचिलौगाक्ष्यादिवचनानि तानि ग्रहणादिनातिरिक्तविषयाणि ॥ निर्णयामृतेप्येवं ॥ यानि
तु ग्रहणात् तु द्वितीयेह्नि रजोदोषात्तु पंचमे ॥ ग्रस्तोदये यदा चंद्रे प्रत्यब्दं समुपस्थितं ॥ त
द्दिने चोपवासः स्यात्प्रत्यब्दं तु परेहनि ॥ तथा ॥ ग्रस्तावेवास्तमानं तु रवीन्द्वोः प्राप्नुतो यदि ॥
प्रत्यब्दं तु तदा कार्यं परेहन्येव सर्वदा ॥ चंद्रसूर्योपरागे च तथा श्राद्धं परेहनीत्यादीनि व
चनानि तानि महानिबंधेषु क्वाप्यनुपलंभान्निर्मूलानि ॥ प्रत्युत श्वोक्तनिबंधेषु तद्दिन ए
व श्राद्धमुक्तमित्यलं ॥ ग्रहणादिसप्तदिनपर्यंतं रामगोपालाद्यागमदीक्षोक्ता शिवार्चन
चंद्रिकायां ज्ञानार्णवे ॥ मंत्राद्यारंभणं कुर्याद्ग्रहणे चंद्रसूर्ययोः ॥ ग्रहणाद्यपि देवेशि का
लः सप्तदिनावधीति ॥ रत्नसागरे ॥ सत्तीर्थेर्कविधुग्रासे तंतुदामनपर्वणि ॥ मंत्रदीक्षां प्रकु
र्वाणो मासर्क्षादीन्न शोधयेत् ॥ अत्र सूर्यग्रहणमेव मुख्यं ॥ सूर्यग्रहणकाले तु नान्यदन्वे
षितं भवेत् ॥ सूर्यग्रहणकालेन समो नान्यः कदाचन ॥ न मासतिथिवारादिशोधनं सू
र्यपर्वणीति ॥ तंत्रेव कालोत्तरवचनात् ॥ चंद्रग्रहे तु या दीक्षा या दीक्षा व्रतचारिणां ॥ वनस्थ
स्य च या दीक्षा दारिद्र्यं सप्तजन्मस्विति ॥ तंत्रेव योगिनीतंत्रे निषेधाच्च ॥ ग्रहणं च जन्मराश्या
दौ निषिद्धं ॥ तदुक्तं ज्योतिषे ॥ त्रिषट्दशायोपगतं नराणां शुभप्रदं स्याद्ग्रहणं रवीन्द्वोः ॥
द्विसप्तनंदे च मध्यमं स्याच्छेषेष्वनिष्टं कथितं मुनींद्रैरिति ॥ आय एकादशं नंदाः नव ॥ इषु
पंच ॥ मदनरत्ने गर्गः ॥ जन्मसप्ताष्टरिष्फांकदशमस्थे निशाकरे ॥ दृष्टो रिष्टप्रदो राहुर्जन्म
र्क्षे निधनेपि च ॥ रिष्फं द्वादशं ॥ अंका नव निधनं अष्टसप्तमतारा ॥ पृथ्वीचंद्रोदये विष्णुधर्मे ॥
यन्नक्षत्रगतो राहुर्ग्रसते शशिभास्करौ ॥ तज्जातानां भवेत्पीडा ये नराः शांतिवर्जिताः ॥ तंत्रे
व पुराणांतरे ॥ सूर्यस्य संक्रमो वापि ग्रहणं चंद्रसूर्ययोः ॥ यस्य त्रिजन्मनक्षत्रे तस्य रोगोथ
वा मृतिः ॥ तस्य दानं च होमं च देवार्चनजपौ तथा ॥ उपरागाभिषेकं च कुर्याच्छांतिर्भविष्य
ति ॥ स्वर्णेन वाथ पिष्टेन कृत्वा सर्पस्य चाकृतिम् ॥ ब्राह्मणाय ददेत्तस्य न रोगादिश्च तत्कृत
॥ जन्मनक्षत्रं तत्पूर्वोत्तरे च त्रिजन्मनक्षत्रमित्युच्यते ॥ जन्मदशमैकोनविंशतितारा इति
के चित् ॥ सर्पस्य तदाकारस्य राहोरित्यर्थः ॥ अद्भुतसागरे भार्गवः ॥ यस्य राज्यस्य नक्षत्रे
स्वर्भानुरुपरज्यते ॥ राज्यभंगं सुहृन्नाशं मरणं वात्र निर्दिशेत् ॥ राज्यस्य नक्षत्रे अभिषेक
नक्षत्रमिति तंत्रेव व्याख्यातम् ॥ भार्गवार्चनदीपिकायां ज्योतिःसागरे ॥ सौवर्णं कारयेन्ना
गं पलेनाथ पलार्धतः ॥ तदर्धेन तदर्धेन फणायां मौक्तिकं न्यसेत् ॥ ताम्रपात्रे निधायाथ
घृतपूर्णे विशेषतः ॥ कांस्ये वा कांतिलोहे वान्यस्य दद्यात्सदक्षिणं ॥ चंद्रग्रहे तु रौप्यस्य
बिंबं दद्यात्सदक्षिणाम् ॥ नागं रुक्ममयं सूर्यग्रहे बिंबं च हेमजं ॥ तुरंगरथगोभूमितिल
सर्पिश्च कांचनं ॥ कालविवेकेपि ॥ सुवर्णनिर्मितं नागं सतिलं कांस्यभाजनं ॥ सदक्षिणं
सवस्त्रं च ब्राह्मणाय निवेदयेत् ॥ सौवर्णं राजतं वापि बिंबं कृत्वा स्वशक्तितः ॥ उपराग

भवक्लेशाच्छिदेविप्रायकल्पयेत्॥मंत्रस्तु॥तमोमयमहाभीमसोमसूर्यविमर्दन॥हेमताराप्र
दानेनममशांतिप्रदोभव॥विधुंतुदनमस्तुभ्यंसिंहिकानंदनाच्युत॥दानेनानेननागस्यरक्षमां
वेधजाद्भयात्॥अत्रशांतिरप्युक्ताहेमाद्रौमात्स्ये॥यस्यराशिंसमासाद्यभवेद्ग्रहणसंभवः॥स्ना
नंतस्यप्रवक्ष्यामिमंत्रौषधिसमन्वितं॥चंद्रोपरागंसंप्राप्यकृत्वाब्राह्मणवाचनं॥संपूज्य
चतुरोविप्रान्शुक्लमाल्यानुलेपनैः॥पूर्वमेवोपरागस्यसमानीयौषधादिकं॥स्थापयेच्च
तुरःकुंभान्ब्राह्मणान्सलिलान्वितान्॥गजाश्वरथ्यावल्मीकसंगमाद्धृदगोकुलात्॥
राजद्वारप्रदेशाच्चमृदमानीयनिक्षिपेत्॥पंचगव्यंपंचरत्नंपंचत्वक्पंचपल्लवं॥रोचनं
पद्मकंशंखंकुंकुमंरक्तचंदनं॥शुक्तिस्फटिकतीर्थांबुसितसर्षपगुग्गुलान्॥पद्मकंदे
वदारुंचविष्णुक्रांतांशतावरीं॥बलांचसहदेवींचनिशाद्वितयमेवच॥गजदंतंकुंकुमंच
तथैवोशीरचंदनं॥एतत्सर्वंविनिक्षिप्यकुंभेष्वावाहयेत्सुरान्॥सर्वेसमुद्राःसरितःती
र्थानिजलदानदाः॥आयांतुयजमानस्यदुरितक्षयकारकाः॥योसौवज्रधरोदेवआदित्या
नांप्रभुर्मतः॥सहस्रनयनश्चेंद्रोग्रहपीडांव्यपोहतु॥मुखंयःसर्वदेवानांसप्तार्चिरमितद्यु
तिः॥चंद्रोपरागसंभूतामग्निःपीडांव्यपोहतु॥यःकर्मसाक्षीलोकानांधर्मोमहिषवाहनः
॥यमश्चंद्रोपरागोत्थांग्रहपीडांव्यपोहतु॥रक्षोगणाधिपःसाक्षान्नीलांजनसमप्रभः
खड्गहस्तोतिभीमश्चग्रहपीडांव्यपोहतु नागपाशधरोदेवःसदामकरवाहनः॥सजला
धिपतिर्देवोग्रहपीडांव्यपोहतु॥प्राणरूपोहिलोकानांसदाकृष्णमृगप्रियः॥वायुश्चंद्रोपरा
गोत्थांग्रहपीडांव्यपोहतु॥योसौनिधिपतिर्देवःखड्गशूलगदाधरः॥चंद्रोपरागकलुषंध
नदोत्रव्यपोहतु॥योसाविंदुधरोदेवःपिनाकीवृषवाहनः॥चंद्रोपरागपापानिसनाशय
तुशंकरः॥त्रैलोक्येयानिभूतानिस्थावराणिचराणिच॥ब्रह्मविष्ण्वर्करुद्राश्चदहंतुम
मपातकं॥एवमावाहयेद्देवान्मंत्रैरेभिश्चवारुणैः॥एतानेवतथामंत्रान्स्वर्णपट्टेविले
खयेत्॥ताम्रपट्टेयवालिख्यनववस्त्रेतथैवच॥मस्तकेयजमानस्यनिदध्युस्तेद्विजोत्तमा
॥कलशान्द्रव्यसंयुक्तान्नानारूपसमन्वितान्॥गृहीत्वास्नापयेद्दृढंभद्रपीठोपरि
स्थितं॥सर्वैरेवतुमंत्रैश्चयजमानंद्विजोत्तमाः॥अभिषेकंततःकुर्यान्मंत्रैर्वारुणसूक्तकैः
आचार्यमर्चयेत्पश्चात्स्वर्णपट्टंनिवेदयेत्॥आचार्यदक्षिणांदद्याद्गोदानंचस्वशक्ति
तः॥होमंवापिप्रकुर्वीततिलैर्व्याहृतिभिस्तथा॥दानंचशक्तितोदद्याद्दीक्षेदात्मनोहितं
॥सूर्यग्रहेसूर्यनामयुक्तान्मंत्रांश्चकीर्तयेत्॥अनेनविधिनायस्तुग्रहणेस्नानमाचरे
त्॥नतस्यग्रहणेदोषःकदाचिदपिजायते॥इतिग्रहणशांतिः॥भार्गवार्चनदीपिका
यां॥ब्रह्मसिद्धांते॥सर्वैःपदस्थितंवीक्ष्यंखस्थंतेलांबुदर्पणैः॥ग्रहणंशुद्धिरीणांतुनप
श्येनपटंविना॥तथामंगलकृत्येषुवेधविशेषोहेमाद्रौ॥त्रयोदश्यादितोवर्ज्यंदिनानांन
वकंध्रुवं॥मांगल्येषुसमस्तेषुग्रहणेचंद्रसूर्ययोः॥प्रकारांतरंतत्रैवोक्तं॥द्वादश्यादि
तृतीयांतोवेधस्तुग्रहेस्मृतः॥एकादश्यादिकःसोरेचतुर्थ्यंतःप्रकीर्तितः॥इदंचग्रहणे।

यासेत्त्वहं खंडग्रहे॥ तयोरितिमन्वेवोक्तेः॥ इदं च यत्स्नाले त्रिदिनं श्रद्धमिति॥ नारदेन यत्स्नाले(
विशेषोक्तेर्यत्स्नातस्स भिन्नग्रहणपरं॥ ज्योतिर्निबंधे च्यवनः॥ ग्रहणोत्पातभं त्याज्यं मंगलेषु ऋ
तुत्रयं॥ यावच्च रविणा भुक्ता भुक्तं भंदग्धकाष्ठवत्॥ अन्यानि चाग्नेयादिमंडलानि तत्फ(
लं वर्णविकारादिफलं च दैवज्ञेभ्यो ज्ञेयम्॥ पुरश्चरणचंद्रिकायां॥ चंद्रसूर्योपरागे च स्ना
त्वा प्रयतमानसः॥ स्पर्शादिमोक्षपर्यंतं जपेन्मंत्रं समाहितः॥ जपाद्दशांशतो होमस्तथा
होमात्तु तर्पणं॥ तर्पणस्य दशांशेन मार्जनं कथितं किल॥ तत्रैव देवतारूपं ध्यात्वात्मानं
प्रकल्प्य चात्मनो मंत्रमुच्चार्य तदंते देवताभिधां॥ द्वितीयांतामहं पश्चादभिषिंचाम्यनेन
तु तोयैरंजलिना शुद्धैरभिषिंचेत्स्वमूर्द्धनि॥ मार्जनस्य दशांशेन ब्राह्मणानपि भोजये
त्॥ जपोत्राक्षर्द्धको होमस्तर्पणं चाभिषेचनं॥ भूदेवभुजनं पंचप्रकारोक्ता पुरक्रिया॥
तथा होमाशक्तौ जपं कुर्याद्धोमसंख्याचतुर्गुणं॥ एवं कृते तु मंत्रस्य जायते सिद्धिरुत्तमा॥
ग्रहणप्रसंगात्कुरुक्षेत्रप्रतिग्रहे प्रायश्चित्तमुच्यते॥ तत्रारुणस्मृतौ॥ प्रतिग्राही कुरुक्षेत्रे
न भूयः पुरुषो भवेत्॥ तथापि मनसः शुद्ध्यै प्रायश्चित्तं समाचरेत्॥ तप्तकृच्छ्रद्वयं कुर्याद्वेद
वेन समन्वितं॥ मंत्रेणावायुजेतां यजपेल्लक्षसप्तकं॥ वापीकूपतडागादिखनने वि(
सृजेद्धनमिति॥ एतच्च यद्गर्हितेनार्जयंति कर्मणा ब्राह्मणा धनं॥ तस्योत्सर्गेण शुध्यंति
दानेन तपसैव चेति मनूक्तेरुत्सर्गोत्तरं ज्ञेयमिति दिक्॥ ग्रहणोत्तरं तस्य पूर्वसंकल्पित
द्रव्यस्य द्विगुणं भवतीति शिष्टाः॥ पठंति च लघुब्रह्मवैवर्ते दातव्यमिति नोक्ताश्यावता
त्कुत्र चित्कचित्॥ अहोरात्रमतिक्रम्य तद्दानं द्विगुणं भवेत्॥ दशोत्तरं पर्वसु स्याच्छ
तं चंद्रग्रहे भवेत्॥ सूर्यग्रहे सहस्रं तत् मरणेऽनंतकं स्मृतमिति॥ अत्र मूलं चिंत्यं॥ अत्र
केचिद्गौडास्त्वाहुः॥ ग्रहणस्य निमित्तत्वेन तन्निश्चयस्य प्रयोजकत्वात्॥ ज्योतिः
शास्त्रादिना ज्ञातस्य ज्ञानस्य निमित्तत्वे प्राप्तेपि॥ स्नानं दानं तपः श्राद्धमनंतं राहुदर्शने
॥ चंद्रसूर्योपरागे तु यावद्दर्शनगोचर इति जाबाल्यादिवचने सुदृशि प्रयोगाच्चाक्षुषज्ञा
नस्यैवोपसंहारन्यायेन निमित्तत्वं॥ अन्यथा दर्शो लक्षणा स्यात्॥ तेन मेघाच्छादनेंधादी
नां जन्मसप्ताष्टमादिनिषिद्धदर्शनानां च स्नानश्राद्धादौ नाधिकार इति कल्पतरुरप्याह॥
दर्शनशब्देन चाक्षुषज्ञानं गृह्यते न ज्ञानमात्रं अज्ञातस्य निमित्तत्वासंभवान्निमित्तम
हिम्नैव॥ ज्ञानलाभे दर्शनपदवैयर्थ्यापत्तेः तेन चाक्षुषधीयोग्यः कालः पुण्यः॥ योग्य
त्वं च प्रयत्नानपनेयचाक्षुषज्ञानप्रतिबंधकराहित्यं तेन मेघच्छन्ने योग्यताभावान्न
स्नानादीति॥ निर्णयामृतेप्येवं मदनेन तूक्तम्॥ यदि चाक्षुषज्ञानं निमित्तं स्यात्तदा सूर्य
ग्रहो यदा रात्रौ दिवा चंद्रग्रहस्तथा॥ तत्र स्नानं न कुर्वीत दद्याद्दानं च न कचित् इति वा
क्यं व्यर्थं स्यात्॥ चाक्षुषज्ञानाभावेन प्राप्त्यभावात्तत्त्वैकत्वाच्च निषेधस्य॥ न चेदं ग्रस्ता
स्तपरं॥ रविचंद्रयोरस्तानंतरं रात्रिदिवाग्रहणत्वादिति वाच्यं॥ तत्र पदस्य ग्रहपरत्वे
ऽधिकरणत्वायोगान्निमित्तपरत्वे च तद्ग्रहनिमित्तकस्नानादेरस्तात्मागम्यभावापत्तेः

अथतत्रैतिरात्रिदिनेउच्यते॥सर्वेष्वस्वेपीतिवक्तुणाभूतेऽपि॥तन्न॥नादृशमंत्रलिंगाभावा
त्॥तयोर्निमित्तत्वेधिकरणत्वेवाऽन्यप्रयुक्तस्नानाद्यभावापत्तेश्च॥किंच॥नैसेनोयंतमा
दिस्यंनास्त्यंतंकदाचन॥नोपरक्तंनवारिस्थंनमध्यंनभसोगतमितिमनुवचनंवाध्येत॥
दृश्येरिष्टप्रदोराहुरित्यादिचानचात्रविहितेदर्शनेनिषेधात्प्रवृत्तिवत्पर्युदासनीयतापि
नयुक्तेतिवाच्यम्॥दर्शनस्यनिमित्तस्यानुवादेनविधेयत्वाभावात्॥एतच्चाग्रेवक्ष्यामः॥
नत्वेवादर्शनस्यविधौतत्रस्नानविधौचविरुद्धत्रिकद्वयापत्तेः॥अलुप्तदर्शन ॥०॥ वि
धानेनसंकोचइतिचेन्न॥मुक्तिंदृष्ट्वाततःस्नायादितिमुक्तिस्नानेपिचाक्षुषज्ञानस्यनिमि
त्तत्वापत्तेः॥अस्तुकिन्नश्छिन्नमितिचेन्न॥यस्तास्तेतयोःपरेद्युरुदयेदृष्ट्वाभ्यवहरेच्छु
चिरितिदर्शनोत्तरंभोजनविधानाद्ग्रस्तस्यपूर्वेवेधकालइव॥यावद्दर्शनंभोजननिषेधाप
त्तेः॥मध्येऽस्तीभूतस्यसुतरांयावच्चक्षुःप्राप्युपवासप्रसंगश्च॥अथान्नलोलुपतयात्तत्स्ना
नमात्रेविवक्ष्येत तत्सर्वमपिनिर्लज्जैस्त्वीक्रियताम्॥एतेनयत्केनचिदुक्तंस्पर्शस्ना
नंमुक्तिस्नानंचयस्यदर्शनंतेनैवकार्यंनान्येन॥त्वामन्ययेनसमानकर्तृकत्वावगतेरि
ति॥तन्निरस्तम्॥कातर्हितस्यगतिः॥कातर्हितस्यगतिः॥दृशेरुद्देश्यविशेषणत्वाद्ग्रहै
कत्ववदविवक्षयाऽर्थतःसिद्धज्ञानमात्रानुवादत्वेसर्वंसुस्थम्॥अंगुल्यायनादेश्यग्रह
व्याहत्यावादर्शनस्यार्थवत्त्वं॥नचोक्तयोग्यतापिसाध्वी॥दर्शनोत्तरंमेघच्छन्नेयोग्यताभ
वापत्त्यादानाद्यभावापत्तेः तेनतन्नद्रष्टव्यच्छेदेनयोतिश्शास्त्रावेद्यत्वमेवयोग्यता॥किंच॥
रजोदर्शनेनारीत्रिरात्रमशुचिर्भवेदित्यत्राप्यंधस्त्रीणामाशौचाभावप्रसंगः॥यत्तुवर्द्धमा
नेनोक्तं॥ज्ञानोत्तरंह्यधिकारोज्ञानकालेस्नानकालेज्ञानाभावात्॥एवंदर्शनोत्तरंमुक्तिप
र्यंतमस्त्येवयोग्यतेति॥तदपिप्रतिज्ञामात्रं॥यस्तोस्तेतयोःपरेद्युरुदयेदृष्ट्वाभ्यवहरेच्छु
चिरित्यादिवाक्यवैयर्थ्यापत्तेः॥चाक्षुषज्ञानादन्यथानुपपत्त्यैवार्थादुदयेस्नानसिद्धेः॥
ननुमुक्तिस्नानेशास्त्रीयमेवज्ञानं निमित्तंनचाक्षुषंचंद्रसूर्यग्रहेणाद्यात्॥तस्मिन्नहनि
सर्वतःराहोर्विमुक्तिंविज्ञायस्नात्वाकुर्वीतभोजनमितिवृद्धगौतमेनविज्ञायेतिज्ञानमा
त्रोक्तेः॥यत्तु॥मुक्तिंदृष्ट्वातुभोक्तव्यंस्नानंकृत्वाततःपरं॥मेघमालादिदोषेणयदिमुक्ति
र्नदृश्यते॥आकलय्यतुतत्कालंस्नात्वाभुंजीतवाग्यतःइतिगौडनिबंधेवचनात्तन्नेव॥
अज्ञानस्यनिमित्तत्वभावेननिमित्तमहिम्नैवज्ञानलाभेवाक्यवैयर्थ्यात्॥यस्तास्तेपि
तद्वापत्तेश्च॥किंच॥दर्शनंपुंसोविशेषणमुपलक्षणंवा॥नाद्यः॥दर्शनावच्छिन्ने
कालेस्नानतुलादानादेर्विधानात्॥दर्शनविच्छेदेस्तनमपिस्नानादिनग्रहणनिमित्तंस्या
त्॥नांत्यः॥यावद्दर्शनगोचरइतियावत्पदवैयर्थ्यप्रसंगात्॥दृष्टग्रहणोत्तरमपिस्नाना
द्यापत्तेश्च॥ज्ञानपक्षेप्येषदोषस्तुल्यइतिचेन्न॥सूर्योस्तमियादितिज्ञानवाचकंपदंश्रूयेत॥
ततस्तस्यान्वयोविचार्येत॥दृशिस्तुश्रूयतइतिवैषम्यं॥कथंतर्हिज्ञानंलभ्यते॥संक्रां
तौस्नायादितिवद्दर्शनादित्यवेहि॥अश्रुतत्वादेवतोद्देश्यविशेषणाविवक्षाकृते॥वाक्यभे

षोपि॥ अस्त्वेतर्हि दृष्टं ग्रहणनिमित्तमिति चेन्न॥ अस्नातस्नोत्तरस्नानापत्तेः॥ विशिष्टोद्देशेवा
क्यभेदाच्च॥ नवाप्येतत्तुल्यमिति चेन्न॥ यावद्दर्शनगोचर इति वचनेनतन्निषेधात् नवतत्र
ग्रहइवग्रस्तास्तेपिस्यात्॥ किंचादर्शनस्य विधिरनुवादोवा॥ आद्ये ग्रहणोद्देशेनादर्शन
विधिरुतदर्शनविशिष्टस्नानविधिरुतस्नानोद्देशेनदर्शनविधिः॥ नाद्यः॥ ग्रहोद्देशेनस्ना
नविधानेदर्शनविधाने च वाक्यभेदात् एतेनद्वितीयोपिपरास्तः॥ नतृतीयः॥ स्नानस्याप्रा
प्तेः॥ दर्शनस्यनिमित्तत्वेनाविधेयत्वाच्च॥ अन्यथासोमवमनादौप्रसङ्गः नविधिःकेनवार्थे
न॥ अथनानावाक्यैर्मुक्तिर्दर्शनविशिष्टस्नानविधिः॥ क्वचिच्च प्राप्तेदर्शनेनिमित्तीकृत्य
स्नानमात्रविधिः॥ तन्न॥ स्नानस्य प्रधानस्य प्राप्तौ तदंगदर्शनप्राप्तिः॥ तस्यां चनिमित्ते सति
स्नानमित्यन्योन्याश्रयात्॥ एवंदर्शनविधौ सतितन्निमित्तकस्नानविधिः॥ सति च प्रधान
स्नानविधौ तदंगदर्शनविधिः॥ एवमधिकारे प्रयोजकत्वे चयोज्यम्॥ स्वार्थ इर्वकालवि
धौ चास्त्येववाक्यभेदः॥ अन्यथास्नानोत्तरमपिदर्शनमंगंस्यात्॥ नद्वितीयः॥ तत्रापिदर्श
नग्रहयोर्निमित्तत्वेस्नानद्वयापत्तेर्दर्शनादृत्तौनैमित्तिकावृत्तिप्रसंगात्॥ दर्शनविशिष्टग्र
हणस्यविशिष्टस्यानुवादेवाक्यभेदापत्तेः॥ नचद्वयविशिष्टं हि विशिष्टं निमित्तमितिवाच्यम्॥
आर्तिमात्रस्य हि निमित्तत्वेनिमेषाद्यावृत्तेरपितत्त्वापत्तेर्नैमित्तिकत्वभंगात् तंविशिष्टोदे
श्यत्वं॥ इहतु ग्रहणमात्रस्यनिमित्तत्वेनकाचित्क्षतिः॥ तस्मादर्शनवाक्यानां अस्नातस्नविष
यत्वादनादेश्या ग्रहयस्त्वाद्यास्नानस्यवार्थतः प्राप्तस्तदेवनिमित्तं॥ तेनमेघाच्छादनेऽपि
धादेश्चस्नानादिभवत्येवेत्यलं वेदवाह्यैस्सहन्यायेन॥ इतिग्रहणनिर्णयः॥ अथसमुद्रस्ना
नं॥ आश्वलायनः॥ समुद्रेपर्वसुस्नायादमायां च विशेषतः॥ यायैर्विसृज्यन्ते सर्वैरमायांस्ना
नमाचरन्॥ भृगुभौमदिनेस्नानं नित्यमेवविवर्जयेत्॥ भारते॥ अश्वत्थसागरौसेव्यौन
स्पृष्टव्यौकदाचन॥ अश्वत्थंमंदवारेतु सागरं पर्वणिस्पृशेत्॥ पृथ्वीचंद्रोदयेस्कांदे॥ पुना
तिपर्वणिस्नानात्तत्र्येणौस्सरितांपतिः॥ कदाचिदपिनैवात्रस्नानंकुर्यादपर्वणि॥ अ
स्यापवादस्तत्रैवप्रभासखंडे॥ पर्वकालेचसंप्राप्तेनदीनांचसमागमे॥ सेतुबंधेतथासिं
धौतीर्थेष्वन्येषुसंयुतः॥ एवमादिषुसर्वेषुमेध्योन्येतुस्वकर्मसु॥ तथा विनामंत्रविनाय
ज्ञसूत्रकर्मविनानरैः॥ कुशाग्रेणापिदेवेशिनस्पृष्टव्योमहोदधिः॥ नकालनियमःसे
तौसमुद्रस्नानकर्मणि॥ तद्विधिश्चतत्रैव॥ पिप्पलादसमुत्पन्नेकृत्येलोकभयंकरे॥ पा
षाणांतेमयादत्तमाहारार्थं प्रकल्प्यतामितिपाषाणं प्रक्षिप्य॥ विश्वाचीचघृताचीचवि
श्वयोनेविशांपते॥ सान्निध्यंकुरुमेदेवसागरेलवणांभसि॥ नमस्तेविश्वगुप्तायनमोवि
ष्णोऽपांपते॥ नमोजलाधिरूपायनदीनांपतयेनमः॥ समस्तजगदाधारशंखचक्रग
दाधर॥ देवदेहिममानुज्ञांतवतीर्थनिषेवणे॥ त्रितत्वात्मकमीशानंनमोविष्णुमुमापति
॥ सान्निध्यंकुरुदेवेशसागरेलवणांभसि॥ अग्निश्चयोनिरनिलाचदेहोरेतोधाविष्णुरमृ
तस्यनाभिः॥ एतद्ब्रुवन्पांडवसत्यवाक्यंततोवगाहेतपतिंनदीनामितिभारतोक्तमंत्रा॥

त्पठित्वाविधिवत्स्नात्वासर्वरत्नोभवान्श्रीमान्सर्वरत्नाकरोयतः॥सर्वरत्नप्रधानस्त्वं।
गृहाणार्घ्यंमहोदधेइत्यर्घंदत्वातर्पयेत्॥यथोक्तंपृथ्वीचंद्रोदयेस्कांदे॥पिप्पलादंविकर्णं
चकृतांतंजीविकेश्वरं॥वशिष्ठंवामदेवंचपराशरमुमापतिं॥वाल्मीकिंनारदंचैववालखि
ल्यांस्तथैवच॥नलंनीलंगवाक्षंचगवयंगंधमादनं॥जांबवंतंहनूमंतंसुग्रीवंचांगदंतथा॥
मैंदंचद्विविदंचैववृषभंशरभंतथा॥रामंचलक्ष्मणंचैवसीतांचैवयशस्विनीं॥एतांस्त
र्पयेद्विद्वान्जलमध्येविशेषतः॥आब्रह्मस्तंबपर्यंतंयत्किंचित्सचराचरं॥मयादत्तेनतो
येनतृप्तिमेवाभिगच्छत्विति॥

इतिश्रीमीमांसकनारायणभट्टसूरिसूनुरामकृष्णभट्टात्मजदि-
नकरभट्टानुजकमलाकरभट्टकृतेनिर्णयसिंधौप्रथमपरिच्छेदः

## निर्णयसिंधौद्वितीयपरिच्छेदेसंवत्सरादिनिर्णयः

अथसंवत्सरप्रतिपदमारभ्य॥तिथिकृत्येचकृष्णादिंव्रतेशुक्लादिमेवच॥विवाहादौच
सौरादिमासंकृत्येविनिर्दिशेदितिशास्त्रंप्रायसोनुसृत्यतिथिनिर्णयस्तत्त्वांशंचनिरूप्य
ते॥तत्रमीनसंक्रांतौपश्चात्षोडशघटिकाःपुण्यकालः॥रात्रौचनिशीथात्प्राक्परतश्च
संक्रमेपूर्वोत्तरदिनार्द्धेपुण्यं निशीथेतुदिनद्वयंपुण्यमितिसामान्यनिर्णयादवसेयम्॥
अथतिथिनिर्णयः॥तत्रचैत्रशुक्लप्रतिपदिवत्सरारंभः॥तत्रौदयिकीग्राह्या॥चैत्रेमासि
जगद्ब्रह्माससर्जप्रथमेहनि॥शुक्लपक्षेसमग्रंतुतदासूर्योदयेसतीतिहेमाद्रौब्राह्मोक्तेः॥
दिनद्वयेतद्व्याप्तावव्याप्तौवापूर्वैवातदुक्तंज्योतिर्निबंधे॥चैत्रसितप्रतिपदियोवारोर्कोदये
सवर्षेशः॥उदयद्वितयेपूर्वोनोदययुगलेपिपूर्वःस्यात्॥यस्माच्चैत्रसितादेरुदयाभ्यातः
प्रवृत्तिरब्दादेरिति॥वत्सरादौवसंतादौबलिराज्येतथैवच॥पूर्वविद्धैवकर्तव्याप्रतिपत्सर्व
दाबुधैरिति॥वृद्धवशिष्ठोक्तेः॥चैत्रमासस्ययाशुक्लाप्रथमाप्रतिपद्भवेत्॥तदह्निब्रह्मण
कृत्वाशीयवासंसुमज्जनं॥संवत्सरमवाप्नोतिसौख्यानिभृगुनंदनेति हेमाद्रौविष्णुधर्मो
क्तेः॥यदातुचैत्रोमलमासोभवतितदादेवकार्यस्यतत्रनिषिद्धत्वाच्छुद्धेमासिसंवत्सरारंभः
कार्यइतिकेचिदाहुः॥निष्कर्षस्तुशुक्लादेर्मलमासस्यसोंतर्भवतिचांद्रइत्यादिवचनाद
ग्रिमवर्षांतःपातान्मलमासमारभ्यैववर्षप्रवृत्तेः॥शुक्लाद्यादाविवमलमासएवकार्य
इतिवयंप्रतीमः॥ननुशुक्लाद्यादौचैत्रशुक्लप्रतिपदंतरस्याभावाद्युक्तंतन्मध्यएवानुष्ठा
नं॥मलमासेतुशुद्धप्रतिपदंतरसंभवाच्छुद्धएव ॥ वत्सरारंभोयुक्तइतिचेभ्रांतोसि॥न
हिप्रतिपदंतरसत्त्वंप्रयोजकम्॥द्विःकरणापत्तेर्वर्षेशद्वयापत्तेश्च॥अपितुवत्सरारंभः॥
सतुमलमासेपीत्युक्तंप्राक्॥नहिचैत्रशुक्लादिर्मलमासः॥पूर्ववर्षेनभवतीतिब्रह्मणापि
सुवचं॥अत्रतैलाभ्यंगोनित्यः॥संवत्सरादौवसंतादौबलिराज्येतथैवच॥तैलाभ्यंगमकु
र्वाणोनरकंप्रतिपद्यतइतिवृद्धवशिष्ठोक्तेः॥अस्यामेवनवरात्रारंभः॥तदुक्तंमार्कंडेयपुरा
णे॥शरत्कालेमहापूजाक्रियतेयाचवार्षिकी॥तत्रपरयुतैवग्राह्या॥अमायुक्तानकार्या

व्याप्रतिपच्चंडिकार्चने मुहूर्त्तमात्राकर्त्तव्या द्वितीयादिगुणान्वितेति देवीपुराणात्॥ निर्मोहिताः पराः प्रोक्ताः तिथयः कुरुनंदन॥ कार्त्तिकाश्वयुजौ मासौ चैत्रे मासि च भारतेति हेमाद्रौ ब्राह्मोक्तेः॥ पराः परयुताः॥ अत्र विशेषः पारणादिनिर्णयश्च शारदनवरात्रे वक्ष्यते॥ अत्र प्रपादानमुक्तमपरार्के भविष्ये॥ अतीते फाल्गुने मासि प्राप्ते चैत्रमहोत्सवे॥ पुण्येह्नि विप्रकथिते प्रपादानं समारभेत्सुपक्वमन्नतश्चोत्सर्ज्जयेद्द्विजान्मंत्रेणानेन मानवः॥ प्रपेयं सर्वसामान्या भूतेभ्यः प्रतिपादिता॥ अस्याः प्रदानात्पितरस्तृप्यंतु हि पितामहाः॥ अनिवार्यं ततो देयं जलं मासचतुष्टयमिति॥ तथा॥ प्रपां दातुमशक्तेन विशेषाद्धर्ममीप्सुना॥ प्रत्यहं धर्मघटको वस्त्रसंवेष्टिताननः॥ ब्राह्मणस्य गृहे देयः शीतामलजलः शुचिः तत्र मंत्रः॥ एष धर्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः॥ अस्य प्रदानात्सकला मम संतु मनोरथाः॥ अनेन विधिना यस्तु धर्मकुंभं प्रयच्छति॥ प्रपादानफलं सोपि प्राप्नोतीह न संशय इति॥ चैत्रशुक्लतृतीयायां गौरीमीश्वरसंयुतां॥ संपूज्य दोलोत्सवं कुर्यात्॥ तदुक्तं निर्णयामृते देवीपुराणे॥ तृतीयायां यजेद्देवीं शंकरेण समन्वितां॥ कुंकुमागरुकर्पूरमणिवस्त्रसुगंधकैः॥ स्रग्गंधधूपदीपैश्च दमनेन विशेषतः॥ आंदोलयेत्ततो वत्स शिवोमातुष्टये सदेति॥ अत्रैव सौभाग्यशयनव्रतमुक्तं मात्स्ये॥ वसंतमासमासाद्य तृतीयायां जनप्रिये॥ सौभाग्याय सदा स्त्रीभिः कार्यं पुत्रसुखेप्सुभिरिति॥ अत्रापि परयुतैव॥ इयं च मन्वादिरपि॥ अत्रैव प्रसंगात्सर्वमन्वादिनिर्णय उच्यते॥ तत्रोक्तं दीपिकायाम्॥ तिष्यश्रीनतिथिस्तिष्याशीतकृत्स्नभोनलोग्रहः॥ तिष्यकौनशिवोऽश्वोमा तिथिमन्वादयो मधोरिति॥ तिथिः १५ पूर्णिमा॥ अग्निस्तृतीया॥ नेति वैशाखे नास्तीत्यर्थः॥ आशा दशमी॥ कृत्स्नभः कृष्णाष्टमी॥ अनलस्तृतीया॥ ग्रहो नवमी॥ अर्को द्वादशी॥ नेति मार्गे नेत्यर्थः॥ शिव एकादशी॥ अश्वः सप्तमी॥ मधोश्चैत्रादारभ्यैता मन्वादय इत्यर्थः॥ अत्र मूलवचनानि हेमाद्रौ ज्ञेयानि॥ एताश्च मन्वादयो हेमाद्रिमते शुक्लपक्षस्थाः पौर्वाह्णिकाः कृष्णपक्षस्थाः अपराह्णिका ग्राह्याः॥ पूर्वाह्णे तु सदा ग्राह्याः शुक्ला मनुयुगादयः॥ दैवे कर्मणि पित्र्ये च कृष्णे चैवापराह्णिका इति गारुडवचनात्॥ अथो मन्वादियुगादिकर्मतिथयः॥ पूर्वाह्णिकास्तु सिते विज्ञेया अपराह्णिकाश्च बहुले इति दीपिकोक्तेश्च॥ कालादर्शे त्वपराह्णव्यापित्वं मन्वादिष्वप्युक्तं॥ तच्च युक्तमिति युगादिनिर्णये वक्ष्यामः॥ अत्र श्राद्धमुक्तं मात्स्ये॥ कृतं श्राद्धं विधानेन मन्वादिषु युगादिषु॥ हायनानि द्विसाहस्रं पितॄणां तृप्तिदं भवेदिति॥ मन्वादिश्राद्धं मलमासे सति मासद्वयेपि कार्यं॥ मन्वादिकं तैर्थिकं च कुर्यान्मासद्वयेपि चेति स्मृतिचंद्रिकोक्तेः॥ अत्र पिंडरहितं श्राद्धं कुर्यात्॥ तदुक्तं कालादर्शे॥ विषुवायनसंक्रांतिमन्वादिषु युगादिषु॥ विहाय पिंडनिर्वापं सर्वं श्राद्धं समाचरेदिति॥ मन्वादिश्राद्धं च नित्यमकरणे प्रायश्चित्तदर्शनात्॥ तदुक्तं प्रग्विधाने॥ त्वंभुवः प्रतिमंत्रं च शतवारं जले जपेत्॥ मन्वाद्योपदानस्नात्कुरुते नैव चापि

यइति॥एवंप्रायश्चित्तदीक्षादिदर्शनेतानिषण्णवतिश्राद्धानिनित्यानितानितु॥अमामनुयुग
क्रांतिधृतिपातमहालयाः॥आन्वष्टक्यंतुपूर्वेद्युःषण्णवतःप्रकीर्त्तिताइत्युक्तानि।चकाराद
ष्टकाग्रहणाद्द्वादशप्रतिःपुत्रकाम्यानिश्राद्धानि।पित्रोःक्षयेत्वमावास्याकरतुसंक्रांत्यनंत्य
काः।अपरपक्षेनवान्नेहेमन्वादियुगादिषु॥आषाढीकार्त्तिकीमाघीवैशाखीचेत्यनंतयकाः
२ १२ ६ १२ ४ १६ २ १४ ४ मिलित्वाद्वादशप्रतिः॥चैत्रशुक्लतृतीयेवमत्स्यजयंती।अ
त्रैवप्रसंगाद्दशावतारजयंत्योनिर्णीयंते॥तत्रपुराणसमुच्चये।मत्स्योभूद्भुतभुग्दिनेमधु
सितेकूर्म्मोविधौमाधवे॥वाराहोगिरिजासुतेनभसियम्भूतेसितेमाधवे॥सिंहोभाद्रपदे
सितेहरितिथौश्रीवामनोमाधवे॥रामोगौरितिथावतःपरमभूद्रामोनवम्यांमधोः १॥
कृष्णोष्टम्यांनभसिसितपरेचाश्विनेयद्दशम्यां॥बुद्धःकल्कीनभसिसममभूच्छुक्लपष्ठ्यां
क्रमेण॥अन्हेमध्येवामनोरामरामौमत्स्यःक्रोडश्चापराह्णेविभागे।कूर्म्मःसिंहोबौद्धक
ल्कीचसायंकृष्णोरात्रौकालसाम्येचपूर्वेति।केचित्तुस्फुटान्श्लोकान्पठंति॥यथा॥चैत्रे
तुशुक्लपंचम्यांभगवान्मीनरूपधृक्।ज्येष्ठेतुशुक्लद्वादश्यांकूर्म्मरूपधरोहरिः।चैत्रेकृष्ण
नवम्यांतुहरिर्वाराहरूपधृक्॥नरसिंहश्चतुर्दश्यांवैशाखेशुक्लपक्षके॥मासेभाद्रपदेशुक्ल
द्वादश्यांवामनोहरिः॥राधःशुक्लतृतीयायांरामोभार्गवरूपधृक्॥चैत्रेशुक्लनवम्यांतुरा
मोदशरथात्मजः॥नभस्येतुद्वितीयायांबलभद्रोभवद्धरिः॥श्रावणेबहुलेष्टम्यांकृष्णोभू
द्वोकरक्षकः॥ज्येष्ठेशुक्लद्वितीयायांबौद्धःकल्कीभविष्यतीति॥कौंकणास्तुवाराहपुरा
णस्थेत्विनवाक्यानिपठंति॥आषाढेशुक्लपक्षेतुएकादश्यांमहातिथौ॥जयंतीमत्स्यना
म्नीतितस्यांकार्यंसुपोषणं॥नभोमासितृतीयायांहरिःकमठरूपधृक्॥नभस्यशुक्लपंचम्यां
वराहस्यजयंतिका॥वैशाखेतुचतुर्दश्यांनृसिंहःसमुपधन॥वैशाखेशुक्लपक्षेतुतृतीया
यांभृगूद्वहः॥मासिभाद्रपदेशुक्लेकादश्यांवामनोहरिः॥चैत्रेनवम्यांरामोभूत्कौशल्या
यांपरःपुमान्॥श्रावणेबहुलाष्टम्यांवासुदेवोजनार्दनः॥पौषशुक्लेतुसप्तम्यांकुर्याद्बुद्ध
स्यपूजनं॥माघशुक्लतृतीयायांकल्किनःपूजनंहरेः॥प्रातःप्रातस्तुमध्यान्हेसायंसायंत
यानिशि॥मध्यान्हेमध्यरात्रौचसायंप्रातरनुक्रमादिति।तदत्रसमूलत्वनिर्णयेसतिक
ल्पभेदेनव्यवस्थाद्रष्टव्या॥एतान्यनंतदुपासकानांनित्यानि।अन्येषांतुकाम्यानि।जन्माष्ट
म्यादौतुविशेषंवक्ष्यामः॥चैत्रशुक्लपंचमीकल्पादिः॥तदुक्तंहेमाद्रौमात्स्ये॥ब्रह्मणोयाति
तस्यादिःकल्पादिःसाप्रकीर्त्तिता।वैशाखस्यतृतीयायाःकृष्णायाःफाल्गुनस्यच॥पंचमीचै
त्रमासस्यतथैवांत्यातथापरा।शुक्लात्रयोदशीमाघेकार्त्तिकस्यतुसप्तमी॥नवमीमार्गशीर्ष
स्यसप्तैताःसंस्मराम्यहं॥कल्पानामादयोह्येतादत्तस्याक्षयकारकाः॥अत्रसर्वोपिनिर्णयोम
न्वादिवज्ज्ञेयः॥हेमाद्रौब्राह्मे॥शुक्लायामथपंचम्यांचैत्रेमासिशुभानना॥श्रीर्ब्रह्मलोका
न्मानुष्यंसंप्राप्ताकेशवाज्ञया॥ततस्तांपूजयेत्तत्रयस्तंलक्ष्मीर्नमुंचति॥चैत्रशुक्लाष्टम्यां
भवान्युत्पत्तिः॥तत्रनवमीयुताग्राह्या॥अष्टमीनवमीयुक्तानवमीचाष्टमीयुतेतिब्रह्मवैव

त्रीत्॥ अत्र भवानीयात्रोक्ता काशीखंडे॥ भवानीं यस्तु पश्येत शुक्लाष्टम्यां मधौ नरः। न जातु
शोकं लभते सदानंदमयो भवेदिति॥ अत्रैवाशोककलिकाप्राशनमुक्तं हेमाद्रौ लैंगे॥ अशोक
कलिकाप्राशनमुक्तं हेमाद्रौ लैंगे॥ अशोककलिकाश्चाष्टौ ये पिबंति पुनर्वसौ॥ चैत्रे मासि
सिताष्टम्यां न ते शोकमवाप्नुयुः॥ प्राशनमंत्रस्तु॥ त्वामशोकवराभीष्टं मधुमाससमुद्भवं॥ पि
बामि शोकसंतप्तो मामशोकं सदा कुर्विति॥ अत्र विशेषः षष्ठ्यां चंद्रोदये विष्णुः॥ पुनर्वसुबु
धोपेता चैत्रे मासि सिताष्टमी॥ प्रातस्तु विधिवत्स्नात्वा वाजपेयफलं लभेदिति॥ तिथितत्त्वे
कालिकापुराणे॥ चैत्रे मासि सिताष्टम्यां यो नरो नियतेंद्रियः॥ स्नायाल्लौहित्यतोयेषु स याति
ब्रह्मणः पदं॥ चैत्रं तु सकलं मासं शुचिः प्रयतमानसः॥ लौहित्यतोये यः स्नायात्स कैवल्यमवा
प्नुयात्॥ लौहित्यो ब्रह्मपुत्रः॥ मंत्रस्तु॥ ब्रह्मपुत्र महाभाग शांतनोः कुलसंभव॥ अमोघागर्भसं
भूत पापं लौहित्य मे हर॥ चैत्रशुक्लनवमी रामनवमी॥ तदुक्तमगस्त्यसंहितायां॥ चैत्रे नव
म्यां प्राक् पक्षे दिवा पुण्ये पुनर्वसौ॥ उदये गुरुगौरांश्वोः स्वोच्चस्थे ग्रहपंचके॥ मेषं पूषणि सं
प्राप्ते लग्ने कर्कटकाह्वये॥ आविरासीत्सकलया कौशल्यायां परः पुमान्॥ तस्मिन्दिने तु क
र्तव्यमुपवासव्रतं सदा॥ तत्र जागरणं कुर्याद्रघुनाथपरो भुवीति॥ इयं च मध्यान्हयोगिनी ग्रा
ह्या॥ चैत्रशुद्धे तु नवमी पुनर्वसुयुता यदि॥ सैव मध्यान्हयोगेन महापुण्यतमा भवेदिति तत्रै
वोक्तेः॥ तथा॥ चैत्रे मासि नवम्यां तु जातो रामः स्वयं हरिः॥ पुनर्वस्वृक्षसंयुक्ता सा तिथिः सर्वका
मदा॥ श्रीरामनवमी प्रोक्ता कोटिसूर्यग्रहाधिका॥ तथा केवलापि सदोपोष्या नवमी शरद्सं
ग्रहान्॥ तस्मात्सर्वात्मना सर्वैः कार्यं वै नवमीव्रतं॥ पूर्वेद्युरेव मध्यान्हयोगे कर्मकालव्याप्ते
सैव ग्राह्या॥ दिनद्वये मध्यान्हव्याप्तौ तदभावे वा परदिने पुनर्वसुसंयुक्तामपि त्यक्त्वा परैव का
र्या तदुक्तं माधवीयेऽगस्त्यसंहितायां॥ नवमी चाष्टमी विद्धा त्याज्या विष्णुपरायणैः॥ उपोषणं
नवम्यां वै दशम्यां चैव पारणमिति॥ अष्टमीविद्धा सत्ऋक्षापि न पोष्येति माधवः॥ रामार्चनचं
द्रिकायामपि॥ विद्धैव चेदृक्षयुक्ता व्रतं तत्र कथं भवेत्॥ विद्धानिषेधश्रवणान्नवमी चेति वा
क्यतः॥ वैष्णवानां विशेषात्तु तत्र विष्णुपरैरपि॥ दशम्यादिषु वृद्धिश्चेद्विद्धा ग्राह्यैव वैष्णवैः
तदन्येषां च सर्वेषां व्रतं तत्रैव निश्चितमिति॥ अत्र दशम्यादिषु वृद्धिश्चेदिति तदन्येषामिति च
वदन्॥ यदा प्रातस्त्रिमुहूर्ता नवमी दशमी च क्षयवशात्सूर्योदयात् प्रागेव समाप्यते तदा
स्मार्तानां तत्रैव एकादशीनिमित्तोपवासात्॥ नवमीव्रतांगपारणालोपः स्यात्॥ अतोऽष्टमी
विद्धैव स्मार्तैर्न कार्या॥ वैष्णवानां त्वरुणोदयविद्धैकादश्या हेयत्वान्न पारणालोपप्रसंग इ
ति द्वितीये वैतैः कार्येति सूचयति॥ दशमीवृद्ध्यभावेऽष्टमीविद्धायाः एवं मध्यान्हव्यापित्वेऽप्ये
व वैष्णवैरपि विद्धैवोपोष्येत्यर्थसिद्धं॥ इदं च व्रतं संयोगपृथक्त्वन्यायेन काम्यं नित्यं च॥
तदुक्तं हेमाद्रावगस्त्यसंहितायां उपोषणं जागरणं पितृनुद्दिश्य तर्पणं॥ तस्मिन्दिने तु
कर्तव्यं ब्रह्मप्राप्तिमभीप्सुभिः॥ सर्वेषामप्ययं धर्मो भुक्तिमुक्त्येकसाधनः॥ अशुचिर्वापि पा
पिष्ठः कृत्वेदं व्रतमुत्तमं॥ पूज्यः स्यात्सर्वभूतानां यथा रामस्तथैव सः॥ यस्तु रामनवम्यां तु भुं

क्तोमोहाद्विमूढधीः॥कुंभीपाकेसुघोरेषुपच्यतेनात्रसंशयः तथा अकृत्वारामनवमीव्रतंस
र्वव्रतोत्तमं॥व्रतान्यन्यानिकुरुतेनतेषांफलभाग्भवेत्॥प्राप्तेश्रीरामनवमीदिनेमर्त्त्योविमूढ
धीः॥उपोषणंनकुरुतेकुंभीपाकेषुपच्यते॥अत्रकेचित्तदुपासकानामेवेदंव्रतंनित्यंन
त्वन्येषामित्याहुः॥अन्येतुअकरणेदोषश्रवणात्।तस्मात्सर्वात्मनासर्वैःकार्य्यंवैनवमी
व्रतमितिसर्वोक्तवचनाच्चजन्माष्टम्यादिवदिदमपिसर्वेषांनित्यं॥अन्यथाजन्माष्ट
म्यादावपितदुपासकानामेवनित्यतापत्तेःकोवारयितेत्याहुः॥अत्रविशेषोहेमाद्रावग
गस्त्यसंहितायां॥आचार्य्यंचैवसंपूज्यवृणुयात्प्रार्थयन्निति॥श्रीरामप्रतिमादानंकरि
ष्येहंद्विजोत्तम॥भक्त्याचार्योभवप्रीतःश्रीरामोसित्वमेवच॥तथा॥स्वगृहेचोत्तरेदेशेदान
ख्योज्वलमंडपं॥शंखचक्रहनूमद्भिःप्राग्द्वारेसमलंकृतं॥गरुत्मच्छार्ङ्गबाणैश्चदक्षिणे
समलंकृतं॥गदाखड्गांगदैश्चैवपश्चिमेसुविभूषितं॥पद्मस्वस्तिकनीलैश्चकौबेरेसम
लंकृतं॥मध्येहस्तचतुष्कंचवेदिकायुक्तमायतम्।ततःसंकल्पयेद्देवंराममेवस्मरन्मु
ने॥अस्यांरामनवम्यांचरामाराधनतत्परः॥उपोष्याष्टसुयामेषुपूजयित्वायथाविधि।
इमांस्वर्णमयींरामप्रतिमांचप्रयत्नतः॥श्रीरामप्रीतयेदास्येरामभक्तायधीमते॥प्रीतो
रामोहरत्वाशुपापानिसुबहूनिमे॥अनेकजन्मसंसिद्धान्यभ्यस्तानिमहान्तिच॥ततःस्व
र्णमयींरामप्रतिमांपलमानतः॥निर्मितांद्विभुजांदिव्यांवामांकस्थितजानकीं॥बिभ्रतीं
दक्षिणकरेज्ञानमुद्रांमहामुने॥वामेनाधःकरेणाराद्देवीमालिंग्यसंस्थितां॥सिंहासने
राजतेत्रपलद्वयविनिर्मिते॥तथा॥अशक्तोयोमहाभागसतुवित्तानुसारतः॥पलेनाथ
तदर्द्धेनतदर्द्धार्द्धेनवामुने॥सौवर्णंराजतंवापिकारयेद्रघुनंदनं॥पार्श्वेभरतशत्रुघ्नौघृ
तच्छत्रकरावुभौ॥चापद्वयसमायुक्तंलक्ष्मणंचापिकारयेत्॥दक्षिणांगेदशरथंपुत्रावे
क्षणतत्परं॥मातुरंकगतंराममिंद्रनीलसमप्रभं॥पंचामृतस्नानपूर्वंसंपूज्यविधिवत्ततः
कौशल्यामंत्रस्तु॥रामस्यजननीचासिराममरूपमिदंजगत्॥अतस्त्वांपूजयिष्यामिलोकमा
तर्नमोस्तुते॥नमोदशरथायेतिपूजयेत्पितरंततः॥अत्रदशावरणायंचावरणादिपू
जान्यत्रज्ञेया॥अशोककुसुमैर्युक्तमर्घ्यंदद्याद्विचक्षणः॥दशाननवधार्थायधर्मसंस्था
पनायच॥राक्षसानांविनाशायदैत्यानांनिधनायच॥परित्राणायसाधूनांजातोरामःस्व
यंहरिः॥गृहाणार्घ्यंमयादत्तंभ्रातृभिःसहितोनघ॥पुष्पांजलिंचदत्वायामेयामेप्रपूजये
त्॥दिवैवविधिवत्कृत्वारात्रौजागरणंततः॥ततःप्रातःसमुत्थायस्नानसंध्यादिकाःक्रि
याः॥समाप्यविधिवद्रामंपूजयेद्विधिवन्मुने॥ततोहोमंप्रकुर्वीतमूलमंत्रेणमंत्रवित्॥
पूर्वोक्तपद्मकुंडेवास्थंडिलेवासमाहितः॥लौकिकाग्नौविधानेनशतमष्टोत्तरंततः॥सा
ज्येनपायसेनैवस्मरन्राममनन्यधीः॥ततोभक्त्यासुसंतोष्यआचार्य्यंपूजयेन्मुने॥ततो
रामंस्मरन्दद्यादेवंमंत्रमुदीरयन्॥इमांस्वर्णमयींरामप्रतिमांसमलंकृतां॥चित्रवस्त्र
युगच्छन्नांरामोहंराघवायते॥श्रीरामप्रीतयेदास्येतुष्टोभवतुराघवः॥इतिदत्वाविधाने

नद्यांहृदे दक्षिणां भुवामब्रह्महत्यादिपापेभ्यो मुच्यते नात्र संशयः इति॥ इयं मलमासे न कार्य्या भस्तु जन्ममध्यजं स्यात् लोपवासः कृतो भवेत् इति॥ न कुर्य्यान्मलमासे तु महादानं व्रतानि चेति माधवीये संग्रहवचनात्॥ ननु रामनवमीव्रतस्य नित्यत्वादेकादशीवन्मलमासेपि कर्त्तव्यता स्यादिति चेत्॥ अत्र ब्रूमः। नैकादश्युपवासस्य व्रतत्वेन प्राप्तिः किंतु एकादश्यां न भुंजीत पक्षयोरुभयोरपीत्यादिनिषेधस्य मलमासेपि पालनीयत्वात्॥ कृष्णैकादश्यां पुत्रवद्गृहिणस्त्वार्थादुपवासः प्रसज्यते॥ न त्विह तथेति व्रतत्वेन प्राप्तिर्वाच्या सा च निषिद्धेत्यप्रसंगः। स्पष्टमासविशेषाख्याविहितं वर्ज्जयेन्मले इति निषेधाच्च॥ एवं जन्माष्टम्यादावपि बोद्धव्यम्॥ इति रामनवमी॥ चैत्रशुक्लैकादश्यां दोलोत्सव उक्तो ब्राह्मे॥ चैत्रमासस्य शुक्लायामेकादश्यां तु वैष्णवैः॥ आंदोलनीयो देवेशः सलक्ष्मीको महोत्सवैरिति। चैत्रशुक्लद्वादश्यां दमनोत्सवः॥ द्वादश्यां चैत्रमासस्य शुक्लायां दमनोत्सवः। बौधायनादिभिः प्रोक्तः कर्त्तव्यः प्रतिवत्सरमिति रामार्चनचंद्रिकोक्तेः॥ उक्तैर्व्रतमथो दोला श्रावणी तंतुपूजनं॥ चैत्रे च दमनारोपमकुर्वाणो व्रजत्यधः। इति तत्रैव पाद्मवचनाच्च॥ शिवभक्तादिभिस्तु चतुर्दश्यां सो कार्य्यस्तत्र स्यात्। स्वीयतिथिवत्स्यादेर्दमनार्पणमिति तत्रैवोक्तेः। तिथयस्तु॥ वन्हिर्विरिंचो गिरिजा गणेशः फणी विशाखो दिनकृत् महेशः। दुर्गांतको विश्वहरी स्मरश्च शर्वः शशी चेति तिथीशपूज्याः इत्युक्ताः॥ अथागमोक्तदीक्षावतो दमनारोपणविधि रामार्चनचंद्रिकोक्तः॥ तत्रैकादश्यां॥ क्रियालोपविघातार्थं यत्त्वया विहितं प्रभो॥ न मे विघ्नो भवेदत्र कुरु नाथ दयां मयि॥ सर्वथा सर्वदा विष्णो मम त्वं परमा गतिः। उपवासेन त्वां देव तोषयामि जगत्पते॥ कामक्रोधादयो ये ते न मे स्युर्व्रतघातकाः। अद्य प्रभृति देवेश यावद्वैशेषिकं दिनं॥ तावद्रक्षा त्वया कार्या सर्वस्यास्य जगत्पते॥ इति देवं संप्रार्थ्य दमनमादाय पंचगव्येन प्रोक्ष्य वारिणा प्रक्षाल्य अशोकमूले देवाग्रे वा॥ अशोकाय नमस्तुभ्यं कामस्त्रीशोकनाशन॥ शोकार्त्तिं हर मे नित्यमानंदं जनयस्व मे॥ इत्यशोकं॥ त्रुट्यादिकालपर्यंतकालरूपी महाबलः। कलते चैव यः सर्वं तस्मै कालात्मने नमः॥ इति कालम्। वसंताय नमस्तुभ्यं वृक्षगुल्मलताश्रय॥ सहस्रमुखसंवास कामरूप नमोस्तु ते इति वसंतं॥ कामभस्मसमुद्भूत रतिवाष्पपरिप्लुत। ऋषिगंधर्वदेवादिविमोहक नमोस्तु ते इति दमनं च संपूज्य। नमोस्तु पंचबाणाय जगदाल्हादकारिणे॥ मन्मथाय जगन्नेत्ररतिप्रीतिप्रियाय ते। इति दमनमुपस्थाय॥ ॐ कामाय नम इति संपूज्य निशायां देवाये पंचवर्णैश्चंदनेन वाष्टदलं कृत्वा बहिश्चतुरस्रं तद्बहिर्वर्त्तुलत्रयं तद्बहिरष्टचतुरस्रं च कृत्वा तत्र कुंभं संस्थाप्योपरि वस्त्रे अष्टदले दमनं पूजयित्वा॥ पूजार्थं देवदेवस्य विष्णोर्लक्ष्मीपतेः प्रभोः। दमनत्वमिहागच्छ सान्निध्यं कुरु ते नमः॥ ॐ क्लीं कामदेवाय नमः॥ ॐ ह्रीं रत्यै नमः इत्यावाह्य पूर्वादिदिक्षु क्लीं कामाय नमः॥ बीजादि नमोंतं सर्वत्र॥ भस्मशरीराय नमः॥ अनंगाय नमः मन्मथाय। वसंतसखा॥ स्मराय॰॥ इक्षुचापाय॰॥ पुष्पास्त्राय॰॥ इति पूजयित्वा॥ ॐ तत्स्वरूपाय वि

म्हे कामदेवाय धीमहि॥ तन्नोऽनंगः प्रचोदयादित्यष्टोत्तरशतं संमंत्र्य पूजयित्वा ह्रीं नमः इ
ति पुष्पांजलिं दत्वा॥ नमोऽस्तु पुष्पबाणाय जगदाह्लादकारिणे॥ मन्मथाय जगन्नेत्र रतिप्री
तिप्रियाय ते॥ इति नत्वा॥ आमंत्रितोऽसि देवेश पुराणपुरुषोत्तम॥ प्रातस्त्वां पूजयिष्यामि
सान्निध्यो भव ते नमः॥ निवेदयाम्यहं तुभ्यं प्रातर्दमनकं शुभं॥ सर्वथा सर्वदा विष्णो नमस्तेऽ
स्तु प्रसीद मे॥ इति देवं संप्रार्थ्य पुष्पांजलिं दत्वा॥ अस्त्रेण चक्रमंत्रेण वा रक्षां कुर्यात्॥ ततः
प्रातर्नित्यपूजां कृत्वा पुनर्देवं संपूज्य दूर्वागंधाक्षतयुक्तं दमनमादाय मूलमंत्रं पठित्वा दे
वदेव जगन्नाथ वांछितार्थप्रदायक॥ हृदिस्थान्पूरयेः कामान्मम कामेश्वरीप्रिय॥ इदं दम
नकं देव गृहाण मदनुग्रहात्॥ इमां सांवत्सरीं पूजां भगवन्परिपूरय॥ इति मंत्रांते पुनर्मूलमं
त्रेण देवे समर्पयेत्॥ ततोंगदेवताभ्यः स्वस्वमंत्रेण दत्वा प्रार्थयेत्॥ मणिविद्रुममालाभि
र्मंदारकुसुमादिभिः॥ इयं सांवत्सरी पूजा तवास्तु गरुडध्वज॥ वनमालां यथा विष्णो कौस्तु
भं सततं हृदि॥ तद्वद्दामनकीं मालां पूजां च हृदये वह॥ जानता जानता वापि न कृतं यत्तवार्च
नं॥ तत्सर्वं पूर्णतां यातु त्वत्प्रसादाद्रमापते॥ जितं ते पुंडरीकाक्ष नमस्ते विश्वभावन॥ न
मस्तेऽस्तु हृषीकेश महापुरुष पूर्वज॥ मंत्रहीनमिति च संप्रार्थ्य पंचोपचारैः पुनः संपूज्य
पारयेदिति॥ दीक्षारहितानां तु नाम्नैव समर्पणम्॥ अत्र च द्वादशीमतं स्वोक्तस्य पारणा
हो ग्राह्या॥ पारणाहे न लभ्येत द्वादशी घटिकापि चेत्॥ तदा त्रयोदशी ग्राह्या पवित्रदमनार्प
णे इति तत्रैवोक्तेः॥ गौणोऽपि काल उक्तस्तत्रैव॥ हरेर्न दमनारोपः स्यान्मधौ विघ्नतो यदि
वैशाखे श्रावणे वापि तत्तिथौ स्यात्तदर्पणम्॥ श्रावणावधि शुक्लाख्ये कर्तव्यमिति नारदः। इति
पाठांतरम्॥ इदं मलमासे न कार्यं॥ उपाकर्मोत्सर्जनं च पवित्रदमनार्पणमिति॥ कालादर्शे
मलमासवर्ज्येषु परिगणनात्॥ उपाकर्म च हव्यं च कव्यं पर्वोत्सवं तथा॥ उत्तरे नियतं कुर्या
न्नैव तन्निष्फलं भवेदिति माधवीये॥ प्रजापतिवचनाच्च॥ शुक्रास्तादौ तु कार्यमेव। पृथ्वी
कृवचनात्॥ उपाकर्मोत्सर्जनं च पवित्रदमनार्पणं॥ ईशानस्य बलिं विष्णोः शयनं परिव
र्त्तनं॥ कुर्यात्शुक्रस्य च गुरोर्मौढ्येऽपीति विनिश्चयः। इति ज्योतिर्निबंधे वृद्धगार्ग्यवचनाच्च॥
इति दमनारोपः। चैत्रशुक्लत्रयोदश्यामनंगव्रतं हेमाद्रौ भविष्ये॥ चैत्रोत्सवे सकललोकम
नोविनोदे कामं त्रयोदशतिथौ च वसंतयुक्तं॥ पत्न्या सहार्च्य पुरुषप्रवरोऽथ योऽसौ भाग्यरूप
सुतसौख्ययुतः सदा स्यात्। इति तत्र सा पूर्वा ग्राह्या॥ त्रयोदशतिथिः पूर्वा सितरतिदीपिकोक्तेः॥
चैत्रशुक्लचतुर्दशी पूर्वा ग्राह्या॥ मधौ श्रावणमासस्य या च शुक्ला चतुर्दशी॥ सा रात्रिव्यापिनी
ग्राह्या नान्या शुक्ला कदाचनेति॥ हेमाद्रौ बौधायनोक्तेः॥ परा पूर्वाह्णगामिनीति वा पाठः। अत्र
केचित्। यथाश्रुतमेवार्थं वर्णयंति॥ निशि भ्रमंति भूतानि शक्तयः शूलभृद्यतः॥ अतस्तत्र च
तुर्दश्यां सत्यां तत्पूजनं भवेदिति ब्रह्मवैवर्तात्। हेमाद्रिमाधवादिलिखनमप्येवम्॥ संप्र
पविदस्त्वाहुः। चतुर्दशी तु कर्तव्या त्रयोदश्या युता विभो इति स्कांद उत्सर्गः॥ तदपवादस्तु
तृतीयैकादशी षष्ठी शुक्लपक्षे चतुर्दशी॥ पूर्वविद्धा न कर्तव्या कर्तव्या परसंयुता इति नारदी

वचनं॥ तदपवादस्तु॥ मघोः श्रावणमासस्येति॥ तत्रापवादाभावे पुनरुत्सर्गस्य स्थितिरिति
न्यायेन सर्वं विदेवनाद्येति सिद्ध्यति॥ ब्रह्मवैवर्ते तु सामान्यरूपमन्यत्र सावकाशमिति चान्ये॥ पू
र्वदिने मुहूर्तत्रयवेधे सर्वा अन्यथोत्तरेति॥ चैत्रपूर्णिमा सामान्यनिर्णयात्पूर्वैव॥ अत्र विशेषो
निर्णयामृते विष्णुस्मृतौ॥ चैत्री चित्रायुता चेत्स्यात्तस्यां चित्रवस्त्रप्रदानेन सौभाग्यमाप्नोति
इति॥ तथा कल्पतरौ ब्राह्मे॥ मन्दे वार्के गुरौ वापि वारेष्वेतेषु चैत्रिका॥ तत्राश्वमेधजं पुण्यं।
स्नानश्राद्धादिभिर्भवेदिति। अत्र सर्वदेवानां दमनकपूजोक्ता। तत्रैव वायवीये॥ संवत्सरकृ
तार्चायाः साफल्याय खिलान् सुरान्॥ दमनेनार्चयेच्चैत्र्यां विशेषेण सदाशिवमिति। अ
त्र स्वीयतिथ्या समुच्चय इति केचित्॥ स्वीयतिथ्यावकरणे अत्र दमनपूजनमित्यन्ये॥ दीक्षि
ततदितरविषयत्वेन व्यवस्थेत्यपरे॥ इयं मन्वादिरपि॥ सा च पूर्वैवोक्ता॥ चैत्रकृष्णत्रयोद
श्यां महावारुणीसंज्ञको योगो गौडेषु प्रसिद्धः॥ तदुक्तं वाचस्पतिकृतौ शूलपाणौ च स्कान्दे।
वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी॥ गंगायां यदि लभ्येत सूर्यग्रहशतैः समा॥ शनि
वारसमायुक्ता सा महावारुणी स्मृता॥ गंगायां यदि लभ्येत कोटिसूर्यग्रहैः समा॥ शुभयो
गसमायुक्ता शनौ शतभिषा यदि॥ महामहेति विख्याता त्रिकोटिकुलमुद्धरेत्॥ तत्रैव भौ
तिषे॥ चैत्रासिते वारुणऋक्षयुक्ता त्रयोदशी सूर्यसुतस्य वारे॥ योगे शुभे सा महती महत
गंगाजलेऽर्कग्रहकोटितुल्येति त्रिस्थलीसेतौ ब्रह्माण्डपुराणे॥ वारुणेन समायुक्ता मधौ कृ
ष्णा त्रयोदशी॥ गंगायां यदि लभ्येत शतसूर्यग्रहैः समेति॥ चैत्रकृष्णचतुर्दश्यां विशेषः पृ
थ्वीचंद्रोदये॥ पुलस्त्यः॥ चैत्रकृष्णचतुर्दश्यां यः स्नायाच्छिवसन्निधौ॥ न प्रेतत्वमवाप्नोति
गंगायां तु विशेषतः॥ इति॥ गौडैस्त्वेतदेव शुक्लचतुर्दश्यामित्येवं देवलीपत्वेन पठितं॥ इति
रामकृष्णसूनुकमलाकरभट्टकृते निर्णयसिंधौ चैत्रमासः॥ मेषसंक्रमे प्रागपरा दश घटि
काः पुण्यकालः॥ रात्रौ तु प्रागुक्तं॥ अत्र धर्मघटादिदानमुक्तं पृथ्वीचंद्रोदये पाद्मे॥ तीर्थे
चानुदिनं स्नानं तिलैश्च पितृतर्पणं॥ दानं धर्मघटादीनां मधुसूदनपूजनं॥ माधवे मासि
कुर्वीत मधुसूदनतुष्टिदं॥ अथ वैशाखस्नानं॥ तत्र पृथ्वीचंद्रोदये विष्णुस्मृतिपाद्मयोः॥
तुलामकरमेषेषु प्रातःस्नानं विधीयते॥ हविष्यं ब्रह्मचर्यं च महापातकनाशनमिति सौ
रमास उक्तः॥ अन्यत्पक्षद्वयमुक्तं॥ तत्रैव पाद्मे॥ मधुमासस्य शुक्लायामेकादश्यामुपोषितः
॥ पंचदश्यां च भो वीर मेषसंक्रमणेऽथ वा॥ वैशाखस्नाननियमं ब्राह्मणानामनुज्ञया॥ म
धुसूदनमभ्यर्च्य कुर्यात्संकल्पपूर्वकं॥ तत्र मंत्रः॥ वैशाखं सकलं मासं मेषसंक्रमणं र
वेः॥ प्रातः सनियमः स्नास्ये प्रीयतां मधुसूदनः॥ मधुहंतुः प्रसादेन ब्राह्मणानामनुग्रहा
त्॥ निर्विघ्नमस्तु मे पुण्यं वैशाखस्नानमन्वहं॥ माधवे मेषगे भानौ मुरारे मधुसूदन॥ प्रा
तःस्नानेन मे नाथ फलदो भव पापहन्निति॥ तीर्थविशेषोपि तत्रैवोक्तः॥ मेषसंक्रमणे
भानोर्माधवे मासि यत्नतः॥ महानद्यां नदीतीर्थे नदे सरसि निर्झरे॥ देवखातेऽथ वा स्नाया
द्यथाप्राप्ते जलाशये॥ दीर्घिकाकूपवापीषु नियतात्मा हरिं स्मरन्निति॥ संकल्पे च तत्र

तीर्थनामग्राह्यं॥ अज्ञाते तु विष्णुतीर्थमिति वदेत्॥ यदा न ज्ञायते नाम तस्य तीर्थस्य भो द्विजाः
॥ तदैवोच्चारणं कार्यं विष्णुतीर्थमिदं त्विति॥ तीर्थस्य देवता विष्णुः सर्वत्रापि न संशय इति
त्रैवोक्तेः। तथान्योपि विशेषस्तत्रैव पाद्मे॥ तुलसीदलसंगौरमाख्यातयाभ्यर्च्य मधुद्विषं। वि
शेषेण तु वैशाखे नरो नारायणो भवेत्॥ माधवं सकलं मासं तुलस्या योऽर्चयेन्नरः॥ त्रिसं
ध्यं मधुहंतारं नास्ति तस्य पुनर्भवः॥ तथा॥ प्रातःस्नात्वा विधानेन माधवे माधवप्रिय॥
अश्वत्थमूलमासिंचेत्तोयेन बहुना सदा॥ कुर्यात्प्रदक्षिणं तं तु सर्वदेवमयं ततः॥ पितृ
देवमनुष्यांश्च तर्पयेत्सचराचरम्॥ योऽश्वत्थमर्चयेद्देवमुदकेन समं ततः॥ कुलानामयु
तं तेन तारितं स्यान्न संशयः॥ कंडूयश्च ततो गां तु स्नात्वा पिप्पलतर्पणं॥ कृत्वा गोविंद
मभ्यर्च्य न दुर्गतिमवाप्नुयात्॥ एकभक्तमथो नक्तमयाचितमतंद्रितः॥ माधवे मासि यः कु
र्यात्स लभते सर्वमीप्सितम्॥ वैशाखे विधिना स्नानं देवनद्यादिके बहिः॥ हविष्यं ब्रह्मचर्यं
च भूशय्या नियमस्थितिः॥ व्रतं दानं दमो देवि मधुसूदनपूजनं॥ अपि जन्मसहस्रोत्थं
पापं दहति दारुणं॥ मदनरत्ने स्कांदे॥ प्रपा कार्या च वैशाखे देवे देया गलंतिका॥ उपान
त्व्यजनं छत्रं सूक्ष्मवासांसि चंदनं॥ जलपात्राणि देयानि तथा पुष्पगृहाणि च॥ याद
कानि च चित्राणि द्राक्षा रंभाफलान्यपि॥ तिथितत्त्वे॥ ददाति यो हि मेषादौ सक्तूनंबुघट
न्वितान्॥ पितॄनुद्दिश्य विप्रेभ्यः सर्वपापैः प्रमुच्यते॥ तथा॥ वैशाखे यो घटं पूर्णं सभोज्यं
वै द्विजन्मने॥ ददाति सुरराजेंद्र स याति परमां गतिं॥ एवं संपूर्णस्नानाशक्तौ त्र्यहं वा स्ना
यात्॥ तदुक्तं तत्रैव पाद्मे॥ त्रयोदश्यां चतुर्दश्यां वैशाख्यां च दिनत्रयं॥ अपि सम्यग्विधा
नेन नारी वा पुरुषोपि वा॥ प्रातःस्नानस्य नियमः सर्वपापैः प्रमुच्यत इति॥ यदा वैशाखे
मलमासो भवति तदा काम्यानां तत्र समाप्तिनिषेधान्मासद्वयं स्नानं तन्नियमाश्च कर्तव्याः
॥ मासोपवासचांद्रायणादि तु मलमास एव समापयेत्॥ तदुक्तं दीपिकायां नियतस्त्रिं
शद्दिनत्वात्कुंभे मासस्यारभ्य समापयेत मलिने मासोपवासव्रतमिति॥ अत्र दानविशे
ष उक्तो यथार्के वामनपुराणे॥ गंधाश्च माल्यानि तथा वैशाखे सुरभीणि च॥ देयानि
द्विजमुख्येभ्यो मधुसूदनतुष्टये॥ एवं स्नाने कृते तस्योद्यापनं कार्यम्॥ तदुक्तं तत्रैव पा
द्मे वै बहिः स्नात्वा नद्यादौ विमले जले॥ एकादश्यां च द्वादश्यां पौर्णमास्यामथापि वा॥
उपोष्य नियतो भूत्वा कुर्यादुद्यापनं बुधः॥ मंडपं कारयेदादौ कलशं तत्र विन्यसेत्॥ नि
ष्केण वा तदर्धेन तदर्धार्धेन वा पुनः॥ शक्त्या वा कारयेद्देवं सौवर्णं लक्षणान्वितं॥ तस्मि
पुते जगन्नाथं पूजयेदासने बुधः॥ भूषणैश्चंदनैः पुष्पैर्धूपैर्नैवेद्यसंचयैः॥ एवं संपूज्य
विधिवद्रात्रौ जागरणं चरेत्॥ प्रभाते कृतमैत्रोथ ग्रहवेद्यां ग्रहान्यजेत्॥ होमं कुर्यात्प्रय
त्नेन पायसेन विचक्षणः॥ तिलाज्येन यवैर्वापि सर्वैर्वा विभवशक्तितः॥ अष्टोत्तरसहस्रं वा
शतमष्टोत्तरं तु वा॥ व्रताद्विष्णुरनेनैव इदं विष्णुरनेन वा॥ व्रतसंपूर्तिसिद्ध्यर्थं धेनुमेकां प
यस्विनीं॥ पादुकोपानहौ छत्रं गुरवे व्यजनं तथा॥ शय्यां सोपस्करां दद्याद्दीपिकां दर्पणं

तथा॥ ब्राह्मणान्भोजयेत्त्रिंशत्तेभ्योदद्याच्चदक्षिणां॥ कलशान्जलसंपूर्णान्तेभ्योदद्याद्य
वांस्तथा॥ एवंकृतेमाधवस्यउद्यापनविधौशुभे॥ फलमाप्नोतिसकलंविष्णुसायुज्यमाप्नु
यात्॥ एतावत्यशक्तौतत्रैवोक्तं॥ वैशाख्यांविधिनास्नात्वाभोजयेद्ब्राह्मणान्दश॥ कृसरं
सर्वपापेभ्योमुच्यतेनात्रसंशयः॥ इतिवैशाखशुद्धतृतीयाअक्षयतृतीयोच्यते॥ सापू
र्वाह्णव्यापिनीग्राह्या॥ दिनद्वयेपितद्व्याप्तौपरैव॥ तदुक्तंनिर्णयामृतेनारदीये॥ वैशाखे
शुक्लपक्षेतुतृतीयारोहिणीयुता॥ दुर्लभाबुधवारेणसोमेनापियुतातथा॥ रोहिणीबु
धयुक्तापिपूर्वविद्धाविवर्ज्जिता॥ भक्त्याकृतापिमांधातःपुण्यंहन्तिपुराकृतं॥ गौरीविना
यकोपेतारोहिणीबुधसंयुता॥ विनापिरोहिणीयोगात्पुण्यकोटिप्रदासदेति॥ इयंयुगा
दिरपिसाचोक्ताब्रह्ममालायां॥ माघेपंचदशीकृष्णानभस्येचत्रयोदशी॥ तृतीयामाधवे
शुक्लानवम्यूर्ज्जेयुगादयइति॥ यत्तुगौडाः॥ माघस्यपौर्णिमायांतुघोरंकलियुगंस्मृतमि
तिब्राह्मोक्तेः। वैशाखमासस्यचयातृतीयानवम्यसौकार्त्तिकशुक्लपक्षे॥ नभस्यमास
स्यतमिस्रपक्षेत्रयोदशीपंचदशीचमाघेइतिविष्णुपुराणे॥ चकारेणतमिस्रपक्षानुष
गेपिपूर्वानुरोधात्पूर्णिमास्येवत्रेयादिशुक्लेत्यादिकंतन्निर्मूलमित्याहुः॥ तन्नादर्शन
माघमासस्यप्रवृत्तेद्वापरंयुगमितिभविष्यविरोधात्॥ एतेनब्राह्मानुसारात्पूर्णिमा
यामेवयुगादिश्राद्धं॥ वदञ्छूलपाणिःपरास्तः॥ तेनकल्पभेदात्व्यवस्थेतितत्त्वं॥ एते
नकार्त्तिकेनवमीशुक्ला माघमासेचपूर्णिमेतिनारदीयव्याख्यातं॥ निर्मूलोक्तिर्नारदी
याज्ञानकृता॥ अत्रश्राद्धमुक्तंमात्स्ये॥ कृतंश्राद्धंविधानेनमन्वादिषुयुगादिषु॥ हाय
नानिद्विसाहस्रंपितॄणांतृप्तिदंभवेदिति॥ भारतेपि॥ यामन्वाद्यायुगाद्याश्चतिथयस्तासु
मानवः॥ स्नात्वाहुत्वाचदत्त्वाचजप्त्वानंतफलंलभेदिति॥ श्राद्धेपिपूर्वाह्णव्यापिनीग्रा
ह्या॥ पूर्वाह्णेतुसदाकार्य्याःशुक्लामनुयुगादयः॥ दैवेकर्म्मणिपित्र्येचकृष्णेचैवापराह्णि
केइतिपाद्मोक्तेः॥ द्वेशुक्लेद्वेतथाकृष्णेयुगादिकवयोविदुः॥ शुक्लेपौर्वाह्णिकेग्राह्येकृ
ष्णेचैवापराह्णिकेइतिहेमाद्रौनारदीयवचनाच्च॥ दीपिकायां॥ अथोमन्वादियुगादि
कर्म्मतिथयःपूर्वाह्णिकाःस्युःसिते॥ विज्ञेयाअपराह्णिकाश्चबहुलेइति॥ स्मृत्यर्थसारे
पियुगादिमन्वादिश्राद्धेषुशुक्लपक्षेतूदयव्यापिनीतिथिर्ग्राह्या॥ कृष्णपक्षेपराह्णव्या
पिनीति॥ दिवोदासीयेगोभिलः॥ वैशाखस्यतृतीयांयःपूर्वविद्धांकरोतिवै॥ हव्यंदेवा
नगृह्णंतिकव्यंचपितरस्तथेति॥ तेनेयंपूर्वाह्णव्यापिनी॥ दिनद्वयेतत्त्वेपरैवेति॥ धर्म
तत्त्वविदोहेमाद्र्यादयः॥ अनंतभट्टस्तुसर्वेधृतिव्यतिपातौयुगमन्वादयस्तथा॥ स
म्मुखाउपवासेस्युर्हीनादानेतिमाःस्मृताइत्याह॥ दानादावितिश्राद्धसंग्रहः॥ उपवासे
स्त्वग्रेवक्ष्यते॥ यत्तुमार्कण्डेयः॥ शुक्लपक्षस्यपूर्वाह्णेश्राद्धंकुर्य्याद्विचक्षणः॥ कृष्णपक्षा
पराह्णेहिरोहिणींतुनलंघयेत्॥ रोहिणीनवमोमुहूर्त्तः॥ अत्रशुक्लपक्षयुगादिश्राद्धंपूर्वाह्णे
कार्य्यमितिशूलपाणिः॥ निर्णयामृतादयस्तुकालादर्शेमाघश्राद्धमापराह्णिकमुक्तं॥

एवमन्वंतरादीनांयुगादीनांविनिर्णयः॥इत्युक्तादेशकृत्यादिवचनंविष्णुपूजनादिविष
यंश्राद्धेत्वापराह्णिकेवेतिव्यवस्थांजगदुः॥सेयंपूर्वोक्तानेकवचोविरोधात्पूर्वाह्णेदैविकं
कुर्यादित्यादिवचनादेवसिद्धेर्वचनवैयर्थ्याच्चस्वाकूतविलसितमात्रमित्युपेक्षणीया॥
किंच॥कालादर्शोक्तिर्न्यायमूलावचोमूलावा॥नाद्यः॥युगादिश्राद्धस्यामाश्राद्धविकृति
त्वेनन्यायतोपराह्णव्याप्तावपिवचनेनतस्यबाधात्॥नांत्यः॥अतिदेशादेवापराह्णप्रा
प्तेर्वचनवैयर्थ्यात्॥अप्राप्तेशास्त्रमर्थवदितिन्यायात्॥तेनयदिकालादर्शोक्तेःकथं
चित्क्वाह्राजाऊेनसमाधित्सातर्हिन्यायप्राप्तकृत्स्नपक्षयुगादिविषयत्वेनसाव्यवस्थाप
नीयेतिदिक्॥अत्रविशेषोहेमाद्रौभविष्ये॥वैशाखस्यशुक्लपक्षेतुतृतीयायांतथैवचागं
गातोयेनरःस्नात्वामुच्यतेसर्वकिल्बिषैः॥तस्यांकार्योयवैर्होमोयवैर्विष्णुंसमर्चयेत्॥
यवान्दद्याद्द्विजातिभ्यःप्रयतःप्राशयेद्यवानिति॥अत्रदानविशेषस्तत्रैवभविष्ये॥इमां
प्रक्रम्य॥उदकुंभान्सकनकान्सान्नान्सर्वरसैःसह॥यवगोधूमचणकान्सक्तुद
ध्योदनंतथा॥ग्रैष्मिकंसर्वमेवात्रसस्यंदानेप्रशस्यतइति॥देवीपुराणेपि॥तृतीया
यांतुवैशाखेरोहिण्यर्क्षेप्रपूज्यतु॥उदकुंभप्रदानेनशिवलोकेमहीयते॥मंत्रस्तु॥एष
धर्मघटोदत्तोब्रह्मविष्णुशिवात्मकः॥अस्यप्रदानात्तृप्यंतुपितरोपिपितामहाः॥गंधो
दकतिलैर्मिश्रंसान्नंकुंभंफलान्वितं॥पितृभ्यःसंप्रदास्यामिअक्षय्यमुपतिष्ठतु॥अत्रच
पिंडरहितंश्राद्धंकुर्यात्॥अयनद्वितयेश्राद्धंविषुवद्वितयेतथा॥युगादिषुचसर्वासुपिंड
निर्वपणादृतेइतिहेमाद्रौपुलस्त्यवचनात्॥अत्ररात्रिभोजनेप्रायश्चित्तमृग्विधाने॥रा
त्रौभुंक्तेवत्सरेतुमन्वादिषुयुगादिषु॥अभिस्वष्टस्तिमंत्रंचजपेद्दशनपातकेइतिअपरा
र्केयमः॥कृतोपवासाःसलिलंयेयुगादिदिनेषुच॥दास्यंत्यन्नादिसहितंतेषांलोकामहो
दयाइति॥वैशाखेमलमासेसतितत्रैवयुगादिःकार्यः॥तथाचहेमाद्रौऋष्यशृंगः॥दर्शाह
रासुनोत्कर्षश्चतुर्ष्वपियुगादिषु॥उपाकर्मणिचोत्सर्गेश्चेतदिष्टंवृषादितइति॥एतद्दश
हरादिकंवृषादिसंक्रमेइत्थंकन्याचंद्रेवृषेरवावित्यादिनासौरमासोक्तेरित्यर्थः॥काला
दर्शेपि॥अष्टोदकुंभमन्वादिमहालययुगादिष्वितिमलमासकर्तव्येषुपरिगणनाच्च॥म
हालयशब्देनमघात्रयोदश्युच्यतेइतिमाधवः॥स्मृतिचंद्रिकायांमासद्वयेकर्तव्यमित्यु
क्तं॥योगादिकंमासिकंचश्राद्धंचापरपक्षिकं॥मन्वादिकंतैर्थिकंचकुर्यान्मासद्वयेपिचे
ति॥अपरपक्षःकृष्णपक्षःनतुमहालयः॥तस्यतत्रनिषेधात्॥मदनरत्नेमरीचिः॥प्रति
मासंमृताहेचश्राद्धंयत्प्रतिवत्सरं॥मन्वादौचयुगादौचतन्मासोरुभयोरपीति॥प्रतिव
त्सरेक्रियमाणंकल्पादिश्राद्धमितिसएवव्याचख्यौ॥अत्रश्राद्धाकरणेप्रायश्चित्तमृग्वि
धाने॥नयस्यधावामंत्रंचशतवारंतदाजपेत्॥युगाद्यायदास्नाकुरुतेनैवचापियइ
ति॥अत्रसमुद्रेस्नानंप्रशस्तं॥तदुक्तंपृथ्वीचंद्रोदयेसौरपुराणे॥युगादौतुनरःस्नात्वावि
धिवल्लवणोदधौ॥गोसहस्रप्रदानस्यकुरुक्षेत्रेफलंहियत्॥तत्फलंलभतेमर्त्योभूमिदा

नस्यचध्रुवमिति॥अयंनिर्णयःसर्वयुगादिषुबोद्धव्यः॥इतियुगादिनिर्णयः॥इयमेवतृतीयापर॰
शुरामजयंती॥साप्रदोषव्यापिनीग्राह्या॥तदुक्तंभार्गवार्चनदीपिकायांस्कांदभविष्ययोः॥वै॰
शाखस्यसितेपक्षेतृतीयायांपुनर्वसौ॥निशायाःप्रथमेयामेरामाख्यःसमयेहरिः॥स्वोच्चगैःषट्
ग्रहैर्युक्तेमिथुनेराहुसंयुते॥रेणुकायास्तुयोगर्भादवतीर्णोहरिःस्वयमिति॥दिनद्वयेतद्व्या
प्तावंशतःसमव्याप्तौचपरा॥अन्यथापूर्वैवतदुक्तं॥तत्रैवभविष्ये॥शुक्लातृतीयावैशाखे
शुद्धोपोष्यादिनद्वये॥निशायांपूर्वयामेचेदुत्तरान्यत्रपूर्विकेति॥वैशाखशुक्लसप्तम्यांगंगो
त्पत्तिः॥तदुक्तंपृथ्वीचंद्रोदयेब्राह्मे॥वैशाखशुक्लसप्तम्यांजह्नुनाजाह्नवीपुरा॥क्रोधात्
पीतापुनस्त्यक्ताकर्णरंध्रात्तुदक्षिणात्॥तांतत्रपूजयेद्देवींगंगांगगनमेखलामिति॥अ
त्रशिष्टाचारान्मध्याह्नव्यापिनीग्राह्या॥दिनद्वयेतद्व्याप्तावेकदेशव्याप्तौवापूर्वा॥युग्मवा
क्यात्॥वैशाखशुक्लद्वादश्यांयोगविशेषोहेमाद्रौ॥ज्योतिःशास्त्रे॥पंचाननस्थोगुरुभू
मिपुत्रौमेषेरविःस्याद्यदिशुक्लपक्षे॥मासाभिधानाकरभेणयुक्तातिथिर्व्यतीपातइतीह
योगः॥अस्मिन्स्कगोभूमिहिरण्यवस्त्रदानेनसर्वंपरिहायपापं॥सुरत्वमिंद्रत्वमनामय
त्वमर्थाधिपत्यंलभतेमनुष्यइति॥पंचाननःसिंहः॥मासाभिधानातिथिर्द्वादशी॥करभो
हस्तः॥वैशाखशुक्लचतुर्दशीनृसिंहजयंती॥साप्रदोषव्यापिनीग्राह्या॥तदुक्तंहेमाद्रौनृ
सिंहपुराणे॥वैशाखेशुक्लपक्षेतुचतुर्दश्यांनिशामुखे॥मज्जन्मसंभवंपुण्यंव्रतंपापप्र॰
णाशनंवर्षेवर्षेतुकर्तव्यंममसंतुष्टिकारणमिति॥दिनद्वयेपितद्व्याप्तावंशतःसमव्या
प्तौचपरा॥विषमव्याप्तौत्वधिकव्याप्तिमतीदिनद्वयेप्यव्याप्तौपरा॥परदिनेगौणकाल॰
व्याप्तेःसत्वात्॥पूर्वदिनेचतदभावात्॥यत्तु॥ततोमध्याह्नवेलायांनद्यादौविमलेजलइ
तिउपक्रम्यपरिधायततोवासोव्रतकर्मसमारभेदिति॥तत्रैवोक्तंतत्संकल्परूपव्रतो
पक्रमविषयं॥नत्वेतावतामध्याह्नव्यापिनीग्राह्येतिभ्रमितव्यंपूर्वोक्तवचनविरोधा
त्॥वैशाखस्यचतुर्दश्यांसोमवारेऽनिलर्क्षके॥अवतारोनृसिंहस्यप्रदोषसमयेद्विजा
इति॥टोडरानंदेस्कांदात्॥कूर्मःसिंहोबौद्धकल्कीचसायमितिपूर्वोक्तपुराणसमुच्चया
च्चेतिकेचित्॥तत्वंतुपूर्ववचसामनाकरत्वेननिर्मूलत्वाद्धेमाद्रौनृसिंहपुराणे॥मज्ज॰
न्मसंभवंपुण्यंव्रतंपापप्रणाशनमित्युपक्रम्य॥स्वातीनक्षत्रयोगेचशनिवारेतुमद्व्रतं॥
सिद्धियोगस्यसंयोगेवणिजेकरणेतथा॥पुंसांसौभाग्ययोगेनलभ्यतेदैवयोगतः॥स
र्वैरेतैस्तुसंयुक्तंहत्याकोटिविनाशनंएतदन्यतरेयोगेमद्दिनंपापनाशनं॥केवलेपिप्रक
र्तव्यंमद्दिनेव्रतमुत्तमं॥अन्यथानरकंयातियावच्चंद्रदिवाकरावित्युक्त्वा॥ततोमध्याह्नवे
लायांनद्यादौविमलेजले॥इत्यादिनामध्याह्नेएवंव्रतविधानाच्चतुर्दश्युत्तरार्द्धवणिजे
करणेमध्याह्नेचस्पष्टंजन्मप्रतीयते॥संध्यायांजन्मतुकाप्यनूक्तंमौख्येनदत्तंतदशा॰
स्त्रीयपक्षहेयएवेति॥इयमेवयोगविशेषेणातिप्रशस्ता॥तदुक्तंतत्रैव॥स्वातिनक्षत्र॰
योगेचशनिवारेतुमद्व्रतं॥सिद्धियोगस्यसंयोगेवणिजेकरणेतथा॥पुंसांसौभाग्ययोगे॥

नलभ्यतेदैवयोगतः॥तथाएभिर्योगैर्विनापिस्यान्नृहिंनंपापनाशनं॥तथा॥सर्वेषामेवव
र्णानामधिकारोस्तिमद्व्रते॥मद्भक्तैस्तुविशेषेणकर्त्तव्यंमत्परायणैः॥तथा॥सिंहःस्वर्ण
मयोदेयोममसंतोषकारकः॥तथा॥विज्ञायमद्दिनंयस्तुलंघयेत्पापकृन्नरः॥सयाति
नरकंघोरंयावच्चंद्रदिवाकरौ॥इदंचसंयोगाद्व्रतत्वंकाम्यत्वंचा॥अथात्रवि
शेषः॥मध्याह्नेमृद्भिर्मयतिलामलकस्नानंकृत्वा॥नृसिंहदेवदेवेशतवजन्मदिनेशुभे।
उपवासंकरिष्यामिसर्वभोगविवर्जितः॥इतिमंत्रेणसंकल्पंकृत्वाचार्यंकृत्वासायंका।
लेहैमीनृसिंहमूर्तिःस्थाप्यालक्ष्म्यास्तथैवच॥पलेनवातदर्द्धेनतदर्द्धार्द्धेनवापुनः॥
यथाशक्तितथाकुर्य्याद्वित्तशाठ्यविवर्जितइत्युक्तं॥नृसिंहमूर्तिंशक्त्याकृतंसुवर्णसिं
हंचकलशोपरिसंस्थाप्यरात्रौजागरणंकृत्वा॥प्रातःपुनःसंपूज्य॥नृसिंहाच्युतदेवेशलक्ष्मी
कांतजगत्पते॥अनेनार्चाप्रदानेनसफलाःस्युर्मनोरथाः॥इत्याचार्यायदत्वा॥मद्वंशेये
नराजातायेजनिष्यंतिचापरे॥तांस्त्वमुद्धरदेवेशदुःसहाद्भवसागरात्॥पातकार्णवम
ग्नस्यव्याधिदुःखांबुवारिभिः॥तीव्रैश्चपरिभूतस्यमहादुःखगतस्यमे॥करावलंबनं
देहिशेषशायिन्जगत्पते॥श्रीनृसिंहरमाकांतभक्तानांभयनाशन॥क्षीरांबुधिनिवा
सि त्वंचक्रपाणेजनार्दन॥व्रतेनानेनदेवेशभुक्तिमुक्तिप्रदोभवेतिप्रार्थयेदितिसंक्षे
पः॥वैशाख्यांपौर्णमास्यांविशेषः॥अपरार्केजाबालिः॥एतान्समुदकुंभंचवैशाख्यांच
विशेषतः॥निर्दिश्यधर्मराजायगोदानफलमाप्नुयात्॥सुवर्णतिलयुक्तैस्तुब्राह्मणा।
न्सप्तपंचच॥तर्पयेदुदपात्रैस्तुब्रह्महत्यांव्यपोहतिइति॥कुंभदानमंत्रस्त्वक्षयतृतीया
प्रकरणउक्तः॥भविष्येपि॥वैशाखीकार्त्तिकीमाघीतिथयोतीवपूजिताः॥स्नानदानवि
हीनास्ताननेयाःपांडुनंदन॥अत्रकृष्णाजिनदानंकार्य्यं॥तथाचविष्णुः॥कृष्णाजिनेतिला
न्कृत्वाहिरण्यंमधुसर्पिषी॥ददातियस्तुविप्रायसर्वंतरतिदुष्कृतमिति॥इतिकमला
करभट्टकृतेनिर्णयसिंधौवैशाखमासः॥ज्येष्ठःवृषसंक्रांतौपूर्वाःषोडशघटिकाःपुण्यकाल॥
रात्रौसंक्रमेसतिभागेवोक्तं॥ज्येष्ठशुक्लतृतीयायांरंभाव्रतमुक्तंमाधवीयेभविष्ये॥भद्रेकु
रुष्वयत्नेनरंभाख्यंव्रतमुत्तमं॥ज्येष्ठशुक्लतृतीयायांस्नातानियमतत्परेति॥साष्टर्चविद्वा
ग्राह्या॥हृहन्नृपानथारंभासावित्रीव्रतयेत्की॥कृष्णाष्टमीचभूताचकर्त्तव्यासम्मुखी।
तिथिरितिस्कांदोक्तेः॥ज्येष्ठशुक्लादशमीदशहरा।तदुक्तंहेमाद्रौब्राह्मे॥ज्येष्ठेमासिसि
तेपक्षेदशमीहस्तसंयुता।हरतेदशपापानितस्माद्दशहरास्मृतेति।वाराहेपि॥दशमी।
शुक्लपक्षेतुज्येष्ठेमासिकुजेहनि॥अवतीर्णायतःस्वर्गाद्धस्तर्क्षेचशरिद्वरा॥हरतेदशप
पानितस्माद्दशहरास्मृतेति॥स्कांदेतुदशयोगाउक्ताः॥तथाज्येष्ठेमासिसितेपक्षेदशम्यां।
बुधहस्तयोः॥व्यतीपातेगरानंदेकन्याचंद्रेवृषेरवौ॥दशयोगेनरःस्नात्वासर्वपापैःप्रमु
च्यतेइति॥अत्रबुधभौमयोःकल्पभेदेनव्यवस्था॥इयंचयत्रैवयोगवाहुल्यंसैवग्राह्या॥यो
गाधिक्येफलाधिक्यात्॥ज्येष्ठेमलमासेसतितत्रैवदशहराकार्य्यानतुशुद्धेदशहरासुनो

स्कार्यश्चतुर्थ्यपियुगादित्वादितिहेमाद्रौऋष्यशृंगोक्तेः॥तथास्कांदे॥यांकाचित्सरितंप्राप्यदद्या
द्दर्भतिलोदकं॥मुच्यतेदशभिःपापैःसमहापातकोपमैः॥अत्रविशेषःकाशीखंडे॥ज्ये
ष्ठेमासिसितेपक्षेप्राप्यप्रतिपदंतिथिं॥दशाश्वमेधिकेस्नात्वामुच्यतेसर्वपातकैः॥एवंस
र्वासुतिथिषुक्रमस्नायीनरोत्तमः॥आशुक्ल
पक्षदशमींप्रतिजन्माघमुत्सृजेत्॥तथा॥लिंगंदशाश्वमेधे
शंदृष्ट्वादशहरातिथौ॥दशजन्मार्जितैःपापैस्त्यज्यतेनात्रसंशयः॥तथाभविष्योत्तरका
शीखंडयोः॥निशायांजागरंकृत्वासमुपोष्यचभक्तितः॥पुष्पैर्गंधैश्चनैवेद्यैःफलैश्चदश
संख्यया॥तथादीपैश्चतांबूलैःपूजयेच्छ्रद्धयान्वितः॥स्नात्वाभक्त्यातुजान्हव्यांदशकृत्वो
विधानतः॥दशप्रसृतिकृष्णांश्चतिलान्सर्पिश्चवैजले॥सक्तुपिंडान्गुडपिंडान्दद्याच्चद
शसंख्यया॥ततोगंगातटेरम्येहेम्नारूप्येणवातथा॥गंगायाःप्रतिमांकृत्वावक्ष्यमाणस्व
रूपिणीं॥संस्थाप्यपूजयेद्देवींतदलाभेमृदापिवा॥अथतत्राप्यशक्तश्चेल्लिखेत्पिष्टेनवैभु
वि॥वक्ष्यमाणेनमंत्रेणकुर्यात्पूजांविशेषतः॥नारायणंमहेशंचब्रह्माणंभास्करंतथाभ
गीरथंचनृपतिंहिमवंतंनगेश्वरं॥गंधपुष्पादिभिःसम्यग्यथाशक्तिप्रपूजयेत्॥दशप्र
स्थांस्तिलान्दद्याद्दशविप्रेभ्यएवच॥दशप्रस्थान्यवान्दद्याद्दशसंख्यागवीस्तथा॥प्र
स्थाःषोडशपलानि॥पलंतु॥मुष्टिमात्रंपलंस्मृतमितिमहार्णवेउक्तं॥मत्स्यकच्छप
मंडूकमकरादिजलेचरान्॥कारयित्वायथाशक्तिस्वर्णेनरजतेनवा॥तदलाभेपिष्टमयान
भ्यर्च्यकुसुमादिभिः॥गंगायांप्रक्षिपेद्राजन्दीपांश्चैवप्रवाहयेत्॥पुष्पाद्यैःपूजयेद्गांमंत्रे
णानेनभक्तितः॥ॐनमःशिवायैनारायण्यैदशहरायैगंगायैनमोनमः॥इतिमंत्रं
तुयोमर्त्योदिनेतस्मिन्दिवानिशं॥जपेत्सचसहस्राणिदशधर्मफलंलभेत्॥काशीखंडे
त्वन्योमंत्रउक्तः॥नमःशिवायैप्रथमंनारायण्यैपदंततः॥दशहरायैपदमितिगंगायैमंत्र
एषवै॥स्वाहांतःप्रणवादिश्चभवेद्विंशाक्षरोमनुः॥पूजादानंजपोहोमोनेनैवमनुना॥
स्मृतइति॥अत्रगंगाजलेस्थितः॥यःपठेद्दशकृत्वस्तुदरिद्रोवापिवाक्षमः॥सोपित
त्फलमाप्नोतिगंगांसंपूज्ययत्नतः॥इति॥स्तोत्रंचप्रतिपदादिदशमीपर्यंतदिनवृद्धिसं
ख्ययापठनीयमितिशिष्टाः॥अत्रसर्वोपिविस्तरःस्तोत्रादिचभट्टकृतत्रिस्थलीसेतोरव
धेयः॥विस्तरभीतेस्तन्नलिख्यते॥एवंकुर्वतःफलमुक्तंकाशीखंडे॥एवंकृत्वाविधाने
नवित्तशाठ्यविवर्जितः॥उपवासीवक्ष्यमाणैर्दशपापैःप्रमुच्यते॥सर्वान्कामानवाप्नो
तिप्रेत्यब्रह्मणिलीयतइति॥अस्यांसेतुबंधरामेश्वरस्यप्रतिष्ठादिनत्वाद्विशेषेणपूजाका
र्या॥तदुक्तंस्कांदेसेतुमाहात्म्ये॥ज्येष्ठेमासिसितेपक्षेदशम्यांबुधहस्तयोः॥गरानंदेव्यतीपा
तेकन्याचंद्रेवृषेरवौ॥दशयोगेसेतुमध्येलिंगरूपधरंहरं॥रामोवैस्थापयामासशिवलिंग
मनुत्तममिति॥इतिदशहरा॥ज्येष्ठशुक्लैकादशीनिर्जला॥तत्रनिर्जलमुपोष्यविप्रेभ्यो
जलकुंभान्दद्यादितिनिर्णयामृतेउक्तंमदनरत्नेस्कांदेपि॥ज्येष्ठेमासिनृपश्रेष्ठयाशुक्लै

कादशी शुभा॥ निर्जलं समुपोष्यात्र जलकुंभान्सशर्करान्॥ प्रदाय विप्रमुख्येभ्यो मोदते
विष्णुसन्निधौ॥ ज्येष्ठपौर्णमास्यां सावित्रीव्रतं॥ तदुक्तं स्कांदे भविष्ये। ज्येष्ठे मासि सिते
पक्षे द्वादश्यां रजनीमुखे॥ इत्युपक्रम्य॥ व्रतं त्रिरात्रमुद्दिश्य दिवारात्रं स्थिरा भवेदिति। अं
ते पूपसंहृतम्॥ ज्येष्ठे मासि सिते पक्षे पौर्णिमायां तथा व्रतं॥ चीर्णं पुरा महाभक्त्या कथितं
ते मया नृप इति। दाक्षिणात्यास्त्वेतदेवाद्रियंते। एतच्चामावास्यायामप्युक्तं निर्णयामृते भवि
ष्ये॥ अमायां च तथा ज्येष्ठे वटमूले महासती॥ त्रिरात्रोपोषिता नारी विधिनानेन पूजयेत्॥
मदनरत्ने त्विदं वाक्यं चतुर्दश्यां तथा ज्येष्ठे इति पठित्वा ज्येष्ठपौर्णमास्यामप्युक्तम्। तथा।
अशक्तौ तु त्रयोदश्यां नक्तं कुर्याज्जितेंद्रिया॥ अयाचितं चतुर्दश्याममायां समुपोषणं।
मिति॥ तत्तु पाश्चात्यैराद्रियते। हेमाद्रिसमयप्रदीपादिषु भाद्रपदपौर्णमायामुक्तम्
तत्तु नेदानीं प्रचरति॥ गौडास्तु॥ मेषे वा वृषभे वापि सावित्रीं तां विनिर्दिशेत्। ज्येष्ठकृष्णच
तुर्दश्यां सावित्रीमर्चयंति याः॥ वटमूले सोपवासा न ता वैधव्यमाप्नुयुरिति पराशरोक्ते-
श्चतुर्दश्यां प्रदोषव्रतम्॥ दिनद्वये तद्व्याप्तौ परेत्याहुः॥ तन्निर्मूलम्। अत्र पौर्णिमामावा
स्ये पूर्वविद्धे ग्राह्ये॥ भूतविद्धा न कर्तव्या अमावास्या च पौर्णिमा॥ वर्जयित्वा नरश्रेष्ठ सावि
त्रीव्रतमुत्तममिति॥ ब्रह्मवैवर्तात्॥ भूतविद्धा सिनीवाली न तु तत्र व्रतं चरेत्॥ वर्जयि-
त्वा तु सावित्रीव्रतं तु शिखिवाहन इति मदनरत्ने ब्रह्मवैवर्तेपि॥ प्रतिपत्पंचमी भूतसा वि
॥ ० ॥ त्रीवटपौर्णि
मा॥ नवमी दशमी चैव नोपोष्याः परसंयुता इति॥ यदा त्वष्टादशघटिका चतुर्दशी तदा
परा ग्राह्या॥ पूर्वविद्धैव सावित्रीव्रते पंचदशी तिथिः। नाष्टादशभूतस्य सुश्चेत्तत्र परेह
नीति माधवः॥ वस्तुतस्तु॥ भूतोष्टादशनाडीभिर्दूषयत्युत्तरां तिथिमित्यस्य व्रतांतरे सा
वकाशत्वाद्विशेषतः॥ प्रवृत्तपूर्वविद्धाविधायक वचनेन तस्य बाधादष्टादशनाडी।
वेधेपि पूर्वैवेत्ययं पंथाः साधुः॥ अत्र पौर्णिमानुरोधेनैव यथा त्रिरात्रं संपन्नं भवति॥ तथा
त्रयोदश्यां ग्राह्या तस्याः प्रधानत्वात्॥ अयं निर्णयोऽमायामपि ज्ञेयः। पारणं तु पौर्णिमां
ते कार्यं॥ अत्र स्त्रीव्रतेषु विशेषः परिभाषायामुक्तः॥ अत्र विशेषो भविष्ये॥ गृहीत्वा वा
लुकां पात्रे प्रस्थमात्रं युधिष्ठिर॥ ततो वंशमये पात्रे वस्त्रयुग्मेन वेष्टिते॥ सावित्रीप्रतिमां
कुर्यात्सौवर्णीं चापि मृण्मयीं॥ सार्द्धं सत्यवता साध्वीं धूपनैवेद्यदीपकैः॥ रजन्या कंठसूत्रै-
श्च शुभैः कुंकुमकेसरैः पूजयेदिति शेषः॥ रजनी हरिद्रा॥ कंठसूत्रं सौभाग्यतंतुः॥ सावि-
त्र्याख्यानकं चापि वाचयीत द्विजोत्तमं॥ रात्रौ जागरणं कृत्वा प्रभाते विमले ततः॥ तामपि
ब्राह्मणे दत्वा प्रणिपत्य क्षमापयेत्॥ मंत्रस्तु॥ सावित्रीयं मया दत्ता सहिरण्या महासती॥
ब्रह्मणः प्रीणनार्थाय ब्राह्मण प्रतिगृह्यतां॥ अनेनानेन राजेंद्र वैधव्यं नाप्नुयात्क्वचिदिति
॥ ज्येष्ठपौर्णमास्यां विशेषश्चादित्यपुराणे ज्येष्ठे मासि तिलान्दद्यात्पौर्णमास्यां विशेषतः
अश्वमेधस्य यत्पुण्यं तत्प्राप्नोति न संशयः॥ विष्णुरपि॥ ज्येष्ठी ज्येष्ठायुता चेत्स्यात्तस्यां छ-

त्रोपानमदानेननरोराधिपत्यमाप्नोतीति॥हेमाद्रौज्योतिषे॥ऐंद्रेगुरुःशशीचैवप्राजापत्येरवि
स्तथा॥दर्शोमाज्येष्ठमासस्यमहाज्येष्ठीप्रकीर्तिता॥इयंमन्वादिरपि॥सापौर्णमासीकीयाद्या
॥विशेषस्तुचैत्रेउक्तः॥तथापराके्वामनपुराणे॥उदकुंभांबुदानंचतालवृंतंचचंदनं॥
त्रिविक्रमस्यप्रीत्यर्थंदातव्यंज्येष्ठमासितुइति॥इतिकमलाकरभट्टकृतेनिर्णयसिंधौ
तृप्रागेवोक्तं॥आषाढशुक्लद्वितीयायांरथोत्सवः॥तदुक्तंतिथितत्वेस्कांदे॥आषाढस्य
सितेपक्षेद्वितीयापुष्यसंयुता॥तस्यांरथेसमारोप्यरामंमांभद्रयासह॥यात्रोत्सवंप्रव
र्त्यार्थप्रीणयेथद्विजान्बहून्॥तथा॥ऋक्षाभावेतिथौकार्य्यायात्रासाप्रीतयेमम॥
आषाढशुक्लदशमीपौर्णमासीचमन्वादिः॥साचपूर्वाह्णव्यापिनीतिप्रागुक्तं॥आषा
ढशुक्लद्वादश्यांअनुराधायोगरहितायांपारणंकुर्य्यात्॥तदुक्तंभविष्ये॥आभाका
सितपक्षेषुमैत्रश्रवणरेवतीसंगमेनहिभोक्तव्यंद्वादशद्वादशीर्हरेत्॥अस्यार्थः॥
आषाढभाद्रपदकार्त्तिकशुक्लद्वादशीषुअनुराधाश्रवणरेवतीयोगेपारणंनकुर्या
दिति॥अत्रयद्यप्येतावदेवोक्तम्॥तथाप्यनुराधाप्रथमपादएववर्ज्यः॥तदुक्तंविष्णु
धर्म्मेमैत्राद्यपादेस्वपितीहविष्णुःपौष्णांत्यपादेप्रतिबोधमेति॥श्रुतेश्चमध्येपरिवर्त्त
मेतिसुप्तिप्रबोधपरिवर्त्तनमेववर्ज्यमिति॥वस्तुतस्तु॥सर्वंवचनमिदंचनिर्मूलमेव॥
अत्रैवविष्णुशयनोत्सवउक्तोहेमाद्रौब्राह्मे॥एकादश्यांतुशुक्लायामाषाढेभगवान्
हरिः॥भुजंगशयनेशेतेक्षीरार्णवजलेसदेति॥कल्पतरौयमः॥क्षीराब्धौशेषपर्यंके
आषाढ्यांसंविशेद्धरिः॥निद्रांत्यजतिकार्त्तिक्यांतयोःसंपूजयेत्सदा॥ब्रह्महत्यादिकंपा
पंक्षिप्रमेवव्यपोहति॥हिंसात्मकैस्तुकिंतस्ययज्ञैःकार्य्यंमहात्मनः॥प्रस्वापेचप्रबो
धेचपूजितोयेनकेशवः॥पौराणेदेपिस्कांदे॥आषाढशुक्लैकादश्यांकुर्यात्स्वप्नमहो
त्सवं॥अयंद्वादश्यामप्युक्तः॥आभाकासितपक्षेषुमैत्रश्रवणरेवती॥आदिमध्याव
सानेषुप्रस्वापावर्त्तनोत्सवः॥निशिस्वापोदिवोत्थानंसंध्यायांपरिवर्त्तनं॥अन्यत्रपा
दयोगेपिद्वादश्यामेवकारयेत्॥आभाकाद्येषुमासेषुमिथुनेमाधवस्यच॥द्वादश्यां
शुक्लपक्षेचप्रस्वापावर्त्तनोत्सवाइतिभविष्योक्तेः॥द्वादश्यांसंधिसमयेनक्षत्राणा
मसंभवे॥आभाकासितपक्षेषुशयनावर्त्तनादिकमिति॥वाराहोक्तेश्च॥द्वादश्यामि
त्यत्रापिपारणाहोमात्रंविवक्षितं॥पारणाहेस्वपेद्रात्रौघंटादीन्वादयन्मुहुरितिरा
मार्चनचंद्रिकोक्तेः॥अत्रैकादशीद्वादश्योर्देशभेदेनव्यवस्था॥इदंचमलमासेन
कार्य्यं॥ईशानस्यवलिर्विष्णोशयनंपरिवर्त्तनमितिकालादर्शेनिषेधात्॥यदपि॥ए
कादश्यांतुशुक्लायांनसंक्रांतौकर्कटस्यवा॥आषाढ्यांवानरोभक्त्याचातुर्मास्यव्रत
क्रियामिति॥हेमाद्रौब्रह्मवैवर्त्ते॥तदपिमलमासेसतिद्रष्टव्यं॥मिथुनस्थोयदाभानुर
मावास्यादर्शेन॥हिरण्याक्षःसविज्ञेयोविष्णुःस्वपितिकर्कटइतितत्रैवमोहचूडो
क्तेः॥अत्रैवचातुर्मास्यव्रतारंभउक्तोभारते॥आषाढेतुसितेपक्षेएकादश्यामुपो

षितः॥ चातुर्मास्यव्रतं कुर्य्यान्न यत्किंचिन्नियतो नर इति॥ अस्य नित्यत्वं तत्रैवोक्तं॥ वार्षिकां श्चतुरो मासान् वाहयेत्केनचिन्नरः॥ व्रतेन नो चेदाप्नोति किल्बिषं वत्सरोद्भवं॥ असंभवे तुलार्केपि कर्त्तव्यं तत्प्रयत्नतः॥ इति॥ तेन आषाढशुक्लैकादश्यां पौर्णमास्यां वारंभः॥ स मासि शुक्लकार्त्तिकशुक्लद्वादश्यामेवा॥ तदुक्तं हेमाद्रौ भारते॥ चतुर्द्धा गृहिवै चीर्णं चातुर्मास्य व्रतं नरः॥ कार्त्तिके शुक्लपक्षे तु द्वादश्यां तत्समापयेत्॥ अस्यारंभश्च शुक्लाष्टादावपि कार्य्यः॥ न शेशवेनमौढ्यं च शुक्रगुर्वो न वा तिथेः॥ एवं तु त्वं विंतयेच्चादौ चातुर्मास्यविधौ नर इति॥ हेमाद्रौ गार्ग्योक्तेः॥ इदं च द्वितीयारंभविषयं॥ प्रथमारंभस्तु न भवत्येव॥ आशौचमध्येपि द्वितीयारंभो भवति॥ अशुचिर्वा शुचिर्वापि यदि स्त्री यदि वा पुमान्॥ व्रतमेतन्नरः कृत्वा मुच्यते सर्वपातकैरिति॥ भार्गवार्चनदीपिकायां स्कान्दोक्तेः॥ आरब्धे सूतकं न स्यादनारंभे च सूतकमिति विष्णुवचनाच्च॥ यत्तुः॥ असंक्रांते तथा मासे संदेवे पित्र्ये च कर्मसि॥ मलमासमशौचं च वर्जयेन्मतिमान्नरः॥ इति हेमाद्रौ॥ चातुर्मास्यव्रतप्रकरणे भविष्यवचनं॥ तत्र चातुर्मास्यमध्ये तद्वत्सराहमध्ये पतितमिति ज्ञेयं॥ अन्यथापि अस्पष्टवौक्तस्य विवाहादेश्च चातुर्मास्यव्रते कः प्रसंगः॥ प्रकरणनिवेशोपि वा प्रथमारंभविषयं ज्ञेयम्॥ केचित्तु॥ प्रतिवर्षं च चातुर्मास्यव्रतप्रयोगाणां भिन्नत्वादाशौचादिपाते॥ द्वितीयादिप्रयोगो न भवत्येवेत्याहुः॥ तन्न॥ प्रतिवर्षं च यः कुर्य्यादेवं वै संस्मरन्हरिम्॥ देहांतेपि प्रदीप्तेन विमानेनार्कवर्चसा॥ मोदते विष्णुलोके सौ यावदाहूतसंप्लवमिति हेमाद्रौ भविष्यवचनादित्यास्तां विस्तरः॥ इदं च शिवभक्तादिभिरपि कार्यं॥ शिवे वा भक्तिसंयुक्तो भानौ वा गणनायके कृत्वा व्रतस्य नियमं यथोक्तफलभाग्भवेदिति ब्रह्मवैवर्त्तात्॥ व्रतग्रहणप्रका रस्तु हेमाद्रौ भविष्ये॥ महापूजां ततः कुर्य्याद्देवदेवस्य चक्रिणः॥ जातीकुसुममालाभिर्मंत्रेणानेन पूजयेत्॥ सुप्ते त्वयि जगन्नाथे जगत्सुप्तं भवेदिदम्॥ विबुद्धे च विबुध्येत प्रसन्नो मे भवाच्युत॥ एवं तां प्रतिमां विष्णोः पूजयित्वा स्वयं नरः॥ प्रभाये चाग्रतो विष्णोः कृत्वांजलिपुटस्तथा॥ चतुरो वार्षिकान्मासान् देवस्योत्थापनावधि॥ इमं करिष्ये नियमं निर्विघ्नं कुरु मेच्युत॥ इदं व्रतं मया देव गृहीतं पुरतस्तव॥ निर्विघ्नं सिद्धिमायातु प्रसादात्तव केशव॥ गृहीतेस्मिन्व्रते देव यं चात्वं यदि मे भवेत्॥ तदा भवतु संपूर्णं त्वत्प्रसादाज्जनार्दन॥ गृहीतेस्मिन्व्रते देव यद्यपूर्णे म्रियेह्यहं॥ तन्मे भवतु संपूर्णं त्वत्प्रसादाज्जनार्दनेति तत्र भार्गवार्चनदीपिकायां नृसिंहपरिचर्यायां च भविष्ये॥ श्रावणे वर्जयेच्छाकं दधि भाद्रपदे तथा॥ दुग्धमाश्वयुजे मासि कार्त्तिके द्विदलं त्यजेदित्युक्तम्॥ स्कांदेपि चातुर्मास्यकल्पे॥ चत्वार्येतानि नित्यानि चतुराश्रमवर्णिनां॥ प्रथमे मासि कर्त्तव्यं नित्यं शाकव्रतं नरैः॥ द्वितीये मासि कर्त्तव्यं दधिव्रतमनुत्तमं॥ पयोव्रतं तृतीये तु चतुर्थेपि निशामय॥ द्विदलं बहुबीजं च वृंताकं च विवर्जयेत्॥ नित्यान्ये॰

तानि विप्रेंद्र व्रतात्साद्दुर्मनीषिणः ॥ जंबीरं राजमाषांश्च मूलकं रक्तमूलकं ॥ कूष्मांडं चेक्षुदंडं च
चातुर्मास्ये त्यजेद्बुधः ॥ अत्र मूलं चिंत्यं तथा विशेषाद्बदरीधात्री कूष्मांडं तिंतिणीं त्यजेत् ॥ जीर्णं
धात्रीफलं ग्राह्यं कथंचित्कायशोधनमिति ॥ तीर्थसौख्ये स्कांदे ॥ वार्षिकांश्चतुरो मासान् श
सुप्ते च जनार्दने ॥ मंचखट्वादिशयनं वर्जयेद्भक्तिमान्नरः ॥ अनृतौ वर्जयेद्भार्यां मांसं मधु प
रौदनं ॥ पटोलं मूलकं चैव वृंताकं च न भक्षयेत् ॥ अभक्ष्यं वर्ज्जयेद्दग्धान्मसूरं सितसर्षपं ॥ राज
माषान् कुलत्थांश्च आशु धान्यं च संत्यजेत् ॥ शाकं दधि पयो माषान् श्रावणादिषु वर्ज्जयेत् ॥
अत्र त्यजेदिति वर्ज्जनं संकल्परूपः पर्युदासो ज्ञेयः ॥ व्रतोपक्रमात् ॥ अत्र केचिच्छाकाख्यं प
त्रपुष्पादीत्यमरकोशस्य शाक्यतेऽसितुमनेनेति शाकः इति क्षीरस्वामिनाव्याख्यानात् अन्
नमात्रस्य निषेधमाचक्षते ॥ अन्ये तु शाकशब्दस्य पत्रादिदशविधशाके योगरूढित्वात् ॥ यो
गाद्रूढेर्बलीयस्त्वात् सूपादीनामपि निषेधमाचक्षते ॥ तेन मूलपत्रकरीराग्रफ
लकांडाधिरूढकाः ॥ त्वक्पुष्पं कवचं चेति शाकं दशविधं स्मृतमिति क्षीरस्वामिनोक्तस्य शा
कस्य निषेध इति ॥ अधिरूढकं दशविधं स्मृतमिति क्षीरस्वामिनोक्तस्य शाकस्य निषेध इति ॥
अधिरूढकं अंकुरः ॥ वस्तुतस्तु ॥ तत्तत्कालोद्भवा शाका वर्ज्जनीयाः प्रयत्नतः ॥ बहुबीजम
बीजं च विकारी च विवर्ज्जयेदिति भविष्यवचनात् तत्तत्कालोत्पन्नानां दशविधशाकानां निषे
धः ॥ अत्र तत्कालोद्भवजातीयत्वं विवक्षितं न तु तन्मात्रकालोद्भवत्वं गौरवात् ॥ तेनात
पादिशोषितानां वर्षांतरोद्भवानामपि निषेधः ॥ अत्र तत्कालोद्भवजातीयत्वं विवक्षितम्
न तु तन्मात्रकालोद्भवत्वं गौरवात् ॥ तेनातपादिशोषितानां वर्षांतरोद्भवानामपि निषेधः ।
अत्र तत्कालोद्भवजातीयत्वमात्रं विवक्षितं न तन्मात्रकालोद्भवत्वं गौरवात् । तनान्यका
लोद्भवानां च विकारीणां निषेधः ॥ अत्र तत्तत्कालोद्भवा इति वीप्सावशात् स्वस्वकालोद्भ
वानां सर्वेषां निषेध इति निष्कर्षः ॥ बहुबीजमित्यनेकबीजमिति केचित् ॥ इतरावयवापेक्ष
या बीजावयवा यत्र बहवस्तदित्यन्ये ॥ अबीजं कदल्यादि ॥ वस्तुतस्त्विदं महानिबंधेष्वभावा
न्निर्मूलमेव ॥ आचारप्रदीपे ॥ वृंताकं च कलिंगं च बिल्वोदुंबरभिस्सटं ॥ उदरे यस्य जीर्यंति
तस्य दूरतरो हरिः ॥ तथा पराशरे देवलः ॥ ब्रह्मचर्यं तथा शौचं सत्यमामिषवर्जनं ॥ व्रतेष्वेता
नि चत्वारि वरिष्ठानीति निश्चयः ॥ आमिषाणि चोक्तानि रामार्चनचंद्रिकायां पाद्मे ॥ प्राण्यं
गचूर्णं चर्मांबु जंबीरं बीजपूरकं ॥ यज्ञशिष्टं माषादि यद्विष्णोरनिवेदितं ॥ दग्धमन्नं मसू
रं च मांसं चेत्यष्टधामिषं ॥ हव्यं तत्र देशलभ्यं सुप्ते देवे विवर्ज्जयेत् ॥ पाद्मे कार्त्तिकमाहात्म्ये
॥ गोछागीमहिषीदुग्धादन्यद्दुग्धादिकामिषं ॥ धान्ये मसूरिका प्रोक्ता अन्नं पर्युषितं तथा ॥
द्विजक्रीता रसाः सर्वे लवणं भूमिजं तथा ॥ ताम्रपात्रस्थितं गव्यं जलं पल्वलसंस्थितम्
आत्मार्थं पाचितं चान्नमामिषं तत्स्मृतं बुधैः ॥ तथा ॥ निष्पावान् राजमाषांश्च मसूरं संधि
तानि च ॥ वृंताकं च कलिंगं च सुप्ते देवे विवर्ज्जयेत् ॥ संधितानि लवणशाकादीनि ॥ तत्रैव वि
ष्णुधर्मे ॥ चतुर्ष्वपीह मासेषु हविष्याशी न पापभाक् हविष्याणि तु पृथ्वीचंद्रोदये भविष्ये

हैमंतिकहितानि धान्यं: ड्डायवा तिलाः॥कलायंकंगुनीवारवास्तुकंहिलमोचिका।
षष्टिका कालशाकं च मूलकं केमुकेतरत्।कंदः सैंधवसामुद्रे गव्ये च दधिसर्पिषी॥पयो
नुद्धृतसारं च पनसाम्रहरीतकी॥पिप्पलीजीरकं चैव नागरंगं च तिंतिणी॥कदलीलव
लीधात्रीफलान्यगुडमैक्षवं।अतैलपक्वं मुनयो हविष्यान्नं प्रचक्षते इति॥मदनरत्नेप्ये
वं॥सितमस्विन्नमनूष्मयवं धान्यं॥तंडुलाः केमुकं केमुजा इति प्राच्येषु प्रसिद्धः कंदः॥
कलायस्तु सतीनकः स्यान्मटः॥मटरी इति प्रसिद्धं धान्यं॥अगस्त्यसंहितायां हेमंताद्युक्ता
॥नारिकेरफलं चैव कदलीं लवलीं तथा॥आम्रमामलकं चैव पनसं च हरीतकीं॥व्रतां
तरप्रशस्तं च हविष्यं मन्यते बुधाः॥अन्यान्यपि त्वनुक्तानि हेमाद्रौ भविष्ये॥स्त्री वा नरो
वा मद्भक्तो धर्मार्थे सुदृढव्रतः॥गृह्णीयान्नियमानेतान्दंतधावनपूर्वकान्॥तेषां फ
लानि वक्ष्यामि तत्कर्तृणां पृथक्पृथक्॥मधुरस्वरो भवेद्राजा पुरुषो गुडवर्जनात्॥तैलस्य
वर्जनाद्राजन्सुंदरांगः प्रजायते॥कटुतैलपरित्यागाच्छत्रुनाशः प्रजायते॥योगाभ्या
सी भवेद्यस्तु स तु ब्रह्मपदमाप्नुयात्॥तांबूलवर्जनाद्भोगी रक्तकंठश्च जायते घृतत्यागा
त्सुलावण्यं सर्वस्निग्धतनुर्भवेत्॥शाकपक्वाशनाद्रोगी अपक्वादोऽमलो भवेत्॥
भूमौ प्रस्तरशायी च विप्रो मुनिवरो भवेत्॥एकांतरोपवासेन ब्रह्मलोके महीयते॥धा
रणान्नखरोम्णां च गंगास्नानफलं लभेत्॥मौनव्रती भवेद्यस्तु तस्याऽज्ञा स्खलिता भ
वेत्॥भूमौ भुंक्ते सदा यस्तु स पृथिव्याः पतिर्भवेत्॥प्रदक्षिणाशतं यस्तु करोति स्तुतिपा
ठकः॥हंसयुक्तविमानेन स च विष्णुपुरं व्रजेत्॥अयाचितेन प्राप्नोति पुत्रान्धर्म्यानशी
घ्रतः॥षष्ठान्नकालभोक्ता यः कल्पस्थायी भवेद्दिवि॥पर्णेषु यो नरो भुंक्ते कुरुक्षेत्रफलं
लभेत्॥गुडवर्जी नरो दद्यात्तम्र तं ताम्रभाजनं॥सहिरण्यं नरश्रेष्ठ लवणस्याप्ययं वि
धिः॥सुप्ते देवे तु यो नद्यां तं ताम्रभाजनं॥सहिरण्यं नरश्रेष्ठ लवणस्याप्ययं विधिः॥सुप्ते
देवे तु यो विष्णोः शिवस्यांगणमर्चयेत्॥पंचवर्णैस्तु यो नित्यं स्वस्तिकैः पद्मकैस्तथा॥
सप्तानिरुद्रलोके हि गाणपत्यमवाप्नुयात्॥अथैषां समाप्तौ कार्तिक्यां दानानि तत्रैव
वस्त्रयुगं।एकांतरोपवासे गौः॥शय्याभूशयने॥षष्ठकालभोजने गौः॥व्रीहिगोधूमादि
त्यागे हैमव्रीह्यादि॥कृच्छ्रे गोयुगम्॥शाकाशने गौः पयोव्रते च॥मधुदधिघृतव्रते सुव
र्णो गौश्च॥ब्रह्मचर्ये स्वर्णमूर्तिः॥तांबूलत्यागे वासोयुगम्॥मौने घृतकुंभो वस्त्रयुगं घंटा च
॥दिवाग्रेरंगमालिकाकरणे धेनुर्हैमपद्मं च॥दीपव्रते दीपिका वासोयुगं च॥भूमिभोज
ने पर्णभोजने च कांस्यपात्रं गौश्च॥चतुष्पथदीपे गौः प्रासे च गोवृषौ॥प्रदक्षिणाशते व
स्त्रं॥अनुक्तेषु स्वर्णं गौश्चेत्यादिकं हेमाद्रौ ज्ञेयं॥तथा॥भार्गवार्चनदीपिकायां पाद्मे।
शयनी बोधनीमध्ये शमीदूर्वापामार्गकैः॥भृंगराजेन देवं तु नार्चयीत कदाचन॥हेमा
द्रौ पाद्मे॥आषाढादिचतुर्मासानभ्यंगं वर्जयेन्नरः॥समाप्तौ च पुनर्दद्यात्तिलतैलपुतं
घटम्॥आषाढादिचतुर्मासं वर्जयेन्नखकृंतनं॥वृंताकं रंजनं चैव मधुसर्पिर्घटान्वितं॥

कार्त्तिक्यांतत्सुवर्णंब्राह्मणायनिवेदयेत्॥अमान्यपिवर्ज्जनसंकल्परूपाणिपृथ्वीचं
द्रोदयेत्तेयानि॥टोडरानन्देस्कांदे॥एकांतरंद्व्यंतरंवाकुर्य्यान्मासोपवासकं॥अनोदनं
फलाहारनक्तंव्रतमथापिवा॥अत्रैवतप्तमुद्राधारणमुक्तंरामार्च्चनचंद्रिकायांभवि
ष्ये॥शयन्यांचैवबोधिन्यांचक्रतीर्थेतथैवच॥शंखचक्रविधानेनवह्नितप्तोभवेन्नरइ
ति॥अतप्ततनूर्नतदामोऽश्नुतइतिऋग्वेदात्॥सहोवाचयाज्ञवल्क्यस्तस्मात्पुमाना
त्महितायहरिंभजेत्॥सुश्लोकमौलेर्वर्माणंगोष्वग्निनासंघतइतिशातपथश्रुतेः॥अग्ने
विष्णोअङ्कुचक्रेसुतप्तेजन्मांभोधितंत्वेवेचर्षणींद्राः॥मूलेबाह्वोर्दधनेन्येपुराणालिं
गान्यंगेतावकान्यर्पयंति॥इतिसामवेदात्॥अग्निहोत्रंयथानित्यंवेदस्याध्ययनंयथा॥
ब्राह्मणस्यतथैवेदंतप्तमुद्रादिधारणमितिपद्मपुराणाच्चेति॥ब्राह्मणःक्षत्रियोवैश्यः
शूद्रोवायदिवेतरः॥शंखचक्रांकिततनुस्तुलसीमंजरीधरः॥गोपीचंदनलिप्तांगोदृ
ष्टश्चेत्तदघंकुतइतिकाशीखंडात्॥तप्तकारस्तुरामार्च्चनचंद्रिकायांज्ञेयः॥पृथ्वीचंद्रो
दयस्तु॥यस्तुसंतप्तशंखादिलिंगांकिततनुर्नरः॥संभाष्यरौरवंयातियावदिंद्राश्चतुर्द
शेतिबृहन्नारदीयोक्तेः॥शंखचक्राद्यंकनंचगीतनृत्यादिकंतथा॥एकजातेरयंधर्मो
नजातुस्याद्द्विजन्मनः॥शंखचक्रेमृदापस्तुकुर्यात्तप्तायसेनवा॥सशूद्रवद्बहिःकार्य्यःसर्व
स्माद्द्विजकर्मणः॥यथाश्मशानजंकाष्ठमनर्हंसर्वकर्म्मसु॥तथाचक्रांकितोविप्रःसर्व
कर्म्मसुगर्हितः॥तथाशिवकेशवयोरंकांश्शूलचक्रादिकान्द्विजः॥नधारयेतमतिमा
न्वैदिकेवर्त्मनिस्थितइतिविष्णुवाश्वलायनादिवचनात्॥ऋग्वेदादिश्रुतीनामन्यार्थ
त्वादन्यश्रुतीनांचासत्वाच्चक्रादिधारणंशूद्रविषयमित्याहुः॥नृत्यंचोदनार्थनिषिद्ध
मितिश्रीधरस्वामी॥यद्यपिनिषेधस्यप्राप्तिसापेक्षत्वाद्विधिंविनाचतदयोगादुपजीव्य
विरोधेनतौपशूकरोतीतिवत्विकल्पोयुक्तस्तथापिएकजातेरयंधर्मइत्यनेनसा
मान्यवाक्यानामुपसंहारात्॥द्विजातिनिषेधोनित्यानुवादइतितदाशयः॥अत्रशिष्टा
चारएवसंकटपाशनिःसरणसृणिरितिसंक्षेपः॥आषाढपौर्णमास्यांकोकिलाव्र
तमुक्तंहेमाद्रौभविष्ये॥आषाढपौर्णमास्यांतुसंध्याकालेह्युपस्थिते॥संकल्पयेन्मास
मेकंश्रावणेत्वहंह्यहं॥स्नानंकरिष्येनियताब्रह्मचर्येस्थितासती॥भोक्ष्यामि[illegible]भू
शय्यांकरिष्येप्राणिनांदयामिति॥अस्यनक्तव्रतत्वात्सायाह्नव्यापिनीग्राह्या॥अत्रै
वशिवशयनोत्सवउक्तोहेमाद्रौवामनपुराणे॥पौर्णमास्यामुमानाथःस्वपतेचर्मसं
स्तरे॥वैयाघ्रेचजटाभारंसमुद्ग्रथ्याहिवर्ष्मणा॥मदनरत्नेप्येवं॥इयंप्रदोषव्यापिनी।
अत्रैवव्यासपूजोक्ता॥तत्रत्रिमुहूर्त्ताचेत्परैवेतिसंन्यासपद्धतौ॥त्रिमुहूर्ताधिकंग्राह्यं॥
पर्वक्षोरस्तमयोरितिवचनात्॥इतिश्रीरामकृष्णभट्टात्मजकमलाकरभट्टकृतेनि
र्णयसिंधौआषाढमासःकर्कसंक्रांतौपूर्वत्रिंशद्दंडाःपुण्यकालः॥सूर्योदयोत्तरंसंक्र
मेतुपरतएवपुण्यं॥रात्रौतुनिशीथात्प्राक्परतश्चसंक्रमेऽपरार्कहेमाद्र्यनंतभट्टादि

मतेऽर्वाक्परदिनयोः पंचनाड्यः पुण्यकालः॥ धनुर्मीनावतिक्रम्य कन्यां च मिथुनं तथा॥
पूर्वापरविभागेन रात्रौ संक्रमते रविः॥ दिनांते पंचनाड्यस्तु तदा पुण्यतमाः स्मृताः॥ उ
दयेपि तथा पंच दैवे पित्र्ये च कर्मणीति स्कांदोक्तेश्च॥ पूर्वापरविभागेनेति मकरकर्क
भिन्नसंक्रांतिपरं॥ वक्ष्यमाणवचोविरोधादित्युक्तं मदनरत्ने॥ तेनायमर्थः॥ रात्रौ पू
र्वभागे मकरे उदये पंच नाड्यः पुण्याः रात्रावपरभागे कर्कसंक्रमे दिनांते पंच नाड्यः पु
ण्याः॥ विषुवतोस्तु पूर्वदिने पंचापरदिने च पंचेति॥ वाक्यांतराणुरोधात् तेन हेमाद्रि
माधवयोः सर्ववचनानां चाविरोधः॥ माधवमते तु अर्धरात्रे तदूर्ध्वं वा संक्रांतौ दक्षिणा
यने पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविरिति॥ वृद्धगार्ग्योक्तेः॥ मिथुनात्कर्कसंक्रां
तिर्यदि स्यादंशुमालिनः॥ प्रभाते वा निशीथे वा तदा पुण्यं तु पूर्वतः॥ इति भविष्योक्तेश्च पूर्व
दिन एव पुण्यं॥ दाक्षिणात्यास्त्वेतदेवाद्रियंते॥ अत्र रात्रावपि स्नानादि भवतीत्युक्तं
प्राक्॥ अत्र दानोपवासादि पूर्वमुक्तं॥ तथा कार्कौ केशादिकर्तनं निषिद्धं॥ कुंभे कर्कट
के वापि कन्यायां कार्मुके रवौ॥ रोमखंडं गृहस्थस्य पितृन्प्राशयते यम इति॥ सुमंतुव
चनादित्युक्तम्॥ जीवत्पितृकनिर्णये गुरुभिः॥ अथ नदीनां रजोदोषः॥ हिमाद्रौ वसिः॥
सिंहकर्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः॥ तासु स्नानादि कर्माणि तासु कुर्वीत मानवः॥
इदं च क्षुद्रनदीषु॥ सिंहकर्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः॥ तासु स्नानं न कुर्वीत व
र्जयित्वा समुद्रगा इति व्याघ्रोक्तेः॥ मात्स्ये त्वगस्त्योदयावधित्वमुक्तम्॥ यावन्नोदेति भग
वान्दक्षिणाशाविभूषणं॥ तावद्रजोवहा नद्यः करतोयाः प्रकीर्तिताः॥ करतोया अ
ल्पतोयाः॥ तथा कात्यायनः॥ याः शोषमुपगच्छंति ग्रीष्मे कुसरितो भुवि॥ तासु प्रावृषि
न स्नायाद्दशरात्रं दशवासरं॥ इदं चापरार्के स्मृतिसंग्रहे धनुःसहस्राण्यष्टौ तु गतिर्यासां
न विद्यते॥ न ता नदीशब्दवहा गर्तास्ते परिकीर्तिताः॥ महानदीषु भविष्य उक्तम्॥ आदौ
तु कर्कटे देवि महानद्यो रजस्वलाः॥ त्रिदिनं तु चतुर्थेह्नि शुद्धाः स्युर्जाह्नवी यथा॥ महानद्य
श्च ब्राह्मे॥ गोदावरी भीमरथी तुंगभद्रा च वेणिका॥ तापी पयोष्णी विंध्यस्य दक्षिणे तु प्र
कीर्तिताः॥ भागीरथी नर्मदा च यमुना च सरस्वती॥ विशोका च वितस्ता च विंध्यस्योत्तरे
तः स्थिताः॥ द्वादशैता महानद्यो देवर्षिक्षेत्रसंभवाः॥ मदनरत्ने पुराणांतरे॥ महानद्यो
देविका च कावेरी वंजरा तथा॥ रजसा तु प्रदुष्टाः स्युः कर्कटादौ त्र्यहं नृप॥ कात्यायनः॥ क
र्कटादौ रजोदुष्टा गोमती वासरत्रयम्॥ चंद्रभागा सती सिंधुः सरयूर्नर्मदा तथा॥ इदं गंगा
द्यतिरिक्तविषयं॥ गंगा च यमुना चैव प्लक्षजाता सरस्वती॥ रजसा नाभिभूयंते ये चान्ये न
दसंज्ञकाः॥ शोणसिंधुहिरण्याख्याः कोकिलोहितघर्घराः॥ शतद्रूश्च नदाः सप्त पावनाः॥
परिकीर्तिताः॥ इति देवलोक्तेः॥ यत्तु प्रथमं कर्कटे देवि त्र्यहं गंगा रजस्वलेत्यादिवचनं त
ज्जाह्नवीभिन्नगोदावर्यादि॥ गंगांतरपरमिति मदनरत्ने॥ अन्ये त्वंतर्गतरजोविषयम्॥
गंगा धर्मद्रवः पुण्या यमुना च सरस्वती॥ अन्ये त्वंतर्गतरजोविषयम्॥ गंगा धर्मद्रवः पु

रायायमुनाचसरस्वती॥अंतर्गतरजोदोषाःसर्वावस्थासुचामलाइतिनिगमोक्तेः॥तीरवा
सिनांतुरजोदोषोनास्तिनतुतत्तीरवासिनामितिनिगमोक्तेः॥तीरवासिनांतुरजोदोषोना
स्तिनतुतत्तीरवासिनामितिनिगमोक्तेः॥रजोदुष्टमपिजलंगांगजलयोगेपावनं॥गंगां
भसासमायोगाद्दुष्टमप्यंबुपावनमितिमात्स्योक्तेः॥नूतनकूपादौतुयोगियाज्ञवल्क्यः
अजाभावोमहिष्यश्चब्राह्मणीचप्रसूतिका॥भूमेर्नवोदकंचैवदशरात्रेणशुध्यतीति
कश्चित्तद्दोषमाहव्याघ्रपादः॥अभावेकूपवापीनामन्यपायिययोभूताम्॥रजोदुष्टेपि
पयसियामभोगोनदुष्यति॥गौडास्तुअन्येनापि॥समुद्रेनेइतिद्वितीयेपादेपाठः॥तेनो
द्धृतेनदोषः॥तथाचनास्तुस्नानेतिप्रागुक्तमित्याहुः॥वसिष्ठोपि॥उपाकर्मणिचोत्सर्गे
प्रेतस्नानेतथैवच॥चंद्रसूर्यग्रहेचैवरजोदोषोनविद्यतइत्यलंविस्तरेण॥श्रावणशुक्लतृ
तीयामधुस्रवाख्यागुर्जरेषुप्रसिद्धा॥सापरयुताग्राह्येतिदिवोदासः॥श्रावणशुक्लचतुर्थीप
र्वयुता॥मातृविघ्नगणेश्वरइतिवचनात्॥श्रावणशुक्लपंचमीनागपूजायांपरैवेतिसामान्य
निर्णयउक्तम्॥चमत्कारचिंतामणौ॥पंचमीनागपूजायांकार्याषष्ठीसमन्विता॥तस्यांतु
षितानागाइतरासचतुर्थिकेति॥श्रावणेपंचमीशुक्लासंप्रोक्तानागपंचमी॥तांपरित्यज्यपं
चम्यःचतुर्थीसहिताहिताइतिमदनरत्नेभिधानाच्च॥तेनपरैवेति॥अत्रविशेषोहेमाद्रौभवि
ष्ये॥श्रावणेमासिपंचम्यांशुक्लपक्षेनराधिप॥द्वारस्योभयतोलेख्यागोमयेनविषोल्वणाः
पूजयेद्विधिवद्वीरदधिदूर्वांकुरैःकुशैः॥गंधपुष्पोपहारैश्चब्राह्मणानांचतर्पणैः॥येतस्यां
पूजयंतीहनागान्भक्तिपुरःसराः॥नतेषांसर्पतोवीरभयंभवतिकुत्रचिदिति॥श्रावण
शुक्लद्वादश्यांदधिव्रतंप्रागुक्तं॥तक्रादीनांत्वनिषेधःतत्रदधिव्यवहाराभावादितिवक्ष्य
ते॥अत्रैवविष्णोःपवित्रारोपणमुक्तम्॥हेमाद्रौविष्णुरहस्ये॥श्रावणस्यसितेपक्षेकर्कट
स्थेदिवाकरे॥द्वादश्यांवासुदेवायपवित्रारोपणंस्मृतं॥द्वादश्यांश्रवणेवापिपंचम्यामथ
वाद्विज॥आनुकूल्येषुकर्तव्यंपंचदश्यामथापिवेति॥शिवेतुतत्रैवकालोत्तरे॥आषाढां
तेचतुर्दश्यांनभस्यनभसोस्तथा॥अष्टम्यांचचतुर्दश्यांपक्षयोरुभयोःसममितिअन्यदे
वतानांतुवक्ष्यते॥अधिवासनंतुदीपिकायाम्॥गोदोहांतरितेकालेपूर्वेद्युर्वाधिवास
नमिति॥गौणकालोरामार्चनचंद्रिकायाम्॥पवित्रारोपणंविप्राच्छ्रावणेनभवेयदि
॥कार्त्तिक्यवधिशुक्लान्तेकर्तव्यमितिनारदः॥हेमरौप्यताम्रक्षौमैःसूत्रैःकौशेयपद्मजैः
कुशैःकाशैश्चकार्पासैर्ब्राह्मण्याकर्तितैःशुभैः॥कृत्वात्रिगुणितंसूत्रंत्रिगुणीकृत्यशो
धयेत्॥तत्रोत्तमंपवित्रंतुयस्यासहशतैस्त्रिभिः॥सप्तत्यासहितंद्वाभ्यांशताभ्यांमध्यमं
स्मृतं॥साशीतिनाशतेनैवकनिष्ठंतत्समाचरेत्॥साधारणपवित्राणित्रिभिःसूत्रैःसमा
चरेत्॥उत्तमंतुशतग्रंथिपंचाशद्ग्रंथिमध्यमं॥कनिष्ठंतुपवित्रंस्यात्षड्विंशद्ग्रंथिशोभ
नं॥षट्त्रिंशच्चचतुर्विंशद्द्वादशेतिचकेचन॥चतुर्विंशद्द्वादशाष्टावित्येकेमुनयोविदुः
॥हेमाद्रौविष्णुरहस्येत्वन्यथोक्तम्॥अष्टोत्तरशतंकुर्याच्चतुःपंचाशदेववा॥सप्तविंश

तेरेवाथज्येष्ठमध्यकनीयसं॥अथमंनाभिमात्रंस्यादूरुमात्रंद्वितीयकं॥प्रलंबतोजानु
मात्रंप्रतिमायानिगद्यते॥शिवपवित्रंतुतत्रैवशैवागमे॥एका शीत्यथवासूत्रैस्त्रिंश
ताचाष्टयुक्तया॥पंचाशतावाकर्त्तव्यंतुल्यग्रंथ्यंतरालकं॥द्वादशांगुलमानानिव्यासा
दष्टांगुलानिवा॥लिंगविस्तारमानानिचतुरंगुलकानिचेति॥हेमाद्रौकालोत्तरेयुगध
र्मे॥कृतेमणिमयंकार्यंत्रेतायांहेमसंभवं॥पट्टजंद्वापरेप्रोक्तंकार्पासंतुकलौस्मृतं॥
अधिकारिणोपितत्रैवविष्णुरहस्ये॥ब्राह्मणाःक्षत्रियोवैश्यस्तथास्त्रीशूद्रएवचास्वध
र्मावस्थिताःसर्वेभक्त्याकुर्युःपवित्रकं॥तथा॥अतोदेवेतिमंत्रेणद्विजोविष्णोर्निवेद
येत्॥शूद्रस्यमूलमंत्रोवायेनवापूजयेद्धरिं॥एतच्चनित्यं॥नकरोतिविधानेनपवि
त्रारोपणंतुयः॥तस्यसांवत्सरीपूजानिष्फलामुनिसत्तम॥तस्माद्भक्तिसमायुक्तैर्न
रैर्विष्णुपरायणैः॥वर्षेवर्षेप्रकर्त्तव्यंपवित्रारोपणंहरेरितितत्रैवोक्तेः॥देवतावि
शेषेतिथयोपितत्रैव॥धनदस्यरमागौरीगणेशःसोमराड्गुहः॥भास्करश्चंडिकावाचवासु
किश्चतथर्षभः॥चक्रपाणिर्ह्यनंगश्चशिवोब्रह्मातथैवच॥प्रतिपत्प्रभृतिष्वेताःपूज्यास्ति
थिषुदेवताः॥यथोक्ताःशुक्लपक्षेतुतिथयःश्रावणस्यचेति॥तथाहेमाद्रौकालोत्तरे॥च
तुर्दश्यामथाष्टम्यांसर्वसाधारणंतुतदिति॥तत्प्रकारस्तुरामार्चनचंद्रिकायाम्॥ततस्ता
निपवित्राणिवैणवेपुटकेशुभे॥संस्थाप्यशुचिवस्त्रेणपिधायपुरतोन्यसेत्॥अरत्नि
संमितावेणीकुर्य्यात्षट्त्रिंशताकुशैः॥क्रियालोपविघातार्थंयत्त्वयाविहितंप्रभो॥म
येतत्क्रियतेदेवतवतुष्ट्यैपवित्रकं॥नमेविघ्नोभवेद्देवकुरुनाथदयांमयि॥सर्वथासर्व
दाविष्णोममत्वंपरमागतिः॥उपवासेनदेवत्वांतोषयामिजगत्पते॥कामक्रोधादयोप्येते
नमेसन्तुव्रतघातकाः॥अद्यप्रभृतिदेवेशयावद्वैशेषिकंदिनं॥तावद्रक्षात्वयाकार्य्यासर्व
स्यास्यनमोस्तुते॥इतिदेवंसंप्रार्थ्य॥कुंभंसंस्थाप्यतत्रवंशपात्रं॥ॐसंवत्सरस्ययागस्य
पवित्रीकरणायभो॥विष्णुलोकात्पवित्राद्यआगच्छेहनमोस्तुते॥अनेनमूलेनवावा
सोत्तममध्यमकनिष्ठेषु॥विष्णुब्रह्मरुद्रान्सत्त्वरजस्तमांसिवेदत्रयंवनमालायांप्रकृतिं
चावाह्यत्रिसूत्र्यांब्रह्मविष्णुरुद्रान्ग्रंथिषुक्रियापौरुषी॥वीरा॥विजया॥ईशा॥अपरा
जिता॥मनोन्मनी॥जया॥भद्रा॥मुक्तिश्चेत्यावाह्यसंपूज्य॥ॐसंवत्सरकृतार्चायाःसंपूर्ण
फलदायियत्॥पवित्रारोपणायेदंकुरुकुंधरतेनमः॥विष्णुतेजोद्भवंरम्यंसर्वपात
कनाशनं॥सर्वकामप्रदंदेवतवांगेधारयाम्यहं॥इतिदेवकरेमंगलसूत्रंबध्वादेवंसं
पूज्यनिमंत्रयेत्॥आमंत्रितोसिदेवेशपुराणपुरुषोत्तम॥प्रातस्त्वांपूजयिष्यामिसा
न्निध्यंकुरुकेशव॥क्षीरोदधिमहानागशय्यावस्थितविग्रह॥प्रातस्त्वांपूजयिष्यामि
सन्निधौकुरुतेनमः॥निवेदयाम्यहंतुभ्यंप्रातरेतत्पवित्रकं॥सर्वथासर्वदाविष्णोनम
स्तेस्तुप्रसीदमे॥ततःपुष्पांजलिंदत्वारात्रौजागरणंकुर्य्यादित्यधिवासनं॥प्रातर्नित्य
पूजांकृत्वागंधदूर्वाक्षतयुतंपवित्रमादाय॥देवदेवनमस्तुभ्यंगृहाणेदंपवित्रकं॥प

वित्रीकरणार्थाय वर्षपूजाफलप्रदं॥ पवित्रकं कुरुष्वाद्य यन्मया दुःकृतं कृतं॥ शुद्धो भव
म्यहं देव त्वत्प्रसादात्सुरेश्वर॥ मूलसंपुटितानेन दत्त्वांगदेवताभ्यो नाम समर्प्य महानैवे
द्यं दत्त्वा नीराज्य॥ मणिविद्रुममालाभिरित्यादिभिर्द्वमनारोप्योक्तमंत्रैः प्रार्थयित्वा॥ गुर
वे ब्राह्मणेभ्यश्च दत्त्वा स्वयं च धारयेत्॥ तथा॥ मासपक्षमहोरात्रं त्रिरात्रं धारयेत्तथा॥
दैवं तत्सूत्रसंदर्भं देशकालविवक्षया॥ अकरणे तु तत्रैव॥ पवित्रारोपणं कालेन का
रोति कथंचन॥ तदा युतं जपेन्मंत्रं स्तोत्रं वापि समाहित इत्युक्तम्॥ इति पवित्रारोपः॥
श्रावणशुक्लचतुर्दशी पूर्वयुता ग्राह्या॥ अत्र वक्तव्यो विशेषश्चैत्रचतुर्दश्यामुक्तः॥ अ
थोपाकर्म॥ तत्र बह्वृचानां॥ प्रयोगपारिजाते शौनकः॥ अथातः श्रावणमासे श्रव
णर्क्षयुते दिने॥ श्रावण्यां श्रावणे मासि पंचम्यां हस्तसंयुते॥ दिवसे विदधीत तदुपाक
र्म यथोदितं॥ अध्यायोपाकृतिं कुर्यात्तत्रौपासनवह्निनेति॥ अत्र पौर्णमास्युपसंह
रस्यायं न यजुर्वेदीयं परेति हेमाद्रिः॥ अत्र हस्तयुक्तायं पंचम्युक्ता॥ कारिकापि॥ तन्मासे
हस्तयुक्तायां पंचम्यां वा तदिष्यत इति॥ केवलपंचम्यां हस्तयुतेऽन्यस्मिन्दिने इति तु
हेमाद्रिः॥ औपासनवह्निनेति तु कर्मद्वयमिदं॥ केचिल्लौकिकाग्नौ प्रकुर्वते॥ इति का
रिकोक्तलौकिकाग्निना विकल्प्यते॥ तत्रापि अध्यायैरन्वारब्ध इति सूत्रात्सशिष्यावे।
तदधिकारिकस्याचार्यस्यैवौपासनस्य यावन्नो जुहुयादिति निषेधाल्लौकिक एव॥ तद
भावे तु स्मार्त इति निर्णयः॥ यद्यपि दीपिकायां वेदोपाकविधिः प्रजनने पक्षे सिते श्राव
णे॥ इति शुक्लपक्षेऽपि सर्वेषां मुख्यकालत्वेनोक्तः॥ वक्ष्यमाणगार्ग्यवचनेन छंदोगा
न्प्रति विहितस्य तस्याविरोधिनः सर्वान्प्रति प्रवृत्तिश्च॥ तथापि श्रावणमाससंबंध
स्य सूत्रोक्तत्वात् कृष्णपक्षेऽपि कार्यमिति वृद्धाः॥ तथा च सूत्रम्॥ अथातोऽध्यायोपाक
रणमोषधीनां प्रादुर्भावे श्रवणेन श्रावण्यां पंचम्यां हस्तेन वा॥ अत्र श्रावणी मुख्या॥
न्ये गौणाः॥ तस्याहर्द्वययोगे हेमाद्रौ व्यासः॥ धनिष्ठासंयुतं कुर्याच्छ्रावणं कर्म यद्भवे
त्॥ तत्कर्म सफलं ज्ञेयमुपाकरणसंज्ञितं॥ श्रावणी न तु यत्कर्म युत्तराषाढसंयुता॥
संवत्सरकृतोऽध्यायस्तत्क्षणादेव नश्यतीति॥ प्रयोगपारि   जाते गार्ग्योऽपि॥ उदयव्यापि
नीत्विंविद्धस्वर्क्षं घटिकाद्वयं॥ तत्कर्म सफलं ज्ञेयं तत्स्यपुराणं त्वनंतकमिति॥ पूर्वेद्युरुत्त
राषाढयोगे परेद्युः श्रवणाभावे घटिकाद्वयन्यूनेऽपि वा पंचम्यादौ कार्यं॥ ननु पूर्वविद्धायां
संगवेऽपि अपवादाभावात्॥ किंच॥ परेद्युः संगवास्पर्शे निषिद्धः पूर्वाह्णे किं स्यात्तम्॥
संगववाक्यं श्रवणवाक्यं चेति॥ चेन्न हि व्रीहिवाक्याद्यवशफवाक्या च मासमिभाषणा
मप्युपादनं स्यादिति महत्यां उत्पत्ते नपर्द्धां यौ दपिकं मास्यातं निषेधप्रवेशसौभा
यत्र साम्यात्॥ श्रवणयुतदिने संक्रांत्यादौ तु उपाकर्म न कुर्वीत कामात्सामर्थ्यहिरः॥
ग्रहसंक्रांतियुक्तो यस्तु हस्तश्रवणपर्वस्विति हेमाद्रौ॥ निषेधात्पंचम्यादयो ग्राह्याः॥ अत्र
ग्रहसंक्रांतिदिने येषां प्राप्तं तेषां सर्वैरुपाकर्म न कार्यम्॥ इत्येको वाक्यार्थः॥ तेनाद्य

वेदिनामपिनिषेधः॥अमथाहस्त्यादित्रयेप्रत्येकंग्रहसंक्रांत्योपद्वाक्यकल्पनापत्तेः।
मदनरत्नेपि॥यदिस्याच्छ्रावणंपर्वग्रहसंक्रांतिदूषितं॥स्यादुपाकरणंशुक्लपंचम्यांश्रा
वणस्यतु॥स्मृतिमहार्णवे॥संक्रांतिर्ग्रहणंवापियदिपर्वणिजायते॥तन्मासेहस्तयु
क्तायांपंचम्यांतद्दिने [illegible]
धस्ताच्चेत्संक्रांतिर्ग्रहणंतदा॥उपाकर्मनकुर्वीतपरतश्चेन्नदोषकृदिति॥मदनरत्ने
गार्ग्योपि॥यद्यर्द्धरात्रादर्वाक्तुग्रहःसंक्रमएववा॥नोपाकर्मतदाकुर्याच्छ्रावणंपाश्रव
णोपिवा॥एतेनग्रहणकालेश्रवणसत्वेएवनिषेधोनान्यथेतिमूर्खशंकापास्ता।ग्रह
विशिष्टानांहस्तश्रवणपर्वणांप्रत्येकंनिषेधेतद्युक्तोपाकर्मनिषेधेचविशिष्टोद्देश
वाक्यभेदात्।पंचम्यांसंक्रांतौनिषेधाभावापत्तेश्च।तेनार्द्धरात्रात्पूर्वंग्रहसत्वमात्रेउ
पाकर्मनिषेधोननयोगः।यत्तुप्रतिपन्मिश्रितेनैवनोत्तराषाढसंयुते।श्रवणेश्रावणं
कुर्युर्ग्रहसंक्रांतिवर्जितइति।प्रतिपन्मिश्रितंनिषेधकंवचनंतन्निर्मूलंहेमाद्रौनिगम
:।ग्रहयोगोगुरुंहंतिसंक्रांतिःशिष्यघातिनी।तयोहस्तुत्तराषाढाउपाकर्मणिवेदमवे
त्रत्रचा।वेदोपाकरणेप्राप्तेकुलीरेसंस्थितेरवौ।उपाकर्मनकर्तव्यंकर्तव्यंसिंहयुक्तके
।इतिवचनंदेशांतरविषयं।नर्मदोत्तरभागेतुकर्तव्यंसिंहयुक्तके।कर्कटेसंस्थितेभा
नावुपाकुर्यात्तुदक्षिणइति।बृहस्पतिवचनादितिप्रयोगपारिजातेनोक्तं।पराशरमा
धवीयेप्येवं।सामगानांसिंहस्थेरवावुक्तेस्तद्विषयइदंपुरोडाशचतुर्द्धाकरणवदुपसं
हीयत।इतिवयंपश्यामः।कालादर्शे।अध्यायानामुपाकर्मश्रावण्यांतैत्तिरीयकाः।ब
ह्वृचाःश्रवणेकुर्युःसिंहस्थोर्कोभवेद्यदि।हस्तयुक्तपंचम्यांतद्वद्ग्रहणसंक्रमे।अ
सिंहार्केप्रोष्ठपद्यांश्रवणेनत्ववश्ययेति।तन्मूलालिखनाच्छ्रुतिविरोधाच्चचिंत्यं।सू
त्रेहिश्रवणेनश्रावणस्येतिचांद्रमासःएवोक्तोनसौरः।तस्यपंचम्यभावाच्छ्रुतिल
क्षणाभ्यामुभयपरत्वेरन्निद्वयविरोधाच्च।तेनसिंहस्थोर्कोभवेद्यदितदाकर्केऽपिग्र
हणसंक्रमेसति।असिंहार्केशुक्लपंचम्यांश्रावण्यांवाबह्वृचाःप्रोष्ठपद्यांतैत्तिरीयाइति
व्याख्येयं।तेषांसौरमासाभावात्।श्रावणेशब्दानुक्रमादौतुबह्वृचपरिशिष्टे।अदृष्टेवौष
धयस्तस्मिन्मासेतुनभवंतिचेत्।तदाभाद्रपदेमासिश्रवणेनतदिष्यतइति।तत्राप्यनु
क्रमेतुकृष्णादेवातद्वार्षिकमित्याचक्षतइतिसूत्रात्।वर्षर्तौभवंवार्षिकं।एतच्चशुक्ला
स्तादावपिकार्यं।उपाकर्मोत्सर्जनंचपवित्रदमनारोपणमिति।दमनारोपेलिखितव
चनात्।नित्येनैमित्तिकेजप्येहोमयज्ञक्रियासुच।उपाकर्मणिचोत्सर्गेग्रहवेधोन
विद्यतइतिप्रयोगपारिजाते।हेमाद्रौसंग्रहोक्तेः।पर्वणिग्रहणेसतिपूर्वत्रिरात्रादिवे
धाभाववक्तुमिदंतेनपर्वणिग्रहणेपिचतुर्दश्यांश्रवणेकार्यमितिहेमाद्रिः।प्रथमा
रंभस्तुनभवति।गुरुभार्गवयोर्मौढ्येबालेवार्द्धकेपिवा।तथाधिमाससंसर्पमलमा
सादिषुद्विज॥प्रथमोपाकृतिर्नस्यात्कृतंकर्मविनाशकृदिति।तत्रैवकश्यपोक्तेः॥त

त्रप्रथमारंभे वृद्धिश्राद्धं कुर्यादिति नारायणवृत्तौ। एतच्चाधिमासे न कार्यं। उपाकर्म तथो
त्सर्गः प्रसवाहोत्सवाष्टकाः। मासवृद्धौ पराः कार्या वर्जयित्वा तु पैतृकमिति। ज्योतिःपरा
शरोक्तेः। उत्कर्षः कालवृद्धौ स्यादुपाकर्मादिकर्मणि। अभिषेकादिवृद्धीनां न तूत्कर्षो
युगादिष्विति कात्यायनोक्तेश्च। यत्तु। उपाकर्मणि चोत्सर्गे ह्येतदिष्टं वृषादिनः। इत्यृ
ष्यशृंगवचस्तत्सामगविषयं। तेषां सिंहार्क एवोक्तेः। एतच्चापराह्णे कार्यं। उपाकर्म
पराह्णे स्यादुत्सर्गः प्रातरेव त्विति। अध्यायानामुपाकर्म कुर्यात्कालेऽपराह्णके। पूर्वा
ह्णे तु विसर्गः स्यादिति वेदविदो विदुरिति हेमाद्रौ गोभिलोक्तेः। वस्तुतस्तु। भवेदुपा
कृतिः पूर्णमास्यां पूर्वाह्ण एव त्विति प्रचेतोवचनात्पूर्ववाक्यं सामगविषयं। तेषामप
राह्ण एवोक्तेरित्यनुपदं वक्ष्यते। दीपिकापि। अस्य तु विधेः पूर्वाह्णः कालः स्मृत इति
याजुषास्त्वपर्वणि कुर्युः। तच्चापरं चेदौदयिकं ग्राह्यं अन्ये त्वत्र पूर्वापर्वण्यौदयिके
कुर्युः श्रावणं तैत्तिरीयकाः बह्वृचाः श्रवणे कुर्युः ग्रहसंक्रान्तिवर्जिते। इति गार्ग्यो
क्तेः। संप्राप्तश्रवणान्नूनं श्रुतीर्ब्रह्मापर्वण्यौदयिके पुनः। अतो भूतदिने तस्मिन्नोपाकरण
मिष्यते। इति कालिकापुराणाच्च। अथ वेदोपसंयुक्ते पर्वणि स्यादुपक्रिया। दुःख
शोकामयग्रस्ता राष्ट्रे तस्मिन् द्विजातयः। इति मदनरत्ने गार्ग्योक्तेः। अत्र सिंगाभट्टीये
विशेषः। श्रवणः श्रावणं पर्व संगवस्पृग्यदा भवेत्। तदैवौदयिकं ग्राह्यं नान्यदौद
यिकं भवेत्। पराशरमाधवीयेऽपि गार्ग्यः। श्रावणी पौर्णमासी तु संगवात्परतो यदि
तदैवौदयिकी ग्राह्या नान्यदौदयिकी भवेत्। कर्मकालमाह कालादर्शे निगमः। श्रा
वण्यां प्रौष्ठपद्यां वा प्रतिपत्षण्मुहूर्त्तकैः। विद्धायां स्याच्छांदसानां तूपाकर्मोत्सर्जनं भ
वेत्। अत्र पौर्णमासी श्रवणहस्तयोरुपलक्षणं तेन तावपि संगवस्पृशौ। उदये षट्घ
टीस्पर्शौ तु तौ पर्वणि वार्क्षभे कुर्युर्नभस्युपाकर्म ऋग्यजुःसामगाः क्रमात्। इति पृ
थ्वीचंद्रोदये तन्न। विद्धस्पर्शे घटिकाद्वयमिति पूर्वोक्तविरोधात्। सामान्यवाक्यादौद
यिकी कर्मयोग्यैव ग्राह्या न पूर्वा। संगवनिमित्तपूर्वविद्धापवादाभावात्। भाद्रादौ
कालांतरे वास्तु न तु निषिद्धं। नहि शीघ्रलाभे निषिद्धमासग्रहणं युक्तं। अत एव परेद्यु
:संगवव्याप्तौ पूर्वनिषेधः। तदभावे तु नेति मूर्खव्यवस्थाप्यपास्ता। विधिवैषम्यात्।
मासनिषेधे तथापत्तेश्च। पूर्वविद्धावचनसत्त्वे हि सा युज्यते। एवं श्रवणेऽपि ज्ञेयं। एत
च्छुद्धाधिकपरं। तेन यथाग्निहोत्रादौ सायंप्रातःकालबाधे सामान्यस्याजीवनाविच्छि
न्नकाले दर्शादिरनुष्ठानं यथा वा शीघ्रप्राप्त्यभावे यागाक्षिप्तनिषिद्धवर्ज्यद्रव्येण
तथात्र संगवाभावनिषिद्धवर्ज्यकर्मयोग्यौदयिके कालांतरे वानुष्ठानं न तु कदापि
निषिद्धे। अपवादाभावे उत्सर्गस्यैव प्राप्तेः। तेन प्राशस्त्यमात्रपरमिदं कात्यायनादी
नां तु दिनद्वये पूर्वाह्णव्याप्तावेकदेशस्पर्शे वा पूर्वैवेति हेमाद्रिः। यदपि श्रावणी दुर्गा
नवमी दूर्वा चैव हुताशनी। पूर्वविद्धाः प्रकर्तव्याः शिवरात्रिर्बलेर्दिनमिति। ब्रह्मवैवर्त्ते

ह्वयपवित्रश्रवणाकर्मादि दैवकर्मविषयमिति हेमाद्रिः। अत एव वचनात्कुलधर्म
तादावपि द्वैवं। मदनरत्नेप्येवं। मदनपारिजातेपि। शर्वविद्यायां श्रावण्यां वाजस
पिनामुपाकर्मेत्युक्तम्॥ मदनरत्ने तु पर्वण्यौदयिके कुर्युः श्रावण्यां तैत्तिरीयका इ
ति॥ बह्वृचपरिशिष्टाद्बह्वृचानुमतिकर्मविधानार्थप्रवृत्तेः। तत्र तैत्तिरीयकः कर्म
विध्ययोगात् सर्वोक्तकालिकापुराणादौ सामान्यतश्चौदयिकपर्वप्राप्तेस्तन्निषे
धेन बह्वृचानां श्रवणाविधानात्तैत्तिरीयकपदं। अनुवादत्वात्तस्य च प्राप्त्यधीनत्वा
त्। प्राप्तेश्च यजुर्वेदिमात्रपरत्वात्। सर्वयजुर्वेद्युपलक्षणार्थं। अवयुत्यानुवादो वा
न तु विधायकं। येन विशेषविधिना उपसंहारः स्यात्। अनुवादत्वाल्लक्षणानदोषः।
अन्यथौदयिकपर्वविशिष्टोपाकर्मोद्देशेन कर्तृविधौ कर्तृविशिष्टे वौदयिकपर्व
विधौ वाक्यभेदापत्तेः। औदयिकपर्वविधौ वाक्यभेदापत्तेः। तस्मात्तैत्तिरीयकपदा
द्वेवस्या सर्वयजुर्वेदिनामौदयिकमेवापर्वेत्युक्तं तन्न। ननतावत्परिशिष्टे बह्वृचा
नुमत्यैव विधिः॥ धनिष्ठाप्रतिपद्युक्तात्वाष्ट्रऋक्षसमन्वितमित्यादि॥ तदुदाहृत।
एवं परिशिष्टे वेदान्तरधर्मविधीमांदर्शनात्। नाप्यनुवादोयं कालिकापुराणा
द्बह्वृचादीनामपि तदापत्तेः। कुर्युरित्यस्याविधित्वेन तस्यैवार्थवादत्वे तेनास्या
नुवादित्वाच्चानवत्तैत्तिरीयकानां गृह्येतद्विधिरस्ति। येनानुवादः स्यात्। न च वाक्य
भेदः तैत्तिरीयकपदमात्रस्य कर्ममात्रस्य वा उद्देश्यत्वायोगेन हविरान्निवदष्टवर्षं
ब्राह्मणमुपनयीतेति वचनागत्याविशिष्टस्योद्देश्यत्वात्। अन्यथोत्तरार्द्धे बह्वृचपद
स्याप्यविवक्षायां श्रावण्याः सर्वसाधारण्यापत्तेः। तस्माद्धेमाद्रिमतमेवयुक्तमि
ति दिक्। इदं च शिष्यानध्यापयतः आवसथ्येऽग्नौ। अनध्यापयतो नाधिकार इति
कर्कः। श्रावण्यामपि ग्रहणादिदुष्टायां कात्यायनभिन्नैः प्रौष्ठपद्यां कार्यं। तैस्तु श्रा
वण्यां पंचम्यां। संक्रान्तिर्ग्रहणं वापि पौर्णमास्यां यदा भवेत्। उपाकृतिस्तु पंचम्यां
कार्या वाजसनेयिभिरिति स्मृतिमहार्णवे वाजसनेयिग्रहणादिति हेमाद्रिः। इदं
स्वसूत्रोक्तकालपरत्वाद्बह्वृचपरमपि शांखायनेस्तु हस्ते कार्यं। आपस्तंबैराथ
र्वणैश्च प्रौष्ठपद्यां तु बौधायनः। श्रावण्यां पौर्णमास्यामाषाढ्यां चोपाकृत्येन्द्र
वे प्रौष्ठपद्यामपि दोषे आषाढ्यां कार्यमित्येवमर्थं नक्षत्रीयविषयं वा॥ सामगा
स्तु॥ श्रावणे हस्ते कुर्युः बह्वृचाः श्रवणे चैव हस्तर्क्षे सामवेदिन इति निर्णयामृते
गोभिलोक्तेः सोप्युत्तरः॥ धनिष्ठाप्रतिपद्युक्तात्वाष्ट्रऋक्षसमन्वितं। श्रावण्यां क
र्म कुर्वीरन् ऋग्यजुःसामपाठका इति मदनरत्ने परिशिष्टोक्तेः॥ गार्ग्योपि॥ सिंहे
रवौ तु पुष्यर्क्षे पूर्वाह्ने विवरे बहिः। छंदोगा मिलिताः कुर्युरुत्सर्गं स्वस्वछंदसां।
शुक्लपक्षे तु हस्तेन उपाकर्मापराह्णिकमिति। अविवरे गृहादिदोषहीने। पुष्यर्क्षे
पूर्वाह्ने। उत्सर्गः पराह्णिकमुपाकर्मेत्यन्वयः। विवरेदिति पाठेऽज्ञानकृतः। अन्य

स्तुविशेषः पूर्वमेवोक्तः॥प्रयोगपारिजाते गोभिलः। उपाकर्मोत्सर्जनं च वनस्था
नामपीष्यते। धारणाध्ययनांगत्वाद्गृहिणां ब्रह्मचारिणां। उत्सर्जनं च वेदानामुपा
करणकर्म च॥ अकृत्वा वेदजप्येन फलं नाप्नोति मानवः। सर्वथालोपे तु कृच्छ्रमु
पवासश्च वेदोदितानां नित्यानामिति मनुनाऽभोजनोक्तेः। एवमुत्सर्गेऽपि॥ अथ प्रसं
गादत्रैवोत्सर्जनमुच्यते॥ तच्च पौषमासे रोहिण्यां तदष्टम्यां वा कार्यं॥ पौषमा
सस्य रोहिण्यामष्टकायामथापि वा। जलान्ते छंदसां कुर्यादुत्सर्गं विधिवद्बहिरि
ति॥ याज्ञवल्क्योक्तेः॥ श्रावण्यां प्रोष्ठपद्यां वोपाकृतौ क्रमेण पौषशुक्लप्रतिपदि मा
घशुक्लप्रतिपदि वा कार्य्यम्॥ अर्द्धपंचमासानधीयीतेति तैत्तिरीयोक्तेः॥ अर्द्धः पंचमो
येषु सार्द्धचतुर इत्यर्थः॥ यत्तु हारीतः॥ अर्द्धपंचमान्मासानधीत्योर्ध्वं समुत्सृजेदर्द्ध
षष्ठान्वेति॥ तदाषाढ्युपाकर्मविषयं॥ बौधायनास्तु॥ पौष्यां माघ्यां वा कु
र्युः पौष्यां माघ्यां वोत्सर्जनमिति तत्सूत्रात्। तैत्तिरीयस्तु तैष्यां कार्य्यं॥ तैष्यां पौर्ण
मास्यां रोहिण्यां वा विरमेदिति तत्सूत्रात्॥ बह्वृचैस्तु माघ्यां कार्य्यं॥ अध्यायोत्स
र्जनं माघ्यां पौर्णमास्यां विधीयत इति कारिकोक्तेः॥ कातीयास्तु भाद्रपदे कुर्युः
॥ उत्सर्गश्चेत्तदा तिष्यतिष्यां प्रोष्ठपदेऽपि वेति। कात्यायनोक्तेः॥ सामगास्तु॥ सिंहा
र्के पुष्ये कुर्युः॥ तथा च सिंहे रवौ त्विति गार्ग्यवचनं पूर्वमुक्तं॥ सर्वैरुपाकर्मदिने
वा कार्य्यम्॥ पुष्ये तूत्सर्जनं कुर्यादुपाकर्मदिनेऽथवेति हेमाद्रौ खादिरगृह्योक्तेः॥
यदा सिंहस्थे सूर्ये सति तन्मध्यस्थहस्तानक्षत्रात्प्राक् पुष्यः कर्कस्थो भवति॥ तत्र
तस्मिन्पुष्ये उत्सर्गं कृत्वा तदुत्तरहस्ते उपाकर्म सामगाः कुर्युः मासे प्रोष्ठपदे हस्ता
त्पुष्यः पूर्वो भवेद्यदा॥ तदा च श्रावणे कुर्यादुत्सर्गं छंदसां द्विज इति। तत्रैव परिशि
ष्टोक्तेः॥ अत्र द्वावपि सौरौ मासौ ज्ञेयौ। तेषां सौरस्यैवोक्तेः। अत्र विशेषमाह का
र्ष्णाजिनिः॥ उपाकर्मणि चोत्सर्गे यथाकालं समेत्य च। ऋषीन्दर्भमयान्कृत्वा
पूजयेत्तर्पयेत्ततः॥ इत्युपाकर्मण्युत्सर्गे च त्रिरात्रं पक्षिणीमहोरात्रं वानध्याय इ
ति मिताक्षरायामुक्तं॥ अत्र नदीनां रजोदोषो नास्ति॥ उपाकर्मणि चोत्सर्गे रजोदो
षो न विद्यत इति गार्ग्योक्तेः॥ अत्रैव रक्षाबंधनमुक्तं हेमाद्रौ भविष्ये॥ संप्राप्ते श्रावण
स्यांते पौर्णमास्यां दिनोदये॥ स्नानं कुर्वीत मतिमाञ्छ्रुतिस्मृतिविधानतः॥ उपाक
र्मादिकं प्रोक्तमृषीणां चैव तर्पणं॥ उपाकर्मणि कर्त्तव्यमृषीणां चैव पूजनं॥ ततो
पराह्ने समये रक्षापोटलिकां शुभां॥ कारयेदक्षतैः शस्तैः सिद्धार्थैर्हेमभूषितैरि
ति॥ अत्रोपाकर्मानंतर्यस्य प्रतीतिर्यावार्थिकस्यानुवादो न तु विधिः॥ गौरवात्
प्रयोगविधिभेदेन क्रमायोगाच्छूद्रादौ तदयोगाच्च। तेन परेद्युरुपाकरणेऽपि पूर्वे
द्युरपराह्ने तत्करणं सिद्धं॥ इदं भद्रायां न कार्यं। भद्रायां द्वे न कर्त्तव्ये श्रावणी फाल्गु
नी तथा॥ श्रावणी नृपतिं हंति ग्रामं दहति फाल्गुनी इति संग्रहोक्तेः॥ तत्सत्त्वे तु एचा।

वर्धितदंतेकुर्यादितिनिर्णयामृते॥मंत्रस्तु॥येनबद्धोबलीराजादानवेंद्रोमहाबलः॥तेन
त्वामपिबध्नामिरक्षेमाचलमाचल॥ब्राह्मणैःक्षत्रियैर्वैश्यैःशूद्रैरन्यैश्चमानवैः॥कर्तव्यो
रक्षिकाचारोद्विजान्संपूज्यशक्तितःइति॥अत्रैवहयग्रीवोत्पत्तिः॥तदुक्तंकल्पतरौ॥श्रा
वण्यांश्रवणेजातःपूर्वंहयशिराहरिः॥जगादसामवेदंतुसर्वकल्मषनाशनम्॥स्नात्वा
संपूजयेत्तंतुशंखचक्रगदाधरं॥आश्वलायनेनश्रवणाकर्मोक्तं॥श्रावण्यांपौर्णमा
स्यांश्रवणाकर्मेति॥तत्रास्तमययोगिनीग्राह्या॥अस्तमितेस्थालीपाकंश्रपयित्वाइ
तिसूत्रात्॥अतएवनिशीथेदर्शश्रयोगांतःपातनियमात्तदंगैःप्रसंगसिद्धिरुक्ताहा
दृशी॥अन्यथापरेद्युःप्राप्तेकःप्रसंगःप्रसंगस्य याज्ञिकास्तुपौर्णिमादर्शयोःस्प
ष्टाःपर्वांतेस्मरणावदहोरात्रव्यापित्वात्तत्रैवकर्मकालव्याप्तिर्ग्राह्येतिदिक्कृतित्वाच्छे
षपर्वैवेच्छंति॥श्रावणादिमासचतुष्टयेशुक्लपक्षद्वितीयासुअशून्यशयनव्रतं॥तत्र
चंद्रोदयव्यापिनी॥दिनद्वयेतत्त्वेपरेतिनिर्णयामृते॥इतिश्रीमीमांसकरामकृष्णभ
ट्टात्मजकमलाकरभट्टकृतेनिर्णयसिंधौश्रावणमासः५सिंहेपराःषोडशघटिकाः
पुण्यकालः॥अन्यत्पूर्ववत्॥अत्रगोप्रसवेऽभुक्तसागरेनारदः॥भानौसिंहग
तेचैवयस्यगौःसंप्रसूयते॥मरणंतस्यनिर्दिष्टंषड्भिर्मासैर्नसंशयः॥तत्रशांतिंप्र
वक्ष्यामियेनसंपद्यतेशुभं॥प्रसूतांतत्क्षणादेवतांगांविप्रायदापयेत्॥ततोहोमंप्र
कुर्वीतघृताक्तैराजसर्षपैः॥आहुतीनांघृताक्तानामयुतंजुहुयात्ततः॥व्याहृतिभि
श्चायंहोमः॥सोपवासःप्रयत्नेनदद्याद्विप्रायदक्षिणामिति॥तथा॥सिंहराशौगते
सूर्येगोप्रसूतिर्यदाभवेत्॥पौषेचमहिषीसूतेदिवावाश्वतरीतथा॥तदानिष्टंभवे
त्किंचित्तच्छांत्यैशांतिकंचरेत्॥अस्यवामेतिसूक्तेन तद्विष्णोरितिमंत्रतःजुहुया
च्चतिलाज्येनशतमष्टोत्तराधिकं॥मृत्युंजयविधानेनजुहुयाच्चतथायुतं॥श्रीसूक्ते
नततःस्नायाच्छांतिसूक्तेनवापुनः॥मध्यरात्रेनिशीथेवायदागौःक्रंदतेतदा॥ग्रा
मेवास्वगृहेवापिशांतिकंपूर्ववद्दिशेत्॥एवंश्रावणेवडवाप्रसवोदिवानिषिद्धः॥
तदुक्तमथर्ववेदिनांगार्ग्यपरिशिष्टे॥माघेबुधेचमहिषीश्रावणेवडवादिवा॥सिं
हेगावःप्रसूयंतेस्वामिनोमृत्युदायकाइति॥अत्रतदुक्तामृताख्याशांतिःकार्या॥भा
द्रकृष्णतृतीयाकज्जलीसंज्ञा॥सापराग्राह्येतिदिवोदासीयेउक्तम्॥भाद्रकृष्णचतुर्थी
बहुलाख्यामध्यदेशेप्रसिद्धासापराह्णव्यापिनीग्राह्या॥दिनद्वयेतत्त्वेपूर्वा॥गौर्याश्चतु
र्थीवटधेनुपूजादुर्गार्चनंतद्भरहोलिकाच॥वत्सस्यपूजाशिवरात्रिरेताःपरान्वितांघ्नं
तिनृपंसराष्ट्रमितिदिवोदासीयेवचनात्॥अत्रवत्सपूजायाःपृथगुपादानाद्धेनुपूजा
शब्देनबहुलाख्यागृह्यतेइतिसएवव्याचख्यौ॥मदनरत्नेप्येवम्॥अत्रगोपूजाय।
वान्नाशनंचतत्रैवोक्तं॥भाद्रकृष्णषष्ठीहलषष्ठी॥सासप्तमीयुतेतिदिवोदासः॥भा
द्रकृष्णसप्तम्यांशीतलाव्रतंतत्रपूर्वाग्राह्येतिहेमाद्रिः॥अथजन्माष्टमी॥साचकृष्णा

दिमासेन भाद्रपदकृष्णाष्टमी॥ तथा भाद्रपदे मासि कृष्णाष्टम्यां कलौ युगे॥ अष्टाविंश
तिमे जातः कृष्णोऽसौ देवकीसुत इति कल्पतरौ ब्राह्मोक्तेः॥ अत्रेदं माधवमतं॥ अष्टमी
द्विधा॥ जन्माष्टमी जयंती चेति॥ तत्राद्या केवलाष्टमी॥ येन कुर्वंति जानंतः कृष्णजन्मा
ष्टमीव्रतं॥ ते भवंति नराः प्राज्ञ व्याला व्याघ्राश्च कानने इति स्कांदात्॥ दिवा वा यदि वा
रात्रौ नास्ति चेद्रोहिणी कला॥ रात्रियुक्तां प्रकुर्वीत विशेषेणेंदुसंयुतामिति पुराणां
तरात्॥ श्रावणे बहुले पक्षे कृष्णजन्माष्टमीव्रतम्॥ न करोति नरो यस्तु भवति क्रूर
राक्षस इति भविष्योक्तेश्च केवलाष्टम्या एवोपोष्यत्वावगतेः॥ सैव रोहिणीयुक्ता ज
यंती॥ कृष्णाष्टम्यां भवेद्यत्र कलैका रोहिणी यदि॥ जयंती नाम सा प्रोक्ता उपोष्या सा
प्रयत्नतः इति वह्निपुराणात्॥ अष्टमी कृष्णपक्षस्य रोहिणीऋक्षसंयुता॥ भवेत्प्रौ
ष्ठपदे मासि जयंती नाम सा स्मृतेति॥ विष्णुरहस्यादिवचनाच्च ज्योतिरादिवत् संज्ञया
कर्मभेदः॥ रोहिणीयोगश्चाहोरात्रे मुख्यः॥ निशीथे सत्त्वे मध्यमः॥ दिवसादावधमः
॥ अहोरात्रं तयोर्योगोऽसंपूर्णो भवेद्यदि॥ मुहूर्तमप्यहोरात्रे योगश्चेत्तामुपोषये
दिति वशिष्ठसंहितोक्तेः॥ अर्द्धरात्रे तु योगोऽयं तारापत्युदये सति॥ नियतात्मा शुचि
स्नातः पूजां तत्र प्रवर्तयेदिति॥ विष्णुधर्मोक्तेः॥ वासरे वा निशायां वा यत्र स्वल्पा
पि रोहिणी॥ विशेषेण नभोमासे सैवोपोष्या मनीषिभिरिति पुराणांतराच्च॥ वि
शेषेणेति॥ श्रुतेर्भाद्रपदेऽपीदं श्रावणे वा नभस्येवेति वक्ष्यमाणात्॥ गौडास्तु॥ नि
शीथ एव रोहिणीयोगो जयंती नान्यथेत्याहुः॥ तन्न॥ वासरे वा निशायां वेति विरो
धात्॥ योगविशेषात् गुणात्फलमित्यन्ये॥ नित्यकरणे दोषश्रुतेरुपेक्ष्याः॥ तत्र ज
न्माष्टमीव्रतं नित्यं सर्वोक्तवचनेषु अकरणे निंदाश्रुतेः॥ वर्षे वर्षे तु या नारी कृष्णज
न्माष्टमीव्रतं न करोति महाप्राज्ञ व्याली भवति कानने इति॥ स्कांदे वीप्साश्रुतेश्च॥ न
करोति नरो यस्त्विति॥ सर्वैर्मुनीरनस्त्रीलिंगमतंत्रम्॥ मदनरत्ने स्कांदे त्वत्र फलम
प्युक्तं॥ जन्माष्टमीव्रतं ये वै प्रकुर्वंति नरोत्तमाः॥ कारयंत्यथवा लोका लक्ष्मीस्तेषां सदा
स्थिरा॥ सिध्यंति सर्वकार्याणि कृतेन जन्माष्टमीव्रत इति॥ जयंतीव्रतं तु नित्यकाम्यं॥ म
हाजया पार्थ कुरुतां जयंतीं मुक्तये नघ॥ धर्ममर्थं च कामं च मोक्षं च मुनिपुंगव॥ ददा
ति वांछितानर्थान् ये चान्येऽप्यतिदुर्लभा इति स्कांदादौ फलश्रुतेः॥ शूद्रान्नेन तु यत्पा
पं शावहस्तस्य भोजने॥ तत्पापं लभते कुंती जयंती विमुखो नरः॥ न करोति यदा वि
ष्णोर्जयंतीसंभवं व्रतं॥ यमस्य वशमापन्नः सहते नारकीं व्यथामित्यकरणे निंदाश्रु
तेश्च॥ यदा पूर्वेद्युः परेद्युर्वा रोहिणीयोगस्तदा जन्माष्टमी जयंत्यामंतर्भूता ज्ञेया॥ न
तु जन्माष्टमीव्रतं पृथक् कार्यं॥ विष्णुशृंखलवत्॥ तदुक्तं माधवेनैव॥ यस्मिन्वर्षे
जयंत्याख्यो योगो जन्माष्टमी तदा॥ अंतर्भूता जयंत्यां स्यादृक्षयोगप्रशस्तितः॥ इति
॥ मदनरत्ने निर्णयामृते गौडमैथिलमतेऽप्येवं॥ केचित्तु रोहिणीसंयुतोपोष्या सर्वा

ौघविनाशिनी॥ अर्द्धरात्राद्धश्चोर्द्धं कलयापियदाभवेत्॥ जयंतीनामसाप्रोक्ता स-
र्वपापप्रणाशिनीत्यग्निपुराणादर्द्धरात्रएवरोहिणीयोगस्यप्राशस्त्यात्॥ मुहूर्त्तम-
पिलभ्येतेत्यादीनांचार्द्धरात्रयोगेप्युपपत्तेर्नजयंतीव्रतंभिन्नमित्याहुः॥ तत्त्वंतुहेमा-
द्रिमतेजयंतीव्रतंभिन्नमेव॥ उदयेचाष्टमीत्यस्यतेनजयंतीपरत्वोक्तेः॥ किंच॥ रोहिण्यामर्-
द्धरात्रेचयदाकृष्णाष्टमीभवेत्॥ तस्यामभ्यर्चनंशौरेर्हंतिपापंत्रिजन्मजमितिविष्णुधर्मोक्तेः॥
समायोगेतुरोहिण्यांनिशीथेराजसत्तम॥ समजायतगोविंदोबालरूपीचतुर्भुजः॥ तस्मात्तं
पूजयेत्तत्रयथावित्तानुरूपतः॥ इतिवह्निपुराणाच्चार्द्धरात्रस्यकर्मकालत्वमवसीयते॥
अतःकर्मणोयस्ययःकालः इत्यादिवचनात्पूर्वत्रैवप्राप्तेः॥ परदिनेसतोपिरोहिणीयो-
गस्यनप्रयोजकत्वं। अन्यथाबुधवासरादेरपितत्त्वापत्तेः॥ किंच॥ जयंतीशब्दोरात्रिशे-
षवचनः॥ अभिजिन्नामनक्षत्रंजयंतीनामशर्वरी॥ मुहूर्त्तोविजयोनामयत्रजातोज-
नार्दनः इतिहेमाद्रौब्रह्मांडपुराणात्॥ तेनतयोगेरोहिण्यांगौणत्वान्नव्रतभेदः
॥ वासरेवानिशायांवेतितत्त्वेयुतिकमायेननिशीथयोगस्यैवस्तुत्यर्थं॥ पूर्वदिनेअर्द्ध-
रात्रयोगाभावेवाप्राशस्त्यार्थमित्याहुः। अन्येतुयद्यपिदिवावायदिवारात्रौनास्तिचेद्रो-
हिणीकला॥ रात्रियुक्तांप्रकुर्वीतविशेषेणेंदुसंयुतामित्यनेनरोहिणीयोगाभावेर्द्धरात्र-
व्याप्तेर्ग्राह्यतोक्ता तथापियस्मिन्वर्षेजयंतीयोगोनास्तितत्रजयंतीव्रतलोपेप्राप्तेऽष्ट-
मीमात्रेपिजयंतीव्रतंकार्य्यमित्येवपरमिदमितितदाशयः॥ अत्रहिसत्तायागृण्यविव-
र्जितापजेत॥ एषामसंभवेकुर्य्यादिष्टिंवैश्वानरींद्विज इतिवद्रोहिणीयोगाभावेविधानात्
त्कार्य्यापत्तिःस्पष्टैव॥ अतएवोक्तंजयंतीनामशर्वरीति॥ यत्तुस्कांदे॥ उदयेचाष्टमीकिं-
चिन्नवमीसकलायदि॥ भवेत्तुबुधसंयुक्ताप्राजापत्यर्क्षसंयुता॥ अपिवर्षशतेनापिलभ्य-
तेवाथवानवेतियच्चयाद्वे॥ प्रेतयोनिगतानांतुप्रेतत्वंनाशितंनरैः॥ यैःकृताश्रावणेमा-
सिअष्टमीरोहिणीयुता॥ किंपुनर्बुधवारेणसोमेनापिविशेषतः॥ किंपुनर्नवमीयुक्ताकु-
लकोट्यास्तुमुक्तिदेति॥ तदानादिविषयं॥ उपवासाश्रवणादित्यनेनतभेदः॥ जयंतीपर-
मितिहेमाद्रिः॥ उदयेचंद्रोदयेइतिकेचित्॥ तन्न॥ चंद्रोदयसत्त्वेअसंदेहान्नवमीसकले-
त्ययोगान्मानाभावाच्च॥ तेनपूर्वेद्युःसप्तमीविद्धेपरदिनेसूर्य्योदयेघटिकापिग्राह्या॥ पूर्व-
विद्धाष्टमीतियामोक्तेरित्युक्तं॥ अतोनव्रतभेदोनाप्यनभीवरूचुः॥ गौडास्तु॥ नवमीक्ष-
यपरमिदंवचनं॥ नवमीसकलायदीतिविशेषोक्तेः॥ एतत्पूर्वदिनेजयंत्यभावपरमित्या-
हुः॥ जयंत्यादिसर्वोपवासेष्वित्याचार्य्यचूडामण्यादयः॥ वयंतुसत्यंव्रतभेदालोकास्तु
जन्माष्टमीमेवानुतिष्ठंति॥ नहिश्रावणेवानभस्येवारोहिणीसहिताष्टमीयदाकृष्ण-
नेर्लब्धासाजयंतीतिकीर्त्तिता॥ श्रावणेनभवेद्योगोनभस्येतुभवेद्ध्रुवमिति॥ माधवीयेव-
शिष्टसंहितोक्तापिभाद्रेजयंतीकेनापिक्रियते॥ यद्यागुणात्फलंसप्तमेब्रह्मवर्चसकाममु-
पनयेदितिवदित्यसौ तन्न॥ नित्यत्वानुपपत्तेः॥ अत्रगौणमुख्यचांद्राभ्यामेकएवमास

इत्यन्ये॥तन्न॥एकवाक्ये उभयनिर्देशे वा शास्त्रद्वयायोगात्॥अतो जयंतीव्रतस्यापि निमि
त्ताद्‌ उपवासद्वयं कार्य्यमिति ब्रूमः॥अत एव हेमाद्रिमदनरत्नादौ जन्माष्टमीव्रतं जयं
तीव्रतं च भिन्नमुक्तं॥भिन्नकालत्वात्सर्वथा तावदंतर्भावो नेति सिद्धं॥यद्यपि सर्वोप
रावास्यापि रोहिणीयुतैव कार्य्येति ग्रंथानां तात्पर्यं प्रतीयते॥तदपि जयंतीपरमेव॥इदं
च काम्यमेवेत्यनंतभट्टः॥तद्दूषणं हेमाद्रौ ज्ञेयम्॥नित्यकाम्यमिति तु बहवः॥न तु य
था विष्णुशृंखलयोगेन श्रवणद्वादशी वामनजयंत्यादिसर्वसिद्धिर्यथा वैकादशीत्व
स्यापि परा॥तथा॥कलाकाष्ठामुहूर्तापि यदा कृष्णाष्टमी तिथिः॥नवम्यां सैव ग्रा
ह्या स्यात्सप्तमीसंयुता नहीत्यादिवचनादर्द्धोदयादिवद्योगाधिक्ये फलाधिक्यात्सैव जन्मा
ष्टमीयुक्तेति चेत्।वार्तमात्यं नहि तत्र व्रतभेदो द्वयोर्नित्यत्वे द्वयोरकरणे दोषो वा श्रुतः
॥इह त्वेतैस्त्रिभिर्हेतुभिः संज्ञाभेदाद्धर्मभेदात्फलभेदाच्चोपवासभेदः स्पष्ट एव॥ए
कदैवतत्वाच्छ्रवणद्वादशीवत्पारणालोपदोषोपि॥तेन व्रतद्वयमेव युक्तं॥द्वयोर
पि नित्यत्वात्।केचित्तु॥त्रेतायां द्वापरे चैव राजन्कृतयुगे तथा॥रोहिणीसहितं चेयं
विद्वद्भिः समुपोषिता॥अतः परं महीपाल संप्राप्ते तामसे कलौ।जन्मनो वासुदेवस्य भ
विता व्रतमुत्तममिति॥हेमाद्रौ वह्निपुराणात्॥कलौ जन्माष्टमीव्रतमेव न जयंतीव्रत
मित्याहुः॥तन्न॥तामसे कलावित्युक्तेः॥परमश्रेयोहेतोरस्य कलौ पापिनां दुर्लभत्वमु
च्यते॥तेन कलौ तामसा न करिष्यंति किंतु धर्मा एवेत्यर्थः॥अन्यथा शूद्राश्च ब्राह्मणा
चारा भविष्यंति कलौ युगे इत्यादौ विधिकल्पनापत्तेः॥अत्र निशीथवेध एव ग्राह्यः॥इत्यु
क्तवचनेषु तस्यैव मुख्यकालोक्तेः॥अष्टमी शिवरात्रिश्च अर्द्धरात्रादधो यदि॥दृश्यते
घटिकायासार्द्धविद्धा प्रकीर्तितेति॥माधवीये पुराणांतरात्॥अर्द्धरात्रे तु रोहिण्यां य
दा कृष्णाष्टमी भवेत्॥तस्यामभ्यर्चनं शौरेर्हंति पापं त्रिजन्मजमिति भविष्योक्तेः॥अष्ट
मी रोहिणीयुक्ता निश्यर्द्धे दृश्यते यदि॥मुख्यकालइति ख्यातस्तत्र जातो हरिः स्वयमिति वसि
ष्ठसंहितोक्तेश्च॥तत्राष्टमी द्विधा रोहिणीरहिता तद्युता च॥आद्यापि चतुर्द्धा॥पूर्वेद्युरेव॥
निशीथयोगिनी परेद्युरेवोभयेद्युरनुभयेद्युश्चेति॥तत्राद्ययोरसंदेह एव॥कर्मकालव्याप्तेः॥
जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च॥पूर्वविद्धैव कर्त्तव्या तिथिभांते च पारणमिति भृगू
क्तेश्च॥अस्मात्केवलरोहिण्युपवासोपि सिद्धः॥अंत्ययोः परैव॥प्रातःसंकल्पकालव्याप्त्या
धिक्यात्॥वर्ज्जनीया प्रयत्नेन सप्तमीसंयुताष्टमीति॥ब्रह्मवैवर्त्ताच्च॥एवमंशतः समव्या
प्तावपि॥विषमव्याप्तौ त्वाधिक्येन निर्णयः॥रोहिणीयुतापि चतुर्द्धा॥पूर्वेद्युरेव निशीथे रो
हिणीयुता परेद्युरेवोभयेद्युरनुभयेद्युश्च॥अत्राप्याद्ययोरसंदेहः॥कार्ष्णी विद्धापि सप्त
म्या रोहिणीसहिताष्टमीति पाद्मोक्तेः॥जयंतीं सार्द्धविद्धायामुपवासं समाचरेदिति गारु
डाच्च॥सप्तमीसंयुताष्टम्यां निशीथे रोहिणी यदि॥भविता साष्टमी पुण्या यावच्चंद्रदिवा
करावितिवह्निपुराणाच्च॥द्वितीये त्वसंदेह एव॥तृतीयपक्षे परैव॥वर्ज्जनीया प्रयत्नेन

सप्तमीसंयुताष्टमीपरेह्नि॥ सऋक्षापिनकर्त्तव्या सप्तमीसंयुताष्टमीतिब्रह्मवैवर्तात्॥ चतु
र्थ्यपिचैव॥ सर्वेद्युर्निशीथेष्टमी। परेह्निरोहिणी परेद्युरष्टमी पूर्वेह्निरोहिणी॥ उभयेद्युरु
भयस्यनिशीथासंबंधोवेति॥ आद्येपरेद्युर्जयंतीयोगस्यसत्वात्परैवेतिमाधवः॥ तदुक्तंते
नैव॥ यस्मिन्वर्षे जयंत्याख्योयोगोजन्माष्टमीतदा॥ अंतर्भूताजयंत्यांस्यादृक्षयोगप्र
शस्तितइति॥ पूर्वविद्धाष्टमीयात्तुउदयेनवमीदिने॥ मुहूर्त्तमपिसंयुक्तासंपूर्णासाष्ट
मीभवेत्॥ कलाकाष्ठामुहूर्त्तापियदाकृष्णाष्टमीतिथिः॥ नवम्यांसैवग्राह्यास्यात्सप्त
मीसंयुतानहीतिपाद्मोक्तेश्च॥ केचित्तुहेमाद्र्यादावष्टम्याःप्राधान्यात्तस्याश्चपूर्वेद्युःकर्म
कालव्यापित्वात्पूर्वैव॥ पायंतुपूर्वेह्निनिशीथेष्टम्यभावेज्ञेयं॥ अंतर्भावोक्तिस्तुमु
ख्यत्वंप्रशंसामात्रमित्याहुः॥ अन्येतुपूर्वविद्धाष्टमीतिवाक्येजन्माष्टम्यांसूर्योदयेसप्तमी
वेधनिषेधात्॥ कलाघटिकामात्राप्यौदयिकीग्राह्या॥ कार्याविद्धापिसप्तम्येतिजयं
तीपरम्॥ जयंत्यांपूर्वविद्धायामुपवासंसमाचरेदित्येकवाक्यत्वात्॥ तत्रापिद्वयोर्नि
त्यत्वात्कालभेदाच्चोपवासद्वयंभवत्येव॥ यदातुकेवलाष्टमीशुद्धाधिकातदाभागहे
तोःसप्तमीवेधस्याभावात्पूर्वैव॥ यदिवाविद्धस्सनातदापरदिनेग्राह्यातिथेरभावात्पूर्वै
व॥ एवंसर्वाण्यौदयिकवाक्यानिसप्तमीवेधपराणि॥ येतुजन्माष्टमींपूर्वविद्धांसनक्ष
त्रांसकलामपि॥ विहायनवमींशुद्धामुपवासवदित्याहुः॥ तेनिर्मूलत्वादुपेक्ष्याः॥ मु
हूर्त्तमपिसंयुक्तेतिरोहिणीयोगएवमाधवोक्तेः॥ तिथ्यंतेपारणवाक्यानांनिर्विषय
त्वापत्तेः॥ नचजयंतीपराणि॥ शुद्धाधिकपराणिवातानि॥ भूम्नाद्येःपूर्वविद्धाष्टम्याम
पितिथ्यंतेपारणोक्तेः॥ तेनकलाकाष्ठेतिवाक्यांतरवशात्जयंतीपरमेतत्॥ तत्वंतु॥
अष्टम्याःकर्मकालमात्रेदिवावायदिवारात्रौनास्तिचेद्रोहिणीकला॥ रात्रियुक्तां
प्रकुर्वीतेतिपूर्ववाक्येरोहिणीयोगाभावेग्राह्यत्वोक्तेर्वचनात्कर्मकालव्यापिनीत्य।
त्वात्पूर्वापरावासापिरोहिणीयुताजयंत्याग्राह्या॥ माधवमदनरत्ननिर्णयामृतानंत
भट्टगौडमैथिलग्रंथादिष्वप्येवमिति॥ युक्तंतुउपवासद्वयंकार्यम्॥ द्वयोर्नित्यत्वादि
तिवयं॥ अन्ययोःपरैव॥ सप्तमीसंयुताष्टम्यांभूत्वाऋक्षंद्विजोत्तम॥ प्राजापत्यंद्वितीये
ह्निमुहूर्त्तार्द्धंभवेद्यदि॥ तदाष्टयामिकंपुण्यंप्रोक्तंव्यासादिभिःपुरेतिस्कांदात्॥ मुहू
र्त्तेनापिसंयुक्तासंपूर्णासाष्टमीभवेत्॥ किंपुनर्नवमीयुक्ताकुलकोट्यास्तुमुक्तिदेति
पाद्माच्चेतिदिक्॥ निंबार्कोपासकास्तु॥ जन्माष्टमीरामनवमीशिवरात्र्यादौपूर्वे
ह्निकर्मकालीनांतिथिंत्यक्त्वाद्वित्रिमुहूर्त्तापरैवतिथिर्ग्राह्या॥ उदयव्यापिनीग्राह्य
कुलेतिथिरुपोषणे॥ निंबार्कोभगवान्येषांवांछितार्थफलप्रदइति॥ हेमाद्रौमा
त्स्योक्तमुक्तिसप्तमीव्रतेभविष्योक्तेरित्याहुः॥ तन्न॥ यदिद्वितीयेदिवसेतुऋक्षतिथ्यो
र्युतिःस्यात्तत्रोपवासः॥ पूर्वेप्रकुर्याद्दिवसेद्वितीयेदिनेशभक्तोथतदान्ननाद्यमिति॥
मत्स्यवाक्येनतत्रैवोपसंहारात्॥ सर्वार्थत्वेमानाभावात्॥ ऋक्षतिथ्योर्हस्तसप्तम्योः

अन्यथाऽऽरुषिपंचम्यादौ तदापत्तेः॥ शिष्टाचारान्नेति चेन्न॥ तस्यन्यायवचोविरोधेहे
यत्वात्॥ इदानींकापि निर्वाकीयासनाभावाच्चेति संक्षेपः॥ पारणं तु॥ तिथिरष्टगुणं
हंति नक्षत्रं च चतुर्गुणं॥ तस्मात्प्रयत्नतः कुर्यात्तिथिभांते च पारणमिति ब्रह्मवैवर्तोक्ते
॥ तिथ्यृक्षयोर्यदाच्छेदो नक्षत्रांतमथापि वा॥ अर्धरात्रेऽथवा कुर्यात्पारणं त्वपरेहनी
तिहेमाद्रौ वचनाच्चार्धरात्रे उभयांते॥ अन्यतरांते वेति मुख्यः पक्षः॥ सर्वथैवोपवासे
षु दिवापारणमिष्यत इति ब्रह्मवैवर्तेत्वन्यविषयं॥ दिने मुख्यकालालाभेऽन्यतरांते
वा ज्ञेयम्॥ गौडास्तु॥ न रात्रौ पारणं कुर्यादृते वै रोहिणीव्रतात्॥ तत्र निश्यपि तत्कु
र्यादृर्ज्जयित्वा महानिशामिति ब्रह्मांडपुराणाद्रात्रौ सार्धप्रहरमध्ये कार्यं॥ महानिशा
तु विज्ञेया मध्यमं यामयोः॥ तथा॥ मध्यमप्रहरमात्रे विज्ञेया तु महानिशेति स्मृ
त्यंतरात्॥ कल्पतरौ मदनरत्ने चैवं॥ कामधेनौ गर्गस्तु॥ महानिशा तु विज्ञेया मध्य
मप्रहरद्वयमित्याह॥ वृद्धशातातपस्तु॥ महानिशा द्वे घटिके रात्रौ मध्यमयामयोरि
त्याह॥ वेदपाठपरमेतदित्यन्ये॥ महानिशायामन्यतरांते तृतीयदिने पारणं॥ अप
रेहनीति पारणोत्तरदिनपरत्वात्॥ जयंत्यामुभयांतापेक्षणादिमाहुः॥ तत्त्वं तु म
हानिशातो वाऽगन्यतरांतलाभे महानिशानिषेधः॥ महानिशायामेव लाभे तत्रैव पा
रणमिति सर्वं चेदं जयंतीपरं संयोगस्यापोष्यत्वात्॥ जन्माष्टम्यां तिथ्यंतमात्रे पारणं
॥ अशक्तौ तु वह्निपुराणे॥ भांते कुर्यात्तिथेर्वापि शस्तं भारत पारणमिति॥ गा
रुडे विष्णुधर्मे च॥ जयंत्यां पूर्वविद्धायामुपवासं समाचरेत्॥ तिथ्यंते वोत्सवांते वा
व्रती कुर्वीत पारणमिति॥ अशक्तौ तु तिथ्यंते तिथिभांते वा पारणं यत्र चोदितं॥
यामत्रयोर्ध्वगामिन्यां प्रातरेव हि पारणा॥ स एवोत्सवांतः॥ तिथ्यंते वोत्सवांते वा व्र
ती कुर्वीत पारणमिति कालादर्शोक्तेश्चेति संक्षेपः॥ अष्टम्यां विशेषो हेमाद्रौ भवि
ष्ये॥ ततोऽष्टम्यां तिलैः स्नातो नद्यादौ विमले जले॥ सुदेशे शोभनं कुर्यादेवक्याः सू
तिकागृहं॥ तन्मध्ये प्रतिमा स्थाप्या सा चाप्यष्टविधा स्मृता॥ कांचनी राजती ताम्री
पैत्तली मृन्मयी तथा॥ वार्क्षी मणिमयी चैव वर्णकैर्लिखिता यथा॥ सर्वलक्षण
संपूर्णा पर्यंके च पटावृते॥ देवकी तत्र चैकस्मिन्प्रदेशे सूतिकागृहे॥ प्रसुप्ता च
प्रसूतां च स्थापयेन्मंचकोपरि॥ मां तत्र बालकं सुप्तं पर्यंके स्तनपायिनं॥ यशोदां त
त्र चैकस्मिन्प्रदेशे सूतिकागृहे॥ तद्वच्च कल्पयेत्पार्थ प्रसूतवरकन्यकां॥ कश्यपो
वसुदेवोऽयमदितिश्चैव देवकी॥ शेषो वै बलभद्रोऽयं यशोदाऽदितिरन्वभूत्॥ नंदः प्र
जापतिर्दक्षो गर्गश्चापि चतुर्मुखः॥ गोधेनुः कुंजरश्चैव दानवाः शस्त्रपाणयः॥ लि
खनीयाश्च तत्रैव कालियो यमुनाह्रदे॥ इत्येवमादि यत्किंचिच्छ्रूयते चरितं मम॥
लेखयित्वा प्रयत्नेन पूजयेद्भक्तितत्परः॥ मंत्रेणानेन कौंतेय देवकीं पूजयेन्नरः॥
गायद्भिः किन्नराद्यैः सततपरिवृता वेणुवीणानिनादैः भृंगारादर्शकुंभप्रवरकृत

करैः किंकरैः सेव्यमाना॥ पर्यंके स्वास्तृते या मुदितनरमुखी पुत्रिणी सम्यगास्ते सा देवी दे
वमाता जयति सुतनया देवकी कांतरूपा॥ पादौ संवाहयंती श्रीर्देवक्याश्चरणांतिके॥ नि
षण्णा पंकजे स्थाप्या नमो देव्यै श्रियै इति॥ शंखे तोयं समादाय सपुष्पकुशचंदनं॥ जानु
भ्यां धरणीं गत्वा चंद्रायार्घ्यं निवेदयेत्॥ अहोरात्रे वसोर्द्धारां पातयेद्गुडसर्पिषा॥ नाडीव
र्द्धापनं षष्ठीनामादेः करणं मम॥ ततो मंत्रेण वै दद्याच्चंद्रायार्घ्यं समाहितः॥ क्षीरोदा
र्णवसंभूत अत्रिनेत्रसमुद्भव॥ गृहाणार्घ्यं शशांकेमं रोहिण्या सहितो मम॥ ज्योत्स्ना
पते नमस्तुभ्यं नमस्ते ज्योतिषां पते॥ नमस्ते रोहिणीकांत अर्घ्यं नः प्रतिगृह्यतां॥ यथा
पुत्रं हरिं लब्ध्वा प्राप्ता ते निर्वृतिं परां॥ तामेव निर्वृतिं देहि सुपुत्रं दर्शय स्व मे॥ इति देवक्य
र्घ्यः॥ ततः पुष्पांजलिं दत्त्वा यामे यामे प्रपूजयेत्॥ प्रभाते ब्राह्मणान् शक्त्या भोजयेद्भ
क्तिमान्नरः॥ ॐ नमो वासुदेवाय गोब्राह्मणहिताय च॥ शांतिरस्तु शिवं चास्तु इत्युक्त्वा
मां विसर्जयेत्॥ इदं प्रतिमासं कृष्णाष्टम्यामप्युक्तं मदनरत्ने वह्निपुराणे॥ प्रतिमासं
च नेह जामष्टम्यां यः करिष्यति॥ मम चैवाखिलान् कामान् स संप्राप्स्यत्यसंशयं॥ त
था॥ अनेन विधिना यस्तु प्रतिमासं नरेश्वर॥ करोति वत्सरं पूर्णं यावदागमनं हरेः॥
दद्यात्कृष्णां स संपूर्णां गोभी रत्नैरलंकृताम्॥ इति जन्माष्टमी
व्रतम्॥ भाद्रामावास्यायां कुशग्रहणमुक्तं हेमाद्रौ हारीतेन॥ मासे नभस्यमावास्या त
स्यां दर्भोच्चयो मतः॥ अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः॥ नभाः श्रावणः तेन
दर्शांतमासे जन्माष्टम्यनंतरदर्शो लभ्यते॥ मदनरत्ने तु॥ मासे नभस्यमावास्या तस्यां द
र्भोच्चयो मत इति मरीचिवाक्यमुक्तम्॥ नभस्यो भाद्रपदः॥ तेन महालयांतर्गतदर्शो ल
भ्यते॥ गौणमुख्यचांद्राभ्यामेकएव दर्श इत्यन्ये॥ भाद्रपदशुक्लतृतीयायां हरितालि
काव्रतं तत्र परा ग्राह्या॥ मुहूर्तमात्रसत्त्वेपि दिने गौरीव्रतं परे॥ शुद्धाधिकायामप्येवं ग
णयोगप्रशंसनादिति माधवीये॥ श्रावणी मधुश्रावणिका कज्जली हरितालिका च
तुर्थी मिश्रिता स्त्रीभिर्दिवानक्तं विधीयते॥ तृतीया नभसः शुक्ला मधुश्रावणिका स्मृ
ता॥ भाद्रस्य कज्जली कृष्णा शुक्ला च हरितालिकेति॥ दिवोदासोदाहृतवचनाच्च॥
भाद्रशुक्लचतुर्थ्यां सिद्धिविनायकव्रतम्॥ तत्र मध्याह्नव्यापिनी ग्राह्या॥ प्रातः शुक्ल
तिलैः स्नात्वा मध्याह्ने पूजयेन्नृपेति॥ हेमाद्रौ भविष्यतत्रैव पूजोक्तेः॥ मदनरत्नेप्ये
वम्॥ परदिने एवांशेन साकल्येन वा मध्याह्नव्याप्त्यभावे सर्वपक्षे पूर्वैव ग्राह्या॥ त
था च बृहस्पतिः॥ चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते॥ मध्याह्नव्यापिनी चेत्स्या
त्परतश्चेत्परेहनीति॥ मातृविद्धा प्रशस्तास्याच्चतुर्थी गणनायके॥ मध्याह्ने परतश्चे
त्स्यान्नागविद्धा प्रशस्यते॥ इति माधवीये स्मृत्यंतराच्च॥ तत्र गणेशरूपं स्कांदे॥ एक
दंतं शूर्पकर्णं नागयज्ञोपवीतिनम्॥ पाशांकुशधरं देवं ध्यायेत्सिद्धिविनायकमिति॥
इयं रविभौमयोरतिप्रशस्ता॥ भाद्रशुक्लचतुर्थ्यां या भौमेनार्केण वा युता॥ महती सा॥

ऋषिप्रशमर्चित्वेष्टंलभेन्नरः॥ इतिनिर्णयामृतेवाराहोक्तेः॥ अत्रचं
द्रदर्शनंनिषिद्धम्॥तथाचापरार्केमार्कंडेयः॥सिंहादित्येशुक्लपक्षेचतुर्थ्यांचंद्रद
र्शनं॥मिथ्याभिदूषणंकुर्यात्तस्मात्पश्येन्नतंतदेति॥चतुर्थ्यांनपश्येदित्यन्वयः॥
प्रधानक्रियान्वयलाभात्तेनचतुर्थ्यांमुदितस्यपंचम्यांननिषेधः॥गौडास्त्वेवमा
हुः॥पराशरोपि॥कन्यादित्येचतुर्थ्यांतुशुक्लेचंद्रस्यदर्शनम्॥मिथ्याभिदूषणंकु
र्यात्तस्मात्पश्येन्नतंतदा॥तद्दोषशांतयेसिंहःप्रसेनमितिवैपठेदिति॥श्लोकस्तु॥वि
ष्णुपुराणे॥सिंहःप्रसेनमवधीत्सिंहोजांबवताहतः॥सुकुमारकमारोदीस्तवह्येष
स्यमंतकइति॥ भाद्रशुक्लपंचमीऋषिपंचमी॥ सामध्याह्नव्यापिनीग्रा
ह्या॥पूजाव्रतेषुसर्वेषुमध्याह्नव्यापिनीतिथिरितिमाधवीयहारीतोक्तेः दिनद्वये
तत्वे हेमाद्रिमतेपरा॥सितापरयुताग्राह्यापंचमीतिदीपिकोक्तेः॥माधवमतेपूर्वा
॥युग्मवाक्यान्निर्णयस्तूक्तः॥ऋषिपंचमीषष्ठीयुतेतिदिवोदासः॥अत्रऋषीन्
प्रतिमासुपूजयित्वाऽकृष्टभूमिजशाकेनवर्तनम्॥एवंसप्तवर्षाणिकृत्वासप्तकुं
भेषुप्रतिमाःसंपूज्यपरेऽन्हितन्मंत्रेणाष्टोत्तरशततिलाहुतीर्हुत्वासप्तब्राह्मणान्भो
जयेदितिनिर्णयामृते॥ भाद्रशुक्लषष्ठीसूर्यषष्ठीसासप्तमीयुतेतिदिवोदासः
॥शुक्लेभाद्रपदेषष्ठ्यांस्नानंभास्करपूजनं॥प्राशनंपंचगव्यस्य अश्वमेधफलाधिक
मितिवचनात्॥कल्पतरौभविष्ये॥येपभाद्रपदेमासिषष्ठीस्याद्भरतर्षभ॥योस्यांप
श्यतिगांगेयंदक्षिणापथवासिनं॥ब्रह्महत्यादिपापैस्तुमुच्यतेनात्रसंशयः॥गांगेय
स्वामिकार्त्तिकेयः॥ भाद्रशुक्लाष्टमीदूर्वाष्टमीसापूर्वाग्राह्या॥ श्रावणीदु
र्गनवमीदूर्वाचैवहुताशनी॥पूर्वविद्धातुकर्तव्याशिवरात्रिर्बलेर्दिनमितिहेमाद्रौब
हद्यमोक्तेः॥शुक्लाष्टमीतिथिर्यातुमासिभाद्रपदेभवेत्॥दूर्वाष्टमीतुसाज्ञेयानोत्तरा
साविधीयतइतिपुराणसमुच्चयाच्च॥पत्तु॥मुहूर्त्तेरौहिणोयस्मात्पूर्वावायदिवापरा॥
दूर्वाष्टमीतुसाकार्याज्येष्ठामूलंचवर्जयेदिति॥तत्रैवपराकार्येत्युक्तं॥तत्पूर्वदिनेज्ये
ष्ठादियोगेद्रष्टव्यम्॥दूर्वाष्टमीसदात्याज्याज्येष्ठामूलर्क्षसंयुता॥ तथा॥ ऐन्द्रर्क्षव
र्जिताद्रूर्वाहंत्यपत्यानिनान्यथा॥भर्त्तारंपुहरंमूलेतस्मात्तांपरिवर्जयेदिति॥तत्रैववत
न्निषेधात्॥इदमगस्त्योदयेकन्यार्केचनकार्यं॥शुक्लेभाद्रपदेमासिदूर्वासंज्ञातथाष्टमी
॥सिंहार्कएवकर्तव्यानकन्यार्केकदाचन॥सिंहस्थेपितमासूर्येऽगुदितेमुनिसत्तमे॥०
इतिमदनरत्नेस्कांदोक्तेः॥ अगस्त्यउदितेतांनपूजयेदमृतोद्भवां॥ वैधव्यंपुत्रशो
कंचदशवर्षाणिपंचचेतितत्रैवदोषोक्तेश्च॥भाद्रशुक्लाष्टम्यामगस्त्योदयेभाविनिस
ति॥पूर्वदलाष्टम्यामेवकुर्यादितिहेमाद्रिः॥दीपिकाप्येवं॥इदंचव्रतंस्त्रीणांनित्यं॥या
नपूजयतेदूर्वांमोहादिहयथाविधिः॥त्रीणिजन्मानिवैधव्यंलभतेनात्रसंशयः॥तस्मा
त्संपूजनीयासाप्रतिवर्षंवधूजनैरितिपुराणसमुच्चयात्॥परान्येष्ठादिकंविनाष्टमीन

लभ्यते॥तदात्तत्रैवोक्तं॥कर्त्तव्याचैकभक्तेन ज्येष्ठामूलं परा भवेत् दूर्वामभ्यर्च्चयेन्नयानवं
ध्यदिवसंनयेदिति॥अत्र विधिर्मदनरत्ने भविष्ये॥शुचौ देशे प्रजातायां दूर्वायां ब्राह्मणोत्त-
म॥स्थाप्य लिंगं ततो गंधैः पुष्पैर्दूर्वेस्समर्चयेत्॥दध्यक्षतैर्द्विजश्रेष्ठ अर्घ्यं दद्यात्त्रिलोचने
॥दूर्वाशमीभ्यां विधिवत्पूजयेच्छ्रद्धयान्वितः॥मंत्रस्तु॥त्वं दूर्वेऽमृतजन्मासि वंदितासि सु-
रासुरैः॥सौभाग्यं संततिं देहि सर्वकार्यकरी भव॥यथा शाखाप्रशाखाभिर्विस्तृतासि म-
हीतले॥तथा ममापि संतानं देहि त्वमजरामरमिति॥अत्रानग्निपक्वं भक्षयेत्॥अनग्नि-
पक्वमश्नीयादन्नं दधि फलं तथा॥अक्षारलवणं ब्रह्मन्नश्नीयान्मधुरान्वितमिति तत्रैव।
भविष्योक्तेः॥भाद्रपदेऽधिमासे सति निर्णयदीपे स्कांदे॥अधिमासे तु संप्राप्ते नभस्यउ-
दये श्रुतेः॥अर्वाक् दूर्वाव्रतं कार्यं परतो नैव कुत्रचित्॥अत्रैव ज्येष्ठापूजोक्ता माधवी-
ये स्कांदे॥मासि भाद्रपदे शुक्लपक्षे ज्येष्ठर्क्षसंयुता॥रात्रिर्यस्मिन्दिने कुर्याज्ज्येष्ठायाः प-
रिपूजनमिति॥इयं ज्येष्ठायोगवशेन पूर्वा परा वा ग्राह्या॥दिनद्वययोगे परा॥पूर्वेद्युर्हि रा-
त्रियोगे पूर्वैव॥नवम्या सह कार्या स्यादष्टमी नात्र संशयः॥मासि भाद्रपदे शुक्लपक्षे ज्येष्ठ-
र्क्षसंयुता॥रात्रिर्यस्मिन्दिने कुर्याज्ज्येष्ठायाः परिपूजनमिति तत्रैवोक्तेः॥अस्यापवादः
यस्मिन्दिने भवेज्ज्येष्ठा मध्याह्नादूर्द्ध्वमप्यणुः॥तस्मिन्हविष्यं पूजा च न्यूना चेत्पूर्ववास-
रे॥इदं केवलतिथौ नक्षत्रे चोक्तम्॥तत्राद्यं केवलतिथौ कार्यं॥अन्यं केवलर्क्षे तदुक्तं मा-
त्स्ये॥प्रत्याब्दिकं तिथावुक्तं पक्षे पक्षादेवतं व्रतं॥प्रतिज्येष्ठाव्रतं पश्चाद्विहितं केवलोडुनि
।तिथावेवाचरेदाद्यं द्वितीयं केवलर्क्षक इति॥अतएव मदनरत्ने भविष्ये नक्षत्रमात्रे
उक्तं॥मासि भाद्रपदे पक्षे शुक्ले ज्येष्ठा यदा भवेत्॥रात्रौ जागरणं कृत्वा एभिर्मंत्रैश्च पू-
जयेत्॥इति॥दाक्षिणात्यास्त्वर्क्ष एव कुर्वंति॥हेमाद्रौ स्कांदेपि॥मासि भाद्रपदे शुक्ल-
पक्षे ज्येष्ठर्क्षसंयुते॥यस्मिन्कस्मिन्दिने कुर्याज्ज्येष्ठायाः परिपूजनमिति॥तथा॥मै-
त्रेणावाहयेद्देवीं ज्येष्ठायां तु प्रपूजयेत्॥मूले विसर्जयेद्देवीं त्रिदिनं व्रतमुत्तममिति॥मं-
त्रस्तु॥एह्येहि त्वं महाभागे सुरासुरनमस्कृते॥ज्येष्ठे त्वं सर्वदेवानां मत्समीपगता भवेत्या-
वाहनामंत्रः॥इति॥संपूज्य ज्येष्ठायै ते नमस्तुभ्यं श्रेष्ठायै ते नमो नमः॥शर्वायै ते न-
मस्तुभ्यं शांकर्यै ते नमो नमः॥ज्येष्ठे श्रेष्ठे तपोनिष्ठे ब्रह्मिष्ठे सत्यवादिनि॥एह्येहि त्वं म-
हाभागे अर्घ्यं गृह्ण सरस्वतीत्यर्घः॥ भाद्रशुक्लद्वादश्यां श्रवणायोरहितायां॥
पारणं कुर्यात्॥ आभाकासितपक्षेषु तिथिर्वोदासोदाहृतवचनात्॥उयोध्ये-
कादशीं मोहात्पारणं श्रवणे यदि॥करोति हंति तत्पुण्यं द्वादशद्वादशीभवमिति तत्रै-
व स्कांदाच्च॥अस्य तत्रैव प्रतिप्रसवः॥मार्कंडेयः॥विशेषेण महीपाल श्रवणं वर्द्धते
यदि॥तिथिक्षयेन भोक्तव्यं द्वादशीं लंघयेन्नहीति॥केचित्तु॥यदा त्वपरिहार्यो योगस्त-
दा श्रवणनक्षत्रे त्रेधा विभक्ते मध्यमविंशतिघटिकायोगं त्यक्त्वा पारणं कार्यं॥तदुक्तं
विष्णुधर्मे॥श्रुतेश्च मध्ये परिवर्त्तमेति सुप्तिप्रबोधे परिवर्त्तनमेव वर्ज्यमिति॥केचित्तु॥

चतुर्दशीविभज्जमध्यपादद्वयंवर्ज्यमाहुः॥ अत्रमूलंचिंत्यं॥ अत्रैवविष्णुपरिवर्त्तनोत्सवं
कुर्यात्॥ संध्यायांविष्णुंसंपूज्यप्रार्थयेत्॥ मंत्रस्तु॥ तिथितत्वेउक्तः॥ ॐ वासुदेवजग
न्नाथप्राप्तेयंद्वादशीतव॥ पार्श्वेनपरिवर्त्तस्वसुखंस्वपिहिमाधवेति॥ अत्रैवशक्रध
जोत्थापनमुक्तमपरार्केगर्गेण॥ द्वादश्यांतुसितेपक्षेमासिप्रोष्ठपदेतथा॥ शक्रमुत्था
पयेद्राजन्विश्वश्रवणवासवे॥ इयमेवश्रवणद्वादशी॥ तत्रैकादश्यांद्वादश्यांवाश्रव
णयोगेसैवोपोष्या॥ एकादशीद्वादशीचवैष्णव्यमपितत्रचेत्॥ तद्विष्णुशृंखलंनाम
विष्णुसायुज्यकृद्भवेदिति॥ विष्णुधर्मोक्तेः॥ नारदीयेपि॥ संस्पृश्यैकादशींराजन्द्वा
दशीमपिसंस्पृशेत्॥ श्रवणंज्योतिषांश्रेष्ठंब्रह्महत्यांव्यपोहति॥ द्वादशीश्रवणस्प
ष्टास्पृशेदेकादशींयदि॥ सएववैष्णवोयोगोविष्णुशृंखलसंज्ञितइति॥ हेमाद्रौमा
त्स्योक्तेश्च॥ दिनद्वयेद्वादशीश्रवणयोगेपिपूर्वा॥ निर्णयामृतेत्वपूर्वार्द्धमन्यथापठि
तं॥ द्वादशीश्रवणर्क्षंचस्पृशेदेकादशींयदीति॥ तेनहेमाद्रिमतेएकादश्याःश्रवण
योगाभावेपितद्युतद्वादशीयोगमात्रेणविष्णुशृंखलंभवति॥ निर्णयामृतमतेतु॥
श्रवणस्यैकादशीद्वादशीभ्यांयोगएवविष्णुशृंखलंनान्यथेति॥ यदानिशीथानं
तरंसूर्योदयावधिवाकलामात्रमपिश्रवणर्क्षंभवतितदापिपूर्वैव॥ तदुक्तंतत्रैव
नारदीयेइमांप्रकृत्य॥ तिथिनक्षत्रयोर्योगोयोगश्चैवनराधिप॥ द्विकलोयदिलभ्ये
तसज्ञेयोह्यष्टयामिकइति॥ योगः॥ शिवरात्र्यादौशिवयोगेश्वरादिः॥ द्वादशीश्रवण
स्पृष्टाकृत्स्नापुण्यतमातिथिः॥ ननुसातेनसंयुक्तानावत्येवप्रशस्यतइतिमदनरत्ने
मात्स्याच्च॥ दिवोदासीयेतु॥ रात्रेःप्रथमपादेवेच्छ्रवणंहरिवासरे॥ तदापूर्वामुपव
सेत्पारणंभांतेचपारणमित्युक्तं॥ इदंतुनिर्मूलत्वात्सर्वविरोधाच्चोपेक्ष्यम्॥ इयंबुध
वारेतिप्रशस्ता॥ बुधश्रवणसंयुक्तासैवचेद्द्वादशीभवेत्॥ अत्यंतमहतीसास्याद्दत्तं
भवतिचाक्षयमितिहेमाद्रौस्कांदात्॥ यानितुपठंति॥ उत्तराषाढसंमिश्राश्रवणम
ध्यान्हगापिवा॥ आसुरीसैवनारास्याद्धंतिपुण्यंपुराकृतं॥ उदयव्यापिनीग्राह्याश्रव
णाद्वादशीसंयुता॥ विद्धर्क्षसंयुतासाचेत्सैवोपोष्याशुभेप्सुभिरित्यादीनिवचना
नितानिनिर्मूलानि॥ यदपिस्मृत्यर्थसारे॥ उदयव्यापिनीग्राह्येत्युक्तं॥ यच्चबृहन्नार
दीये॥ उदयव्यापिनीग्राह्याश्रवणाद्वादशीव्रतेइति॥ तद्यदाशुद्धाधिकाद्वादशीपरदि
नेएवोदयेश्रवणयोगःपूर्वेह्निचतस्मिन्नेकालेयोगस्तत्परं॥ दिनद्वयेउदययोगेतुपू
र्वैवसंपूर्णत्वात्॥ श्रवणद्वादशीव्रतंतुद्वादश्याःश्रवणयुक्तायाःअलाभेएकाद
श्याश्रवणयुक्तायालाभेतत्रैवकार्य्यंयदानप्राप्यतेऋक्षंद्वादश्यांवैष्णवंक्वचित्॥
एकादशीतदोपोष्यापापघ्नीश्रवणान्वितेतिमदनरत्नेनारदीयोक्तेः॥ यदापरैव
र्क्षयुतातदापरा॥ तत्रशक्तेनोपवासद्वयंकार्य्यं॥ एकादशीमुपोष्यैवद्वादशींसमुपो
षयेत्॥ नचात्रविधिलोपःस्यादुभयोर्दैवतंहरिरितिभविष्योक्तेः॥ यत्तुविष्णुधर्मे

पारणांतं व्रतं ज्ञेयं व्रतांते विप्रभोजनं॥ असमाप्ते व्रते पूर्वे नैव कुर्याद्व्रतांतरमिति॥ तदेतद्भिन्नपरम्॥ अत्र गौडाः॥ शृणु राजन्परं काम्यं श्रवणद्वादशीव्रतमिति॥ स्थूलशिरोवचनात्काम्यमेवेदं। तेनाशक्तस्य नित्यैकादशीव्रतमेवेति मन्यंते॥ द्वादश्यामुपवासेन श्रुतात्मा नृपसत्तम। चक्रवर्तित्वमतुलं संप्राप्नोत्यतुलां श्रियमिति गौडनिबंधे मार्कंडेयोक्तेश्च॥ दाक्षिणात्यास्तु॥ एकादश्यां नरो भुक्त्वा द्वादश्यां समुपोषणात्॥ व्रतद्वयकृतं पुण्यं सर्वं प्राप्नोत्यसंशयमिति वाराहवामनपुराणोक्तेः॥ श्रवणद्वादशीव्रतमेवेत्याहुः भुक्त्वेति फलाद्याहारपरं न त्वन्नपरम्॥ अन्नाश्रितानि पापानीति निषेधात्॥ उपवासद्वयं कर्तुं न शक्नोति नरो यदि। प्रथमेऽह्नि फलाहारी निराहारो परेऽहनीति दिवोदासीये भविष्योक्तेः॥ अशक्तौ तु॥ गृहीतैकादशीव्रतोपसं प्रत्युक्तं मात्स्ये॥ द्वादश्यां शुक्लपक्षे तु नक्षत्रं श्रवणं यदि। उपोष्यैकादशीं तत्र द्वादश्यां पूजयेद्धरिमिति॥ पूजयेन्न तूपवसेदित्यर्थः॥ अगृहीतैकादशीव्रतश्चेदेकादश्यां भुक्त्वा द्वादश्यामुपवसेत्॥ एवमेकादशीं भुक्त्वा द्वादशीं समुपोषयेत्। पूर्ववासरजं पुण्यं सर्वं प्राप्नोत्यसंशयमिति नारदीयोक्तेः॥ पारणं तु उभयांतेऽन्यतरांते वा कुर्यात्॥ तिथिनक्षत्रनियमे तिथिभांते च पारणमिति स्कांदात्॥ तिथिनक्षत्रसंयोगे उपवासो यदा भवेत्॥ पारणं तु न कर्तव्यं यावन्नैकस्य संक्षयः इति नारदीयादिति हेमाद्रिः॥

यद्यप्यत्र नक्षत्रमात्रांतेपि पारणं प्रतिभाति तथापि तिथिमात्रांते ज्ञेयं॥ न तु ऋक्षांते तिथिमध्येपि॥ याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रयोगतः॥ ऋक्षांते पारणं कुर्यात् विना श्रवणरोहिणीमिति विष्णुधर्मे श्रवणांतमात्रे पारणनिषेधात्॥ रोहिण्यां तु भांते कुर्यात्तिथेर्वापीति वह्निपुराणात्तदंतेऽप्यस्तु॥ नत्वेवमस्तीति न संज्ञातो नु कल्प इति मदनरत्ने॥ असंभवे तु॥ तिथ्यंते तिथिभांते वा पारणं यत्र चोदितं॥ यामत्रयोर्ध्वगामिनी प्रातरेव हि पारणेति ज्ञेयं॥ यत्तु मदनरत्ने द्वादशीवृद्धौ श्रवणवृद्धौ वा॥ श्रवणांत एव पारणं कुर्यात्॥ पारणं तिथिवृद्धौ तु द्वादश्यामुडुसंक्षयात्॥ वृद्धौ कुर्यात्त्रयोदश्यां न तद्दोषोऽनुविद्यत इति वह्निपुराणादित्युक्तम्॥ तत्प्रकरणादेतस्यामेव श्रवणयुक्तैकादश्यां विहितविजयैकादशीव्रतपरं॥ तत्तु श्रवणद्वादशीव्रतपरमिति मदनरत्ने गौडास्तु श्रवणद्वादशीपरमाहुः॥ अत्र विधिर्मदनरत्ने विष्णुधर्मे॥ तस्मिन्दिने तथा स्नानं यत्र काचन। संगमे॥ तथा॥ दध्योदनयुतं तस्यां जलपूर्णं घटं द्विजे। वस्त्रसंवेष्टितं दत्त्वा छत्रोपानहमेव च॥ न दुर्गतिमवाप्नोति गतिमग्र्यां च विंदति। मंत्रस्तु भविष्ये॥ घटे जनार्दनपूजामभिधाय॥ नमो नमस्ते गोविंद बुधश्रवणसंज्ञक। अघौघसंक्षयं कृत्वा सर्वसौख्यप्रदो भव॥ प्रीयतां देवदेवेशो मम संशयनाशनः॥ वामनावतारनिमित्तोपवासस्तु नहेमाद्रौ भविष्ये द्वादश्यास्ते विधिः प्रोक्तः श्रवणेन युधिष्ठिर। सर्वपापप्रशमनः सर्वसौख्यप्रदायकः। एकादशी यदा सा स्यात् श्रवणेन समन्विता। विजया सा तिथिः प्रोक्ता भक्तानां विजयप्रदे सु

पक्षाप्य॥ अथ काले व्रतिथ्ये गते साधुर्विरणीं भवेत्॥ सुखेनैव वमे मासि पुत्रं सा वामनं हरिमि
त्याद्युक्तं॥ एतच्च सर्वं समभवदेकादश्यां युधिष्ठिर॥ तेनेयं द्वादशी देवदेवस्य सर्वथा विजया तिथिः
॥ एषा सृष्टिः समाख्याता एकादश्यां मयानघ॥ इयमेव समाख्याता द्वादशी श्रवणान्विते।
त्युपसंहारादेकादश्यामेव॥ सृष्टिः फलं भागवतेऽष्टमस्कंधे तु द्वादश्यां वामनोत्पत्तिरुक्ता
॥ श्रोणायां श्रवणद्वादश्यां मुहूर्तेऽभिजिति प्रभुः। सर्वनक्षत्रताराद्याश्चक्रुस्तज्जन्म दक्षिणं॥
द्वादश्यां सविता तिष्ठन्मध्यंदिनगतो नृप। विजया नाम सा प्रोक्ता यस्यां जन्म विदुर्हरेः॥ श्रो
णायां चंद्रे अभिजिच्छ्रवणप्रथमांशः॥ गौडास्त्वेवं॥ अत्र कल्पभेदाद्व्यवस्था॥ तद्विधि
श्च हेमाद्रौ वह्निपुराणे॥ नदीनां संगमे स्नात्वा यादवेयं च वामनं॥ सौवर्णं वस्त्रसंयुक्तं द्वा
दशांगुलमुच्छ्रितम्॥ ततो विधिवत्संपूज्य हिरण्मयेन पात्रेण दद्यादर्घ्यं प्रयत्नतः॥ नम
स्ते पद्मनाभाय नमस्ते जलशायिने॥ तुभ्यमर्घ्यं प्रयच्छामि बालवामनरूपिणे॥ नमः कम
लकिंजल्कपीतनिर्मलवाससे॥ महाहवरिपुस्कंधघृष्ट स्कंधाय चक्रिणे॥ नमः शार्ङ्ग
शरबाणपाणये वामनाय च॥ यज्ञभुक्फलदात्रे च वामनाय नमो नमः॥ देवेश्वराय दे
वाय देवसंभूतिकारिणे॥ प्रभवे सर्वदेवानां वामनाय नमो नमः॥ एवं संपूज्य विधानद्वाद
श्यामुदये रवेः॥ शृंगारसहितं तं तु ब्राह्मणाय निवेदयेत्॥ वामनः प्रतिगृह्णाति वामनोऽहं
ददामि ते॥ वामनं सर्वतोभद्रं द्विजाय प्रतिपादयेदिति॥ अनंतभट्टोप्याह॥ श्रवणद्वादश्यां
जनार्दननामा विष्णुः पूज्यते॥ श्रवणैकादश्यां वामनावतार इति॥ अवृत्तपुनस्त्वेकादश्य
लाभे तु दशमीविद्धापि श्रवणयुता कार्या॥ दशम्येकादशी यत्र सा नोपोष्या भवेत्तिथिः॥ श्र
वणेन तु संयुक्ता सा चेत्स्यात्सर्वकामदेति वह्निपुराणादित्युक्तं मदनरत्ने॥ पूजा च मध्याह्ने
कार्या॥ अह्नो मध्ये वामनो रामरामाविति पूर्वोक्तवचनात्॥ भागवताच्च॥ अत्रैव दुग्धव्र
तं संकल्पयेत्॥ तदुक्तं दुग्धमाश्वयुजे मासीति॥ अत्रेदं चिंत्यते॥ दुग्धव्रते पायसादिवर्ज
नं वेति॥ नेति केचित्॥ नहि प्रकृतिवर्जने विकारवर्जनं युक्तं॥ दधिघृतादीनामपि वर्जना
पत्तेः॥ न च यत्र प्रकृतिरसोपलंभस्तद्वर्जनमिति वाच्यं॥ मांसविकारस्यौष्ट्रदध्यादेरेवाव
र्ज्जनापत्तेः॥ तस्माद्दध्यादिवत्पायसादि भक्ष्यमिति॥ अत्र ब्रूमः॥ यत्र विकारे प्रकृतिरसोप
लंभस्तत्प्रत्यभिज्ञा वा तत्र विकारस्यापि निषेधः॥ अस्ति च मांसविकारे मांसप्रत्यभिज्ञा मां
सत्वान्न्यायात् यत्तु औष्ट्रदध्यादेरनिषेधापत्तिरिति॥ तन्न॥ औष्ट्रमिति विकारतद्धितेन नि
षेधात्॥ तथा च विज्ञानेश्वरः॥ औष्ट्रमैकशफं स्त्रैणमारण्यकमथाविकमित्यत्र औष्ट्रमिति वि
कारतद्धितात्तक्रसूत्रादीनामपि निषेधमाह॥ नन्वेवं संधिनीनिर्दशावत्सागोपयः परि
वर्ज्जयेदिति संधिन्यादिक्षीरनिषेधेऽपि दध्यादिग्रहणं स्यात्॥ सत्यं मात्रवचनेन परं निषेधः
न दास्य पयसः शंख्यः॥ क्षीराणि यान्यभक्ष्याणि तद्विकाराशने बुधः॥ सप्तरात्रं व्रतं कुर्यात्प्रय
त्नेन समाहित इति॥ व्रतं गोमूत्रयावकं॥ तस्मात्पायसे दुग्धरसोपलंभात्तद्वर्जनं॥ अत एवा
भिन्नांपादधि सत्त्वेऽपि माधुर्योपलंभात्पयोरूपत्वमुक्तं मीमांसकैः॥ तदुक्तम्॥ पयएव यनी

भूतमामिषंत्यभिधीयत इति॥ दध्यादिषु तदभावादवर्जनमिति॥ इति दुग्धव्रतं ॥
भाद्रशुक्लचतुर्दश्यामनंतव्रतं॥ तत्र त्रिमुहूर्तोदयव्यापिनी ग्राह्येति माधवः॥ तदुक्तं॥ उदये त्रिमु
हूर्तापि ग्राह्यानंतव्रते तिथिरिति॥ मध्याह्ने भोज्यवेलायामिति॥ कथायां श्रवणाद्युपरि हि देवे
भ्यो धारयतीति वह्निधिकस्मनात्॥ पूजाव्रतेषु सर्वेषु मध्याह्नव्यापिनी तिथिरिति माधवीयव
चनान्मध्याह्नव्यापिनी ग्राह्येति तु दिवोदासः॥ प्रतापमार्तंडेऽप्येवं॥ निर्णयामृते तु घटिकामा
त्राप्युदयिकी युक्ता तथा भाद्रपदस्यांते चतुर्दश्यां द्विजोत्तम॥ पौर्णमास्याः समायोगे व्रतं चानं
तकं चरेदिति भविष्योक्तेः॥ मुहूर्तमपि चेद्भाद्रे पौर्णमास्यां चतुर्दशी॥ संपूर्णां तां विदुस्तस्यां पू
जयेद्विष्णुमव्ययमिति स्कांदाच्चेति॥ अत्र मूलं चिंत्यं॥ तत्त्वं तु विध्यर्थवादयोर्भिन्नार्थत्वे एक
वाक्यतायोगात्संदिग्धेषु वाक्यशेषादिति न्यायेन पूर्वा परा वा मध्याह्नव्यापिन्येव मुख्या॥
माधवस्तु सामान्यवाक्यान्निर्णयं कुर्वन् भ्रांत एव॥ अनंतव्रतस्य पुराणांतरेष्वभावान्निबं
धांतरेष्वभावाच्च वचनं निर्मूलमेवेति॥ द्व्यहेऽप्यौदयिकत्वे पूर्णत्वात्सैवेति युक्तं॥ अ
थागस्त्यार्घ्यः॥ तत्कालो व्रते हेमाद्रौ भविष्ये॥ कन्यायामगते सूर्ये अर्वाग्वै सप्तमे दि
ने॥ कन्यायां समनुप्राप्ते ह्यर्घकालो निवर्तते॥ तेन उदयोत्तरं सप्तदिनमध्ये इत्यर्थः॥ यत्त्वा
मे॥ आसप्तरात्रादुदयाद्यमस्य दानं त्वमेतत्कलनं रसा॥ यावत्समाः सप्तदश त्वथवा सुर
योर्ध्वमप्यत्र वदंति केचित्॥ यमस्यागस्त्यस्य॥ उदयकालश्च दिवोदासीये उक्तः॥ उ
देति याम्यां हरिसंक्रमाद्रवेरेकाधिके विंशतिभेऽप्यगस्त्यः॥ ससप्तभेऽस्तं वृषसंक्रमाच्च प्रया
ति गर्गादिभिरप्यभाणि॥ अत्र विधिर्विष्णुरहस्ये॥ काशपुष्पमयीं रम्यां कृत्वा मूर्तिं तु वा
रुणेः॥ प्रदोषे विन्यसेत्तां तु पूर्णकुंभे स्वलंकृतां॥ कुंभस्थां पूजयेत्तां तु पुष्पधूपविलेपनैः
दध्यक्षतबलिं दद्याद्रात्रौ कुर्यात्प्रजागरम्॥ पूजा च वक्ष्यमाणार्घ्यमंत्रेण कार्या॥ प्रभाते
तां समादाय यायात्पुण्यजलाशयं॥ निशावसाने तां पश्यन् जलांते प्रतिमां मुनेः॥ अर्घ्यं दद्या
दगस्त्याय भक्त्या सम्यगुपोषितः॥ मात्स्ये तु॥ अंगुष्ठमात्रं पुरुषं तथैव सौ
वर्णमत्यायतबाहुदंडं॥ पूर्वे काशमयीं त्वशक्तौ॥ चतुर्भुजं कुंभमुखे निधाय धान्यानि
सप्तांकुरसंयुतानि॥ सकाशपुष्पाक्षतशुक्तियुक्तं मंत्रेण दद्याद्द्विजपुंगवाय॥ धेनुं वहुस्ती
रवतीं च दद्यात्सवस्त्रघंटाभरणां द्विजाय॥ भविष्ये॥ विरूढैः सप्तधान्यैश्च वंशपात्रनिधा
पितैः॥ सौवर्णरौप्यपात्रेण ताम्रवंशमयेन वा॥ मूर्ध्नि स्थितेन पात्रेण जानुभ्यां धरणीं ग
तः॥ विष्णुरहस्ये॥ अगस्त्यः खनमानेति पठन्मंत्रमिमं मुनेः॥ अर्घ्यं दद्यादगस्त्याय शूद्रे
मंत्रविधिस्त्वयं॥ काशपुष्पप्रतीकाश वह्निमारुतसंभव॥ मित्रावरुणयोः पुत्र कुंभयोने
नमोऽस्तु ते॥ विंध्यवृद्धिक्षयकर मेघतोयविषापह॥ रत्नवल्लभ देवेश लंकावास नमो
ऽस्तु ते॥ वातापिर्भक्षितो येन समुद्रः शोषितः पुरा॥ लोपामुद्रापतिः श्रीमान्योऽसौ तस्मै
नमो नमः॥ येनोदितेन पापानि विलयं यांति व्याधयः॥ तस्मै नमोऽस्त्वगस्त्याय सशि
ष्याय सपुत्रिणे॥ अगस्त्यः खनमानेति विप्रोऽर्घ्यं विनिवेदयेत्॥ राजपुत्रि महाभागे ऋ

षिपत्नि वरानने॥ लोपामुद्रे नमस्तुभ्यमर्घ्यं मे प्रतिगृह्यताम्॥ दत्त्वैवमर्घ्यं कौरव्य प्रणिपत्य विसर्जयेत्॥ अर्चितस्त्वं यथाशक्त्या नमोऽगस्त्य महर्षये॥ ऐहिकामुष्मिकीं दत्त्वा कार्यसिद्धिं व्रजस्व मे। विसर्जयित्वागस्त्यं तं विप्राय प्रतिपादयेत्॥ अगस्त्यो मे मनस्थोस्तु अगस्त्योस्मिन्घटे स्थितः॥ अगस्त्यो द्विजरूपेण प्रतिगृह्णातु सत्कृतः॥ दानमंत्रः अगस्त्यः सप्तजन्माघं नाशयत्वावयोरयं॥ अतुलं विमलं सौख्यं प्रयच्छ त्वं महामुने॥ प्रतिग्रहमंत्रः॥ विष्णुरहस्ये॥ त्यजेदगस्त्यमुद्दिश्य धान्यमेकं फलं रसं होमं कृत्वा ततः पश्चाद्वर्जयेन्मानवः फलं॥ होमश्चार्घ्यमंत्रेणाज्येन। भविष्ये दत्त्वार्घ्यं सप्त वर्षाणि क्रमेणानेन पांडव॥ ब्राह्मणः स्याच्चतुर्वेदः क्षत्रियः पृथिवीपतिः॥ वैश्ये च धान्यनिष्पत्तिः शूद्रश्च धनवान्भवेत्॥ यावदायुश्च यः कुर्यात्स परं ब्रह्म गच्छति॥ इत्यगस्त्यार्घ्यः॥ भाद्रपौर्णमास्यां प्रपितामहात्परांस्त्रीनुद्दिश्य श्राद्धं कार्यं॥ तदुक्तं हेमाद्रौ ब्राह्ममार्कंडेययोः॥ नांदीमुखानां प्रत्यब्दं कन्याराशिगते रवौ॥ पौर्णमास्यां तु कर्तव्यं वराहवचनं यथेति॥ नांदीमुखत्वं चोक्तं ब्राह्मे॥ पिता पितामहश्चैव तथैव प्रपितामहः॥ त्रयो ह्यश्रुमुखा ह्येते पितरः परिकीर्तिताः॥ तेभ्यः पूर्वतरा ये च प्रजावंतः सुखैधिताः॥ ते तु नांदीमुखा नांदीसमृद्धिरिति कथ्यते॥ एतच्च प्रत्यब्दमित्युक्तेः॥ पक्षश्राद्धपक्षे सकृन्महालयपक्षे चावश्यकमिति प्रयोगपारिजाते॥ अत्र मातामहा अपि कार्याः॥ पितरो यत्र पूज्यंते तत्र मातामहा अपि इति धौम्योक्तेः। पितृशब्दस्य च जनकपरत्वे बहुवचनविरोधेन पितृभावापन्नपरत्वात्। वार्षिके तु वचनान्निवृत्तिः॥ न च जीवत्पितृकस्यान्वष्टकायां मातृश्राद्धेन द्यापत्तिः। दृष्टापत्तेः। अत एव स उक्तः॥ श्राद्धेषु स्वमातृमातामहयोर्द्वयाद्विति मदनरत्नकालादर्शौ॥ एतज्जीवत्पितृकश्राद्धे वक्ष्यामः॥ केचित्तु अजहल्लक्षणया पित्रादयोऽत्र मातामहास्तेनात्रनेत्याहुः॥ न चात्र नाम्ना नांदीश्राद्धधर्मातिदेशः॥ वैष्णवादिशब्दवन्नापरस्य कर्मनामत्वाभावात्॥ नापि नांदीमुखत्वं पितृविशेषणम्॥ पारिभाषिकत्वादिति दिक्॥ तथा निर्णयदीपे गार्ग्यः॥ पौर्णमासीषु सर्वासु निषिद्धं पिंडपातनं।

वर्जयित्वा प्रौष्ठपदीं यथा दर्शस्तथैव सेति॥ ०॥

इति श्रीमीमांसकरामकृष्णभट्टात्मजकमलाकरभट्टकृते निर्णयसिंधौ भाद्रपदमासः॥ ०॥ ॥

कन्यासंक्रमे पराः षोडश घटिकाः पुण्याः॥ शेषं प्राग्वत्॥ अथ महालयः॥ तत्र पृथ्वीचंद्रोदये वृद्धमनुः॥ आषाढीमवधिं कृत्वा पंचमं पक्षमाश्रिताः॥ कांक्षंति पितरः क्लिष्टा अन्नमप्यन्वहं जलम्॥ कन्यायोगे पुराणपतमन्वमाह॥ षाढायनिः कन्यास्थार्कान्वितः पक्षः सोत्यंतं पुण्य उच्यते इति॥ अत्र विशेषमाह वृद्धमनुः॥ मध्ये वा यदि वाप्यंते यत्र कन्यां व्रजेद्रविः॥ स पक्षः सकलः श्रेष्ठः श्राद्धषोडशकं प्रति॥ तथा ब्रह्मांडमार्कंडेययोः॥ कन्यागते सवितरि दिनानि दश पंच च॥ पार्वणेनेह विधिना श्राद्धं तत्र विधीयते॥ त

था॥ तत्रैव षोडशदिनान्युक्तानि॥ कन्यागते सवितरि यान्यहानि तु षोडश॥ क्रतुभिस्तानि तुल्या
नि देवो नारायणोऽब्रवीत्॥ अत्र हेमाद्रिः॥ षोडशत्वं त्रेधा व्याचख्यौ॥ तिथिवृद्ध्या पक्षस्य षोडश
दिनत्वे श्राद्धवृद्ध्यर्थमित्येकः पक्षः॥ भाद्रदर्शेन सहेति द्वितीयः॥ आश्विनशुक्लप्रतिपदा स
हेति तृतीयः अयमेव तु युक्तः॥ अहः षोडशकं यत्तु शुक्लप्रतिपदा सह॥ चंद्रक्षयाविशेषेणासा
ऽपि दर्शात्मिका स्मृतेति देवलोक्तेः॥ अत्र पंच पक्षाः॥ तदुक्तं हेमाद्रौ ब्राह्मे॥ आषाढ्याः पंचमं प
क्षं तु श्राद्धं कार्यं दिने दिने॥ त्रिभागहीनं पक्षं वा त्रिभागं त्वर्द्धमेव वा॥ दिने दिने इति पक्षपर्यंत
मुक्तम्॥ त्रिभागहीनमिति पंचम्यादि पक्षः॥ भोजं गीतिथिमारभ्यपावत्सूर्यार्कसंगममिति
वाक्यात्॥ अर्द्धमित्यष्टम्यादिपक्षः॥ त्रिभागमिति दशम्यादिः॥ त्रिभागहीनमिति॥ चतुर्दशीस
हितप्रतिपदादि चतुष्टयवर्ज्जनाभिप्रायेणेति कल्पतरुः॥ अत्र दिनपदं तिथिपरम्॥ वीप्सया
तत्पक्षीयतिथित्वं॥ श्राद्धव्याप्यतावच्छेदकं तेन यं चदशतिथिष्वपि श्राद्धं सिद्ध्यति॥ तेन चतु
र्द्दशीनिषेधो नपक्षस्य पक्षपर इति गौडाः॥ तन्न॥ श्राद्धं शस्त्रहतस्यैव चतुर्द्दश्यां महालये॥ ०

इत्यादिविरोधात्॥ ०

यत्तु कश्चिन्मरणाद्यत्ययलोपेन तृतीयभागहीनं षष्ठ्यादि पक्ष तृतीयभागमेकादश्यादि तद
र्द्धं त्रयोदश्यादि॥ उत्तरोत्तरलघुकालोक्तेरिति॥ तन्न॥ गौतमादिवशेन मूलकल्पनालाघवा
त्॥ पक्षमिसनन्पयापत्रे ष॥ पंचम्यूर्द्धं च तत्रापि दशम्यूर्द्धं ततोप्यतीतिदिग्सुधर्म्मोक्तेः॥ ष
ष्ठ्याद्येकादश्यादि पक्षावपि ज्ञेयाविति तत्त्वं॥ कालादर्शेपि॥ पक्षाद्या द्विचरणांतं पंचम्या द्वि
दिगादि च॥ अष्टम्यादि यथाशक्ति कुर्य्यादापरपक्षकं॥ पक्षादि प्रतिपत्॥ दिग्दशमी॥ दर्शां
तमिति सर्वत्र॥ गौतमोपि॥ अथापरपक्षे श्राद्धं पितृभ्यो दद्यात्॥ पंचम्यादि दर्शांतमष्टम्यादि
दशम्यादि सर्वस्मिन्वेति॥ तथैकस्मिन्नपि दिने श्राद्धमुक्तं हेमाद्रौ नागरखंडे॥ आ
षाढ्याः पंचमे पक्षे कन्यासंस्थे दिवाकरे॥ यो वै श्राद्धं नरः कुर्य्यादेकस्मिन्नपि वासरे॥ तस्य संव
त्सरं यावत्संतृप्ताः पितरो ध्रुवमिति॥ अत्र शक्ताशक्तपरा व्यवस्थेति प्राचः॥ तन्न॥ तद्वाचकप
दाभावात्॥ त्रयोदश्यादि पक्ष एव नित्यः॥ तत्रैव निंदाश्रुतेः॥ ब्राह्मे एवकारेण तस्यैव पंचम
पक्षायोगव्यवच्छेदोक्तेरिति गौडाः॥ तन्न॥ एकस्मिन्नपीति विरोधात्॥ तेन फलभूमार्थि
नामानि कार्याणीति तत्त्वम्॥ तत्र चतुर्द्दशीश्राद्धाभावे पंचम्यादि दशम्यादि पक्षौ॥ तन्मत्ते
षष्ठ्याद्येकादश्यादिकौ एवं चतुर्द्दश्यभावे द्वादश्यादिः तन्मत्ते त्रयोदश्यादिरिति व्यवस्था॥
विधवायास्तु विशेषः स्मृतिसंग्रहे॥ चत्वारः पार्वणाः प्रोक्ता विधवायाः सदैव हि॥ स्वभर्तृ
श्वशुरादीनां मातापित्रोस्तथैव च॥ ततो मातामहानां च श्राद्धदानमुपक्रमेत्॥ तथा॥ श्वश्रू
णां च विशेषेण मातामह्यास्तथैव चेति॥ अशक्तौ तु स्मृतिरत्नावल्याम्॥ स्वभर्तृप्रभृतित्रि
भ्यः स्वपितृभ्यस्तथैव च॥ विधवा कारयेच्छ्राद्धं यथाकालमतंद्रिता॥ विधवा स्वयं संकल्पं
कृत्वा न्यद्ब्राह्मणद्वारा कारयेदित्युक्तं॥ प्रयोगपारिजाते॥ सकृन्महालये चवर्ज्यानि यथाप्युक्तं
॥ ष्ठीचंद्रोदयमाधवप्रयोगपारिजातादिषु॥ वसिष्ठः॥ नंदायां भार्गवदिने चतुर्द्दश्यां ...

जन्मसु।एषुश्राद्धंनकुर्वीतगृहीपुत्रधनक्षयात्॥जन्मभंतत्रदशमंचैकोनविंशतिजन्मानि॥स्वद्र
र्म्यः।प्राजापत्येचयोरेसेचपित्र्येभार्गवेतथा॥यस्तुश्राद्धंप्रकुर्वीततस्यपुत्रोविनश्यति॥प्राजा
पत्यंरोहिणी।पौष्णंरेवती।पित्र्यंमघा।अमान्यपिप्रत्यरादीनितत्रैववज्ञेयानि॥केचित्तु।नंद
स्वकामरव्यारभृगुत्रिपितृकालभे॥गंडेवैधृतिपातेचपिंडास्यात्ज्ञातुतेसुभिरितिसंग्रहात्
॥नंदाःप्रतिपत्षष्ठ्येकादश्यः।अस्वःसप्तमी।कामस्त्रयोदशी।आरोभौमः॥भृगुःशुक्रः।त्रि
त्रिभंकृत्तिका।पितृभंमघा।कालभंभरणी॥अत्रपिंडास्यात्मारत्याहुः॥तत्रमूलंमृग्यं॥ए
तच्चसकृन्महालयविषयं॥सकृन्महालयेकाम्येपुनःश्राद्धेखिलेषुच॥अतीतविषयेचैव
सर्वमेतद्विचिंतयेदितिपृथ्वीचंद्रोदयेनारदोक्तेः॥अस्यापवादोहेमाद्रौपृथ्वीचंद्रोदयेच॥
पराशरमाधवीयेमदनपारिजातादिषुचैवम्।निर्णयदीपिकायांतु॥पितृमृताहेनिषिद्ध
दिनेपिसकृन्महालयःकार्यइत्युक्तम्।आषाढ्याःपंचमेपक्षेकन्यासंस्थेदिवाकरे।मृता
हनिपितुर्योवैश्राद्धंदास्यतिमानवः॥तस्यसंवत्सरंयावत्तृप्ताःपितरोध्रुवमितिनागर
खंडोक्तेः॥यातिथिर्यस्यमासस्यमृताहेतुप्रवर्तते॥सातिथिःपितृपक्षेतुपूजनीयाप्रयत्नतः
॥तिथिच्छेदोनकर्तव्योविनाशौचंयदृच्छयापि उश्राद्धंचकर्तव्यंविच्छित्तिंनैवकारयेत्॥
अशक्तःपक्षमध्येतुकरोत्येकदिनेयदा॥निषिद्धेपिदिनेकुर्यात्पिंडदानंयथाविधीतिका
त्यायनोक्तेश्च॥अत्रमूलंचिंत्यं।तथायस्मिन्श्राद्धकरणेपिनंदादिषुपिंडनिषेधइत्याहपरा
शरमाधवीयेकार्ष्णाजिनिः॥नभस्यस्यापरेपक्षेश्राद्धंकार्यंदिनेदिने॥नैवनंदादिवर्ज्यं
स्यान्नैवनिंद्याचतुर्दशीति॥अत्रश्राद्धमित्येकवचनाद्दिनेदिनेइतिवीप्सावशाच्चसोमयागे
वदेकस्याभ्यासेनैकप्रयोगपरमिदं।अतःप्रतिपत्प्रभृतिष्वेकोवर्ज्योविनाचतुर्दशीमिति।या
ज्ञवल्कीयंप्रयोगभेदपरं॥नतुपंचम्यादिपक्षविषयं।प्रतिपत्प्रभृतिष्वितिविशिष्योक्तेः॥
निर्णयदीपेपृथ्वीचंद्रोदयेमदनपारिजातेचैवं।अन्यकृष्णपक्षपरंयाज्ञवल्कीयं॥एतत्पर
त्वे।नैवनिंद्याचतुर्दशीतिविरोधादितिगौडाःतन्न॥श्राद्धंशस्त्रहतस्यैवचतुर्दश्यांमहालये
इतिविरोधात्॥तत्वंतुतिथिनक्षत्रवारादिनिषेधोयउदाहृतः॥सश्राद्धेतन्निमित्तेस्यान्नानु
षंगकृतेक्वचितिदिवोदासीयेबृहद्गार्ग्योक्तेस्तन्निमित्तेपक्षांतरेचज्ञेयः॥सकृन्महाल
येतुवचनान्निषेधः॥अन्यत्रनकोपिनिषेधःकार्ष्णाजिनिस्मृतेरिति।अतोनंदादौसपिंड
कश्राद्धेपुत्रवतोप्यधिकारः॥अत्रिरपि॥महालयेक्षयाहेचदर्शेपुत्रस्यजन्मनि॥तीर्थेपि
निर्वपेत्पिंडान्रविवारादिकेष्वपि॥एवंचनंदादिनिषेधस्तु।मृताहातिक्रमेपौर्ण
मास्यादिगतश्राद्धेतन्निमित्तेचज्ञेयः॥यत्तुस्मृत्यर्थसारे॥विवाहव्रतचूडासुवर्षमर्द्धंतद
र्द्धकं॥पिंडदानंमृदास्नानंनकुर्यात्तिलतर्पणमिति॥तस्याप्यपवादोदिवोदासीयेबृह
स्पतिः॥तीर्थेसंवत्सरेप्रेतेपितृयागेमहालये॥पिंडदानंप्रकुर्वीतयुगादिभरणीमघे॥
महालयेगयाश्राद्धेमातापित्रोःक्षयेहनि॥कृतोद्वाहोपिकुर्वीतपिंडनिर्वपणंसदेति॥
निर्णयदीपेतुनंदादिनिषेधःप्रत्यहंभिन्नश्राद्धविषयः।षोडशाहन्यापिश्राद्धप्रयोगेक

त्वेनुमतमहःपिंडदानंकार्य्यमेवेत्युक्तं॥तदप्यमर्थःसंपन्नः॥षोडशाहव्याप्तिश्राद्धेकेनपिंडनिषेधः॥मृ
ताहेःसकृन्महालयेपितृवर्थेतिकेचित्॥तत्रापिनिषेधस्तापुक्तः॥प्रत्यहंश्राद्धभेदेपिप्रत्यतीपातादौ
चतथा॥अन्यत्रमृताहातिक्रमेचपिंडनिषेधइति॥सन्यासिनांतुद्वादश्यांश्राद्धंकार्य्यं॥यतीनांच
वनस्थानांवैष्णवानांविशेषतः॥द्वादश्यांविहितंश्राद्धंकृष्णपक्षेविशेषतइति॥ पृथ्वीचंद्रोदये
संग्रहोक्तेः॥अत्रपक्षेश्राद्धकरणेगौणकालमाहहेमाद्रौयमः॥हंसेवर्षासुकन्यास्थेशाके
नापिगृहेवसन्॥पंचम्योरंतरेदद्यादुभयोरपिपक्षयोः॥आश्विनकृष्णशुक्लपंचम्योर्मध्येइत्य
र्थः॥तत्राप्यसंभवेभविष्ये॥येयंदीपान्विताराजन्ख्यातापंचदशीभुवि॥तस्यांदद्यान्नचेद्द
त्तंपितृभ्योवैमहालये॥तत्राप्यसंभवेभारते॥यावच्चकन्यातुलयोःक्रमादास्तेदिवाकरः॥
शून्यंप्रेतपुरंतावत्यावद्वृश्चिकदर्शनं॥ब्राह्मे॥वृश्चिकेसमतिक्रांतेपितरोदैवतैःसह॥नि
श्वस्यप्रतिगच्छंतिशापंदत्वासुदारुणं॥यत्तुजातूकर्ण्यः॥आकांक्षंतिस्मपितरःपंचमंप
क्षमाश्रिताः॥तस्मात्तत्रैवदातव्यंदत्तमन्यत्रनिष्फलमिति॥ततःफलातिशयपरंनियतं॥कं
न्यागतेतुवानवेतितुर्य्यपादेवापाठः॥तेनकन्यायोगेप्राशस्त्यमात्रं॥अतःश्राद्धविवेकोक्तं
श्राद्धद्वयंहेयं॥इदंचश्राद्धमन्नेनैवकार्यं।नामान्नादिना॥मृताहंचसपिंडंचगयाश्राद्धंम
हालयं॥आपन्नोपिनकुर्वीतश्राद्धमामेनकर्हिचिदितिस्मृतिदर्पणेगालवोक्तेः॥

अथात्रदेवताःसंग्रहे॥तातांबात्रितयंसपत्नजननीमातामहादित्रयंसस्त्रिस्त्री॥
तनयादितातजननीस्वभ्रातरस्तत्स्त्रियः॥ताताम्बात्मभगिन्यपत्यधवयुक्जायापिता
सद्गुरुःशिष्याप्ताःपितरोमहालयविधौतीर्थेतथातर्पणे॥अस्यार्थः॥तातत्रयीपितृत्र
यी॥अंबात्रयीच॥स्मृत्यर्थसारेपि॥महालयेमातृश्राद्धंपृथक्प्रशस्तमिति॥अत्रविशे
षः स्मृतिदर्पणे॥गालवः॥ अनेकामातरोयस्यश्राद्धेचापरपक्षिके॥अर्घ्यदा
नंपृथक्कुर्य्यात्पिंडमेकंतुनिर्वपेत्॥जीवन्मातृकस्तुसापत्नमातुरेकोद्दिष्टं कुर्य्या
त्पार्वणं॥श्राद्धदीपकलिकायांतुपार्वणमुक्तम् अन्वष्टक्यचयन्मातुर्गयाश्राद्धंमहालयं
॥पितृपत्नीषुयच्छ्राद्धंकार्य्यंपार्वणवत्सदेतिरहस्यमनूक्तेः॥सपत्नीतिमातामहानांसप
त्नीकत्वेपिविभवेसतिमातामहीनांपृथक्कार्य्यम्॥महालयेगयाश्राद्धेवृद्धौचान्वष्टका
सुच॥नेयंद्वादशदैवत्यंतीर्थेप्रोष्ठेमघासुचेतिनिगमोक्तेः॥हेमाद्रिमतेत्वत्रनवदैवत्यमे
व॥महालयेगयाश्राद्धेवृद्धौचान्वष्टकासुच॥नवदैवत्यमत्रेष्टंशेषंषाट्पौरुषंविदुरिति।
धर्म्मोक्तेः॥तातभ्रातापितृव्यः॥जननीभ्रातामातुलः॥तत्स्त्रियःपितृव्यस्त्रीमातुलानी
भ्रातृजाया॥पितृष्वसृमातृस्वसृभगिन्योऽपत्यभर्तृयुक्ताः॥तेनसापत्यायेसधवायेइतिप्र
योगोज्ञेयः॥एतासुसतीषुनतद्भर्त्रादेर्दानंद्वारलोपात्॥जायापिताश्वशुरश्वश्र्वौइत्यत्रो
पलक्ष्या॥अत्रमूलंस्मृतिचंद्रिकायांज्ञेयं॥अत्रपार्वणैकोद्दिष्टव्यवस्थोक्ताहेमाद्रौपुरा
णांतरे॥उपाध्यायगुरुश्वश्रूपितृव्याचार्यमातुलाः॥श्वशुरभ्रातृतत्पुत्रपुत्रर्त्विक्शिष्य
पोषकाः॥भगिनीस्वामिदुहितृजामातृभगिनीसुताः॥पितरौपितृपत्नीनांपितुर्मातु

अपास्यसः॥सपिंडमदर्शितस्याप्यास्तीर्थेचैवमहालये॥एकोद्दिष्टविधानेनसर्जनीयास्त्र
यस्ततइति॥एतदेषांपित्रादीनांपार्वणमर्थसिद्धं॥अत्रकमात्त्वेव्याचारादव्यवस्था॥आ
श्विनेतुचतुर्थ्यांचंद्रोदयेचतुर्विंशतिमतेच॥एकस्मिन्ब्राह्मणेसर्वानाचार्यादीन्प्रपूज
येत्॥दशाद्वादशवापिंडान्दद्यात्कारणंनतु॥एकोद्दिष्टस्वरूपंचाहयाज्ञवल्क्यः॥एको
द्दिष्टंदैवहीनमेकार्घ्यैकपवित्रकम्॥आवाहनाग्नौकरणरहितंह्यपसव्यवदिति॥अत्रै
कपाकोवैश्वदेवंतत्रपिंडवर्हिश्चैकमितिस्मृत्यर्थसारेउक्तम्॥अत्रपाणिहोमः॥पिं
डश्चद्विजांतिकइत्याह॥प्रयोगपारिजातेआचार्यः॥काम्यामभ्युदयेष्टम्यामेकोद्दिष्टमा
घ्यांष्टमंचतुर्ष्वेषुकरेहोमःपिंडश्चात्रद्विजांतिकइति॥पार्वणैकोद्दिष्टयोःसमानतंत्रत्वे
तुअग्निसमीपएव॥अत्रधुरिलोचनौवैश्वदेवौ॥अधिकमागतेसूर्येकाम्येचधुरिलोच
नाविति हेमाद्रावादित्यपुराणात्॥अत्रप्रतिदिनंभिन्नप्रयोगत्वाद्दक्षिणाभेदोवाप्रयो
गैक्यादंतेएववादक्षिणेतिहेमाद्रावुक्तम्॥एतच्चसमस्तपितृकादिनाजीवत्पितृकेना
पिकार्य्यं॥वृद्धौतीर्थेचसंन्यस्तेतातेचपतितेसति॥येभ्यएवपितादद्यात्तेभ्योदद्यात्स्व
यंसुतइतिकात्यायनोक्तेः॥यत्तुकौंडिन्यः॥दर्शश्राद्धंगयाश्राद्धंश्राद्धंचापरपक्षिकं॥न
जीवत्पितृकःकुर्यात्तिलैस्तर्पणमेवचेतितत्समस्तपित्राद्यतिरिक्तविषयंकाम्यश्राद्ध
परंच॥अत्रबहुवक्तव्यंश्रीपितृचरणैर्जीवत्पितृकनिर्णयेज्ञेयं॥एतच्चजीवत्पितृकेनपिं
डरहितंकार्य्यं॥मुंडनंपिंडदानंचप्रेतकर्मचसर्वशः॥नजीवत्पितृकःकुर्य्याद्गुर्विणीपति
रेवचेति॥वृद्धेरागतस्यपिंडनिषेधात्॥अन्वष्टक्यमातृवार्षिकादौतुवचनाद्भवतीतिव
ध्यामः॥तथाछागलेयः॥पिंडोयत्रनिवर्त्तेतमघादिषुकथंचन॥सांकल्पंतुतदाश्राद्धं
प्रतिदिनंश्राद्धोक्तंसकृन्महालयेतुपरेऽह्निकार्य्यं॥तदुक्तंनारदीये॥पक्षश्राद्धंयदाकु
र्य्यात्तर्पणंतुदिनेदिने॥सकृन्महालयेचैवपरेऽहनितिलोदकं॥गार्ग्योपि॥पक्षश्राद्धेहिर
ण्येचअनुव्रज्यतिलोदकमिति॥तथाप्रयोगपारिजातेगार्ग्यः॥कन्येभाद्रपदेमासिश्राद्धं
प्रतिदिनंभवेत्॥पितॄणांप्रत्यहंकार्य्यंनिषिद्धाहेपितर्पणं॥सकृन्महालयेष्वस्मादष्ट
कास्वंतएवहिइदंनिषिद्धदिनेपिकार्य्यम्॥तिथितीर्थविशेषेषुकार्य्यंप्रेतेचसर्वदेतिस्मृ
त्यर्थसारोक्तेः॥तीर्थेतिथिविशेषेचगयायांप्रेतपक्षके॥निषिद्धेपिदिनेकुर्य्यात्तर्पणंति
लमिश्रितमिति॥स्मृतिरत्नावलीवचनाच्च॥एतच्चश्राद्धंमलमासेनकार्य्यं॥तदाहभृगुः
॥वृद्धिश्राद्धंतथासोममग्न्याधेयंमहालयं॥राजाभिषेकंकाम्यंचनकुर्य्याद्भानुलंघिते
इति॥हेमाद्रौनागरखंडेपि॥नभोवाथनभस्योवामलमासोयदाभवेत्॥सप्तमःपितृप
क्षःस्यादन्यत्रैवतुपंचमः॥एतच्चपित्रोर्मरणेप्रथमाब्देनकार्यमितित्रिस्थलीसेतौभ
ट्टाः॥इदंचनित्यकाम्यं॥पुत्रानायुस्तथारोग्यमैश्वर्य्यमतुलंतथा॥प्राप्नोतिपंचमेदत्वा
श्राद्धकामांश्चपुष्कलानितिजाबाल्युक्तेः॥वृश्चिकेसमतिक्रांतेपितरोदैवतैःसह॥निः
श्वस्यप्रतिगच्छंतिशापंदत्वासुदारुणमितिकार्ष्णाजिनिवचनाच्च॥तदतिक्रमेप्रायश्चित्त

युक्तंमृत्विधाने।दुरोश्वस्यमंत्रंचदशमासद्विमासयोः॥महालयंयदास्यात्तदासंपूर्णमिति
तदिति॥द्विमासयोःकन्यातुलयोर्महालयश्राद्धंयदाहीनमित्यर्थः॥अत्रभरण्यांश्राद्धमति
प्रशस्तं॥तदुक्तंषष्ठीचंद्रोदयेमात्स्ये॥भरणीपितृपक्षेतुमहतीपरिकीर्त्तिता॥अस्यांश्राद्धंकृ
तंयेनसगयाश्राद्धकृद्भवेत्॥षष्ठीचंद्रोदयेश्रीधरीयेबृहस्पतिः॥नभस्यापरपक्षस्यद्विती
यायद्यामभे॥तृतीयाचाश्विनाराभिःसहितापीतिदापितुः॥एतत्पक्षेषष्ठीयोगविशेषे।
णकपिलासंज्ञा॥तदुक्तंवाराहे॥नभस्यकृष्णपक्षेतुरोहिणीपातभूसुतैः॥युक्तापष्ठीपुरा
णज्ञैःकपिलापरिकीर्त्तिता॥तत्रोपवासनियमैर्भास्करंतत्रपूजयेत्॥कपिलांचद्विजाग्र्या
यदत्वाक्रतुफलंलभेत्॥पुराणसमुच्चये॥भाद्रेमास्यसितेपक्षेभानौचैवकरेस्थिते॥पाते
कुजेचरोहिण्यांसाषष्ठीकपिलाभवेत्॥अत्रदर्शितत्वेनमहालयोभाद्रकृष्णपक्षोज्ञेयइत्यु
क्तंनिर्णयामृतेहेमाद्रौच॥हस्तार्कस्तुफलातिशयार्थः॥संयोगेतुचतुर्णांवैनिर्दिष्टापरमे
ष्ठिनेतितत्रैवोक्तेः॥अत्रविशेषोहेमाद्रौस्कांदे॥देवदारुंतथोशीरंकुंकुमंलांमनःशिलां॥प
चकंपद्मकंयष्टीमधुगव्येनपेषयेत्॥क्षीरेणालोड्यकल्केनस्नानंकुर्य्यात्स्वमंत्रकं॥आप
स्त्वमसिदेवेशज्योतिषांपतिरेवच॥पापंनाशयमेदेवबाङ्मनःकायकर्मजं॥पंचगव्यकृत
स्नानःपंचभंगैस्तुमार्जयेत्॥पंचभंगैःपंचपल्लवैः॥तथा॥रत्नैर्नानाविधैर्युक्तंसौवर्णंका
रयेद्रविं॥शक्तितस्तुपलार्द्धेनतदर्द्धकर्षतोपिवा॥सौवर्णमरुणंकुर्याद्रौप्यंचैवतथारथं
॥अल्पवित्तोपियःकश्चित्सोपिकुर्यादिमंविधिं॥प्रभासखंडे॥स्थापयेदव्रणंकुंभंचंदनोद
कपूरितं॥रक्तवस्त्रयुगच्छन्नंताम्रपात्रेणसंयुतं॥रथोरौक्मपलस्यैवएकचक्रःसुचित्रकः
॥सुवर्णपलसंयुक्तांमूर्त्तिंसूर्यस्यकारयेत्॥ततःसूर्यंचकपिलांचदद्यात्संपूज्यभक्तित
इति॥ततःसूर्यंकपिलांचषोडशोपचारैःसंपूज्यदद्यात्॥दिव्यमूर्त्तिर्जगच्चक्षुर्द्वादशात्मा
दिवाकरः॥कपिलासहितोदेवोममयुक्तिंप्रयच्छतु॥यस्मात्त्वंकपिलेपुण्यासर्वलोकस्य
पावनी॥प्रदत्तासहसूर्येणममुक्तिप्रदाभवेति॥विशेषांतरंतत्रैवज्ञेयमितिदिक्॥इय
मेवचंद्रषष्ठी॥साचंद्रोदयव्यापिनीग्राह्या॥उभयत्रतथात्वेपूर्वा॥तदुक्तंभविष्ये॥तद्वद्भा
द्रपदेमासिषष्ठ्यांपक्षेसितेतरे॥चंद्रषष्ठीव्रतंकुर्य्यात्पूर्वविद्धंप्रशस्यते॥चंद्रोदयेयदाष
ष्ठीपूर्वाह्णेवापरेहनि॥चंद्रषष्ठ्यसितेपक्षेसैवोपोष्याप्रयत्नतइति॥अष्टम्यामाश्वलायने
न॥माघावर्षसंज्ञंश्राद्धमुक्तं॥एतेनमाघावर्षेप्युक्तपक्षाअपरपक्षेइति॥इदंसप्तम्यादिषु
त्रिष्वहःसुकार्य्यमितिनारायणवृत्तिः॥हरदत्तस्तुमघायुक्तवर्षासुभवंत्रयोदशीश्राद्धमि
त्याचख्यौ॥षष्ठीचंद्रोदयेब्राह्मे॥आषाढ्याःपंचमेपक्षेगयामध्याष्टमीस्मृता॥तत्रनि
त्रयोदशीगजच्छायागयानुसातुयेनके॥० आश्विनकृष्णाष्टम्यांमहालक्ष्मीव्रतम्॥ तत्र
निर्णयामृतेपुराणसमुच्चये॥श्रियोर्च्चनंभाद्रपदेसिताष्टमीप्रारभ्यकन्यामगतेचसूर्ये
॥समापयेत्तत्रतिथौचयावत्सूर्य्यस्तदर्द्धांगतोपवसाइति॥तत्रैव॥कन्यागते...

मीप्राप्नुयाच्छ्रियं॥ दोषैश्चतुर्भिः संत्यक्ता सर्वसंपत्करी तिथिः॥ तथा पुत्रसौभाग्यराज्यायुर्ना
शिनी सा प्रकीर्तिता॥ तस्मात्सर्वप्रयत्नेन त्याज्या कन्यागते रवौ॥ विशेषेण परित्याज्या नवमी।
दूषिता यदीति॥ दोषचतुष्टयं तत्रैवोक्तम्॥ त्रिदिने चावमे चैव अष्टमीन्नोपवासयेत्॥ पुत्र
हा नवमीविद्धा स्वघ्नी हन्त्यार्द्रगे रवाविति॥ त्रिद्दिनावमदिनलक्षणं च रत्नमालायां॥ यत्रै
कः स्पृशति तिथिद्वयावसानं वारश्चेदवमदिनं तदुक्तमार्यैः॥ यः स्पृशेद्भवति तिथित्रय
स्य वारस्त्रिद्युस्पृक् कथितमिदं द्वयं च नेष्टं एते च सर्वे निषेधाः प्रथमारंभविषयाः॥ मध्ये
तु सति संभवे ज्ञेया॥ व्रतस्य षोडशाब्दसाध्यत्वेन मध्ये त्यागायोगात्॥ इयं चंद्रोदयव्यापि
नी ग्राह्या॥ तत्रैव स्कान्दाद्युक्तेः॥ परदिने चंद्रोदयादूर्ध्वं त्रिमुहूर्तव्यापित्वे परैव कार्य्या॥ अन्य
था पूर्वैव॥ पूर्वा वा परविद्धा वा ग्राह्या चंद्रोदये सदा॥ त्रिमुहूर्तापि सा ग्राह्या परतश्चोर्ध्वगामि
नीति मदनरत्ने निर्णयामृते च संग्रहोक्तेः॥ अर्द्धरात्रमतिक्रम्य वर्तते यत्र या तिथिः॥ त
दा तस्यां तिथौ कार्य्यं महालक्ष्मीव्रतं सदेति॥ वचनाच्चेति संक्षेपः॥ ॥ इति महाल
क्ष्मीव्रतनिर्णयः॥ अथ नवम्यामन्वष्टकाश्राद्धं॥ तत्र कात्यायनः॥

अन्वष्टकासु नवभिः पिंडैः श्राद्धमुदाहृतं॥ पित्रादिमातृमध्यं च ततो मातामहांतकम्॥
इति पृथ्वीचंद्रोदये ब्रह्मांडे॥ पितॄणां प्रथमं देयं मातॄणां तदनंतरम्॥ ततो मातामहानां च अ
न्वष्टके क्रमः स्मृतः॥ श्राद्धहेमाद्रौ छागलेयः॥ केवलास्ताः क्षये कार्य्या वृद्धावादौ प्रकीर्तिता
॥ अन्वष्टकासु मध्यस्था नान्या कार्या तु मातरः॥ दीपिकायां तु मातृश्राद्धमादौ कार्यमित्यु
क्तम्॥ मातृयजनं त्वन्वष्टकास्वादितः इति॥ हेमाद्रौ ब्राह्मेपि॥ अन्वष्टकासु क्रमशो मातृपूर्वं
तदिष्यते इति॥ अत्र शाखाभेदेन व्यवस्थेति पृथ्वीचंद्रोदयः॥ जीवत्पितृकविषयमिति नि
र्णयदीपः॥ इदं च जीवत्पितृकेणापि कार्य्यं॥ तदुक्तं निर्णयामृते मैत्रायणीयपरिशिष्टे॥
आन्वष्टक्यं गयाप्राप्तौ सतां यच्चाष्टकेहनि॥ मातुः श्राद्धं सुतः कुर्यात्पितर्यपि च जीवतीति॥
यद्यपि जीवत्पितृकस्यैवं चाप्यन्वष्टका अवश्यं कर्तव्या अलाभेऽप्यशक्तस्येयमावश्यकी॥ सो
ऽष्टपद्यष्टका भूयः पितृलोके भविष्यतीति हेमाद्रौ पाद्मोक्तेः॥ सर्वासामेव मातॄणां श्राद्धं क
न्यागते रवौ॥ नवम्यां हि प्रदातव्यं ब्रह्मलव्यवरायत इति स्मृते नावश्यकत्वोक्तेश्च॥ अत्र स
र्वासामित्युक्तेः॥ स्वमातरि जीवंत्यामपि सपत्नमातृभ्यो देयात्॥ तन्मरणे सति तस्यै ताभ्यश्च
देयादित्युक्तं॥ जीवत्पितृकनिर्णये गुरुभिः अत्र सर्वासां नामनिर्देशने कोत्राह्मणोर्घ्यः॥
पिंडश्च॥ नामैकं तु द्विवचनादिप्रयोगइत्युक्तं नारायणवृत्तौ॥ अन्वष्टकाश्राद्धं तन्त्रोगश्च
गोभिलीयानां मध्यमायामेव न सर्वासु॥ आन्वष्टक्यं मध्यमायामिति गोभिलगौतमावि
निर्देशपरिशिष्टात्॥ अत्र भर्तुर्मरणोत्तरं सधवमृतमातृश्राद्धं न कार्यमिति केचिदाहुः॥ य
त्तु नि च॥ श्राद्धं नवम्यां कुर्यात्तु मृते भर्तरि लुप्यते इति॥ तदेतन्निर्मूलत्वान्मूर्खप्रतारणमात्रं॥
श्राद्धदीपकलिकायां॥ ब्राह्मे॥ पितृमातृकुलोत्पन्नायाः काश्चित्तु मृताः स्त्रियः॥ श्राद्धार्हा मा
तरो ज्ञेयाः श्राद्धं तत्र प्रदीयते इति॥ अत्र देशाचाराद्व्यवस्था॥ इदं चानुपनीतेनापि कार्यम॥ त

दुक्तंश्राद्धशूलपाणौमात्स्ये॥ अमावास्याष्टकाकृष्णपक्षपंचदशीषु चेत्यभिधाय॥ एतच्चानु
पनीतोपिकुर्यात्सर्वेषुपर्वसु॥ श्राद्धंसाधारणंनामसर्वकामफलप्रदं भार्याविरहितोप्येत
त्प्रवासस्थोपिनित्यशः॥ शूद्रोप्यमंत्रवत्कुर्यादनेनविधिनाबुधइति॥ तेनसाग्नेरेवेदमि
तिपरास्तं॥ अन्वष्टकातःपृथगेवेदंमातुःश्राद्धमित्यपिपरास्तम्॥ लाघवेनमूलैक्यादष्ट
कपदाविशेषाच्च॥ तेनान्यत्रान्वष्टकाश्राद्धस्यांगत्वात्प्रधानत्ववचनात्॥ अवेष्टेरिवरा
जसूयांतर्गतायाएतयान्नाद्यकामंयाजयेदितिफलार्थत्वं॥ अत्राष्टकान्वष्टकासर्वानु
रोधात्॥ तथाऽग्निपुराणे॥ अन्वष्टकासुवृद्धौचगयायांचक्षयेहनि॥ अत्रमातुःपृथक्
श्राद्धमन्यत्रपतिनासह॥ आपस्तंबानांत्वष्टकासुचवृद्धौचेतिभाष्यकारैः॥ पाठादष्ट
कायांमातृश्राद्धं॥ छंदोगैस्त्वत्रमातृमातामहश्राद्धेनकार्ये। किंतुत्रिपुरुषमेव॥ नयोषि
द्भ्यःपृथग्दद्यादवसानदिनादृते। कर्षूसमन्वितंमुक्त्वातथाद्यंश्राद्धषोडशं॥ प्रत्याब्दिकंच
शेषेषुपिंडाःस्युःषडितिस्थितिरितिछंदोगपरिशिष्टात्॥ अन्वष्टकासुतेषांकर्षूविधानादि
तिशूलपाणिः॥ यत्तुतमिस्रपक्षेनवमीपुण्याभाद्रपदेहिसा॥ चत्वारःपार्वणाःकार्याः
पितृपक्षेमनीषिभिरितितद्देशाचारतोव्यवस्थितंज्ञेयं॥ इदंजीवत्पितृकेणापिसपिंडकं
कार्यं॥ हेमाद्रौविष्णुधर्मोत्तरे॥ अन्वष्टकासुचस्त्रीणांश्राद्धंकार्यंतथैवचेत्युपक्रम्य।
पिंडनिर्वपणंकार्यंतस्यामपितृयोन्नमेतिवचनंश्राद्धविधिनापिंडदानेप्राप्तेपुनस्तत्की
र्तनंयस्यजीवत्पितृगर्भिणीपतित्वादिनापिंडदानंनिषिद्धंतस्यतत्प्राप्त्यर्थमितितातच
रणाः॥ अत्रसुवासिनीभोजनमुक्तं मार्कंडेयपुराणे॥ मातुःश्राद्धेतुसंप्राप्तेब्राह्मणो।
स्सहभोजनम्॥ सुवासिन्यैप्रदातव्यमितिशातातपोब्रवीत्॥ भर्तुरग्रेमृतानारीसह
दाहेनवामृता॥ तस्याःस्थानेनियुंजीतविप्रैःसहसुवासिनीं॥ तत्रैवमदालसावाक्यं॥ स्त्री
श्राद्धेषुत्रदेयास्युरलंकाराश्चयोषिते॥ मंजीरमेखलादामकर्णिकाकंकणादयइति।
अत्राशक्तावनुकल्पमाहाश्वलायनः॥ अनडुहोयवसमाहरेदग्निनावाकक्षमुपो
षेदेयामेष्टकेतिनत्वेवानष्टकःस्यादिति॥ हेमाद्रौपितामहः अमावास्याव्यतीपातयो
र्मासस्याष्टकासुच॥ विद्वान्श्राद्धमकुर्वाणोनरकंप्रतिपद्यते॥ अकरणेचप्रायश्चित्तं
मुक्तंस्मृतिविधाने॥ एभिर्युभिर्जपेन्मंत्रंशतवारंतुतद्दिने॥ अन्वष्टक्यंयदाश्राद्धंसंप्राप्नोया
तिसर्वथेति॥ एतत्पक्षेद्वादश्यांविशेषःपृथ्वीचंद्रोदयेवायवीये॥ संन्यासिनोप्याब्दिका
दिपुत्रःकुर्याद्यथाविधि॥ महालयेतुयच्छ्राद्धंद्वादश्यांपार्वणंतुतदिति॥ अथत्रयोद
शीश्राद्धं॥ तत्रचंद्रिका॥ त्रयोदशीभाद्रपदीकृष्णामुख्यापितृप्रिया॥ तृप्यंतिपितरस्त
स्यांस्वयंपंचशतंसमाः॥ मघायुतायांतस्यांतुजलाद्यैरर्पितोषिताः॥ तृप्यंतिपितरस्त
द्वत्वर्षाणामयुतायुतं॥ प्रयोगपारिजातेशंखः॥ प्रौष्ठपद्यामतीतायांमघायुक्तांत्र
योदशीं॥ प्राप्यश्राद्धंतुकर्तव्यंमधुनापायसेनच॥ प्रजामिष्टांयशःस्वर्गमारोग्यंचधनं
तथा॥ नृणांश्राद्धेसदाप्रीताःप्रयच्छंतिपितामहाः॥ एतन्नित्यमपिपृथ्वीचंद्रोदये॥

विष्णुधर्मेपि प्रोष्ठपद्यामतीतायां तथा कृष्णत्रयोदशीमित्युक्त्वा। एतांस्तु श्राद्धकालान्वै
नित्यानाह प्रजापतिः॥ श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यत इत्युक्तेः। एतच्च विभक्तैर
पि पृथक्कार्यं॥ तथा च हेमाद्रौ विभक्ता वा विभक्ता वा कुर्युः श्राद्धं पृथक्सुताः॥ मघा
सु च ततोन्यत्र नाधिकारः पृथग्विधाविति॥ अपरार्के वायवीये। हंसे हस्तस्थिते या तु
मघायुक्ता त्रयोदशी॥ तिथिर्वैवस्वती नाम सा छाया कुंजरस्य तु॥ अत्र च॥ अपि नः स कुले भूयाद्यो
नो दद्यात्त्रयोदशीम्॥ पायसं मधुसर्पिर्भ्यां प्राक्छाये कुंजरस्य वेति विष्णु मनुवचने केवलत्रयो
दशीस्तुतेर्मघागुण इति कल्पतरुः। शूलपाणिस्तु केवलवाक्यानामर्थवादत्वाद्द्वयोर्मघायोग
स्तुतेर्विधिलाघवाद्विशिष्टमेव निमित्तमित्याह॥ वस्तुतस्तु। मधुमासेष्वयसा पायसेन च। एष नो
दास्यति श्राद्धं वर्षासु च मघासु चेति वसिष्ठवचने केवलमघास्तुतेर्विनिगमनाभावादुभयमपि भि
न्नं निमित्तं पूर्वोक्तवचनाच्च योगाधिके फलाधिक्यं अत एव याज्ञवल्क्यः। तथा वर्षात्रयोदश्यां
मघासु च विशेषत इति॥ त्रयोदशीश्राद्धं नित्यं काम्यं च॥ अत्र त्रयोदश्यां बहुपुत्रा युवमा
रिणस्तु भवंतीमा दर्शवोक्तेर्युवमारित्वमपत्यदोषः स हि स्मोरपत्यमात्रार्थिनः स्यान्नतु रोक्तध
नार्थिनो वाधिकार इति कल्पतरुः॥ अयमनिंद्यानर्थिनोनधिकारात्। फलांतरकामस्यैवाधि
कार इति हलायुधः। एतत्पिंडरहितं कार्यं मघायुक्तत्रयोदश्यां पिंडनिर्वपणं द्विजः। ससंतानो नै
व कुर्यान्नित्यं नैकवयोविदुरिति वृद्धपराशरोक्तेः॥ इदं मलमासेपि कार्यं॥ मघात्रयोदशीश्रा
द्धं तु यस्थितिहेतुकं। अनन्यगतिकत्वेन कर्तव्यं स्यान्मलिम्लुचे इति कालादर्शोक्तेः॥ यानि तु
अंगिराः॥ त्रयोदश्यां कृष्णपक्षे यः श्राद्धं कुरुते नरः। पंचत्वं तस्य जानीयाज्ज्येष्ठपुत्रस्य निश्चित
॥ वामनपुराणे॥ त्रयोदश्यां तु वै श्राद्धं न कुर्यात्पुत्रवान्गृहीत्यादिवचनानि॥ तानि पुत्रवद्विष
याणि वा महालयस्य भिन्नत्रयोदशीविषयाणि वा काम्यश्राद्धविषयाणि वा सपिंडकश्राद्धवि
षयाणि वेति केचित्॥ हेमाद्रिप्रमुखास्त्वेकवर्गश्राद्धविषयाणि॥ श्राद्धं नैवैकवर्गस्य त्रयोदश्यां सु
पक्रमेत्॥ न तृप्तास्तत्र ये यस्य प्रजां हिंसंति तस्य ते इति कार्ष्णाजिनिस्मृतेः॥ यद्यपि पितरो यत्र संज
ते तत्र मातामहा अपीति धौम्योक्तेर्न केवलपितृवर्गस्य प्राप्तिस्तथापि व्यामोहादिप्राप्तनिषेधोय
मित्याहुः॥ वयं तु पश्यामः॥ पुत्रवद्विषयाण्येवेति। असंतानस्तु यस्तस्य श्राद्धं प्रोक्तं त्रयोदशी॥ स
तानयुक्तो यः कुर्यात्तस्य वंशक्षयो भवेदिति॥ हेमाद्रौ नागरखंडोक्तेः॥ सर्ववाक्यमप्यसंतानस्यै
वैकवर्गनिषेधकमिति॥ अत्र मघात्रयोदशीमहालययुगादिश्राद्धानां तंत्रेण प्रयोगः॥ न तु प्रसं
गसिद्धिरित्यन्यत्र विस्तरः॥ अथ चतुर्दशी॥ पृथ्वीचंद्रोदये प्रचेताः
वृक्षारोहणलोहाद्यैर्विद्युज्जलविषाग्निभिः॥ नखिदंष्ट्रिविपन्नाये तेषां शस्ता चतुर्दशी॥ ब्राह्मे
॥ युवानः पितरो यस्य मृताः शस्त्रेण वा हताः॥ तेन कार्यं चतुर्दश्यां तेषां तृप्तिमभीप्सता॥ नाग
रखंडे॥ अपमृत्युर्भवेद्येषां शस्त्रमृत्युरथापि वा। श्राद्धं तेषां प्रकर्तव्यं चतुर्दश्यां नराधिप॥ ए
तच्च प्रायोनाशकशस्त्राग्निविषोदकोद्बंधनप्रपतनैः स्वेच्छानामिति॥ गौतमोक्तदुर्मरणोप
लक्षणं॥ एकयोगनिर्दिष्टानां सर्वेषां तुल्यधर्माणामेकस्यापि यदुच्यते॥ सर्वेषां तत्समं ज्ञेय

मेकरूपा हि ते स्मृता इत्युशनसोक्तेश्च तच्च कृतक्रियाणामेवेति वक्ष्यामः॥ मरीचिः॥ विषशस्त्रश्वापदादितिर्यग्ब्राह्मणघातिनां॥ चतुर्दश्यां क्रिया कार्या अन्येषां तु विगर्हिता॥ ब्राह्मणघातीति न हतो न तु ब्रह्महा॥ तस्य पतितत्वादिति शूलपाणिः॥ अत्रोद्देश्यविशेषणस्याविवक्षितत्वात्॥ स्त्रीणामपि शस्त्रादिहतानामेकोद्दिष्टं कार्यं न पार्वणमिति॥ श्रीदत्तोपाध्यायः इदं विषादिकहतानामेव न प्रसवादिमृतानामिति वाचस्पतिमिश्राः॥ यत्तु शाकटायनः॥ जलाग्निभ्यां विपन्नानां संन्यासे वा गृहे पिवा॥ श्राद्धं कुर्वीत तेषां वै वर्जयित्वा चतुर्दशीमिति॥ तत्प्रायश्चित्तार्थं जलादिमृतविषयमित्याकरे उक्तं॥ अत एव वैधत्वात्सहगमनेऽपि न कार्यमिति हेमाद्रिः॥ एतच्च देवयुक्तमेकोद्दिष्टं कार्यमित्युक्तं प्रयोगपारिजाते॥ तच्छ्राद्धं देवहीनं चेत्पुत्रदारधनक्षयः॥ प्रेतपक्षे चतुर्दश्यामेकोद्दिष्टविधानतः॥ दैवयुक्तं तु तच्छ्राद्धं पितॄणामक्षयं भवेत्॥ एकोद्दिष्टं दैवयुक्तमित्येवं मनुरब्रवीत्॥ भविष्येऽपि॥ समत्वमागतस्यापि पितुः शस्त्रहतस्य च॥ चतुर्दश्यां तु कर्त्तव्यमेकोद्दिष्टं महालये॥ चतुर्दश्यां तु यच्छ्राद्धं सपिंडीकरणे कृते॥ एकोद्दिष्टविधानेन तत्कार्यं शस्त्रघातिन इति संवत्सरप्रदीपे हारीतः॥ विश्वेदेवाश्च तत्रापि पूज्याः पित्र्यात्ततो मतात्। ये वै शस्त्रहतास्तेषां श्राद्धं कुर्यादतंद्रितः॥ अत्रैकोद्दिष्टवचनानां निर्मूलत्वं॥ समूलत्वेऽपि पार्वणशक्तपराणि विश्वादिवचनैः प्रकरणात्॥ कृष्णपक्षीयपार्वणावगतेरिति शूलपाणिः॥ तन्न॥ वाक्येन प्रकरणस्य बाधात्॥ पित्रादीनां पार्वणं भ्रात्रादीनामेकोद्दिष्टमिति गौडा ऊचुः॥ तन्न॥ पितुरित्यनेन विरोधात्। विशेषवाक्ये पर्यायापत्तेश्च॥ अत्र शस्त्रहतस्यैव चतुर्दश्यामिति नियमो न चतुर्दश्यामेव शस्त्रहतस्येति॥ श्राद्धं शस्त्रहतस्यैव चतुर्दश्यां महालये। पितामहोऽपि शस्त्रहतश्चेदेकोद्दिष्टद्वयं कार्यम्॥ तदुक्तं हेमाद्रौ स्मृत्यंतरे॥ एकस्मिन्द्वयोर्वैकोद्दिष्टमिति। त्रिषु शस्त्रहतेषु पार्वणमेव कार्यं। यत्तु देवस्वामिनोक्तं। त्रिष्वपि शस्त्रहतेषु पृथगेकोद्दिष्टत्रयं कार्यं न तु पार्वणमाहत्यवचनाभावादिति॥ तदयुक्तं॥ पित्रादयस्त्रयो यस्य शस्त्रैर्यातास्त्वनुक्रमात्। स भूतेऽपि पार्वणं कुर्यादाहिकानिष्ठपृथगिति वृद्धपराशरोक्तेः॥ एकस्मिन्वा द्वयोर्वापि पितृषु शस्त्रेणाहते॥ एकोद्दिष्टं सुतः कुर्यात्त्रयाणां दर्शवन्मृषेदिति। स्मृत्यंतराच्चेति पृथ्वीचंद्रोदये। उक्तं॥ अपरार्के हेमाद्रौ चैवं। यस्त्वत्रैव शस्त्रादिना हतस्तस्य वार्षिकमेव पार्वणमेकोद्दिष्टं वा कार्यम्॥ न तु श्राद्धद्वयं प्रसंगसिद्धेरिति पृथ्वीचंद्रोदये॥ अत्र श्राद्धाकरणेऽमापरपक्षे दिनांतरे पार्वणेनैव कार्यमिति तत्रैवोक्तं॥ यद्यपि शस्त्रविप्रहतानां च शृंगिदंष्ट्रिसरीसृपैः॥ आत्मनस्त्यागिनां चैव श्राद्धमेषां न कारयेदिति छागलेयाद्यैः॥ शस्त्रादिहतानां श्राद्धं निषिद्धं॥ तथापि प्रमादमृतानां श्राद्धार्हत्वात्कार्यम्॥ रुद्रादिभिन्नबुद्धिपूर्वमृतानां तु न कार्यं। यत्तु चतुर्दश्यां तर्पणीयास्तु पिंडोदकक्रिया॥ इति ब्राह्मे तद्द्रोणामिति शूलपाणिः॥ लक्षणायां मानाभावात्पतितेनापि कर्तव्यं कर्तव्यं पतितस्य चेति गयादिवद्विशेषविधिबलात्पतितानामपि कार्यमिति तत्त्व गौडाः॥ तत्त्वं तु समत्वमागतस्येत्यादिवशात्कृतक्रियाणां कार्यं नान्येषामिति वयं प्रतीमः॥ यत्तु मनुः॥ नयेनृपज्ञियो होमो लौकिकाग्नौ वि

धीयते॥नदर्शेनविनाश्राद्धमाहिताग्नेर्विधीयतेइति॥अत्रदर्शोहेतुत्वेनोक्तः॥तथयाक्रतमेवमन्मतेइष्टीचंद्रोदयः॥आहिताग्नेःपिंडपितृयज्ञकल्पेन॥श्राद्धनिषेधार्थमिदंनतुसंक्रान्त्यादेरपास्तस्तद्व॥कृष्णपक्षश्राद्धमन्यदिनेषुप्राप्तमाहिताग्नेर्दर्शेनियम्यतेइतितुवयं॥दर्शेनयागेणेनविनाश्राद्धंन॥तेनकापिवार्धिकादावेकोद्दिष्टंनेतिहरिहरः॥ इतिचतुर्दशी॥ अमायांविशेषमाह॥अयनार्कर्क्षयमः॥हस्तेकरस्थितेयातुअमावास्याकरान्विता॥सोज्ञेयाकुंजरच्छायाइतिबौधायनोब्रवीत्॥वनस्पतिगतेसोमेयाछायाप्राङ्मुखीभवेत्॥गजच्छायातुसाप्रोक्तातस्यांश्राद्धंप्रकल्पयेत्॥भारते॥अजेनसर्वलोहेनवर्षासुनियतव्रतः॥हस्तिच्छायासुविधिवत्कर्णव्यजनवीजितं॥श्राद्धंदद्यादितिशेषः॥आश्विनशुक्लप्रतिपदिदौहित्रस्यमातामहश्राद्धमुक्तंहेमाद्रौसंग्रहेच॥जातमात्रोपिदौहित्रोविद्यमानेपिमातुले॥कुर्यान्मातामहश्राद्धंप्रतिपद्याश्विनेसितेइति॥इयंसंगवव्यापिनीग्राह्येतिनिर्णयदीपेउक्तं॥प्रतिपद्याश्विनेशुक्लदौहित्रस्त्वेकपार्वणं॥श्राद्धंमातामहंकुर्यात्सपितासंगवेसदा॥जातमात्रोपिदौहित्रोजीवत्यपिचमातुले॥प्रातःसंगवयोर्मध्येयाचयुक्प्रतिपद्भवेत्॥ इतिवचनात्॥ अत्रसमूलत्वंविमृश्यं॥इदंचमलमासेनकार्यं॥स्पष्टमासविशेषाख्याविहितंवर्जयेन्मलेइतिनिषेधात्॥इदंजीवत्पितृकेणैवकार्यमितिशिष्टाः॥इदंचशिष्टाचारात्सपिंडंकार्यमितिकेचित्॥पिंडरहितंतुयुक्तं॥जीवत्पितृकस्य॥मुंडनंपिंडदानंचप्रेतकर्मचसर्वशः॥नजीवत्पितृकःकुर्याद्गुर्विणीपतिरेवचेतिनिक्षेणापिंडनिषेधात्॥आन्वष्टक्यवद्विशेषवचनाभावाच्चेतिसंक्षेपः॥ ० ॥इतिकमलाकरभट्टकृतेनिर्णयसिंधौमहालयनिर्णयः॥० अथाश्विनशुक्लप्रतिप-

दिनवरात्रारंभस्तन्निर्णयः॥तत्रभार्गवार्चनदीपिकायांदेवीपुराणे॥सुमेधाउवाच॥शृणुराजन्प्रवक्ष्यामिचंडिकापूजनक्रमं॥आश्विनस्यसितेपक्षेप्रतिपच्छुभेदिने॥इत्युपक्रम्योक्तं॥शुद्धेतिथौप्रकर्तव्यंप्रतिपच्चोर्ध्वगामिनी॥आद्यास्तुनाडिकास्त्यक्त्वाषोडशद्वादशापिवा॥अपराह्णेचकर्तव्यंशुद्धसंततिकांक्षिभिः॥इदंचापराह्णेयोगिमाप्राशस्त्यद्वितीयदिनेप्रतिपदोऽभावेज्ञेयं॥तथातत्रैवदेवीपुराणेडामरतंत्रेचदेवीवचः॥अमायुक्तानकर्तव्याप्रतिपत्पूजनेमम॥मुहूर्तमात्राकर्तव्याद्वितीयादिगुणान्विता॥आद्याःषोडशनाडीस्तुलब्ध्वायःकुरुतेनरः॥कलशस्थापनंतत्रह्यरिष्टंजायतेध्रुवं॥मार्कंडेयदेवीपुराणयोः॥पूर्वविद्धातुयाशुक्लाभवेत्प्रतिपदाश्विनी॥नवरात्रव्रतंतस्यांनकार्यंशुभमिच्छता॥देशभंगोभवेत्तत्रदुर्भिक्षंचोपजायते॥नंदायांदर्शयुक्तायांयत्रस्यान्ममपूजनमिति॥स्कांदेपि॥प्रतिपद्याश्विनेमासिसाशुद्धाशुभदाभवेत्॥भाद्रेयंचदर्शीकस्मात्तयायुक्तानशस्यते॥विरुद्धफलदासाहिपुत्रदारभयावहेति॥तथा॥वर्जनीयाप्रयत्नेनअमायुक्तातुपार्थिव॥द्वितीयादिगुणैर्युक्ताप्रतिपत्सर्वकामदा॥तथादेवीपुराणे॥योमांपूजयतेनित्यं

द्वितीयादिगुणान्वितां॥प्रतिपच्छारदीं ज्ञात्वा सोश्नुते सुखमव्ययं॥यदिकुर्यादमायुक्तप्रतिपत्
स्थापनं मम॥तस्य शाम्यापुत्रं दत्त्वा भस्मशेषं करोम्यहं॥आग्रहात्कुरुते यस्तु कलशस्थापनं म
तस्य संपद्विनाशः स्यात्क्षेत्रं पुत्रो विनश्यति॥अमायुक्ता न कर्तव्या प्रतिपच्चंडिकार्चने॥धना
भिर्विशेषेण वंशहानिश्च जायते॥न दर्शकलया युक्ता प्रतिपच्चंडिकार्चने॥उदये द्विमुहूर्त्तापि ग्
ग्राह्या सोदयगामिनीति॥देवीपुराणे॥या चाश्वयुजिमासे स्यात्प्रतिपद्भद्रयान्विता॥शुद्धा ममार्च
स्यां शतयज्ञफलप्रदं॥रुद्रयामले॥अमायुक्ता सदा चैव प्रतिपन्निंदिता मता॥तत्र चेत्स्थापयेत्कुं
भं दुर्भिक्षं जायते ध्रुवं॥प्रतिपत्सद्वितीया तु कुंभारोपणकर्मणीति॥यद्यपि रुद्रयामलडामरं
निर्मूलं तथाप्यविरोधात्प्रचाराच्च तद्वचनानि लिख्यंते॥तिथितत्त्वे देवीपुराणेपि॥प्रातरावाह
देवीं प्रातरेव प्रवेशयेत्॥प्रातःप्रातश्च संपूज्य प्रातरेव विसर्जयेत्॥तत्रैव॥शरत्काले महापूजा क्रि
यते या च वार्षिकी॥सा कार्योदयगामिन्यां न तत्र तिथियुग्मता॥तथा॥कुहूकालोपसंयुक्तां वर्ज
प्रतिपत्तिथिं॥राज्यनाशाय सा प्रोक्ता निंदिता चाश्वपूजने इति॥एषु वचनेषु कलशस्थापनस्य ग्र
हणात् तदेव प्रथमे दिने निषिध्यते न तूपवासादि। तस्य प्रतिपद्यप्यमावास्येति युग्मवाक्यात्॥यु
क्ता स्यात्प्रतिपत्तिथिः प्रथमेतरतिथिदीपिकोक्तेः॥शुक्लपक्षे दर्शविद्धेति माधवोक्तेश्च॥परदिने प्र
मस्य बाधे मानाभावादिति केचित् वस्तुतस्तु॥पूर्वोक्तवाक्येषु चंडिकार्चनपूजनग्रहणात्तु प्र
सादेश्चांगत्वात् प्रधानदेवीपूजायाश्च परे निषेधात्तद्युक्तं॥कलशस्थापनग्रहणं तूपलक्षणम्॥अत
एव देवलः॥व्रतोपवासनियमे घटिकैकापि या भवेत्॥सा तिथिस्तद्दिने पूज्या विपरीता तु पैतृके इ
ति॥अत्र घटिकामुहूर्त्तपरेति गौडाः॥यदा तु पूर्वदिने संपूर्णा शुद्धा च भूत्वा परदिने वर्द्धते तदा संपूर्ण
त्वाद्दर्शायोगाभावाच्च पूर्वैव॥यानि च द्वितीयायोगनिषेधकानि वचनानि केचित्पठंति तान्यपि शुद्धा
धिकनिषेधपराणि परदिने॥प्रतिपदो मंत्रास्तत्वे तु दर्शयुतापि पूर्वैव ग्राह्या॥तदाह लल्लः॥तिथि
शरीरं तिथिरेव कारणं तिथिः प्रमाणं तिथिरेव साधनमिति॥यानि त्वमायुक्ता न कर्तव्येत्यादी
नि नृसिंहप्रसादे वचनानि तानि समूलत्वे सत्येतद्विषयाणि॥अत्रेदं तत्वम्॥पूर्वोक्तसर्ववाक्यानां
हेमाद्र्याद्यलिखितत्वेन निर्मूलत्वान्माधवनिर्णयस्यानुक्तेः सामान्यनिर्णयात्पूर्वैव ग्राह्यापि गौ
डनिबंधेषु॥विशेषनिर्णयादौदयिकी ग्राह्या तत्रापि घटिकैकेत्यस्य द्विमुहूर्त्तस्तु नित्योक्ते द्विमुहूर्त्ता
ग्राह्या॥उदिते दैवतं भानावित्यत्र द्विमुहूर्त्ता त्रिरह्नश्चेति चौदयिका द्विमुहूर्त्तत्वनियमात्॥तेन
उदये द्विमुहूर्त्तापीत्याद्यनुसारोपि॥मुहूर्त्तमात्रा कर्तव्येति तु द्विमुहूर्त्तस्तुतिः॥अन्यथा द्विमुहूर्त्त
विधिवैयर्थ्यात्॥केचित्तु मुहूर्त्तमात्रेति वचनात्॥ततो न्यूनत्वे परेत्याहुः॥गौडास्त्वेवम्॥
अत्र देवीपूजैव प्रधानं उपवासादि त्वंगं॥अष्टम्यां च नवम्यां च जगन्मातरमंबिकां॥पूजयि
त्वाश्विने मासि विशोको जायते नर इति हेमाद्रौ भविष्ये तस्या एव फलसंबंधात्॥नवमी तिथि
पर्यंतं वृद्ध्या पूजाजपादिकमिति तत्रैव देवीपुराणात्॥शरत्काले महापूजा क्रियते या च वार्षि
कीति मार्कंडेयपुराणाच्च॥पूर्ववचनादष्टमीनवमीपूजैव प्रधानमन्यत्सर्वमंगमिति गौडाः॥
एकाहपक्षोपि देवीपुराणे॥यस्त्वेकस्यामथाष्टम्यां नवम्यामथ साधकः॥पूजयेद्वरदां देवीं

महाविभवविस्तरैरिति॥तत्वंतुराजसूयेनयागेः॥समप्रधानायाःसहितात्र्यम्बकेष्टेरेनयान्वाधाका
मंयाजयेदित्येकत्वान्मध्येविधानाच्चयथाफलार्थोवहिःप्रयोगस्तथात्रनवरात्रमध्यस्थामाष्ट-
म्यानवम्यावाफलार्थःपृथक्प्रयोगः॥रूपनारायणधृतदेवीपुराणे॥महानवम्यांपूजेयंसर्वका
मप्रदायिका॥सर्वेषुवत्सवर्गेषुनवभक्त्याप्रकीर्त्तिता॥कृत्वाप्नोतियशोराज्यंपुत्रायुर्धनसंपदः॥
साचकाम्यानित्याच॥एवमन्यैरपितदादेव्याःकार्य्यंप्रपूजनम्॥विभूतिमतुलांलब्धुंचतुर्वर्गप्रदाय
कमिति॥योमोहादथवालस्याद्देवींदुर्गांमहोत्सवे॥नपूजयतिदंभाद्वाद्वेषाद्वाप्यथभैरव॥क्रु-
द्धाभगवतीतस्यकामानिष्टान्निहंतिवैइति॥कालिकापुराणेफलनिंदाश्रुतेः॥वर्षेवर्षेविधात
व्यंस्थापनंचविसर्जनमितितिथितत्वेदेवीपुराणाच्च॥अत्रोपवासादिकमुक्तंहेमाद्रौभविष्ये
॥एवंचविंध्यवासिनींनवरात्रोपवासतः॥एकभक्तेननक्तेनतथैवायाचितेनच॥पूजनीयाज
नैर्देवीस्थानेस्थानेपुरेपुरे॥गृहेगृहेशक्तिपरैर्ग्रामेग्रामेवनेवने॥स्नातैःप्रमुदितैर्हृष्टैर्ब्राह्म-
णैःक्षत्रियैर्नृपैः॥वैश्यैःशूद्रैर्भक्तियुक्तैर्म्लेच्छैरन्यैश्चमानवैरिति॥यत्तु॥रूपनारायणीयेभवि
ष्ये॥एवंनानाम्लेच्छगणैःपूज्यतेसर्वदस्युभिरिति॥तत्तामसपूजापरमिति॥विनामंत्रैस्तामस-
सीस्यात्किरातानांतुसम्मतेतितत्रैवोक्तेः॥मदनरत्नेदेवीपुराणेपि॥कन्यासंस्थेरवौशक्रशुक्ला
मारभ्यनंदिकाम्॥अयाचीत्वथवैकाशीनक्ताशीवाथवाब्दः॥भूमौशयीतचामंत्र्यकुमारीर्भो
जयेन्मुदा॥वस्त्रालंकारदानैश्चसंतोष्याःप्रतिवासरं॥वलिंचप्रत्यहंदद्यादोदनंमांससमाषव
त्॥त्रिकालंपूजयेद्देवींजपस्तोत्रपरायणइति॥नंदिकाप्रतिपदितिमैथिलाः॥षष्ठीतिगौडाः॥
तत्रपूजनंरात्रौकार्यं॥आश्विनेमासिमेघांतेमहिषासुरमर्दिनी॥निशासुपूजयेद्भक्त्यासोपवा
सादिकःक्रमादितिदेवीपुराणात्॥संग्रहेपि॥आश्विनेमासिमेघांतेप्रतिपद्यातिथिर्भवेत्॥
तस्यांनक्तंप्रकुर्वीतरात्रौदेवींप्रपूजयेत्॥रात्रिरूपायतोदेवीदिवारूपोमहेश्वरः॥रात्रिव्रतमि
दंदेविसर्वपापप्रणाशनं॥सर्वकामप्रदंनृणांसर्वशत्रुनिवर्हणं॥रात्रिव्रतमिदंतस्माद्रात्रौकर्म
म्तेष्यते॥नक्तव्रतमिदंयस्मात्तथानक्तेगतिरित्यादिवचनाच्च॥रात्रिव्रतमेवाभिप्रेत्यमाध
वेनोक्तंतस्यनक्तव्रतत्वादिति॥ननुरात्रिभोजनादिति।नतु।मासिचाश्वयुजेशुक्लेनवरात्रे
विशेषतः॥संपूज्यनवदुर्गांचनक्तंकुर्यात्समाहितः॥नवरात्राभिधंकर्मनक्तव्रतमिदंस्मृतं।
आरंभेनवरात्रस्येत्यादिस्कांदात्॥माधवोक्तेश्चनक्तमेवप्रधानमितिचेत्।ननवरात्रोपवास
तदस्मादेरनुपपत्तेः॥नचपाक्षिकनक्तानुवादोयं॥नित्यानित्यसंयोगविरोधात्॥नह्यग्निहोत्रे
दशमपक्षेमास्यदध्नाजुहोतीत्यस्येंद्रियकामहोमेनुवादोघटते।नित्यवदनुवादायोगादित्यु
क्तंवार्त्तिके।तथात्रापि।तेनात्रतद्वदेवगुणात्फलमितिज्ञेयम्॥ननुरात्रेःकर्मकालत्वेतद्व्या
पिनीपूर्वैवप्रतिपत्प्राप्नुयात्।मैवं॥न्यायतःप्राप्तावपिपूर्वोक्तवचनैर्बाधात्॥यथापूर्वेद्युःक
र्मकालव्यापिनीमपित्यक्त्वाखल्पापिपरैव रामनवमीतिप्रागुक्तं० य
थावानिशीथेसतीमपिपूर्वांजन्माष्टमींत्यक्त्वारोहिणीयुक्तापरैवेतिमाधवेनोक्तंतथात्रा
पिवस्तुतस्तु॥रात्रेःकर्मकालत्ववचसांहेमाद्र्याद्यलिखनात्समूलत्वंविमृश्यमेवत्रिका।

लेप्रजयेदित्यादिपूर्वविरोधाच्च॥माधवोऽपिस्तुपाक्षिकनक्तानुवादस्तुक्तस्तस्मात्सर्वपक्षेषुप्रथमैव
प्रतिपदितिसिद्धं॥अत्रकेचिन्नवरात्रशब्दोनवाहोरात्रपरःरद्धौसमाप्तिरष्टम्यांह्रासेमाप्रति
पन्निशि॥प्रारंभोनवचंद्रस्तुनवरात्रमतोर्थवदिति॥देवीपुराणादिमाहुः॥तन्न॥अतिह्रा
सवृद्ध्योरन्नाधिक्यत्वापत्तेः॥अत्रमूलाभावाच्चतेनतिथिवाच्येवायम्॥तदुक्तम्॥तिथिवृ
द्धौतिथिह्रासेनवरात्रमपार्थकं॥अष्टरात्रेनदोषोयंनवरात्रतिथिक्षयेइति॥सचनवरात्र
शब्दःकचित्सगणकर्मवाची॥यथाप्रारंभोनवरात्रस्येत्यत्रेतिदिक्॥प्रतिपदिचवैधृ
त्यादियोगनिषेधोभार्गवार्चनदीपिकायां॥देवीपुराणे॥त्वाष्ट्रवैधृतियुक्ताचेत्प्रतिपच्चं
डिकार्चने॥तयोरंतेविधातव्यंकलशारोपणंगृहे॥इति॥चित्रावैधृतियुक्तापिद्वितीयायुता
चेत्सैवग्राह्येत्युक्तंदुर्गोत्सवे॥भद्रान्वितोचेत्प्रतिपन्नलभ्यतेविरुद्धयोगैरपिसंगतास
ती॥सैवापराह्नेविबुधैर्विधेयाश्रीपुत्रराज्यादिविवृद्धिहेतुरिति॥यदातुवैधृत्यादिपरिहारेण
प्रतिपन्नलभ्यतेतदोक्तंतत्रैवकात्यायनेन॥प्रतिपद्याश्विनेमासिभवोवैधृतिचित्रयोः॥आ
द्यपादौपरित्यज्यप्रारंभेन्नवरात्रकमिति॥भविष्येपि॥चित्रावैधृतिसंपूर्णाप्रतिपच्चेद्भवेन्नृप
त्याज्यांशौपशास्त्रयस्त्वाद्यास्तुरीयांशेतुपूजनमितिरुद्रयामलेपि॥वैधृतौपुत्रनाशःस्याच्चित्रा
यांधननाशनं॥तस्मान्नस्थापयेत्कुंभंचित्रायांवैधृतौतथा॥संपूर्णाप्रतिपद्येवचित्रायुक्ता
यदाभवेत्॥वैधृत्यावापियुक्तास्यात्तदामध्यंदिनेरवौ॥अभिजित्तुमुहूर्तेयत्तत्रस्थापनमि
ष्यतेइति॥चित्रादिनिषेधेमूलंचिंत्यं॥इदंकलशस्थापनंरात्रौनकार्यं॥नरात्रौस्थापनं
कार्यंनचकुंभाभिषेचनमितिमात्स्योक्तेः॥भास्करोदयमारभ्ययावत्तुदशनाडिकाः॥प्रातः
कालइतिप्रोक्तःस्थापनारोपणादिषु॥इतिविष्णुधर्मोक्तेश्च॥रुद्रयामले॥स्नानंमांगलिकं
कृत्वाततोदेवींप्रपूजयेत्॥शुभाभिर्मृत्तिकाभिश्चपूर्वंकृत्वातुवेदिकां॥यवान्वैवापयेत्तत्र
गोधूमैश्चापिसंयुतान्॥तत्रसंस्थापयेत्कुंभंविधिनामंत्रपूर्वकं॥सौवर्णंराजतंवापिताम्रं
मृण्मयजंतुवेति॥० अथपूजाविधिः॥० साचजयंतीमंत्रेणनाम
मंत्रेणवाकार्या॥तदुक्तंदुर्गाभक्तितरंगिण्यांदेवीपुराणे॥कुर्यादष्टाक्षमंत्रेणपूजां
क्षीरघृतादिभिरित्युक्त्वा॥जयंतीमंगलाकालीभद्रकालीकपालिनी॥दुर्गाक्षमाशिवा
धात्रीस्वधास्वाहानमोस्तुते॥अनेनैवतुमंत्रेणजपहोमौतुकारयेदिति॥ॐदुर्गेदुर्गेर
क्षिणिस्वाहेतिनवाक्षरः॥तत्रप्रतिपदिप्रातरभ्यंगंकृत्वादेशकालौसंकीर्त्यममेहजन्म
निदुर्गाप्रीतिद्वारासर्वापच्छांतिपूर्वकदीर्घायुर्विपुलधनपुत्रपौत्राद्यनवच्छिन्नसंततिवृ
द्धिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयसदभीष्टसिद्ध्यर्थंशारदनवरात्रप्रतिपदिविहितक
लशस्थापनदुर्गापूजाकुमारीपूजादिकरिष्येइतिसंकल्प्यमहीद्यौरितिभूमिंस्पृष्ट्वाओषध
यःसमितियवान्निक्षिप्याकलशेत्याक्रमितिकुंभंसंस्थाप्यइमंमेगंगेइतिजलेनापूर्यगंधद्वा
रामितिगंधंयाओषधीरितिसर्वौषधीः॥कांडात्कांडादितिदूर्वाः॥अश्वत्थेवइतिपंचपल्ल
वाः॥स्योनापृथिवीतिसप्तमृदः॥याफलिनीरितिफलं॥सहिरत्नानीतिपंचरत्नानि

हिरण्यंचक्षिप्त्वापुष्पाणिवासार्तिवस्त्रेणावेष्ट्य।पूर्णादर्वीतिपूर्णपात्रंनिधाय।तत्रवरुणं
संपूज्यजीर्णायांनूतनायांवाप्रतिमायांदुर्गामावाह्यपूजयेत्।।तद्यथा।।पूर्वोक्तमंत्रमुक्त्वा
आगच्छवरदेदेविदैत्यदर्पनिषूदिनि।।पूजांगृहाणसुमुखिनमस्तेशंकरप्रिये।सर्वतीर्थम
यंवारिसर्वदेवसमन्वितं।।इमंघटंसमागच्छतिष्ठदेवगणैःसह।।दुर्गेदेविसमागच्छसा
न्निध्यमिहकल्पय।।बलिंपूजांगृहाणत्वमष्टाभिःशक्तिभिःसहेत्यावाह्यपूर्वोक्तमंत्रेण
षोडशोपचारैःपूजयित्वामाषभक्तबलिंकूष्मांडादिबलिंवानिवेदयेत्।।ततःकुमारीपू
जातदुक्तंहेमाद्रौस्कांदे।।एकैकांपूजयेत्कन्यामेकवृद्ध्यातथैवच।।द्विगुणंत्रिगुणंवापिप्र
त्येकंनवकंतुवा।।तथा।।नवभिर्लभतेभूमिमैश्वर्यंद्विगुणेनतु।।एकवृद्ध्यालभेत्क्षेम
कैकेनश्रियंलभेत्।एकवर्षातुयाकन्यापूजार्थेतांविवर्जयेत्।।गंधपुष्पफलादीनांप्री
तिस्तस्यानविद्यते।तेनद्विवर्षमारभ्य।।दशवर्षपर्यंता।एवंपूज्या।नत्वमाः।तासांचक्रमे
णकुमारिकात्रिमूर्त्तिः।कल्याणीरोहिणीकालीचंडिकाशांभवीदुर्गासुभद्रेतिनामभिः
पूजाकार्या।।आसांचप्रत्येकंपूजामंत्राःफलविशेषाश्चतत्रैवज्ञेयाः।।सामान्यतस्तुमंत्रा
क्षरमयींलक्ष्मींमातृणांरूपधारिणीम्।।नवदुर्गात्मिकांसाक्षात्कन्यामावाहयाम्यहं।।
एवमभ्यर्चनंकुर्यात्कुमारीणांप्रयत्नतः।।कंचुकैश्चैववस्त्रैश्चगंधपुष्पाक्षतादिभिः।।
नानाविधैर्भक्ष्यभोज्यैर्भोजयेत्पायसादिभिः।।तथा।ग्रंथिस्फुटितशीर्णांगीरक्तपूयव्र
णांकिताम्।।जात्यंधांकेकरांकाणींकुरूपांतनुरोमशां।संत्यजेद्रोगिणींकन्यांदासीगर्भ
समुद्भवां।तथा।ब्राह्मणींसर्वकार्येषुजयार्थेनृपवंशजां।।लाभार्थेवैश्यवंशोत्थांसुता
र्थेशूद्रवंशजां।।दारुणेचांत्यजातानांपूजयेद्विधिनानरः।।इति।।अत्रवेदपारायणम
प्युक्तंरुद्रयामले।।एवंचतुर्वेदविदोविप्रान्सर्वान्प्रसादयेत्।।तेषांचवरणंकार्यंवेदपा
रायणायवैइति।।तथा।।एकोत्तराभिवृद्ध्यातुनवमीयावदेवहि।।चंडीपाठंजपेच्चैवजा
पयेद्वाविधानतः।।तिथितत्त्वेवाराहीतंत्रे।।प्रणवंचादितोजप्त्वास्तोत्रंवासंहितांपठेत्।।
अंतेचप्रणवंदद्यादित्युवाचादिपूरुषः।।आधारेस्थापयित्वातुपुस्तकंप्रजपेत्सुधीः।।ह
स्तसंस्थापनाद्देवयस्माद्विफलंभवेत्।।स्वयंवलिखितंयच्चशूद्रेणलिखितंभवेत्।।अ
ब्राह्मणेनलिखितंतच्चापिविफलंभवेत्।।ऋषिच्छंदादिकंन्यस्यपठेत्स्तोत्रंविचक्षणः
स्तोत्रेनदृश्यतेयत्रप्रणवंतत्रविन्यसेत्।।सर्वत्रपाठोविज्ञेयस्त्वन्यथाविफलंभवेत्।।ए
वंनवमीपर्यंतंप्रत्यहंप्रत्यहंकुर्यात्।।अत्रविशेषोहेमाद्रौदेवीपुराणे।।यदाद्येदिवसेकु
र्याच्चंडिकापूजनादिकं।।द्विगुणंतद्द्वितीयेह्नित्रिगुणंतत्परेहनि।।नवमीतिथिपर्यंतंवृ
द्ध्यापूजनादिकं।।द्विगुणास्तद्द्वितीयेह्नित्रिगुणंतत्परेहनि।।नवमीतिथिपर्यंतंवृद्ध्यापूजाज
पादिकमिति।।एतेननवरात्रेपूजैवप्रधानं।।उपवासादित्वंगमितिगम्यते।।तिथिह्रासेतुति
थिद्वयनिमित्तंपूजादिमहालयश्राद्धवदेकदिनेआवृत्त्याकार्य्या।।वृद्धौतद्देवावृत्तिः।।ग
तोनवरात्रोपवासादिसंकल्पंकुर्यात्।।स्वस्याशक्तावन्येनवापूजादिकारयेत्।।स्वयं

ष्यन्तोवापिपूजयेत्पूजयीतवेति।तरंगिण्यांदेवीपुराणात्॥इदंचदेवीपूजनंशुक्रास्तादावपिका
र्यं।तदुक्तंधर्मप्रदीपे॥नष्टेशुक्रेतथाजीवेसिंहस्थेचबृहस्पतौ॥कार्य्याचैवस्वदेव्यर्चाप्रत्यब्दं
कुलधर्मतइति॥मलमासेवचनाभावान्नभवति॥अत्राश्वपूजनमुक्तंमदनरत्नेदेवी
पुराणे॥आश्वयुक्शुक्लप्रतिपत्स्वातियोगेशुभेदिने॥पूर्वमुच्चैःश्रवानामप्रथमंश्रियमाहर
त्॥तस्मात्तत्साश्वैर्नरैस्तत्रपूज्योसोश्वइत्यामह॥पूजनीयाश्चतुरगानवमींयावदेवहि॥शांतिः
स्वस्त्ययनंकार्य्यंतदातेषांदिनेदिने॥धान्यंभक्तान्नकंकुष्ठंचासिद्धार्थकास्तथा॥पंचवर्णेन
सूत्रेणग्रथितेषांतुबंधयेत्॥वायव्यैर्वारुणैःसौरैःशाक्रैर्मंत्रैःसवैष्णवैः॥वैश्वदेवैस्तथाग्नेयै
र्होमःकार्य्योदिनेदिने॥कल्पतरौत्वेतद्ग्रंथेन्यदपि॥ज्येष्ठायोगेपुरातत्रगजाश्चाष्टौमहाबलाः॥
पृथिवीमवहन्पूर्वंसशैलवनकाननां॥कुमुदैरावतौपद्मःपुष्पदंतोथवामनः॥सुप्रतीको
ञ्जनोनीलस्तस्मात्तांस्तत्रपूजयेत्॥शाक्राद्दृष्टामारभ्यनवम्यांतचपूर्ववत्॥अश्ववद्गोमाहीस
र्थः॥० अथप्रतिपदादिषुविशेषोदुर्गाभक्तितरंगिण्यांभविष्ये॥ केशसंस्का
रद्रव्याणिप्रदद्यात्प्रतिपद्दिने॥पक्वतैलंद्वितीयायांकेशसंयमहेतवे॥पट्टडोरमितिगौडपाठः॥
दर्पणंचतृतीयायांसिंदूरालक्तकंतथा॥मधुपर्कंचतुर्थ्यांतुतिलकंनेत्रमंडनम् पंचम्यामंग
रागंचशक्त्यालंकरणानिच॥षष्ठ्यांविल्वतरौबोधंसायंसंध्यासुकारयेत्।सप्तम्यांप्रातरानीय
गृहमध्येप्रपूजयेत्।उपोषणंमथाष्टम्यामात्मशक्त्यातुपूजनं॥नवम्यामुग्रचंडायाःपूजांकु
र्य्याद्बलिंतथा॥संपूज्यप्रेषणंकुर्य्याद्दशम्यांसावरोत्सवैः॥अनेनविधिनायस्तुदेवींप्रीणाय
तेनरः॥स्कंदवत्पालयेद्देवीतंपुत्रधनकीर्त्तिभिः॥कल्पतरावर्णवेलिंगे॥कन्यायांकृष्णपक्षेतु
पूजयित्वार्द्रभेपिवा॥नवम्यांबोधयेद्देवींमहाविभवविस्तरैः॥शुक्लपक्षचतुर्थ्यांतुदेवीकेश
विमोक्षणं॥प्रातरेवतुपंचम्यांस्नापयेत्सुशुभैर्जलैः॥षष्ठ्यांसायंप्रकुर्वीतविल्ववृक्षेधिवास
नं॥सप्तम्यांपत्रिकापूजाअष्टम्यांचाप्युपोषणं॥पूजाचजागरश्चैवनवम्यांविधिवद्बलिः॥
विसर्जनंदशम्यांतुक्रीडाकौतुकमंगलैः॥अत्रनवम्यांबोधनासामर्थ्येषष्ठ्यांबोधनमिति
स्मार्त्ताः॥फलभूमार्थिनःसमुच्चयइत्यन्ये॥नवम्यांमंत्रःकालिकापुराणे॥इषेमास्यसितेप
क्षेनवम्यामार्द्रभेपिवा॥श्रीवृक्षेबोधयामित्वांयावत्पूजांकरोम्यहम्॥अत्रस्त्रीव्रतेविशेषः॥
अथशौचेविशेषोनिर्णयामृतेविश्वरूपनिबंधे॥आश्विनेशुक्ल
पक्षेतुप्रारब्धेनवरात्रके॥शावाशौचेसमुत्पन्नेक्रियाकार्याकथंबुधैः॥सूतकेवर्त्तमानेच
तत्रोत्पन्नेसदाबुधैः।देवीपूजाप्रकर्त्तव्यापशुयज्ञविधानतः॥सूतकेपूजनंप्रोक्तंदानंचैववि
शेषतः॥देवीमुद्दिश्यकर्त्तव्यंतत्रदोषोनविद्यते॥इति।कालादर्शेविष्णुरहस्येपि॥पूर्वसंक
ल्पितंयच्चव्रतंसुनियतव्रतैः।तत्कर्त्तव्यंनरैःशुद्धंदानार्चनविवर्जितमिति॥गौडनिबंधेति
थितत्त्वेप्युक्तं॥आश्विनकृष्णनवम्यादिशुक्लप्रतिपदादिषष्ठ्यादिसप्तम्यादिकैकंकर्म्मआ
रब्धमध्येआशौचपातेपिनदोषःसंकल्पोव्रतसत्रयोरिति।विष्णूक्तेरिति॥आरब्धंस्वयमेव
कार्यं।अनारब्धंत्वन्येनकारयेदितिदिवोदासः॥रजस्वलात्वन्येनकारयेत्।सूतकादिवद्।

हिरण्यं च क्षिप्त्वा पुत्रवासुवासारनि वस्त्रेणावेष्ट्य। पूर्णादर्वीति पूर्णपात्रं निधाय। तत्र वरुणं
संपूज्य जीर्णायां नूतनायां वा प्रतिमायां दुर्गामावाह्य पूजयेत्॥ तद्यथा॥ पूर्वोक्तं मंत्रमुक्त्वा
आगच्छ वरदे देवि दैत्यदर्पनिषूदनि॥ पूजां गृहाण सुमुखि नमस्ते शंकरप्रिये॥ सर्वतीर्थम
यं वारि सर्वदेवसमन्वितं॥ इमं घटं समागच्छ तिष्ठ देवगणैः सह॥ दुर्गे देवि समागच्छ सा
न्निध्यमिह कल्पय॥ बलिं पूजां गृहाण त्वमष्टाभिः शक्तिभिः सह॥ इत्यावाह्य पूर्वोक्तमंत्रेण
षोडशोपचारैः पूजयित्वा माषभक्तबलिं कूष्मांडादिबलिं वा निवेदयेत्॥ ततः कुमारीपू
जा तदुक्तं हेमाद्रौ स्कांदे॥ एकैकां पूजयेत्कन्यामेकवृद्ध्या तथैव च॥ द्विगुणं त्रिगुणं वा पि प्र
त्येकं नवकं तु वा॥ तथा॥ नवभिर्लभते भूमिमैश्वर्यं द्विगुणेन तु॥ एकवृद्ध्या लभेत्क्षेम
मेकैकेन श्रियं लभेत्॥ एकवर्षा तु या कन्या पूजार्थं तां विवर्जयेत्॥ गंधपुष्पफलादीनां प्री
तिस्तस्या न विद्यते॥ तेन द्विवर्षमारभ्य॥ दशवर्षपर्यंता एव पूज्या इत्यर्थः॥ तासां च क्रमे
ण कुमारिका त्रिमूर्तिः। कल्याणी रोहिणी काली चंडिका शांभवी दुर्गा सुभद्रेति नामभिः
पूजा कार्या॥ आसां च प्रत्येकं पूजामंत्राः फलविशेषाश्च तत्रैव ज्ञेयाः॥ सामान्यतस्तु मंत्रा
क्षरमयीं लक्ष्मीं मातृणां रूपधारिणीम्॥ नवदुर्गात्मिकां साक्षात्कन्यामावाहयाम्यहं॥
एवमभ्यर्चनं कुर्यात्कुमारीणां प्रयत्नतः॥ कंचुकैश्चैव वस्त्रैश्च गंधपुष्पाक्षतादिभिः॥
नानाविधैर्भक्ष्यभोज्यैर्भोजयेत्पायसादिभिः॥ तथा॥ ग्रंथिस्फुटितशीर्णांगीं रक्तपूयव्र
णांकिताम्॥ जात्यंधां केकरां काणां कुरूपां तनुरोमशां॥ संत्यजेद्रोगिणीं कन्यां दासीगर्भ
समुद्भवां॥ तथा॥ ब्राह्मणीं सर्वकार्येषु जयार्थे नृपवंशजां॥ लाभार्थे वैश्यवंशोत्थां सुता
र्थे शूद्रवंशजां॥ दारुणे चांत्यजातानां पूजयेद्विधिना नरः॥ इति॥ अत्र वेदपारायणम
प्युक्तं रुद्रयामले॥ एवं चतुर्वेदविदो विप्रान्सर्वान्प्रसादयेत्॥ तेषां च वरणं कार्यं वेदपा
रायणाय वै इति॥ तथा॥ एकोत्तराभिवृद्ध्या तु नवमीं यावदेव हि॥ चंडीपाठं जपेच्चैव जा
पयेद्वा विधानतः॥ तिथितत्त्वे वाराहीतंत्रे॥ प्रणवं चादितो जप्त्वा स्तोत्रं वा संहितां पठेत्॥
अंते च प्रणवं दद्यादित्युवाचादिपूरुषः॥ आधारे स्थापयित्वा तु पुस्तकं प्रजपेत्सुधीः॥ ह
स्तसंस्थापनादेव यस्माद्धि विफलं भवेत्॥ स्वयं च लिखितं यच्च शूद्रेण लिखितं भवेत्॥ अ
ब्राह्मणेन लिखितं तच्चापि विफलं भवेत्॥ ऋषिच्छंदादिकं न्यस्य पठेत्स्तोत्रं विचक्षणः
स्तोत्रे न दृश्यते यत्र प्रणवं तत्र विन्यसेत्॥ सर्वत्र पाठो विज्ञेयस्त्वन्यथा विफलं भवेत्॥ ए
वं नवमीपर्यंतं प्रत्यहं प्रत्यहं कुर्यात्॥ अत्र विशेषो हेमाद्रौ देवीपुराणे॥ यदाये दिवसे कु
र्याच्चंडिकापूजनादिकं॥ द्विगुणास्तु द्वितीयेह्नि त्रिगुणांस्तत्परेहनि॥ नवमीतिथिपर्यंतं वृ
द्ध्या पूजनादिकं॥ द्विगुणास्तु द्वितीयेह्नि त्रिगुणांस्तत्परेहनि॥ नवमीतिथिपर्यंतं वृद्ध्या पूजाज
पादिकमिति॥ एतेन नवरात्रे पूजैव प्रधानं॥ उपवासादित्वंगमिति गम्यते॥ तिथिह्रासे तु ति
थिद्वयनिमित्तं पूजादि महालयश्राद्धवदेकदिने आवृत्त्या कार्य्यं॥ वृद्धौ तद्देवावृत्तिः॥ स्वस्याशक्तावन्येन वा पूजादि कारयेत्॥ स्वयं व्र
तो नवरात्रोपवासादिकं संकुर्यात्॥

शेषवचनाभावात्॥स्त्रीणांचनवरात्रेतांबूलादिचवर्ज्यंभवति॥तदुक्तंव्रतहेमाद्रौगारुडे
॥गंधालंकारतांबूलपुष्पमालानुलेपनं॥उपवासेनदुष्यंतिदंतधावनमंजनमिति॥ए
तद्भर्तृकोपवासविषयं॥अन्यच्चात्रविशेषःपरिभाषायामुक्तः॥आश्विनशुक्लपंचम्या
मुपांगललिताव्रतंमहाराष्ट्रेषुप्रसिद्धं॥तत्रपद्यपिकायांकालविशेषोनोक्तस्तथापि॥रा
त्रौजागरणंकुर्याद्गीतवादित्रनिस्वनैरितिरात्रौजागरोक्तेःशक्तिपूजाया॥रात्रौप्राश ५
स्त्याच्चरात्रिव्यापिनीग्राह्येतिकेचित्॥वस्तुतस्तुवचनंविनारात्रौपूजायांमानाभावात्॥जा
गरस्यचांगत्वात्॥युग्मवाक्यात्भुक्ताजागरणेनत्रिचंद्रार्घ्यव्रतेतथा॥नारात्रेतुसर्वे
रात्रियोगोविशिष्यतेइतिकालहेमाद्रौवचनाच्चपूर्वविद्धाग्राह्या॥रात्रिशब्दःपूर्वविद्धावच
नइतिहेमाद्रिः॥अस्यचभुक्ताजागरणरूपत्वादितिसाधुमतीमः॥भुक्ताजागरणमित्ये
कंपदम्॥तस्मिन्व्रतेइत्यर्थः॥अन्यथाभुक्तेरसंगतेः॥दिवोदासीयेप्येवं॥आश्विनशुक्ल
पक्षेमूलनक्षत्रेसरस्वतीस्थापनं॥यथोक्तंनिर्णयामृतेदेवीपुराणे॥मूलऋक्षेसुराधी
पूजनीयासरस्वती॥पूजयेत्प्रत्यहंदेवियावद्वैष्णवमृक्षकं॥नाध्यापयेन्नचलिखेन्नाधीयी
तकदाचन॥पुस्तकेस्थापितेदेविविद्याकामोद्विजोत्तमः॥संग्रहे॥आश्विनस्यसितेपक्षेमे
धाकामःसरस्वतीं॥मूलेनावाहयेद्देवींश्रवणेनविसर्जयेत्॥मूलस्याद्यपादेआवाहनमि
तिशिष्टाः॥श्रवणाद्यपादेचविसर्जयेत्॥आदिभागोनिशायांतुश्रवणस्ययदाभवेत्॥संप्रे
षणंतदादेव्यादशम्यांचमहोत्सवइतिचिंतामणौब्रह्मांडपुराणात् ॥ ० ॥ ० ॥

अथषष्ठी॥गौडनिबंधेदेवीपुराणे॥

ज्येष्ठानक्षत्रयुक्तायांषष्ठ्यांबिल्वाभिमंत्रणं॥सप्तम्यांमूलयुक्तायांपत्रिकायाःप्रवेशनं॥पू
र्वाषाढायुताष्टम्यांपूजाहोमाद्युपोषणं॥उत्तरेणनवम्यांतुबलिभिःपूजयेच्छिवां॥श्रवणे
नदशम्यांतुप्रणिपत्यविसर्जयेत्॥कालिकापुराणे॥बोधयेद्बिल्वशाखायांषष्ठ्यांदेवींफले
षुच॥सप्तम्यांबिल्वशाखांतामाहृत्यप्रतिपूजयेत्॥पुनःपूजातथाष्टम्यांविशेषेणसमाच
रेत्॥जागरंचस्वयंकुर्याद्बलिदानमहानिशि॥प्रभूतबलिदानंतुनवम्यांविधिवच्चरेत्॥
विसर्जनंदशम्यांतुकुर्याद्वैशारदोत्सवैः॥धूलिकर्दमनिक्षेपैःक्रीडाकौतुकमंगलैः॥अ
त्रसर्वत्रतिथिनक्षत्रयोगादरोमुख्यःकल्पः॥तदभावेतुतिथिरेवग्राह्या॥तिथिःशरीरंदेव
स्यतिथौनक्षत्रमाश्रितं॥तस्मात्तिथिंप्रशंसंतिनक्षत्रंनतिथिंविनेति॥विद्यापतिलिखित
वचनात्तिथिनक्षत्रयोर्योगेद्वयोरेवानुपालनं॥योगाभावेतिथिर्ग्राह्यादेव्याःपूजनक
र्मणीति॥तत्रैवदेवलोक्तेश्च॥अत्रचपत्रीप्रवेशात्पूर्वेद्युःसायंकालेषष्ठ्यभावेतत्पूर्वे
द्युर्नेधिवासनंकार्यं॥सायंकालेतदसत्वेचधिवासनलोपः॥षष्ठ्यांसायंप्रकुर्वीतबि
ल्ववृक्षेधिवासनमिति॥पूर्वोक्तवचनादितिकल्पतरुः॥सायंश्रुतिःफलातिशयमात्रार्था
नतुकर्मलोपइत्याचार्यचूडामणिः॥अत्रक्रमःबिल्वसमीपंगत्वादेवींबिल्वंचसंपूज्यप्र
ार्थयेत्॥तत्रमंत्रः॥रावणस्यवधार्थायरामस्यानुग्रहायच॥अकालेब्रह्मणाबोधोदे

म्यास्त्वपिरक्षितः पुरा॥ अहमप्याश्विने षष्ठ्यां सायाह्ने बोधयामि तं॥ श्रीशैलशिखरे जातः श्रीफलश्री
केतन॥ नेतव्योसि मया गच्छ पूज्यो दुर्गास्वरूपतः इति॥ एवं देवीमधिवास्य परदिने निमंत्रित॰
बिल्वशाखापत्रीप्रवेशपूजा॥ तदुक्तं हेमाद्रौ लैंगे॥ मूलाभावेतु सप्तम्यां केवलायां प्रवेशयेत्॥ यु
ग्माभ्यां नवबिल्वस्य फलाभ्यां शाखिकां तथा॥ तथैव प्रतिमां देव्याः स्नात्वाभ्युदयप्रवेशयेत्॥
अत्र चोपवासपूजादावौदयिकी सप्तमी ग्राह्या॥ ननु युग्मवाक्यात्पूर्वा॥ युगाद्या वर्षवृद्धिश्च स
प्तमी पार्वती प्रिया॥ रवेरुदयमीक्षंते न तत्र तिथियुग्मतेति॥ कल्पतरुकारेणोदाहृतवचनात्॥
मगवस्याः प्रवेशादिविसर्गांतासु याः क्रियाः॥ तिथावुदयगामिन्यां सर्वास्ताः कारयेद्बुधः॥ इ
ति तिथितत्त्वे नंदिकेश्वरपुराणाच्च॥ दुर्गाभक्तितरंगिण्यामप्येवम्॥ तत्रापि घटिकोनोन्यूनत्वे
परा कार्या॥ व्रतोपवासनियमे घटिकैकापि या भवेत् इति देवलोक्तेरिति गौडाः॥ दाक्षिणा॰
त्यास्तु पूर्ववचनमहत्त्वाद्युग्मवाक्यात्पूर्वैवकुर्वंति॥ पत्रिकापूजा च पूर्वाह्ण एव कार्या॥ ननु मू॰
लानुरोधान्मध्याह्नादाविति॥ कल्पतरुकारेणैवउक्तं पत्रिकास्तु॥ रंभाकचीहरिद्राचजयंतीबि
ल्वदाडिमौ अशोकोमानकश्चैव धान्यादिनवपत्रिका इति तंत्रेवोक्ताः॥ अस्यामेव सप्तम्यां देवी
त्रिरात्रमुक्तं हेमाद्रौ॥ प्रतिपदादिनवतिथिषु उपवासादिकरणासामर्थ्ये सप्तम्यादिदिनत्रये वा
कुर्यात्॥ तदाह धौम्यः॥ आश्विने मासि शुक्ले तु कर्तव्यं नवरात्रकम्॥ प्रतिपदादिक्रमेणैव यावच्च
नवमी भवेत्॥ त्रिरात्रं वापि कर्तव्यं सप्तम्यादि यथाक्रमं॥ अत एव हेमाद्रौ देवीपुराणे मंगलाव्रते
॥ आश्विने वाथवा माघे चैत्रे वा श्रावणेपि वा॥ सप्तम्यादिकर्तव्यं व्रतं शुक्लावधि हरेः॥ या
वच्छुक्लाष्टमी शक्र उपोष्यातु विधानतः॥ दानं होमो जपः पूजा कन्याभोज्यास्तथान्वहं॥ म॰
हाभैरवरूपेण अस्थिमालाधराय वै॥ पूजनीया विशेषेण वस्त्रैर्गंधमधुरादिषु॥ इति मासचतु
ष्टयेभिधाय॥ अथवा नवरात्रं च सप्तपंचत्रिकं द्विवा॥ एकभक्तेन नक्तेन तथायाचितोपोषितैः क
मात्॥ पूजयेदाश्विने शक्र यावच्छुक्लाष्टमी भवेत्॥ सर्वकार्याणि सिद्ध्यंति शक्र नास्त्यत्र संशय
इत्युक्तं॥ दिवेन्येकरात्रमुक्तं॥ देवीपुराणे॥ नवरात्रं न शक्तः स्यात्त्रिरात्रं चैकरात्रकं॥ व्रतं चरति
यो भक्तस्तस्येदास्याभिवांछितं॥ तत्रापि सप्तम्याः पूजने पूर्वोक्तो निर्णयः॥ अत्र तिथियोग॰
पद्येतंत्रेणोपवासः॥ तिथिद्वयनिमित्तं पूजादिकं तु भेदेन॥ अत्र विशेषो निर्णयामृते भवि
ष्ये॥ सप्तम्यां नवगेहानि दारुजानि नवानि च॥ एकं वा चित्रभावेन कारयेत्सुसमाहितः॥ दु
र्गागृहं प्रकर्तव्यं चतुरस्रं सुशोभनम्॥ तन्मध्ये वेदिकां कुर्याच्चतुर्हस्तां समां शुभां॥ तस्यां
सिंहासनं श्रीमत्कंबलाजिनसंयुतं॥ तत्र दुर्गां प्रतिष्ठाप्य सर्वलक्षणसंयुतां॥ भुजैश्चतुर्भि
रुचिरैर्दशभिर्वा विभूषितां॥ तप्तहाटकवर्णाभां त्रिनेत्रां शशिशेखराम्॥ अनेककुसु
माकीर्णां कपर्देन सुशोभिताम्॥ नितंबबिंबसन्नद्धकिंकिणीकाणनादितां॥ शूलचक्र
दंडशक्तिवज्रपाशासिधारिणीं॥ घंटाक्षमालाकारकपानपात्रलसत्करां॥ तदग्रे छिन्नशि
रसं महिषं रुधिराप्लुतं॥ निःसृतार्द्धतनुं कंठनाले चर्मासिधारिणम्॥ देवीधृतकरग्रीवं शूले
नोरसि ताडितं॥ नागपाशेन विक्षिप्तं हर्यक्षेणापि विद्रुतम्॥ वमद्रुधिरवक्त्रेण धुन्वतोर्ध्वं

सटानूहषा।सर्वतोमानृचक्रेणासेव्यमानासुरैस्तथेति।तत्रदेवीप्रकर्तव्याहैमीवाराजतीतथा।मृद्दार्क्षीलक्षणोपेताखड्गशूलेचपूजयेत्‌वार्क्षीदारुमयीदेवीमूर्त्तिस्थापनेविशेषोदुर्गाभक्तितरंगिण्यांदेवीपुराणेप्याम्यास्याशुभदादुर्गापूर्वास्याजयवर्द्धिनी।पश्चिमाभिमुखीनित्यंनस्थाप्यासौम्यदिङ्मुखी।प्रतिमाभावेविशेषस्तत्रैव।हेमराजतमृद्दारुशैलचित्रार्पितापिवा।खड्गेशूलेर्चितादेवीसर्वकामफलप्रदा।यद्यदस्यायुधंप्रोक्तंतस्मिंस्तांप्रतिपूजयेत्।देवीभक्त्यार्चितापुंसांराज्ञायुःसुतसौख्यदा।।तन्यतन्त्रार्णवेकालिकापुराणे।।लिंगस्थांपूजयेद्देवींमंडलस्थांतथैवच।।पुस्तकस्थांमहादेवींपावकेप्रतिमासुच।।चित्रेचत्रिशिखेखड्गेजलस्थांवापिपूजयेत्।।विल्वपत्रैर्यजेद्देवींतथाजातीप्रसूनकैः।नानापिष्टकनैवेद्यैर्धूपदीपैर्मनोहरैः।।भगलिंगाभिधानैश्चभगलिंगप्रगीतकैः।भगलिंगक्रियाभिश्चप्रीणयेद्दुर्चंडिकाम्।।यैर्नैःक्षिप्यतेयस्तुयःपरान्नाक्षिपत्यपि।।तस्यक्रुद्धाभगवतीशापंदद्यात्सुदारुणं।।चित्रमृन्मयादौस्नानाद्यसंभवेतत्रैवोक्तम्।।अग्निकस्यापितेखड्गेस्थापयेद्दर्पणेथवेति।।

अथसप्तमीपूजाविधिः।।

प्रतिपद्युक्तविधिनाफलसंकीर्त्तनांते।।नवपत्रिकामृन्मयदुर्गापूजागच्छसर्वकल्याणीतिपूर्वोक्तमंत्रंपठित्वाविल्ववृक्षमहाभागसदात्वंशंकरप्रियः।।गृहीत्वातवशाखांचदेवीपूजांकरोम्यहं।।शाखाच्छेदोद्भवंदुःखंनचकार्यंत्वयाप्रभो।गृहीत्वातवशाखांचपूज्यादुर्गेतिविश्रुतिः।।उत्तिष्ठपत्रिकेदेविसर्वकल्याणहेतवे।।पूजांगृहाणसकलामस्माकंवरदाभव।।मेरुमंदरकैलासहिमवच्छिखरेगिरौ।।जातश्रीफलवृक्षत्वमंबिकायाःसदाप्रियइतिसंप्रार्थ्य।।ॐछिंधिफट्‌इॐहुंफट्स्वाहेतिछित्वासंपूज्यॐचामुंडेवलइतिवाद्यघोषेणदेवींतांचगृहेप्रवेश्य।।आरोपितासिदुर्गेत्वंमृन्मयांश्रीफलेपिच।।स्थिराभवितांतंभूत्वाचगृहेत्वंकामदाभवेतिस्थिरीकृत्यरंभादिपत्रिकाःपंचगव्येनपंचामृतेनचस्नापयित्वावस्त्रेणावेष्ट्यस्थापयेत्।।ततःसर्ववत्संकल्पंकृत्वाअक्षतानादायदेवीमावाहयेत्।।आवाहयाम्यहंदेविमृन्मय्यांश्रीफलेतथा।।कैलासशिखराद्देविविंध्याद्रेर्हिमपर्वतात्।आगत्यविल्वशाखायांचंडिकेकुरुसन्निधिं।।स्थापितासिमयादुर्गेपूजयेत्वांप्रसीदमे।।आयुरारोग्यमैश्वर्यंदेहिदेविनमोस्तुते।।दुर्गेदुर्गस्वरूपासिसुरतेजोमयेर्चिते।पल्लवैश्चफलोपेतैःपुष्पैश्चसुमनोहरैः।।पल्लवेसंस्थितेदेविपूजयेत्वांप्रसीदमे।।आयुरारोग्यमैश्वर्यंदेहिदेविनमोस्तुते।।दुर्गेदुर्गस्वरूपासिसुरतेजोमयेर्चिते।।पल्लवैश्चफलोपेतैःपुष्पैश्चसुमनोहरैः।।पल्लवेसंस्थितेदेविपूजयेत्वांप्रसीदमे।।दुर्गेदेविरहागच्छसान्निध्यमिहकल्पय।।यज्ञभागान्गृहाणत्वंयोगिनीकोटिभिःसहेतितानीमूलमंत्रेणपाद्यादिगंधांतोपचारैःसंपूज्यअमृतोद्भवंचश्रीवृक्षंशंकरस्यसदाप्रियं।विल्वपत्रंप्रयच्छामिपवित्रंतेसुरेश्वरीतिविल्वपत्रम्।।ब्रह्माविष्णुशिवादीनांद्रोणपुष्पंसदाप्रियं।।तत्तेदुर्गेप्रयच्छामिसर्वकामार्थसिद्धये।।इतिद्रोणपुष्पंनिवेद्यधूपादि

दक्षिणांतांपूजांमूलेनकृत्वाप्रार्थयेत्।ॐ महिषघ्निमहामायेचामुंडेमुंडमालिनि॥आयुरा
रोग्यमैश्वर्यंदेहिदेविनमोस्तुते॥कुंकुमेनसमालब्धेचंदनेनविलेपिते॥बिल्वपत्रकृतापीडे
दुर्गेहंशरणंगतः॥रूपंदेहियशोदेहिभगंभगवतिदेहिमे॥पुत्रान्देहिधनंदेहिसर्वान्कामांश्च
देहिमे॥सर्वमंगलमंगल्येइतिचसंप्रार्थ्यपत्रिकांपूजयेत्।कदलीब्राह्मणीदाडिमीरक्तदंतिका।
धान्येलक्ष्मीहरिद्रायांदुर्गामानेचामुंडाकचौकालिका॥बिल्वेशिवाऽत्रशोकेशोकरहिताज
यंतीकार्त्तिकीचावाह्यसंपूज्यदुर्गायैबलिंदद्यात्॥अत्रशस्त्रादिपूजावक्ष्यते॥ततःस्तुतिंपठे
त्॥तदुक्तंशिवरहस्ये॥दुर्गांशिवांशांतिकरींब्रह्माणींब्रह्मणःप्रियां॥सर्वलोकप्रणेत्रींचप्र
णमामिसदाशिवाम्॥मंगलांशोभनांशुद्धांनिष्कलांपरमांकलाम्॥विश्वेश्वरींविश्वमातां
चंडिकांप्रणमाम्यहं॥सर्वदेवमयींदेवींसर्वरोगभयापहां॥ब्रह्मेशविष्णुनमितांप्रणमामि
सदाउमाम्॥विंध्यस्थांविंध्यनिलयांदिव्यस्थाननिवासिनीं॥योगिनींयोगमातांचचंडिकां
प्रणमाम्यहं॥ईशानमातरंदेवीमीश्वरीमीश्वरप्रियां॥प्रणतोस्मिसदादुर्गांसंसारार्णवतारिणीं
॥यइदंपठतेस्तोत्रंशृणुयाद्वापियोनरः॥समुक्तःसर्वपापेभ्योमोदतेदुर्गयासह॥ ० ॥ ०

## अथमहाष्टमी०

साचपरयुता॥शुक्लपक्षेष्टमीचैवशुक्लपक्षेचतुर्दशी॥पूर्वविद्धानकर्तव्याकर्तव्यापरसंयुते
ति॥ब्रह्मवैवर्तात्।मदनरत्नेस्मृतिसंग्रहे।शरन्महाष्टमीपूज्यानवमीसंयु
तासदा॥सप्तमीसंयुतानित्यंशोकसंतापकारिणी।जंभेनसप्तमीयुक्तापूजिताचमहाष्टमी।
इंद्रेणनिहतोजंभस्तस्माद्दानवपुंगवः।तस्मात्सर्वप्रयत्नेनसप्तमीमिश्रिताष्टमी।वर्जनीया
प्रयत्नेनमनुजैःशुभकांक्षिभिः॥सप्तमीशल्यसंयुक्तांमोहाद्यानतोपिवा।महाष्टमींप्रकु
र्वाणोनरकंप्रतिपद्यते॥सप्तमीकलयायत्रपरतश्चाष्टमीभवेत्।तेनशल्यमिदंप्रोक्तंपुत्रपौ
त्रक्षयप्रदं॥तथा॥पुत्रान्हंतिपशून्हंतिराष्ट्रंहंतिसराज्यकं॥हंतिजातानजातांश्चसप्तमीस
हिताष्टमी॥तेनत्रिमुहूर्तवेधः।तदाघटिकामात्राप्यादपिकीग्राह्या॥व्रतोपवासनियमेघटिके
कापियाभवेत्।इतिदेवलोक्तेः॥गौडास्त्वेवमाहुः॥अतएवोक्तंभोजराजेन।नचसप्तमीसल
समीयेतेति॥इयंभौमेतिप्रशस्ता॥अष्टम्यांतुदिनेसर्वेदिनांतेनवमीभवेत्।कुजवारोभवेत्
त्रपूजनीयाप्रयत्नतः॥इतिमदनरत्नेवचनात्।सप्तमीशल्यसंविद्धवर्जनीयासदाष्टमी।स्तोका
पिसामहापुण्यायस्यांसूर्योदयोभवेदितिमदनरत्नेस्मृतिसमुच्चयवचनात्॥अष्टमीनवमी
युक्तानवमीचाष्टमीयुतेतियाम्यवचनाच्च॥इयमेवमूलयुक्ताचेन्महानवमीसंज्ञा॥आश्वयुक्
शुक्लपक्षेयाष्टमीमूलेनसंयुता।सामहानवमीप्रोक्तात्रैलोक्येपिसुदुर्लभेतिहेमाद्रौस्कांदात्।
मूलयुक्तापिसप्तमीयुताचेत्त्याज्यैवेत्युक्तंनिर्णयामृतेदुर्गोत्सवे।मूलेनापिहिसंयुक्तासदा
त्याज्याष्टमीबुधैः।लेशमात्रेणसप्तम्याअपिस्याद्यदिदूषिता॥महाष्टमीपूर्वेद्युःपूर्वोक्त्या
पिन्वेपूर्वान्यथा॥परैवेतिनिर्णयदीपमतं॥एतच्चतुच्छत्वादुपेक्ष्यम्।रूपनारायणधृतदेवी
पुराणे॥सप्तमीवेधसंयुक्तायैःकृतातुमहाष्टमी॥पुत्रदारधनैर्हीनाभ्रमंतीहपिशाचवत्।

पुत्रैर्भृत्यैश्चमानवैः। स्त्रीभिश्चकुरुशार्दूलतद्विधानमिदंशृणु। जयाभिलाषीनृपतिः
प्रतिपत्प्रभृतिक्रमात्। लौहाभिसारिकंकर्मकारयेद्यावदष्टमीति॥ लौहाभिसारिककर्
र्मविधानंतत्रैवोक्तम्। प्रागुदक्प्रवणेदेशेपताकाभिरलंकृते। मंडपंकारयेद्दिव्यंनवस
प्तकरंपरम्। षोडशहस्तमित्यर्थः। आग्नेयांकारयेत्कुंडंहस्तमात्रंसुशोभनं। मेखलात्रय
संयुक्तंयोन्याऽश्वत्थदलाभया। राजचिन्हानिसर्वाणिशस्त्राण्यस्त्राणियानिच। आनीयमं
डपेतानिसर्वाण्यत्राधिवासयेत्। ततस्तुब्राह्मणःस्नातःशुक्लांबरधरःशुचिः। ॐकारपू
र्वकैर्मंत्रैस्तल्लिंगैर्जुहुयाद्धुतम्। शस्त्रास्त्रमंत्रैर्होतव्यंपायसंघृतसंयुतम्। हुतशेषंतुरं
गाणांराजानमुपहारयेत्॥ लौहाभिसारिकंकर्मतेनेतदृषिभिःस्मृतं। कृतपल्ययनान
श्वान्गजांश्चसमलंकृतान्। भ्रामयेन्नगरेनित्यंवंदिघोषपुरःसरान्। प्रत्यहंनृपतिःस्ना
त्वासंपूज्यपितृदेवताः॥ पूजयेद्राजचिन्हानिफलमाल्यविलेपनैः। यस्याभिसरणाद्राज्ञो
विजयःसमुदाहृतः॥ पूजामंत्रान्प्रवक्ष्यामिपुराणोक्तान्नहंतव॥ यैःपूजिताःप्रयच्छंति
कीर्तिमायुर्यशोबलम्     अथमंत्राः॥     विष्णुधर्मोत्तरोक्ताः॥ छत्रस्य। यथांबुद
श्छादयतिशिवायेमांवसुंधराम्॥ तथाच्छादयराजानंविजयारोग्यवृद्धये॥ चामरस्य॥
शशांककरसंकाशक्षीरडिंडीरपांडुर॥ प्रोत्सारयाशुदुरितंचामरामलदुर्लभ॥ अश्वानां
वृद्ध्यर्थंरेवंतपूजनमहंकरिष्ये। सूर्यपुत्रमहाबाहोछायाहृदयनंदन। शांतिंकुरुतुरंगाणां
रेवंतायनमोनमः। अनेनमंत्रेणपूजा। अथाश्वस्य। गंधर्वकुलजातस्त्वंमाभूयाःकुलदूष
कः॥ ब्रह्मणःसत्यवाक्येनसोमस्यवरुणस्यच॥ प्रभावाच्चहुताशस्यवर्द्धयत्वंतुरंगमान्
॥तेजसाचैवसूर्यस्यमुनीनांतपसातथा। रुद्रस्यब्रह्मचर्येणपवनस्यबलेनच॥ स्मर
त्वंराजपुत्रत्वंकौस्तुभंचमणिंस्मर। यांगतिंब्रह्महागच्छेन्मातृहापितृहातथा॥ भ्रूणहा
ऽनृतवादीचक्षत्रियश्चपराङ्मुखः। सूर्याचंद्रमसौवायुर्यावत्पश्यंतिदुष्कृतं। व्रजाश्वतांरा
तिंक्षिप्रंतच्चपापंभवेत्तव॥ निवृत्तोयदिगच्छेथायुद्धंधृत्वातुरंगम॥ रिपून्विजित्यस
मरेसहभर्त्रासुखीभव॥     अथध्वजस्य॥     शक्रकेतोमहावीर्य्यस्त्वामव
र्णार्च्चयाम्यहं। पत्रिराजनमस्तेस्तुतथानारायणध्वज॥ काश्यपेयामृताहर्त्तर्नागारे
विष्णुवाहन। अप्रमेयदुराधर्षरणेदेवारिसूदन॥ गरुत्मान्मारुतगतिस्त्वयिसन्निहि
तोयतः। सारवंन्यायुधान्यत्ररक्षत्वंचरिपून्दह॥     अथपताकायाः
॥हुतभुग्वसवोरुद्रावायुःसोमोमहर्षयः॥ नागकिन्नरगंधर्वयक्षभूतगणाग्रहाः॥ प्र
मथास्तुसहादित्यैर्भूतेशोमातृभिःसह। शक्रःसेनापतिःस्कंदोवरुणश्चाश्रितास्त्व
यि। प्रदहंतुरिपून्सर्वान्राजाविजयमृच्छतु। यानिप्रयुक्तान्यरिभिर्भूषणानिसमंत
तः॥ पतंतुपरिशत्रूणांहतानितवतेजसा। हिरण्यकशिपोर्युद्धेयुद्धेदेवासुरेतथा
कालनेमिवधेयद्वद्यद्वत्त्रिपुरघातने। शोभितासितथैवाद्यशोभयास्मान्संस्मर॥
नीलान्श्वेतानिमान्दृष्ट्वानश्यंत्वाशुनृपारयः॥ [illegible]

धेनिर्ज्जिताः॥छत्तनारेवतीनाम्नाकालरात्रिश्चयास्मृता॥दहंत्वाशुरिपून्सर्वान्पताकेत्वं
मयार्च्चिता॥ अथगजस्य॥ कुमुदैरावणौपद्मपुष्पदंतोथवामनः॥सुप्र
तीकोंजनोनीलएतेष्टौदेवयोनयः॥तेषांपुत्राश्चपौत्राश्चवनान्यष्टौसमाश्रिता॥मंद्रोभद्रो
मृगश्चैवगजःसंकीर्णएवच॥वनेवनेप्रसूतास्तेस्मरयोनिंमहागज॥पांतुत्वांवसवोरुद्रा
आदित्याःसमरुद्गणाः॥भर्त्तारंरक्षनागेंद्रस्वामिवत्प्रतिपाल्यतां॥अवाप्नुहिजयंयुद्धेगम
नेस्वस्तिनोव्रजेति॥श्रीस्तेसोमाद्बलंविष्णोस्तेजःसूर्याज्जवोनिलात्।स्थैर्यंमेरोर्जयंरुद्राद्य
शोदेवात्पुरंदरात्॥युद्धेरक्षंतुनागास्त्वांदिशश्चसहदैवतैः॥अश्विनौसहगंधर्वैःपांतुत्वांस
र्वतःसहेति॥० अथखड्गमंत्रः॥ असिर्विशसनःखड्गस्तीक्ष्णधारोदुरासदः
॥श्रीगर्भोविजयश्चैवधर्मधारस्तथैवच॥एतानितवनामानिस्वयमुक्तानिवेधसा॥न
क्षत्रंकृत्तिकातेगुरुर्देवोमहेश्वरः॥रोहिण्यश्चशरीरंतेदैवतंचजनार्द्दनः॥पितापितामहो
देवस्त्वंमांपालयसर्वदा॥नीलजीमूतसंकाशस्तीक्ष्णदंष्ट्रःकृशोदरः॥भावशुद्धोमर्षण
श्चअतितेजास्तथैवच॥इयंयेनधृताक्षोणीहतश्चमहिषासुरः॥तीक्ष्णधारायशुद्धायत
स्मैखड्गायतेनमः॥ अथछुरिकायाः॥ सर्वायुधानांप्रथमंनिर्मितासिपि
नाकिना॥शूलायुधाद्विनिष्कृष्यकृत्वामुष्टिग्रहंशुभं॥चंडिकायाःप्रदत्तासिसर्वदुष्टनि
वर्हिणी॥तथाविस्तारितावासिदेवानांप्रतिपादिता॥सर्वसत्वांगभूतासिसर्वाशुभनिव
र्हिणी॥छुरिकेरक्षमांनित्यंशांतियच्छनमोस्तुते॥ अथकट्टारकपूजा रक्ष
णानिगजांश्चैवरक्षवाजिधनानिच॥ममदेहंसदारक्षकट्टारकनमोस्तुते॥कट्टारकोमध्य
देशेकटारीइतिप्रसिद्धः॥ अथधनुःपूजा॥ सर्वायुधमहामात्रसर्वदेवारि
सूदन॥चापमांसमरेरक्षसाकंशरवरैरिह॥शृतंकक्षेनरक्षार्थंसंहारायहरेणच॥त्वयीमू
र्त्तिगतंदेवधनुरस्त्रंनमाम्यहं॥ अथकुंतपूजा॥ प्रासपातयशत्रून्स्त्वमनयाना
कमायया॥गृहाणजीवितंतेषांममसैन्यंचरक्षतां॥ अथचर्म्मपूजा॥ शर्म्मप्र
दस्त्वंसमरेचर्म्मसैन्येयशोद्यमे॥रक्षमांरक्षणीयोहंतापनीयनमोस्तुते॥ अथकन
कदंडमंत्रः॥ प्रोत्सारणायदुष्टानांसाधूनांरक्षणायच॥ब्रह्मणानिर्मितश्चासिव्यव
हारप्रसिद्धये॥यशोदेहिसुखंदेहिजयदोभवभूपतेः॥ताडयस्वरिपून्सर्वान्हेमदंडनमो
स्तुते॥ अथदुंदुभिमंत्रः॥ दुंदुभेत्वंसपत्नानांघोरोहृदयकंपनः॥भवभू
मिपसैन्यानांतथाविजयवर्द्धनः॥यथाजीमूतशब्देनस्त्रीणांत्रासोभिजायते॥तथाचत
वशब्देनत्रस्यंत्वस्मद्विषोरणे॥ अथशंखमंत्रः॥ पुण्यस्त्वंशंखपुण्या
नांमंगलानांचमंगलं॥विष्णुनाविधृतोनित्यमतःशांतिप्रदोभव॥ अथसिंहासन
मंत्रः॥विजयोजयदोजेतारिपुघातीशुभंकरः॥दुःखहाधनदःशांतःसर्वारिष्टविनाशनः
॥एतेष्टौसन्निधौयस्मात्तवसिंहामहाबलाः॥तेनसिंहासनेतित्वंवेदैर्मंत्रैश्चगीयसे॥
त्वयिस्थितःशिवःशांतस्त्वयिशक्रःसुरेश्वरः॥नमस्तेसर्वतोभद्रभद्रदोभवभूपतेः॥त्रै

लौकिकजयसर्वस्वसिंहासननमोस्तुते॥तथैवकर्मचिह्नानिखड्गानिशिल्पिभिः॥लोहाभि
सारिकंकर्मकृत्वैवंमंत्रपूर्वकं॥अष्टम्यांनियमंकृत्वापूर्वाह्णेस्नानमाचरेत्॥कुंकुमचंदनचंप
कचतुःसमैःशैलपिष्टैश्च॥चर्चितगायत्रीदेवींकुसुमैरभ्यर्चयेद्बहुभिः॥कुमुदैःसपद्मपुष्पैःस
धूपदीपैस्सनैवेद्यैः॥मांसैर्बलिसुपहारैर्मंगलशब्दैःसतूर्यकुलितैःविहितच्छत्रैर्यानैःस्यंदनशिबि
काध्वजधारिभिर्लोकैः॥तुष्टैःपश्वश्वादिषुनिवेद्यतेसर्वमेवभगवत्यै॥दुर्गासाष्टजनीयाचतद्दि
नेद्रोणपुष्पकैः॥ततःखड्गंनमस्कृत्यशत्रूणांवधसिद्धये॥रक्तेनविजयंराज्यंसुभिक्षंचात्म
नेनृपः॥पुनःपुनःप्रणम्यासिंसंस्मरन्हृदयेशिवं॥सर्वंकृत्वेतिकौरव्यअष्टम्यांजागरंनिशि
॥नटनर्तनगीतैश्चकारयेत्सुमहोत्सवं॥एवंहृष्टोनिशांनीत्वाप्रभातेह्यरुणोदये॥घातयेन्म
हिषान्मेषान्नयतोनतकंधरान्॥शतमर्द्धशतंवापितदर्द्धंवायथेच्छया॥सुरासवभृतैःकुंभै
स्तर्पयेत्परमेश्वरीं॥कापालिकेभ्यस्तद्देयंदासीदासजनेनतथा॥ततोपराह्णसमयेनवम्यां
वैरथेस्थितां॥भवानींभ्रामयेद्राष्ट्रेस्वयंराजालसद्ववान्॥ कश्चिद्योयोमेवीरोविधृतोन्येन
खड्गवान्॥भूतेभ्यस्तुवलिंदद्यान्मंत्रेणानेनसामिषं॥सरक्तंसजलंचान्नंगंधपुष्पाक्षतैर्युतं
॥चीत्कृत्वाराजन्समूलेनदिग्विदिक्षुकिरेद्वलिं॥मंत्रश्च॥वलिंगृह्णंत्विमंदेवाआदित्यावस
वस्तथा॥मरुतश्चाश्विनौरुद्राःसुपर्णाःपन्नगाःग्रहाः॥असुरायातुधानाश्चपिशाचोरग
राक्षसाः॥डाकिन्योयक्षवेतालाःयोगिन्यःपूतनाःशिवाः॥जृंभकाःसिद्धगंधर्वामालाविद्याध
रानगाः॥दिक्पालालोकपालाश्चयेचविघ्नविनायकाः॥जगतांशांतिकर्त्तारोब्रह्माद्याश्चम
हर्षयः॥माविघ्नंमाचमेपापंमासंतुपरिपंथिनः॥सौम्याभवंतुतृप्ताश्चभूत प्रेताःसुखावहाः
॥० इतिमहाष्टमी॥० महानवमीतुपूर्वविद्धाग्राह्यापूर्वोक्तवचनात्॥नवमीदुर्गा
व्रतेश्रावणीतिदीपिकोक्तेः॥श्रावणीदुर्गनवमीदूर्वाचैवहुताशिनी॥पूर्वविद्धाप्रकर्त्तव्याशि
वरात्रिर्वलेर्दिनमिति॥हेमाद्रौयामोक्तेश्चभविष्येपि॥आश्वयुक्शुक्लपक्षेतुअष्टमीमूलसं
युता॥सामहानवमीप्रोक्तात्रैलोक्येपिसुदुर्लभेति॥मूलंतूपलक्षणम्॥दुर्गाष्टजासुनवमी
मूलाद्यृक्षत्रयान्विता॥महतीकीर्त्तितातस्यांदुर्गांमहिषमर्द्दिनीमितिमदनरत्नेलैंगात्॥अ
त्रपूजयेदित्यशेषः॥यानितु॥साकार्य्योदयगामिन्यांतिथावुदयगामिन्यांविमिश्रादिप्रा
युक्तानितानिनवमीभिन्नतिथिपराणि॥नवम्यांविशेषोक्तेः॥वेधश्चमुहूर्त्तत्रयेणैवज्ञेयः॥
यद्यपिहेमाद्रिमतेमुहूर्त्तद्वयात्मापिवेधोस्तितथापिसूर्योदयएवसः॥सायंतुत्रिमुहूर्त्तएवत
दुक्तंदीपिकायां॥त्रिमुहूर्त्तगातुसकलासायमिति॥माधवोपि॥सापनूनत्रयानह्न्यूनया
तुनविध्यतेइति॥तेनत्रिमुहूर्त्तयोगेपूर्वानवमीपूर्वोक्तवचनात्॥नकुर्य्यान्नवमींतातदश
म्यांतुकदाचनेतिस्कांदेपराणिषेधाच्च॥त्रिमुहूर्त्तयोगाभावेतुनिषिद्धापिपरैवकार्य्येतिनि
ष्कर्षः॥यत्तु॥नवम्यांचजपंहोमंसमाप्यश्रवणेपिचेतिसंग्रहोक्तेः॥व्रतेचजागरंचैवनव
म्यांविधिवद्वलिरितिदेवीपुराणाच्च॥नवम्यांहोमबल्यादिविहितंतत्राश्वयुक्शुक्लनवमी
मुहूर्त्तंवाकलापदि॥सातिथिःसकलाज्ञेयालक्ष्मीविद्याजयार्थिभिरितिसौरपुराणात्॥स

ग्योदये परं रिक्ता पूर्णा स्यादपरा यदि। बलिदानं प्रकर्तव्यं तत्र देशे शुभावहं॥ बलीदाने कृतेऽष्टम्यां पु
त्रभंगो भवेन्नृपेति मदनरत्ने देवीपुराणाच्च बलादेः परा कार्या॥ उपवासादौ तु पूर्वेति मदनरत्ने
उक्तम्॥ प्रतापमार्तंडेप्येवं॥ यत्तु अष्टम्यां बलिदानेन पुत्रनाशो भवेद्ध्रुवमिति कालिकापुराणं
तत्संधिपूजाप्राशस्त्यपरं॥ अष्टमीनवमीसंधौ तृतीया खलु कथ्यते इति तत्रैव तदुक्तेः॥ का
मरूपनिबंधे॥ अष्टम्यां शेषभागश्च नवम्याः पूर्व एव च। तत्र या क्रियते पूजा विज्ञेया सा महाफ
ला॥ अष्टमीमात्रे भवत्येव॥ आश्विने पूजयित्वा तु अर्द्धरात्रेऽष्टमीषु च॥ घातयंति पशून्भक्त्या
ते भवंति महाफलाः॥ तथा॥ कन्यासंस्थे रवावीशे शुक्लाष्टम्यां प्रपूजयेत्॥ सोपवासो निशा
र्द्धे तु महाविभवविस्तरैः॥ तथा॥ पशुघातश्च कर्तव्यो गवयाजवधस्तथेति॥ रूपनारायणीये दे
वीपुराणात्॥ तत्रैव भविष्ये। तस्मादियं महापुण्या नवमी पापनाशिनी॥ उपोष्या सुप्रयत्नेन
सततं सर्वपार्थिवैः॥ निर्णयदीपे तु महानवमी परदिने परान्हव्यापित्वे परा अन्यथा पूर्वा॥ आ
वर्त्तनात्सर्वकालेन नवमी स्यात्परेऽहनि दुर्गार्चा तत्र पूर्वेद्युः पूर्वाह्णे त्वष्टमी यदीति धौम्यवचना
दित्युक्तं॥ अस्य तु शारदनवमीविषयत्वं समूलत्वं च विमृश्यम्॥ यानि तु॥ नंदायां ज्वलने वह्नि
ः पूर्णायां पशुघातनं॥ भद्रायां गोकुलक्रीडा तत्र राष्ट्रं विनश्यतीति॥ नवम्यामपराह्णे तु बलिदा
नं प्रशस्यते॥ दशमीं वर्जयेत्तत्र नात्र कार्या विचारणेति॥ नंदायां दर्शने रक्षा बलिदानं दशासु
च। भद्रायां गोकुलक्रीडा देशनाशाय जायते॥ इति ब्रह्मवैवर्त्तनारदादिवचनानि। तानि शुद्धा
धिकनिषेधपराणीति॥ मदनरत्ने॥ तथा कालिकापुराणे॥ नवम्यां बलिदानं तु कर्तव्यं तु यथा
विधिः। जपं होमं च विधिवत्कुर्यात्तत्र विभूतये॥ केचित्तु॥ पूर्वाषाढायुताष्टम्यां पूजाहोमाद्यु
पोषणमिति॥ पूर्वोक्तदेवीपुराणादष्टम्यां होममाहुः॥ अन्ये तु द्विविधवाक्यवशादष्टम्यामा
रभ्य नवम्यां समापयंति॥ समुच्चयस्तु युक्तः रुद्रयामले तु विकल्प उक्तः तत्तु निर्मूलम्॥ दुर्गाभ
क्तितरंगिण्यां दिवोदासग्रंथे चापि नवम्यां होम उक्तः॥ होमे च विशेष उक्तो डामरतंत्रे॥ पायसं स
र्पिषा युक्तं तिलैः शुक्लैर्विमिश्रितं॥ होमयेद्विधिवद्भक्त्या दशांशेन नृपोत्तम॥ रुद्राध्यायेप
याहोमो मंत्रेणैकेन साध्यते॥ तथा स्तोत्रजपे होमः श्लोकेनैकेन साधयेत्॥ यद्वा सप्तशतीज
प्ये होमे मंत्रो नवाक्षरः॥ ॐ ऐं ह्रीं क्लीं चामुंडायै विच्चे॥ इति नवाक्षर इति केचित्॥ पूजोक्तो
ग्राह्य इति तु युक्तम्॥ रुद्रयामलेपि॥ प्रधानद्रव्यमुद्दिष्टं पायसान्नं तिलास्तथा। किंशुकैः सर्ष
पैः पूगैर्लाजादूर्वांकुरैरपि। यवैर्वा श्रीफलैर्द्दिव्यैर्नानाविधफलैस्तथा॥ रक्तचंदनखंडैश्च गु
ग्गुलैश्च मनोहरैः॥ प्रतिश्लोकं च जुहुयात्सर्वद्रव्याणि वत्तमात्। नवाक्षरेणाहुत्वा नमो
देव्या इति त्रिचेति॥ रहस्ये तु॥ प्रतिश्लोकं तु जुहुयात्पायसं तिलसर्पिषेत्युक्तम्॥ दुर्गाभक्ति
तरंगिण्यां तु तिलैर्जयंतीमंत्रेण च होम उक्तः॥ पुरश्चरणकार्ये तु बिल्वपत्रयुतैस्तिलैरिति
॥ कालिकापुराणाद्बिल्वपत्रैश्चेति स्मार्ताः॥ तन्न॥ अत्र मानाभावात्॥

अथ बलिदानं॥

तत्र मेषच्छागमहिषस्वमांसानामुत्तरोत्तरप्राशस्त्यं। फलविशेषश्चान्यतोव
सेय इति दिक्॥ बलिप्रकारस्तु देवीपुराणे॥ कन्यासंस्थे रवौ शक्र शुक्लाष्टम्यां प्रपूजयेत्॥

द्रोणपुष्पैश्चबिल्वाम्रजातीपुन्नागचंपकैः॥पंचाद्दलवणोपेतंगंधपुष्पैःसमन्वितं॥विधिवत्कालिकालीतिजप्त्वाखड्गेनघातयेत्॥ॐकालिकालिवज्रेश्वरिलोहदंडायैनमः॥इतिमंत्रः॥तदुत्थरुधिरंमांसंगृहीत्वापूतनादिषु॥आदिशब्दाच्चरकीविदारीपापराक्षस्यः॥नैर्ऋतेभ्यःप्रदातव्यंमहाकौशिकमंत्रितम्॥मंत्रस्तुवक्ष्यते॥तथा॥तस्याग्रतोनृपःस्नायात्कृत्वाशत्रुंतुपैष्टिकं॥खड्गेनघातयित्वातुदद्यात्स्कंदविशाखयोः॥अशक्तौब्राह्मणेनचकूष्मांडादिभिर्बलिदानंकार्यम्तदुक्तंकालिकापुराणे॥कूष्मांडमिक्षुदंडंचमांसंसारसमेवच॥एतेबलिसमाःप्रोक्तास्तृप्तौछागसमाःसदा॥रुद्रयामलेपि॥छागाभावेतुकूष्मांडंश्रीफलंवामनोहरं॥वस्त्रसंवेष्टितंकृत्वाछेदयेच्छुरिकादिना॥तथा॥ब्राह्मणेनसदादेयंकूष्मांडंबलिकर्मणि॥श्रीफलंवासुराधीशछेदनेनैवतुकारयेत्॥छेदेविकल्पः॥माघात्येनबलिर्देयोब्राह्मणेनविजानता॥कालिकापुराणे॥उत्तराभिमुखोभूत्वाबलिंपूर्वमुखंतथा॥निरीक्ष्यसाधकःपश्चादिमंमंत्रमुदीरयेत्॥पशुस्त्वंबलिरूपेणममभाग्यादुपस्थितः॥प्रणमामिततःसर्वरूपिणंबलिरूपिणं॥चंडिकाप्रीतिदानेनदातुरापद्विनाशनः॥चामुंडाबलिरूपायबलेतुभ्यंनमोस्तुते॥यज्ञार्थेपशवःसृष्टाःस्वयमेवस्वयंभुवा॥अतस्त्वांघातयाम्यद्यतस्माद्यज्ञेवधोऽवधः॥ऐंह्रींश्रीमितिमंत्रेणानेनबलिंतत्स्वरूपिणं॥चिंतयित्वान्यसेत्पुष्पंमूर्ध्नितस्यतुभैरव॥रसनात्वंचंडिकायाःसुरलोकप्रसाधकः॥ह्रींह्रींखड्गइतिमंत्रेणध्यात्वा॥खड्गंचपूजयेत्॥पूजयित्वाततःखड्गंआंह्रूंफडितिमंत्रकैः॥गृहीत्वाविमलंखड्गंछेदयेद्बलिमुत्तमं॥ॐह्रींऐंह्रींकौशिकीतिरुधिरेणाप्यायतामिति॥बलिदानेतुदुर्गायाःसर्वत्रायंविधिःस्मृतः॥मत्स्यसूक्ते॥नवम्यांपूर्ववत्पूजांकृत्वाभूतिमिच्छता॥दक्षिणांवस्त्रयुग्मंचआचार्यायनिवेदयेत्॥०

अथात्रप्रसंगाच्छतचंडीविधानमुच्यते॥

रुद्रयामलेपि॥शतचंडीविधानंचप्रोच्यमानंमयाशृणु॥सर्वोपद्रवनाशार्थंशतचंडींसमारभेत्॥षोडशस्तंभसंयुक्तंमंडपंपल्लवोज्ज्वलं॥वसुकोणयुतांवेदींमध्येकुर्यात्त्रिभागतः॥पक्वेष्टकचितांरम्यांमुक्त्वायेहस्तसम्मितां॥पंचवर्णरजोभिश्चकुर्यान्मंडलकंशुभं॥पंचवर्णवितानंचकिंकिणीजालमंडितं॥आचार्येणसमंविप्रान्वरयेद्दशसुव्रतान्॥ईशान्यांस्थापयेत्कुंभंपूर्वोक्तविधिनाहरे॥वारुण्यांचप्रकर्तव्यंकुंडंलक्षणलक्षितं॥मूर्तिंदेव्याःप्रकुर्वीतसुवर्णस्यपलेनवै॥तदर्द्धेनतदर्द्धेनतदर्द्धेनमहामते॥अष्टादशभुजांदेवींकुर्याद्वाऽष्टकरामपि॥पट्टकूलयुगच्छन्नांदेवींमध्येनिधापयेत्॥देवींसंपूज्यविधिवत्जपंकुर्युर्दशद्विजाः॥शतमादौशतंचांतेजपेन्मंत्रंनवार्णकं॥चंडींसप्तशतींमध्येसंपुटीयमुदाहृतः॥एकंद्वेत्रीणिचत्वारिजपेद्दिनचतुष्टयं॥रूपाणिक्रमशस्तद्वत्पूजनादिकमाचरेत्॥पंचमेदिवसेप्रातर्होमंकुर्याद्विधानतः॥गुडूचीयावसंदूर्वान्तिलाञ्छुक्लान्यवानपिचंडीपाठस्यहोमंतुप्रतिश्लोकंदशांशतः॥होमंकुर्याद्ग्रहादिभ्यःसमिदाज्यचरून्क्रमात्॥हुत्वापूर्णाहुतिंदद्याद्विप्रेभ्योदक्षिणांक्रमात्॥कपिलांगांनीलमणिं

श्वेताश्वं छत्रचामरे॥ अभिषेकं ततः कुर्युर्यजमानस्य ऋत्विजः॥ एवं कृते महेशान सर्वसि
द्धिः प्रजायते॥ इति॥ अथ सहस्रचंडी॥ सा च तत्रैवोक्ता॥ सहस्रचंडीवि
धिं वक्ष्ये शृणु विष्णो महामते॥ राज्यभ्रंशे महोत्पाते जनमारे महाभये गजमारेऽश्वमारे च पर
चक्रभये तथा॥ इत्यादिविविधे दुःखे क्षयरोगादिजे भये॥ सहस्रचंडिकापाठं कुर्याद्वा कार
येत्तथा॥ जापकास्तु शतं प्रोक्ता विंशद्धस्तश्च मंडपः॥ भोज्याः सहस्रविप्रेंद्रा गोशतं दक्षि
णां दिशेत्॥ पुरश्चेद्द्विगुणं देयं शय्यादानं तथैव च॥ सप्तधान्यं च भूदानं श्वेताश्वं च मनोहरं॥
पंचनिष्कमिता मूर्त्तिः कर्त्तव्या वाहमानतः॥ अष्टादशभुजा देवी सर्वायुधविभूषिता॥
अवारितान्नदानं च सहस्रं प्रत्यहं विभो॥ शतं वा नियताहारः पयःपानेन वर्त्तयेत्॥ ए
वं यश्चंडिकापाठं सहस्रं तु समाचरेत्॥ तस्य स्यात्कार्यसिद्धिस्तु नात्र कार्या विचारणेति
॥ एतद्द्वयं यद्यपि महानिबंधेषु नास्ति॥ तथापि प्रचरद्रूपत्वादुक्तमिति दिक्॥ वाराहीतं
त्रे॥ संकटे समनुप्राप्ते दुश्चिकित्स्यामये तथा॥ जातिध्वंसे कुलोच्छेदे आयुषो नाश आग
ते॥ वैरिवृद्धौ व्याधिवृद्धौ धननाशे तथा क्षये॥ तथैव त्रिविधोत्पाते तथा चैवोपपातके॥
कुर्याद्यत्नाच्छतावृत्तं ततः संपद्यते शुभं॥ श्रियो वृद्धिः शतावृत्ताद्राज्यवृद्धिस्तथा पर मन
सा चिंतितं देवि सिध्येदष्टोत्तराच्छतात्॥ सहस्रावृत्तेना लक्ष्मीरावृणोति स्वयं स्थिरा॥ भु
क्त्वा मनोरथान् कामान्नरो मोक्षमवाप्नुयात्॥ चंड्याः शतावृत्तिपाठात्सर्वाः सिध्यं
ति सिद्धयः॥ इति शतचंडीसहस्रचंडीविधिः॥ अथ नवरात्रपारणनि
र्णयः॥ सा च दशम्यां कार्या॥ आश्विने मासि शुक्ले तु कर्त्तव्यं नवरात्रकं॥ प्रति
पदादिक्रमेणैव यावच्च नवमी भवेत्॥ त्रिरात्रं वापि कर्त्तव्यं सप्तम्यादि यथाक्रममिति हेमा
द्रौ धौम्यवचनात्॥ नवमीतिथिपर्यंतं वृद्ध्या पूजाजपादिकमिति माधवोक्तवचनेन नवमीपर्यं
तं प्रधानभूतपूजाद्युक्तोपवासादेश्चांगत्वेन तत्पर्यंतत्वात्॥ आदिशब्देनोपवासोक्तेः॥
पूर्वोक्तत्रिरात्रव्रते नवम्या अप्युपोष्यत्वाच्च॥ न च पारणांतत्वेन त्रिरात्रत्वं॥ विष्णुत्रिरा
त्रादौ तथाप्रसक्तेः॥ न चात्रोपवासे मानाभाव इति वाच्यं॥ एवं च विंध्यवासिन्या नवरा
त्रोपवासतः॥ एकभक्तेन नक्तेन तथैवायाचितेन च॥ पूजनीया जनैर्देवी स्थाने स्थाने
पुरे पुरे॥ इति हेमाद्रौ भविष्योक्तेः॥ नवरात्रसमाख्यातो नवम्या अप्युपोष्यत्वाच्च॥ ननु
तिथिह्रासे त्वष्टावप्युपवासा भवंतीति कथं समाख्या॥ नैतत् कर्मविशेषे नवरात्रशब्दरू
ढः॥ अत एवोक्तं देवीपुराणे॥ तिथिवृद्धौ तिथिह्रासे नवरात्रमपार्थकमिति चेन्न॥ ति
थिह्रासेपि नवतिथीनामुपोष्यत्वान्नवरात्रत्वासक्तेः॥ एतेन रात्रीणां प्राधान्याद्ध्रासे
अमामादाय नवत्वमिति मूर्खोक्तिः परास्ता॥ यत्तु देवीपुराणे॥ कन्यासंस्थे रवौ श
क्र शुक्लामारभ्य नंदिकां॥ अयाची ह्यथवैकाशी नक्ताशी वाथ वाग्यत इति॥ तत्र च
तुर्थ्युक्तं तल्लोहाभिसारिकविषयम्॥ तस्य जयाभिलाषी नृपतिः प्रतिपत्प्रभृति क
मात्॥ लोहाभिसारिकं कर्म कारयेद्यावदष्टमीति॥ भविष्ये अष्टमीपर्यंतमेवोक्तेः॥

रूपनारायणेनतुनंदादिव्रतप्रयोगेष्टम्यंगत्वोक्तेस्तन्नवम्यांपारणमुक्तम्॥यद्यपिनिर्णयदीपेप्या
श्विनेशुक्लपक्षेतुनवरात्रमुपोषितः॥नवम्यांपारणंकुर्य्याद्दशमीमिश्रितानचेत्॥दशमीमिश्रिता
यत्रपारणेनवमीभवेत्॥दुःखदारिद्र्यदाज्ञेयातथाव्रतविनाशिनीतिव्रात्यनाम्नालिखितंवच
नम्॥यच्चरुद्रयामलइतिवदंति॥अष्टम्यासहकार्य्यास्यान्नवमीपारणेदिने॥योमोहाद्दशमीवे
धेनवम्यांचंडिकांयजेत्॥पारणंचप्रकुर्य्याद्वैतस्यपुण्यंनिरर्थकं॥नवम्यांपारितादेवीकुलवृद्धिं
प्रयच्छति॥दशम्यांपारितादेवीकुलनाशंकरोतिवै॥तस्मात्तुपारणंकुर्य्यान्नवम्यांविबुधाधिपे
त्यादीनियद्दिसमूलानितदालौहाभिसारिकनंदादिव्रतचतुष्टयविषयाणितस्याष्टमीपर्यंतमेवो
क्तेरित्युक्तंप्राक्॥अन्यथामहाष्टम्यांपरविद्धायांपारणाविधानेसर्वनिबंधैर्विरोधोदुर्वारःस्यात्॥
यानितुकेश्चिल्लिखितानि॥नवम्यांपारणाविधायकानिवचनानितानिहेमाद्र्यादिविरुद्धत्वान्नि
र्मूलानि॥समूलत्वेपियदादिनद्वयेनवमीतदाद्वितीयदिनेउपोष्यनिष्यंतेपारणानकिंतुनवमी
मध्येकार्य्येत्येवंनेयानिशिवरात्रिपारणावत्॥अत्रकेचित्॥पारणाहेसूतकादिप्राप्तौतदतिक्र
म्यपारणंकुर्य्यादित्याहुः॥तन्मंद॥काम्योपवासेप्रक्रांतेत्वंतरामृतसूतके॥तत्रकाम्यव्रतंकुर्य्याद्दा
नार्चनविवर्जितमितिमाधवीयेकौर्मोक्तेः॥व्रतयज्ञविवाहेषुश्राद्धेहोमेर्चनेजपे॥प्रारब्धेसूत
कंनस्यादनारब्धेतुसूतकमितिविष्णुवचनाच्चाशौचमध्येपितत्कर्त्तव्यतावगतेः॥पारणंत
त्वाद्व्रतस्य॥प्रारंभस्तुनेवोक्तः॥प्रारंभोवरणंयज्ञेसंकल्पोव्रतसत्रयोः॥नांदीमुखंविवाहादौश्रा
द्धेपाकपरिक्रियेति॥रुद्रयामलेपि॥सूतकेपारणंकुर्यान्नवम्यांहोमपूर्वकं॥तदंतेभोजयेद्विप्रा
न्दानंदद्याच्चशक्तितइति॥तदंतेसूतकांते॥एवंस्त्रीभिरपिरजोदर्शनमध्येकर्त्तव्यमेवपारणम्
॥संप्रवृत्तेपिरजसितत्याज्यंद्वादशीव्रतमितिमाधवीयेऋष्यशृंगवचनात्॥द्वादशीव्रतमित्युपल
क्षणम्॥प्रारब्धदीर्घतपसांनारीणांयद्रजोभवेत्॥नतत्रापिव्रतस्यस्यादुपरोधःकदाचनेतित
त्रैवसत्यव्रतवचनात्॥किंच॥एकादश्यादौयंचमाशौचयातेमासांतेपारणायतिः॥मासोपवा
सांतेपंचमाशौचयातेजीवनासंभवश्च॥यत्तु॥नियमस्थायदानारीप्रपश्येदंतरारजः॥उपोष्ये
वगुतारात्रीःस्नात्वाशेषंचरेद्व्रतमितिगिरोवचनम्॥यच्चहारीतवचनं॥नियमस्थाव्रतस्थास्त्रीर
जःपश्येत्कथंचनः॥त्रिरात्रंतुक्षिपेदूर्ध्वंव्रतशेषंसमापयेदिति॥तद्द्विधवोपवासविषयम्॥तासां
तत्रभोजननिषेधादितिकेचित्॥वयंतुप्रागुक्तसत्यव्रतवचनेदीर्घतपसामितिविशेषणोपादाना
द्द्वादशीव्यतिरिक्तसकलैकाहोपवासविषयोयंनिषेधः॥त्रिरात्रनवरात्रादिदीर्घव्रतेषुरजोमध्येए
वपारणेतिब्रूमः॥आशौचमध्येतुसर्वोपिपारणाभवति॥प्रागुक्तकौर्मवचनादितिसिद्धम्॥अ
यंचोपवासपारणानिर्णयःसर्वव्रतेषुबोध्यइत्यलंभूयसा॥दशम्यांदेवींविसर्ज्जयेत्॥तदुक्तं
दुर्गाभक्तितरंगिण्यांदेवीपुराणे॥ततःप्रातःप्रजपित्वादशम्यांविधिपूर्वकं॥संप्रेषणंतुकर्त्त
व्यंगीतवादित्रनिस्वनैः॥रूपंदेहियशोदेहिभाग्यंभगवतिदेहिमेपुत्रान्देहिधनंदेहिसर्वान्कां
मांश्चदेहिमे॥महिषघ्निमहामायेचामुंडेमुंडमालिनिआयुरारोग्यमैश्वर्य्यंदेहिदेविनमोस्तुते॥
इतिसंप्रार्थ्यदेवींतुततउत्थापयेद्बुधः॥उत्तिष्ठदेविचंडेशिशुभांपूजांप्रगृह्यच॥कुरुष्वममक

सारामष्टाभिः शक्तिभिः सह॥ गच्छ गच्छ परं स्थानं स्वस्थानं देवि चंडिके॥ व्रजस्रोतोजलं वृद्ध्यै स्थी
पतां च जले विहेति उत्थाप्य जलं नीत्वा॥ दुर्गे देवि जगन्मातः स्वस्थानं गच्छ पूजिता॥ संवत्सरे व्यती
ते तु पुनरागमनाय वै॥ इमां पूजां मया देवि यथाशक्त्योपपादितां॥ रक्षार्थं त्वं समादाय व्रज स्थानम
नुत्तममिति॥ जले प्रवाहयेत्॥ इयमेव विजयादशमी॥ सा च द्वितीयदिने श्रवणयोगाभावे पूर्वा
ग्राह्या॥ तदुक्तं हेमाद्रौ स्कांदे॥ दशम्यां तु नरैः सम्यक् पूजनीयापराजिता॥ क्षेमार्थं विजयार्थं च पूर्वो
क्तविधिना नरैः॥ नवमीशेषयुक्तायां दशम्यामपराजितां॥ ददाति विजयं देवि पूजिता जयव
र्द्धिनी॥ तथा॥ आश्विने शुक्लपक्षे तु दशम्यां पूजयेन्नरः॥ एकादश्यां न कुर्वीत पूजनं चापराजि
तमिति॥ यदा तु पूर्वदिने श्रवणयोगाभावः परदिने चाल्पापि तद्योगिनी तदा परैव॥ तथा च हेमा
द्रौ व्रतकांडे कश्यपः॥ उदये दशमी किंचित्संपूर्णैकादशी यदि॥ श्रवणर्क्षं यदा काले सा तिथि
र्विजयाभिधा॥ श्रवणर्क्षे तु पूर्णायां काकुत्स्थः प्रस्थितो यतः॥ उल्लंघयेयुः सीमानं तद्दिनर्क्षे ततो
नरा इति॥ काले पराह्णे॥ परदिने श्रवणाभावे तु सर्वपक्षे पूर्वैव॥ मदनरत्नेप्येवं॥ ज्योतिर्नि
र्बंधे रत्नकोशे च नारदः॥ ईषत्संध्यामतिक्रांतः किंचिदुद्भिन्नतारकः॥ विजयो नाम कालोऽयं स
र्वकार्यार्थसिद्धिदः॥ ईषच्च दशमी शुक्ला पूर्वविद्धां न कारयेत्॥ श्रवणेनापि संयुक्तां राज्ञः पट्टा
भिषेचने॥ सूर्योदये यदा राजन्दृश्यते दशमी तिथिः॥ आश्विने मासि शुक्ले तु विजयां तां वि
दुर्बुधाः॥ अत्रायं निर्गलितार्थः॥ अपराह्णः मुख्यः कर्मकालः॥ तत्रैवव्याप्तौ॥ प्रदोषो गौ
णः॥ तत्र दिनद्वये अपराह्णव्याप्तौ पूर्वा प्रदोषव्याप्तेराधिक्यात्॥ दिनद्वये प्रदोषव्याप्तावपरा
अपराह्णव्याप्तेराधिक्यात्॥ इदं तु तिथ्यावश्यकाले श्रवणं तु रोहिणीवदप्रयोजकं॥ दिनद्वये
अपराह्णास्पर्शे तु व्याप्तौ वा श्रवणयुता पूर्वा॥ तत्रापि परदिने अपराह्णे श्रवणसत्त्वे स्वल्पापि परैवेति दि
क्॥ अत्र विशेषो भार्गवार्चनदीपिकायां भविष्ये॥ शमीपूजां जगन्नाथ भक्तानामभयंकरं॥ अर्च
यित्वा शमीवृक्षमर्चयेच्च ततः पुनः॥ शमीमंत्रस्तु हेमाद्रौ गोपथब्राह्मणे॥ अमंगलानां शमनीं शम
नीं दुष्कृतस्य च॥ दुःस्वप्ननाशिनीं धन्यां प्रपद्येहं शमीं शुभां॥ तथा भविष्ये शमी शमयते पापं शमी लो
हितकंटकी॥ धारिण्यर्जुनबाणानां रामस्य प्रियवादिनी॥ करिष्यमाणयात्रायां यथाकालं सुखं
मया॥ तत्र निर्विघ्नकर्त्री त्वं भव श्रीरामपूजिते इति॥ तथा॥ गृहीत्वा साक्षतामार्द्रां शमीमूलगतां
मृदं॥ गीतवादित्रनिर्घोषैरानयेत्स्वगृहं प्रति॥ ततो भूषणवस्त्रादि धारयेत्स्वजनैः सहेति॥ अ
त्र बलनीराजनमुक्तं कृत्यरत्ने॥ तत्र मंत्रः॥ चतुरंगबलं मह्यं निररिष्टं व्रजत्विह॥ सर्वत्र विजयो मे
ऽस्तु त्वत्प्रसादात्सुरेश्वरीति॥ गौडनिबंधे ज्योतिषे॥ हत्वा नीराजनं राजा बलवृद्ध्यै यथाक्रमं॥ शोभ
नं खंजनं पश्येज्जलगोगोष्ठसन्निधौ॥ अस्य फलानि शुभाशुभदेशाश्च तत्रैव ज्ञेयाः॥ आश्विन
पौर्णमासी परा ग्राह्या॥ सावित्रीव्रतमन्तरेण भवनोऽमापौर्णमास्यौ परे इति दीपिकोक्तेः॥ अत्र
विशेषस्तिथितत्त्वे लैंगे॥ आश्विन्यां पौर्णमास्यां तु चरेज्जागरणं निशि॥ कौमुदी सा समाख्याता
कार्या लोकैर्विभूतये॥ कौमुद्यां पूजयेल्लक्ष्मीमिंद्रमैरावतस्थितं॥ सुगंधिर्निशि सद्वेषोऽक्षैर्जाग
रणं चरेत्॥ तथा॥ निशीथे वरदा लक्ष्मीः को जागर्तीति भाषिणी॥ तस्मै वित्तं प्रयच्छामि अक्षैः क्री

ङ्करोतिपः॥ अत्रैवाश्वयुजीकर्मोक्तमाश्वलायनेन॥ आश्वयुज्यामाश्वयुजीकर्मेति॥ तच्छ्रेयपर्वणि का
र्य्यंविकृतित्वात्॥ आग्रयणंतुपर्वणिकार्य्यं॥ शरद्याग्रयणंनामपर्वणिस्यात्तदुच्यते॥ इतिशौनकोक्तेः
॥तत्रापिशेषपर्वणिकार्य्यमितिप्रागुक्तं॥ तच्चव्रीहिभिरिष्ट्वाव्रीहिभिरेवयजेत॥ यवेभ्यो यवैरिष्ट्वायवै
रेवयजेतव्रीहिभ्यइति॥ अमादर्शपौर्णमासयोरेककर्मत्वेनैकद्रव्यनियमात्॥ दर्शेष्ट्याःपर्वपौर्ण
मासाच्चतदितिदीपिकोक्तेश्च॥ पच्चाग्रयणंत्रेधाव्रीह्याग्रयणं यवाग्रयणंश्यामाकाग्रयणंचेति॥ ए
षांकालःश्रुतौ॥ गृहमेधीव्रीहियवाभ्यांशरद्वसंतयोर्यजेतश्यामाकैर्नीवारैर्वर्षास्वापकालेवान्येन।
पुराणैर्वेति॥ आपस्तंबोपि॥ वर्षासुश्यामाकैर्यजेत॥ शरदीव्रीहिभिः॥ वसंतेयवैर्यथर्तुवेणुय
वैरिति॥ तत्रापिश्यामाकाग्रयणमनित्यमितरेतुत्वनाहिताग्नेर्नित्ये॥ यवाग्रयणंचकार्यमितिस्मा
र्त्तरत्नाभुक्तत्वात्॥ सूत्रेव्रीहियवदेवतासंबद्धानामेवमंत्राणामानाच्च॥ आहिताग्नेस्तुयवाग्रयण
स्याप्यनित्यत्वम्॥ अपिवाक्रियायवेष्वितिसूत्रात्॥ यद्वाव्रीह्याग्रयणेनसमानतंत्रता॥ श्यामाके
स्तुअन्नान्तरंकुर्य्यान्नाग्रयणं॥ यदिवातद्यपिसमानतंत्रमित्यादिनारायणवृत्तौपरिश्रमवतांसुल
भमित्यलम्॥ इदंचपर्वाभावेशुक्लपक्षेदेवनक्षत्रेकृत्तिकादिविशाखांतेकार्यमितिस्मृत्यर्थसा
रेउक्तम्॥ बौधायनीयेकेशवस्वामिनाप्येवमुक्तम्॥ परिशिष्टे॥ श्यामाकैर्व्रीहिभिश्चैवयवै
श्चान्नोन्नकालतः॥ प्रभयस्तुयुज्पनेवश्यंनद्यत्राग्रयणात्ययः॥ त्रिकांडमंडनोप्येवम्॥ यदात्वे
तदाश्विनपौर्णमास्यांक्रियतेतदैककालत्वादाश्वयुजीकर्मणोऽस्यचसमानतंत्रताभवति॥
तदेतद्वृत्तिकृतानारायणवहिर्विध्याजेतिसूत्रेस्पष्टमुक्तं॥ अस्याकरणेप्रायश्चित्तमुक्तंस्मृतिचं
द्रिकायांकात्यायनेनतथ्या॥ भोजनेपतितान्नस्यचरुर्वैश्वानरोभवेत्॥ कारिकापि॥ अकृता
ग्रयणोश्नीयान्नवान्नंयदिवैनरः॥ वैश्वानरायकर्तव्यश्चरुःस्वर्णादृतिस्तथेति॥ अग्निधा
नेतु॥ समिद्वरायामंत्रेचवर्षेवर्षेजयेत्तताम्॥ आग्रयणंयदात्मनेनतदासंपूर्णमितिनदित्युक्तं॥
एतच्चयदिमलमासेकार्यमन्यथानेतिप्रागुक्तम्॥ अमोघ्याहिताग्न्यादिविशेषःशौनकादेर्ज्ञे
यइत्यलंभूयसा॥० इतिश्रीभट्टकमलाकरकृतेनिर्णयसिंधौआश्विनमासः॥

॥ अथकार्त्तिकस्नानम्॥ तुलासंक्रमणेप्राक्परादशघटिकाःपुण्याः॥ रात्रौ
प्रागुक्तम्॥ अथकार्त्तिकस्नानम्॥ तत्रपृथ्वीचंद्रोदयेविष्णुस्मृतिपाद्मयोः॥
तुलामकरमेषेषुप्रातःस्नानंविधीयते॥ हविष्यंब्रह्मचर्य्यंचमहापातकनाशनमिति॥ सौरमा
सउक्तः॥ प्राच्यास्तुदेवाद्रियंते॥ दाक्षिणात्यास्तु॥ आश्विनस्यतुमासस्ययाशुक्लैकादशीभ
वेत्॥ कार्त्तिकस्यव्रतानीहतस्यांवैप्रारभेत्सुधीरितिपाद्मोक्तेः॥ भार्गवार्चनेच॥ प्रारभ्यैका
दशीशुक्लामाश्विनस्यतुमानवः॥ प्रातःस्नानंप्रकुर्वीतयावत्कार्त्तिकभास्करः॥ इतिविष्णुर
हस्योक्तेः॥ हेमाद्रौचादिपुराणे॥ स्नानमाश्वियुजेमासिपौर्णमास्यांसमाहितः॥ इत्युक्त्वामा
ससमर्यपरयाचभक्त्यासमाप्यतेकार्त्तिकपौर्णमास्यामित्यंतेभिधानाच्चाश्विनशुक्लैका
दश्यांपौर्णमास्यांवारभ्यकार्त्तिकशुक्लद्वादश्यांपौर्णमास्यांवासमापयेदित्याहुः॥ मदनपा
रिजातेविष्णुः॥ कार्त्तिकंसकलंमासंनित्यस्नायीजितेंद्रियः॥ जपन्हविष्यभुक्शांतःसर्वपा

यैः प्रमुच्यतेऽत्रदेशविशेषः पाद्मेकार्त्तिकीं प्रक्रम्य॥कुरुक्षेत्रेकोटिगुणोगंगायामपितत्समःत
तोऽधिकःपुष्करेस्याद्द्वारवत्यांचभार्गव॥षड्गुणाःपुर्यश्चसप्तैवमुनयोमथुराधिकाः।दुर्लभःका
र्त्तिकोविप्रामथुरायांनृणामिह॥यत्रार्चितःस्वकंरूपंभक्तेभ्यःसंप्रयच्छतीति॥इदंचस्नानंकाशी
स्थंपंचनदेप्यतिप्रशस्तं॥शतंसमास्तपस्तप्त्वाकृतेयत्प्राप्यतेफलं।तत्कार्त्तिकेपंचनदेसकृ
त्स्नानेनलभ्यते॥कार्त्तिकेबिंदुतीर्थेयोब्रह्मचर्यपरायणः॥स्नास्यत्यनुदिनेभानौभानुजात
स्यभीःकुतइत्यादिकाशीखंडोक्तेः॥भानुजोयमः॥इदंचप्रातःस्नानंसंध्यांचकृत्वाकार्य्यं॥
तेनविनेतरकर्म्मानधिकारादितिवर्धमानः॥यद्यपिप्रातःसंध्यायाःसूर्योदयेसमाप्तिस्त
थापिक्वचनवचनादनुदितहोमवद्भविष्यति॥स्नानमंत्रश्चतत्रैव॥कार्त्तिकेहंकरिष्यामिप्रा
तःस्नानंजनार्दन॥प्रीत्यर्थंतवदेवेशदामोदरमयासह॥इमंमंत्रंसमुच्चार्य्यमौनीस्नायाद्व्र
तीनरः॥इति॥अर्घ्यमंत्रोपितत्रैव॥व्रतिनःकार्त्तिकेमासिस्नातस्यविधिवन्मम॥गृहाणार्घ्यं
मयादत्तंदनुजेंद्रनिषूदन॥नित्यनैमित्तिकेकृष्णकार्त्तिकेपापनाशने।गृहाणार्घ्यंमयादत्तं
राधयासहितोहरे॥इमौमंत्रौसमुच्चार्य्ययोर्घ्यंमह्यंप्रयच्छति॥सुवर्णरत्नपुष्पांबुपूर्णशं
खेनपुण्यवान्॥सुवर्णपूर्णापृथिवीतेनदत्तानसंशयइति॥एवंसंपूर्णस्नानाशक्तौत्र्यहं
स्नायात्॥वाराणस्यांपंचनदेत्र्यहंस्नातास्तुकार्त्तिके॥अमीतेपुण्यवपुषःपुण्यभाजातिनि
र्मलाइतिकाशीखंडोक्तेः॥ अथमालाधारणम्॥ तत्रस्कांदेद्वारकामाहा
त्म्ये॥निवेद्यकेशवेमालांतुलसीकाष्ठसंभवां॥वहतेयोनरोभक्त्यातस्यनैवास्तिपातकम्॥त
द्वत्तुलसीमालांधात्रीमालांविशेषतः॥महापातकसंहर्त्रींधर्मकामार्थदायिनीम्॥वि
ष्णुधर्मे॥स्पृशेत्तुयानिलोमानिधात्रीमालाकलौनृणां॥तावद्वर्षसहस्राणिवैकुंठेवसतिर्भ
वेत्॥मालायुग्मंतुयोनित्यंधात्रीतुलसिसंभवं॥वहतेकंठदेशेतुकल्पकोटिदिवंवसेत्॥
तुलसीकाष्ठसंभूतेमालेकृष्णजनप्रिये॥बिभर्मित्वामहंकंठेकुरुमांकृष्णवल्लभं॥एवंसं
प्रार्थ्यविधिवन्मालांकृष्णगलेर्पितां॥धारयेत्कार्त्तिकेयोवैसगच्छेद्वैष्णवंपदमिति॥अ
त्रमूलंचिंत्यम्॥तथाकाशीखंडे॥कार्त्तिकेमासिमेयात्रायैःकृताभक्तितत्परैः॥बिंदुतीर्थकृ
तस्नानैस्तेषांमुक्तिर्नदूरतः॥भार्गवार्चनदीपिकायांनृसिंहपुराणे॥अगस्त्यकुसुमैर्देवं
योर्चयेज्जनार्दनम्॥दर्शनात्तस्यदेवर्षेनरकंनाप्नुतेनरः॥विहायसर्वपुष्पाणिमुनिपुष्पे
णकेशवं॥कार्त्तिकेयोर्चयेद्भक्त्यावाजपेयफलंलभेत्॥स्कांदेकार्त्तिकमाहात्म्ये॥मालती
मालयाविष्णुःकेतक्याचैवपूजितः॥समासहस्रंसुप्रीतोभवतुमधुसूदनः॥पृथ्वीचंद्रोद
येपाद्मे॥कार्त्तिकेनार्चितोयैस्तुकमलैःकमलेक्षणः॥जन्मकोटिषुविप्रेंद्रनतेषांकमलागृ
हे॥कार्त्तिकेकेशवेपूजायेषांनाम्रामुनेःकृता॥तेनिर्भर्त्स्यरवेःपुत्रंवसंतित्रिदिवेसदा॥
तुलसीदललक्षेणकार्त्तिकेयोर्चयेद्धरिं॥पत्रेपत्रेमुनिश्रेष्ठमौक्तिकंलभतेफलं॥स्कांदे
कार्त्तिकमाहात्म्ये॥धात्रीछायांतुयःकुर्यात्पिंडदानंमहामुने॥मुक्तिंप्रयांतिपितरःप्रसादा
न्माधवस्यतु॥धात्रीफलविलिप्तांगोधात्रीफलविभूषितः॥धात्रीफलकृताहारोनरोना

रायणोभवेत्॥धात्रीछायांसमाश्रित्ययोर्चयेच्चक्रधारिणम्॥पुष्पेपुष्पेश्वमेधस्यफलंप्राप्नोति
मानवः॥तथा॥कार्त्तिकेमासिविप्रेंद्रधात्रीवृक्षोपशोभितं॥वनेदामोदरंविष्णुंचित्रान्नैस्तोषयेद्वि
भुं॥मूलेनपायसेनाथहोमंकुर्याद्विचक्षणः॥ब्राह्मणान्भोजयेच्छक्त्यास्वयंभुंजीतबंधुभिरिति॥
तथा॥कार्त्तिकेद्विदलत्यागउक्तम्॥कार्त्तिकेद्विदलंत्यजेदिति॥पाद्मेपि॥कार्त्तिकमाहात्म्ये॥रा
जिकामारकंचैववनेवाधात्कार्त्तिकव्रती॥द्विदलंतिलतैलंचतथान्यन्नंनिदूषितं॥स्कांदेपि॥का
र्त्तिकेवर्जयेत्तद्वद्द्विदलंबहुबीजकं॥माषमुद्गमसूराश्चचणकाश्चकुलत्थकाः॥निष्पावाराजमा
षाश्चआढकीद्विदलंस्मृतं॥नूतनान्यपिजीर्णानितानिसर्वाणिवर्जयेत्॥अत्रकेचित्॥उत्प
त्तिसमयेदलद्वयंयस्यभवतितद्भूतत्र्वेगम्याद्विदलमुच्यतेइत्याहुः॥उदाहरंतिच॥बीजमेवस
मुद्भूतद्विदलंचांकुरंविना॥दृश्यतेपत्रसस्येषुद्विदलंतन्निगद्यतेइति॥अन्येतुलक्षणायामाना
भावात्॥वचनस्यचनिर्मूलत्वाद्विदलात्मकंयस्यस्वरूपंतदेववर्ज्यमित्याहुः॥तथानारदीये
॥कार्त्तिकेवर्जयेत्तैलंकार्त्तिकेवर्जयेन्मधु॥कार्त्तिकेवर्जयेत्कांस्यंकार्त्तिकेशुक्तसंधितं॥कां
स्यंतत्पात्रभोजनं॥शुक्तंपर्युषितम्॥संधितंलवणशाकः॥तत्रैव॥कार्त्तिकेविष्णुमूर्त्त्यग्रेदीप
दानाद्दिवंव्रजेत्॥तथा॥कार्त्तिकेतुकृतादीक्षानृणांजन्मविमोचनी॥तथा॥कार्त्तिकेकृच्छ्रसे
वीयःप्राजापत्यपरोथवा॥एकांतरोपवासीवात्रिरात्रोपोषितोपिवा॥षड्वाद्विदशपक्षंवामासंवा
वरवर्णिनि॥एकभक्तेननक्तेनतथैवायाचितेनच॥उपवासेनभैक्ष्येणव्रजेत्परमंपदं॥अ
न्येपिनियमाःप्रागुक्ताः॥आद्यमुक्तंस्कांदे॥व्रीहयःयवगोधूमाःप्रियंगुतिलशालयः॥एतेहि
सात्विकाःप्रोक्ताःस्वर्गमोक्षफलप्रदाः॥काशीखंडे॥ऊर्जेयवान्नमश्नीयादेकान्नमथवापुनः॥वृं
ताकंसूरणंचैवशूकशिंबीश्चवर्जयेत्॥पृथ्वीचंद्रोदयेपाद्मे॥नोर्जेवधोविधातव्योव्रतिनाकी
टविल्वकचित्॥तथा॥नारदीये॥अन्नंतेनक्षपेद्यस्तुमासंदामोदरप्रियम्॥तिर्य्यग्योनिमवा
प्नोतिनात्रकार्याविचारणा॥अमामपितैलतांबूलकेशकर्त्तनादिवर्जनसंकल्परूपाणिप्रा
गुक्तानि॥तथा॥कार्त्तिकेआकाशदीपउक्तोनिर्णयामृतेपुष्करपुराणे॥तुलायांतिलतैलेन
सायंकालेसमागते॥आकाशदीपंयोदद्यात्मासमेकंहरिंप्रति॥महतींश्रियमाप्नोतिरूपसौ
भाग्यसंपदमिति॥तद्विधिस्तुहेमाद्रौआदिपुराणे॥दिवाकरेस्ताचलमौलिभूतेगृहाद्दूरेपुरु
षप्रमाणम्॥यूपाकृतिंयज्ञियवृक्षदारुमारोप्यभूमावथतस्यमूर्द्धि॥यवांगुलच्छिद्रयुतास्तुमध्ये
द्विहस्तदीर्घाअथपट्टिकास्तु॥कृत्वाचतस्रोष्टदलाकृतीस्तुयाभिर्भवेदष्टदिशानुसारी॥तत्क
र्णिकायांतुमहाप्रकाशोदीपःप्रदेयोदलगास्तथाष्टौ॥निवेद्यधर्म्मायहरायभूम्यैदामोदरायाप्य
थधर्म्मराज्ञे॥प्रजापतिभ्यस्त्वथसत्पितृभ्यः॥प्रेतेभ्यएवाथतमस्थितेभ्यइति॥अपरार्केत्व
त्रमंत्रोयथा॥दामोदरायनभसितुलायांलोलयासह॥प्रदीपंतेप्रयच्छामिनमोनंतायवेधसे
इति॥कार्त्तिककृष्णचतुर्थीकरकचतुर्थीसाचंद्रोदयव्यापिनीग्राह्या॥दिनद्वयेतत्त्वेपूर्वा॥कार्त्तिक
कृष्णद्वादशीगोवत्ससंज्ञाप्रदोषव्यापिनीग्राह्या॥दिनद्वयेतत्त्वेपूर्वा॥युग्मवाक्यात्॥वत्सपूजा
वटश्चैवकर्त्तव्याप्रथमेहनीतिनिर्णयामृतेभिधानाच्च॥अत्रविशेषोमदनरत्नेभविष्ये॥वत्स

मातुल्यवर्णां च शीलिनीं गां पयस्विनीं॥ चंदनादिभिरालिप्य पुष्पमालाभिरर्चयेत्॥ अर्घ्यं ताम्र
मये पात्रे कृत्वा पुष्पाक्षतैस्तिलैः॥ पादमूले तु दद्याद्वै मंत्रेणानेन पांडव॥ क्षीरोदार्णवसंभूते सु
सुरनमस्कृते॥ सर्वदेवमये मातर्गृहाणार्घ्यं नमो नमः॥ ततो माषादिसंसिद्धान् वटकान्निवेदये
त्॥ सुरभि त्वं जगन्मातर्देवि विष्णुपदे स्थिता॥ सर्वदेवमये ग्रासं मया दत्तमिदं ग्रस॥ ततः सर्व
देवमये देवि सर्वदेवैरलंकृते॥ मातर्ममाभिलषितं सफलं कुरु नंदिनि इति प्रार्थयेत्
तथा॥ तद्दिने तैलपक्वं च स्थालीपक्वं युधिष्ठिर॥ गोक्षीरं गोघृतं चैव दधितक्रं च वर्जयेत्॥ ज्यो
तिर्निबंधे नारदः॥ आश्विने कृष्णपक्षे तु द्वादश्यादिषु पंचसु॥ तिथिषूक्तः पूर्वरात्रे नृणां नीरा
जनाविधिः॥ नीराजयेयुर्देवांस्तु विप्रान् गाश्च तुरंगमान्॥ ज्येष्ठान् श्रेष्ठान् जघन्यांश्च मातृमु
ख्यांश्च योषितः इति॥ निर्णयामृते स्कांदे॥ कार्तिकस्यासिते पक्षे त्रयोदश्यां निशामुखे॥ यमदीपं ब
हिर्दद्यादपमृत्युर्विनश्यति॥ मंत्रस्तु॥ मृत्युना पाशदंडाभ्यां कालेन श्यामया सह॥ त्रयोदश्यां दीप
दानात्सूर्यजः प्रीयतां मम इति॥ कार्तिककृष्णचतुर्दश्यां प्रभाते चंद्रोदयेऽभ्यंगं कुर्यात्॥ तदुक्तं नि
र्णयामृते भविष्योत्तरे॥ कार्तिके कृष्णपक्षे तु चतुर्दश्यामिनोदये॥ अवश्यमेव कर्तव्यं स्नानं नर
कभीरुभिः॥ इनश्चंद्रः॥ मदनरत्ने कालादर्शे च विधूदय इति पाठः॥ दिनोदय इति पाठांतरं सूर्यो
दयोत्तरं त्रिमुहूर्ते स्नानं वदतां गौडानां तदनुसारेण चायं नैव॥ एवं विधूचतुर्दश्यां कार्तिकस्य
सितेतरे॥ पक्षे प्रत्यूषसमये स्नानं कुर्यात्प्रयत्नत इति गौडाः॥ स्मृतिदर्पणेऽपि॥ चतुर्दशी चाश्वयु
जस्य कृष्णा स्वात्यर्क्षयुक्ता च भवेत्प्रभाते॥ स्नानं समभ्यर्च्य नरैस्तु कार्यं सुगंधितैलेन विभूतिका
मैरिति॥ पृथ्वीचंद्रोदये ब्राह्मे॥ आश्वयुक्कृष्णपक्षस्य चतुर्दश्यां विधूदये॥ तिलतैलेन कर्तव्यं
स्नानं नरकभीरुणेति॥ कर्तव्यं मंगलस्नानं नरैर्निरयभीरुभिरिति कालादर्शे पाठः॥ उभयत्रा
श्वयुगित्यमावास्यांतमासमभिप्रेत्योक्तम्॥ तथा॥ तैले लक्ष्मीर्जले गंगा दीपावल्याश्चतुर्दशीं
प्राप्येति शेषः॥ प्रातःस्नानं तु यः कुर्याद्यमलोकं न पश्यतीति॥ दिनद्वये चंद्रोदयेऽपि चतुर्दशी
सत्त्वे तदभावेऽप्यरुणोदये सत्त्वे पूर्वैव वा दिनद्वये चतुर्दश्याः साम्ये च पूर्वदिनेऽभ्यंगं कुर्यात्॥ एवंवि
धूचतुर्दश्यामिति वचनात्॥ पूर्वदिन एव वा सत्त्वे सैव ग्राह्या॥ दिनद्वयेऽप्यसत्त्वेऽरुणोदयव्यापिनी
ग्राह्या॥ पक्षे प्रत्यूषसमये इत्युक्तेः॥ वक्ष्यमाणवचनाच्च॥ तदभावे तु चतुर्दशीह्रासे पूर्वेद्युः प्रवे
शप्रदेऽपि त्रयोदशीमध्ये एवाभ्यंगं कुर्यादिति दिवोदासः॥ केचिदत्र वचनमपि साधकं वदंति॥
तिथ्यादौ तु भवेद्यावान् ह्रासो वृद्धिः परेऽहनीति॥ तावान् ग्राह्यः स पूर्वेद्युरदृष्टोऽपि स्वकर्मणीति
तन्मंदं॥ नहीदं वचनं पूर्वदिनस्य पूर्वग्राह्यत्वविधेये॥ नक्तजन्माष्टम्यादौ दिनद्वये कर्मकालव्या
प्त्यभावे वाक्यांतरेण पूर्वदिनस्य ग्राह्यत्वमुक्तं॥ तत्र मुख्यकालेन तिथेरभावेऽपि तत्रैवानुष्ठाने
बोधकमिदम्॥ न चात्र तदस्तीति यत्किंचिदेतत्॥ तेन चतुर्थयामगामिनी ग्राह्या॥ अत एव स
र्वज्ञनारायणः॥ तथा कृष्णचतुर्दश्यामाश्विनेऽर्कोदयात्पुरा॥ यामिन्याः पश्चिमे यामे तैलाभ्यं
गो विधीयत इति॥ मृगांकोदयवेलायां त्रयोदश्यां परा भवेत्॥ दर्शे वा मंगलस्नानं दुःखशो
कभयप्रदमिति कालादर्शे त्रयोदशीनिषेधाच्च॥ तेनायमर्थः॥ यथाग्निहोत्रे यावज्जीवं सायं

प्रातःकालेषु व्याप्यकालस्य गुरुत्वं। तथात्र चतुर्दशी चतुर्थयामारुणोदये चंद्रोदयानामुत्तरोत्तरस्य
व्याप्यत्वाद्गुरुत्वमिति॥ यदपि दिवोदासीये॥ त्रयोदशी यदा प्रातःक्षयं याति चतुर्दशी॥ रात्रिशेषे॰
त्वमावास्या तदाभ्यंगे त्रयोदशीति वचनं तद्धेमाद्रिनिर्णयामृतादावलिखितत्वेन निर्मूलं॥ समूलत्वे
प्यरुणोदयाच्चतुर्थयामाद्वा प्रागेव क्षयसत्त्वपरमिदं॥ अत एव सर्वज्ञनारायणेन तथात्वल्पचतुर्द॰
श्यामिति चतुर्थयाममात्रे स्नानमुक्तम्॥ ज्योतिर्निबंधे नारदोपि॥ इषासितचतुर्दश्यामिंदुक्षयति
थावपि॥ ऊर्जादौ स्वातिसंयुक्ते तदा दीपावली भवेत्॥ कुर्यात्संलग्नमेतच्च दीपोत्सवदिनत्रयं॥
ये तु त्रयोदशीमध्ये स्नानमाहुस्तेषामाशयं न विद्मः॥ अरुणोदयतोन्यत्र रिक्तायां स्नाति यो नरः
तस्याब्दिकभवो धर्मो नश्यत्येव न संशय इति॥ दिवोदासीये भविष्यवचनं॥ तत्तु स्वल्पकालचतुर्द
श्यभावेपि तत्रैव स्नानमित्येवंपरमिति सर्वं सिद्धम्॥ चतुर्घटिकात्मकोरुणोदय इति तत्रैवो
क्तम्॥ मदनरत्ने याम्ये॥ अपामार्गमथो तुंबीं प्रपुन्नाटमथापरम्॥ भ्रामयेत्स्नानमध्ये तु नरक
स्य क्षयाय वै॥ प्रपुन्नाटश्चक्रमर्दः॥ मंत्रस्तु॥ सीतालोष्टसमायुक्त सकंटकदलान्वित॥ हर पाप
मपामार्ग भ्राम्यमाणः पुनः पुनरिति॥ अस्यामेव प्रदोषे दीपान्दद्यादित्युक्तं हेमाद्रौ स्कांदे॥ ततः
प्रदोषसमये दीपान्दद्यान्मनोरमान्॥ ब्रह्मविष्णुशिवादीनां भवनेषु मठेषु चेति॥ दिवोदासीये
पि ब्राह्मे॥ अमावास्याचतुर्दश्योः प्रदोषे दीपदानतः॥ यममार्गांधकारेभ्यो मुच्यते कार्त्तिके नरः
खं इति ये तु सर्वेह्नि प्रदोषे दीपान्दत्वा परेद्युः स्नायादिति दिवोदासीये उक्तम्॥ अत्र नरकोद्देश॰
ने चतुर्वर्तियुक्तं दीपदानं कार्यम्॥ तत्र मंत्रः॥ दत्तो दीपश्चतुर्दश्यां नरकप्रीतये मया॥ चतुर्वर्ति
समायुक्तः सर्वपापापनुत्तये॥ तत्रैव लैंगे॥ माषपत्रस्य शाकेन भुक्त्वा तत्र दिने नरः॥ प्रेताख्या
यां चतुर्दश्यां सर्वपापैः प्रमुच्यते॥ अत्र यमतर्पणमुक्तम्॥ मदनपारिजाते॥ वृद्धमनुना॥ दी
पोत्सवचतुर्दश्यां कार्यं तु यमतर्पणम्॥ मदनरत्ने ब्राह्मे॥ अपामार्गस्य पत्राणि भ्रामयेच्छि
रसोपरि॥ ततश्च तर्पणं कार्यं धर्मराजस्य नामभिः॥ यमाय धर्मराजाय मृत्यवे चांतकाय च॥
वैवस्वताय कालाय सर्वभूतक्षयाय च॥ औदुंबराय दध्नाय नीलाय परमेष्ठिने॥ वृकोदराय चित्राय चि
त्रगुप्ताय वै नम इति॥ तर्पणप्रकारस्तु हेमाद्रौ॥ एकैकेन तिलैर्मिश्रान्दद्यात्त्रीस्त्रीञ्जलांज॰
लीन्॥ संवत्सरकृतं पापं तत्क्षणादेव नश्यति॥ तथा मदनरत्ने स्कांदे॥ दक्षिणाभिमुखो भूत्वा
तिलैः सव्यं समाहितः॥ देवतीर्थेन देवत्वात्तिलैः प्रेताधिपो यतः॥ तथा॥ यज्ञोपवीतिना कार्यं
प्राचीनावीतिनाथवेति॥ इदं जीवत्पितृकेणापि कार्यं॥ जीवत्पितापि कुर्वीत तर्पणं यमभी
ष्मयोरिति पाद्मोक्तेः॥ अत्र भीष्मतर्पणमप्युक्तम्॥ दिवोदासीये तत्प्रकारस्तु माघे वक्ष्यते॥
॥ इति नरकचतुर्दशी॥॰ कार्त्तिक्याममावास्यायां प्रातरभ्यंगं कुर्यात्॥
तदुक्तं कालादर्शे॥ प्रत्यूषे ह्याश्वयुग्दर्शे कृताभ्यंगादिमंगलः॥ भक्त्या प्रपूजयेद्देवीमलक्ष्मी
विनिवृत्तये॥ अस्य व्याख्याने॥ आदिशब्दात्पंचत्वगुदकस्नानादेरुपसंग्रहः॥ तदुक्तं पुष्क
रपुराणे॥ स्वातिस्थिते रवाविंदुर्यदि स्वातिगतो भवेत्॥ पंचत्वगुदकस्नायी कृताभ्यंगविधिर्न
रः॥ नीराजितो महालक्ष्मीमर्चयञ्छ्रियमश्नुते॥ आश्वयुग्दर्श इति दर्शशब्दः प्रत्यूषस्य॥ तियुक्त

तिथिपरः॥ तदुक्तं ब्राह्मे॥ ऊर्जे शुक्लद्वितीयायां तिथिमुख्यातिकृच्छ्रगे॥ मानवो मंगलस्नायी नै
वलक्ष्म्या वियुज्यते॥ तत्रैव॥ इषेभूते च दर्शे च कार्तिकप्रथमे दिने॥ यदा स्वाती तदाभ्यंगस्नानं
कुर्याद्दिनोदये॥ कश्यपसंहितायां दीपावलीदर्शं प्रक्रम्य॥ इंदुक्षयेपि संक्रांतौ रवौ पाते
दिनक्षये॥ तत्राभ्यंगो न दोषाय प्रातः पापापनुत्तये इति स्वातियोगं विनाप्यभ्यंग उक्तः॥ मा
त्स्ये॥ दीयते नीराजनादत्र सैषा दीपावली स्मृता॥ अत्र विशेषो हेमाद्रौ भविष्ये॥ दिवा तत्र न भो
क्तव्यमृते बालातुराज्जनात्॥ प्रदोषसमये लक्ष्मीं पूजयित्वा ततः क्रमात्॥ दीपवृक्षाश्च दात
व्याः शक्त्या देवगृहेषु च॥ तत्रैवाभ्यंगमभिधाय॥ एवं प्रभातसमये त्वमावास्यां नराधिप॥ कृ
त्वा तु पार्वणश्राद्धं दधिक्षीरघृतादिभिः॥ दीपान्दत्वा प्रदोषे तु लक्ष्मीं पूज्य यथाविधि॥ स्वलं
कृतेन भोक्तव्यं सितवस्त्रोपशोभिना॥ अयं प्रदोषव्यापी ग्राह्यः॥ तुलासंस्थे सहस्रांशौ प्रदो
षे भूतदर्शयोः॥ उल्काहस्ता नराः कुर्युः पितृणां मार्गदर्शनमिति ज्योतिषोक्तेः॥ दिनद्वये स
त्त्वे परः॥ दंडैकरजनीयोगे दर्शः स्यात्तु परेहनि॥ तदा विहाय पूर्वेद्युः परेह्नि सुखरात्रिकेति ति
थितत्त्वे ज्योतिर्वचनात्॥ दिवोदासीये तु प्रदोषस्य कर्मकालत्वात्॥ अर्द्धरात्रे भ्रमत्येव लक्ष्मी
राश्रयितुं गृहान्॥ अतः स्वलंकृता लिप्ता दीपैर्जाग्रज्जनोत्सवाः॥ सुधाधवलिताः कार्याः
पुष्पमालोपशोभिता इति॥ ब्राह्मोक्तेः प्रदोषार्द्धरात्रव्यापिनी मुख्या॥ एकैकव्याप्तौ परैव॥
प्रदोषस्य मुख्यत्वादर्द्धरात्रे तु [illegible]॥ यत्तु [illegible] प्रकर्तव्यं प्रोक्तं पितृयज्ञगतेः॥
[illegible]॥ [illegible] नुवादात्तदि
[illegible]
द्विरोधाच्चेत्युक्तम्॥ अत्रैव दर्शे पररात्रे लक्ष्मीनिःसारणमुक्तं मदनरत्ने भविष्ये॥ एवं ग
ते निशीथे तु जने निद्रार्द्धलोचने॥ तावन्नगरनारीभिः शूर्पडिंडिमवादनैः॥ निष्काश्यते प्रहृ
ष्टाभिरलक्ष्मीः स्वगृहांगणात्॥ कार्तिकशुक्लप्रतिपदि गोक्रीडनमुक्तं निर्णयामृते॥ अ
स्यामेव रात्रौ बलेः पूजोक्ता हेमाद्रौ भविष्ये॥ कृत्वैतत्सर्वमेवेह रात्रौ दैत्यपतेर्बलेः॥ पूजां
कुर्यान्नृपः साक्षाद्भूमौ मंडलके शुभे॥ बलिमालिख्य दैत्येंद्रं वर्णकैः पंचरंगकैः॥ गृहस्य
मध्ये शालायां विशालायां ततोर्चयेत्॥ लोकश्चापि गृहस्यांतः शय्यायां शुक्लतंडुलैः॥ सं
स्थाप्य बलिराजानं फलैः पुष्पैश्च पूजयेत्॥ मंत्रस्तु पाद्मे॥ बलिराज नमस्तुभ्यं दैत्यदानववं
दित॥ इंद्रशत्रोमराराते विष्णुसान्निध्यदो भवेति॥ तथा॥ बलिमुद्दिश्य दीयंते दानानि कुरु
नंदन॥ यानि तान्यक्षयाण्याहुर्मयैवं संप्रदर्शितमिति॥ तदेतत्पूर्वविद्धायां प्रकर्तव्यं॥ पूर्व
विद्धा प्रकर्तव्या शिवरात्रिर्बलेर्दिनमिति॥ हेमाद्रौ याम्योक्तेः॥ माधवेपि॥ वत्सपूजा वटश्चैव कुर्यात्पूर्वयुता तिथिः॥ भाद्रसंभवा? 

द्बुधः कुर्य्यात्पुत्रदारधनक्षयम्॥ इतिदेवलवचनाच्च॥० एतेचविधिप्रति
षेधाः पूर्वदिनेप्रतिपदः सायाह्नव्यापित्वे॥द्वितीयदिनेचंद्रदर्शनसंभवेचज्ञेयाः॥गवांक्रीडा
दिनेयत्ररात्रौदृश्येतचंद्रमाः॥सोमोराजापशून्हंतिसुरभीपूजकांस्तथेतिपुराणसमुच्चया
त्॥दिनद्वयेसायाह्नव्यापित्वेतुपरैवग्राह्या॥वर्द्धमानतिथौनंदायदासार्द्धत्रियामिकाद्वि-
तीयावृद्धिगामित्वादुत्तरातत्रचोच्यतइति॥तथा॥त्रियामगादर्शतिथिर्भवेच्चेत्सार्द्धत्रिया
माप्रतिपद्विवृद्धौ॥दीपोत्सवेतेमुनिभिःप्रदिष्टेअतोन्यथापूर्वयुतेविधेयइति॥पुराणसमु
च्चयादितिनिर्णयामृतकारः॥सार्द्धत्रियामिकेत्यनेनचंद्रदर्शनाभावउक्तः॥द्वितीयायाः
पंचधाभक्तचतुर्थांशरूपापराह्णव्याप्तावेवचंद्रदर्शनसंभवात्॥वयंत्वेतद्वचनद्वयंपूर्ववि
द्धासंभवेवेदितव्यमितिब्रूमः॥दिनद्वयेप्रतिपदःसायाह्नव्याप्त्यभावेतुपूर्वैव॥रात्रौबलि
पूजाविधानेनकर्मकालव्यापित्वात्॥परदिनेचंद्रोदयेचतन्निषेधादितिदिक्॥मदनर
त्नेतुपूर्वविद्धायांगोक्रीडा॥नीराजनंमंगलमालिकेतूत्तरत्रकार्या॥कार्त्तिकेशुक्लपक्षेतुवि
धानद्वितयंभवेत्॥नारीनीराजनंभवेत्प्रातःसायंमंगलमालिका॥यदाचप्रतिपत्स्वल्पा
नारीनीराजनंभवेत्॥द्वितीयायांतदाकुर्यात्सायंमंगलमालिकामितिब्राह्मोक्तेः॥लभ्यते
यदिवाप्रातःप्रतिपद्घटिकाद्वयं॥तस्यांनीराजनंकार्य्यंसायंमंगलमालिकेतिभविष्योक्तेः॥
प्रातर्वायदिलभ्येतप्रतिपद्घटिकाशुभा॥द्वितीयायांतदाकुर्य्यात्सायंमंगलमालिकां॥का
र्त्तिकेशुक्लपक्षादौत्वमावास्याघटीद्वयम्॥देशभंगभयान्नैवकुर्य्यान्मंगलमालिकामिति
देवीपुराणाच्चेत्युक्तं॥अत्रविशेषोहेमाद्रौब्राह्मे॥बलिप्रतिपदंप्रक्रम्य॥तस्माद्द्यूतंप्रक
र्तव्यंप्रभातेतत्रमानवैः॥तस्मिन्द्यूतेजयोयस्यतस्यसंवत्सरंजयः॥पराजयोविरुद्धश्चला
भनाशकरोभवेत्॥इत्युक्ताभिश्चसहितैर्नेयासाचभवेन्निशेति॥अत्रगोवर्द्धनपूजादिमा
र्गपालीपूजनादिवोक्तं॥हेमाद्रौनिर्णयामृतेचस्कांदे॥प्रातर्गोवर्द्धनंपूज्यद्यूतंचापिसमा
चरेत्॥भूषणीयास्तथागावःपूज्याश्चावाहदोहनाः॥गोवर्द्धनश्चगोमयेनकार्य्यश्चित्रे-
णवा॥मंत्रस्तु॥गोवर्द्धनधराधारगोकुलत्राणकारक॥बहुबाहुकृतच्छायगवांकोटिप्रदोभ
व॥गोमंत्रस्तु॥लक्ष्मीर्यालोकपालानांधेनुरूपेणसंस्थिता॥घृतंवहतियज्ञार्थेममपापंव्य
पोहतु॥तत्रैवस्कांदे॥ततोपराह्णसमयेपूर्वस्यांदिशिभारत॥मार्गपालींप्रबध्नीयात्तुंगस्तंभे-
थपादपे॥कुशकाशमयींदिव्यांलंबकैर्बहुभिर्युते॥दर्शयित्वागजानश्वान्सायमस्यास्तले
नयेत्॥कृतेहोमेद्विजेंद्रैस्तुबध्नीयान्मार्गपालिकां॥नमस्कारंततःकुर्य्यान्मंत्रेणानेनसुव्र
त॥मार्गपालिनमस्तेस्तुसर्वलोकसुखप्रदे॥विधेयैःपुत्रदाराद्यैःपुनरेहिव्रतस्यमे॥नी
राजनंचतत्रैवकार्य्यंराष्ट्रजयप्रदम्॥राजानोराजपुत्राश्चब्राह्मणाःशूद्रजातयः॥मार्गपा
लींसमुल्लंघ्यनीरुजःस्युःसुखान्विताः॥तत्रैवादित्यपुराणेकुशकाशमयींकुर्य्याद्घंटि-
कांसुनवांदृढाम्॥तामेकतोराजपुत्राहीनवर्णास्तथान्यतः॥गृहीत्वाकर्षयेयुस्तांयथा
सारंमुहुर्मुहुः॥जयेत्रहीनजातीनांजयोराज्ञस्तुवत्सरमिति॥ अथयमद्वितीया॥

तिथिपरः ।।तदुक्तंब्राह्मे ।।ऊर्ज्जेशुक्लद्वितीयायांतिथिस्वातिऋक्षगे ।।मानवोमंगलस्नायीनै
वलक्ष्म्याविमुच्यते ।।तत्रैव ।।इषेभूतेचदर्शेचकार्त्तिकप्रथमेदिने ।।यदास्वातीतदाभ्यंगस्नानं
कुर्याद्दिनोदये ।।कश्यपसंहितायांतुदीपावलीदर्शप्रक्रम्य ।।इंदुक्षयेपिसंक्रांतौरवौपाते
दिनक्षये ।।तत्राभ्यंगोनदोषायप्रातःपापापनुत्तये ।।इतिस्वातियोगंविनाप्यभ्यंगउक्तः ।। मा
त्स्ये ।।दीपैर्नीराजनादत्रसैषादीपावलीस्मृता ।।अत्रविशेषोहेमाद्रौभविष्ये ।।दिवातत्रनभो
क्तव्यमृतेबालातुराज्जनात् ।।प्रदोषसमयेलक्ष्मींपूजयित्वाततःक्रमात् ।।दीपवृक्षाश्चदात
व्याःशक्त्यादेवगृहेषुच ।।तत्रैवाभ्यंगमभिधाय ।।एवंप्रभातसमयेत्वमावास्यांनराधिप ।। कृ
त्वातुपार्वणश्राद्धंदधिक्षीरघृतादिभिः ।।दीपान्दत्वाप्रदोषेतुलक्ष्मींपूज्ययथाविधिः ।।स्वलं
कृतेनभोक्तव्यंसितवस्त्रोपशोभिना ।।अयंप्रदोषव्यापीग्राह्यः ।।तुलासंस्थेसहस्रांशौप्रदो
षेभूतदर्शयोः ।।उल्काहस्तानराःकुर्युःपितॄणांमार्गदर्शनमितिज्योतिषोक्तेः ।।दिनद्वयेस
त्वेपरः ।।दंडैकरजनीयोगेदर्शःस्यात्तुपरेहनि ।।तदाविहायपूर्वेद्युःपरेन्हिसुखरात्रिकेतिति
थितत्वेज्योतिर्वचनात् ।।दिवोदासीयेतुप्रदोषस्यकर्मकालत्वात् ।।अर्द्धरात्रेभ्रमत्येवलक्ष्मी
राश्रयितुंगृहान् ।।अतःस्वलंकृतालिप्तादीपैर्जाग्रज्जनोत्सवाः ।।सुधाधवलिताःकार्याः
पुष्पमालोपशोभिताइति ।।ब्राह्मोक्तेश्चप्रदोषार्द्धरात्रव्यापिनीमुख्या ।।एकैकव्याप्तौपरैव ।।
प्रदो[illegible]नार्द्धरात्रेनुरो[illegible] ।।[illegible]पितृ[illegible]गोः ।।
[illegible] ।।[illegible]वादोनचि
[illegible]
[illegible]
तेनिशीथेतुजनेनिद्रार्द्धलोचने ।।तावन्नगरनारीभिःशूर्पडिंडिमवादनैः ।।निष्काश्यतेप्रहृ
ष्टाभिरलक्ष्मीःस्वगृहांगणात् ।।कार्त्तिकशुक्लप्रतिपद्गोक्रीडनमुक्तंनिर्णयामृते ।। अ
स्यामेवरात्रौबलेःपूजोक्ताहेमाद्रौभविष्ये ।।कृत्वैतत्सर्वमेवेहरात्रौदैत्यपतेर्बलेः ।।पूजां
कुर्यान्नृपःसाक्षाद्भूमौमंडलकेशुभे ।।बलिमालिख्यदैत्येंद्रंवर्णकैःपंचरंगकैः ।।गृहस्य
मध्येशालायांविशालायांततोर्च्चयेत् ।।लोकश्चापिगृहस्यांतःशय्यायांशुक्लतंदुलैः ।।सं
स्थाप्यबलिराजानंफलैःपुष्पैश्चपूजयेत् ।।मंत्रस्तुपाद्मे ।।बलिराजनमस्तुभ्यंदैत्यदानववं
दित ।।इंद्रशत्रोमराराते विष्णुसान्निध्यदोभवेति ।।तथा ।।बलिमुद्दिश्यदीयंतेदानानिकुरु
नंदन ।।यानितान्यक्षयाण्याहुर्मयैवंसंप्रदर्शितमिति ।।तदेतत्सर्वंविद्धायांप्रकर्तव्यं ।।पूर्व
विद्धाप्रकर्तव्याशिवरात्रिर्बलेर्दिनमिति ।।हेमाद्रौयाम्योक्तेः ।।माधवेपि ।।वत्सुत्सवंचपूर्वेद्यु
रुपवासवदाचरेदिति ।।निर्णयामृतेपि ।।प्रातःकुहूःप्रतिपन्मिश्रातत्रगाःपूजयन्नृपः ।।पूज
नात्त्रीणिवर्द्धंतेप्रजागावोमहीपतिरिति ।।तथा ।।भद्रायांगोकुलक्रीडासदेशोवैविन
श्यति ।।भद्रायांद्वितीयायां ।।तथा ।।प्रतिपद्यग्निकारणंद्वितीयायांतुगोर्च्चनम् ।।छत्रच्छे
दंकरिष्यंतिविघ्ननाशंकुलक्षयमिति ।।तथा ।।प्रतिपद्दर्शसंयोगेक्रीडनंतुगवांमतं ।।परवि

द्वेषुयः कुर्यात्पुत्रदारधनक्षयं॥ इतिदेवलवचनाच्च॥० एतेनचविधिप्रति
षेधाःपूर्वदिनेप्रतिपदःसायान्हव्यापित्वे॥द्वितीयदिनेचंद्रदर्शनसंभवेचज्ञेयाः॥गवांक्रीडा
दिनेयत्ररात्रावुदृश्येतचंद्रमाः॥सोमोराजापशून्हंतिसुरभीपूजकांस्तथेतिपुराणसमुच्चया
त्॥दिनद्वयेसायान्हव्यापित्वेतुपरैवग्राह्या॥वर्द्धमानतिथौनंदायदासार्द्धत्रियामिकाद्वि
तीयाहद्विगामित्वादुत्तरातत्रचोच्यतइति॥तथा॥त्रियामगादर्शतिथिर्भवेच्चेत्सार्द्धत्रिया
माप्रतिपद्विवृद्धौ॥दीपोत्सवेतेमुनिभिःप्रदिष्टेअतोन्यथापूर्वयुतेविधेयइति॥पुराणसमु
च्चयादितिनिर्णयामृतकारः॥सार्द्धत्रियामिकेत्यनेनचंद्रदर्शनाभावउक्तः॥द्वितीयायाः
पंचधाभक्तचतुर्थीशरूपापराह्णव्याप्तावेवचंद्रदर्शनसंभवात्॥वयंत्वेतद्वचनद्वयंपूर्वदिवि
द्धासंभवेवेदितव्यमितिब्रूमः॥दिनद्वयेप्रतिपदःसायान्हव्याप्त्यभावेतुपूर्वैव॥रात्रौबलि
पूजाविधानेनकर्मकालव्यापित्वात्॥परदिनेचंद्रोदयेचतन्निषेधादितिदिक्॥मदनर
त्नेतुपूर्वविद्धायांगोक्रीडा॥नीराजनमंगलमालिकेतूत्तरत्रकार्या॥कार्त्तिकेशुक्लपक्षेतुवि
धानद्वितयंभवेत्॥नारीनीराजनंभवेत्प्रातःसायंमंगलमालिका॥यदाचप्रतिपत्स्वल्पा
नारीनीराजनंभवेत्॥द्वितीयायांतदाकुर्यात्सायंमंगलमालिकामितिब्राह्मोक्तेः॥लभ्यते
यद्दिवाप्रातःप्रतिपद्घटिकाद्वयं॥तस्यांनीराजनंकार्यंसायंमंगलमालिकेतिभविष्योक्तेः॥
प्रातर्वायदिलभ्येतप्रतिपद्घटिकाशुभा॥द्वितीयायांतदाकुर्यात्सायंमंगलमालिकां॥का
र्त्तिकशुक्लपक्षादौत्वमावास्याघटीद्वयम्॥देशभंगभयान्नैवकुर्यान्मंगलमालिकामिति
देवीपुराणाच्चेत्युक्तं॥अत्रविशेषोहेमाद्रौब्राह्मे॥बलिप्रतिपदंप्रक्रम्य॥तस्माद्द्यूतंप्रक
र्तव्यंप्रभातेतत्रमानवैः॥तस्मिन्द्यूतेजयोयस्यतस्यसंवत्सरंजयः॥पराजयोविरुद्धश्चला
भनाशकरोभवेत्॥दयिताभिश्चसहितैर्नेयासाचभवेन्निशेति॥अत्रगोवर्द्धनपूजादिमा
र्गपालीपूजनादिचोक्तं॥हेमाद्रौनिर्णयामृतेचस्कांदे॥प्रातर्गोवर्द्धनंपूज्यद्यूतंचापिसमा
चरेत्॥भूषणीयास्तथागावःपूज्याश्चावाहदोहनाः॥गोवर्द्धनश्चगोमयेनकार्यश्चित्रे
णवा॥मंत्रस्तु॥गोवर्द्धनधराधारगोकुलत्राणकारक॥बहुबाहुकृतच्छायगवांकोटिप्रदोभ
व॥गोमंत्रस्तु॥लक्ष्मीर्यालोकपालानांधेनुरूपेणसंस्थिता॥घृतंवहतियज्ञार्थेममपापंव्य
पोहतु॥तत्रैवस्कांदे॥ततोपराह्णसमयेपूर्वस्यांदिशिभारत॥मार्गपालींप्रबध्नीयाद्दुर्गस्तंभे
थपादपे॥कुशकाशमयींदिव्यांलंबकैर्बहुभिर्मुने॥दर्शयित्वागजानश्वान्सायमस्यास्तले
नयेत्॥कृतेहोमेद्विजेंद्रैस्तुबध्नीयान्मार्गपालिकां॥नमस्कारंततःकुर्यान्मंत्रेणानेनसुव्र
त॥मार्गपालिनमस्तेस्तुसर्वलोकसुखप्रदे॥विधेयैःपुत्रदाराद्यैःपुनरेहिव्रतस्यमे॥नी
राजनंचतत्रैवकार्यंराष्ट्रजयप्रदम्॥राजानोराजपुत्राश्चब्राह्मणाःशूद्रजातयः॥मार्गपा
लींसमुल्लंघ्यनीरुजःस्युःसुखान्विताः॥तत्रैवादित्यपुराणे॥कुशकाशमयींकुर्याद्यष्टि
कांसुनवांदृढाम्॥तामेकतोराजपुत्राहीनवर्णास्तथान्यतः॥गृहीत्वाकर्षयेयुस्तांयथा
सारंमुहुर्मुहुः॥जयेत्रहीनजातीनांजयोराज्ञस्तुवत्सरमिति॥ अथयमद्वितीया॥

तु प्रतिपद्युता ग्राह्येत्युक्तं निर्णयामृतादौ॥ यमद्वितीया मध्याह्नव्यापिनी पूर्वविद्धा चेति हेमाद्रिः॥ अ-
त्र विशेषो हेमाद्रौ स्कान्दे॥ ऊर्ज्जे शुक्लद्वितीयायामपराह्णेऽर्चयेद्यमम्॥ स्नानं कृत्वा भानुजायां यमलोकं
न पश्यति॥ ऊर्ज्जे शुक्लद्वितीयायां पूजितस्तर्पितो यमः॥ वेष्टितः किन्नरैर्हृष्टैस्तस्मै यच्छति वांछितं॥
तथा भविष्ये॥ प्रथमा श्रावणे मासि तथा भाद्रपदे परा॥ तृतीया चाश्वयुजे मासि चतुर्थी कार्तिके भवेत्॥
श्रावणे कलुषा नाम तथा भाद्रे च गीर्मला॥ आश्विने प्रेतसंचारा कार्तिके याम्यका मतेत्युक्त्वा॥ प्रथमा-
यां व्रतं द्वितीयायां सरस्वतीपूजा तृतीयायां श्राद्धमुक्त्वा चतुर्थ्यामुक्तम्॥ कार्तिके शुक्लपक्षस्य द्विती-
यायां युधिष्ठिर॥ यमो यमुनया पूर्वं भोजितः स्वगृहेऽर्चितः॥ अतो यमद्वितीयेयं त्रिषु लोकेषु विश्रुता॥
अस्यां निजगृहे विप्र न भोक्तव्यं ततो नरैः॥ स्नेहेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्द्धनम्॥ दानानि च
प्रदेयानि भगिनीभ्यो विधानतः॥ स्वर्णालंकारवस्त्रान्नपूजासत्कारभोजनैः॥ सर्वा भगिन्यः संपू-
ज्या अभावे प्रतिपन्नकाः॥ प्रतिपन्नाः माता भगिन्य इति हेमाद्रिः॥ पितृव्यभगिनीहस्तात् प्रथमायां यु-
धिष्ठिर॥ मातुलस्य सुताहस्ताद्द्वितीयायां तथा नृप॥ पितुर्मातुः स्वसुः कन्ये तृतीयायां तयोः करात्॥
चतुर्थ्यां सहजायाश्च भगिन्या हस्ततः परम्॥ सर्वासु भगिनीहस्ताद्भोक्तव्यं बलवर्द्धनम्॥ यस्यां तिथौ
यमुनया यमराजदेवः॥ संभोजितः प्रतिजगत्स्वसृसौहृदेन॥ तस्यां स्वसुः करतलादिह यो भुनक्ति प्रा-
प्नोति रत्नसुखधान्यमनुत्तमं सः॥ गौडास्तु॥ यमं च चित्रगुप्तं च यमदूतांश्च पूजयेत्॥ अर्घ्यश्चात्र प्रदा-
तव्यो यमाय सहजद्वयैः॥ मंत्रस्तु॥ एह्येहि मार्त्तंडज पाशहस्त यमांतकालोकधरामरेश॥ भ्रातृद्वितीया-
कृतदेवपूजां गृहाण चार्घ्यं भगवन्नमस्ते॥ भ्रातस्तवानुजाताहं भुंक्ष्व भक्तमिदं शुभं॥ प्रीतये यम-
राजस्य यमुनाया विशेषतः॥ ज्येष्ठा चेदग्रजातेति वदेदिति सान्नीः इत्यन्यदानमित्यप्याहुः॥ ब्रह्मांडपुराणे-
पि॥ या तु भोजयते नारी भ्रातरं युग्मके तिथौ॥ अर्चयेच्चापि तांबूलैर्न सा वैधव्यमाप्नुयात्॥ भ्रातु-
रायुःक्षयो राजन्न भवेत्तत्र हि चित् इति॥

कार्तिकशुक्लनवमी युगादिः॥

सा पूर्वाह्णव्यापिनी ग्राह्या शुक्लपक्षस्थत्वात्॥ अत्र पिंडरहितं श्राद्धं कर्तव्यमन्यत्रायुक्तम्॥ अत्रैव विष्णु-
त्रिरात्रमुक्तं हेमाद्रौ पाद्मे॥ कार्तिके शुक्लनवमीमवाप्य विजितेंद्रियः॥ हरिं विधाय सौवर्णं तुलस्या
सहितं विभुं॥ पूजयेद्विधिवद्भक्त्या त्रीणि तत्र दिनत्रयं॥ ततो यथोक्तविधिना कुर्याद्वैवाहिकं वि-
धिमिति॥

कार्तिकशुक्लैकादश्यां भीष्मपंचकव्रतमुक्तं नारदीये॥ अतो नरैः प्रयत्नेन क-
र्त्तव्यं भीष्मपंचकं॥ कार्तिकस्यामले पक्षे स्नात्वा सम्यग्यते स्थितः॥ एकादश्यां तु गृह्णीयाद्व्रतं
पंचदिनात्म-
कमिति॥ तद्विधिस्तु॥ गोमयेन स्नात्वा मौनी पंचामृतैः पंचगव्यैर्विष्णुं संस्नाप्य संपूज्य पायस-
निवेद्य द्वादशाक्षरमष्टोत्तरशतं जप्त्वा॥ ॐ नमो विष्णवे इति॥ षडक्षरेण घृताक्तान् यवान् व्री-
हीन्वाष्टोत्तरशतं हुत्वा भूमौ स्वपेत्॥ एवं पंचदिनेषु कुर्यात्॥ विशेषस्त्वाद्येऽह्नि हरेः पादौ संपू-
ज्य त्रिर्गोमयं प्राश्यं॥ द्वितीयेऽह्नि बिल्वपत्रैर्जानुनी संपूज्य गोमूत्रं॥ त्रयोदश्यां भृंगराजेन नाभिं
संपूज्य क्षीरं॥ चतुर्दश्यां करवीरैः स्कंधं संपूज्य दधि प्राश्यं॥ पौर्णमास्यां होमांते लोहीं यां प्रतिमां
खड्गं च कृत्वा हस्ते कृष्णवस्त्रवेष्टितां प्रस्थतिलोपरिस्थां कृत्वा धर्मराजनामभिः करवीरैः संपूज्य॥

यदन्यजन्मनिकृतमेतज्जन्मनिवापुनः॥तत्सर्वंप्रशमंयातुमत्प्रायंतवपूजनादितिपुष्पांजलिंक्षि
प्त्वा॥कृष्णप्रतिमांचसंपूज्यविप्रायदत्वाविप्रान्संभोज्यदक्षिणांदत्वापंचगव्यंप्राश्यपौर्णमा
स्यांनक्तंभुंजीतेतिलघुनारदीये॥पंचगव्यप्राशनंयदुक्तंतद्रोत्रिहेमाद्रिः॥हेमाद्रौभविष्येतुशाके
र्मुन्यन्नैर्वापंचाहंवर्त्तनमुक्तं॥अन्येप्युक्तं॥पक्षेभीष्मपंचकमितिप्रथितंप्रथियामेकादशीप्रभृति
पंचदशीनिरुद्धम्॥मुन्यन्नभोजनपरस्यनरस्यतस्मिन्निष्टंफलंदिशतिपांडवशार्ङ्गधन्वेति॥त
थापाद्मे॥पंचाहंपंचगव्याशीभीष्मायार्घ्यंचवंचसु॥अहःस्वपितथाद्यान्मंत्रेणानेनसुव्रत॥स
त्यव्रतायशुचयेगांगेयायमहात्मने॥भीष्मायैतद्ददाम्यर्घ्यमाजन्मब्रह्मचारिणे॥वैयाघ्रपद्यगोत्रा
येतिच॥सव्येनानेनमंत्रेणतर्पणंसार्ववर्णिकमिति॥ कार्त्तिकशुक्लद्वादश्यांरेवतीनक्ष
त्रयोगरहितायांपारणंकार्यं॥ तदुक्तंहेमाद्रौ॥आभाकासितपक्षेषुमैत्रश्रवणरेवती॥सं
गमेनहिभोक्तव्यंद्वादशद्वादशीर्हरेत्॥इति॥यदातुरेवतीयोगरहिताद्वादशीसर्वथानलभ्य
ते॥तदारेवत्याश्चतुर्थपादंवर्जयेत्॥वचनंतुप्रागुक्तंलघुनारदीये॥ कार्त्तिकेशुक्लपक्षस्य॥
कृत्वाचैकादशींनरः॥प्रातर्दत्वाशुभान्कुंभान्प्रयातिहरिमंदिरं॥ मदनरत्नेवाराहे॥एकाद
शीसोमयुताकार्त्तिकेमासिभामिनि॥उत्तराषाढसंयोगेअनंतासाप्रकीर्त्तिता॥तस्यांयत्क्रियते
भद्रेसर्वमानन्त्यमुच्यते॥अस्यामेवरात्रौदेवोत्थापनमुक्तंहेमाद्रौपाद्मे॥एकादश्यांचशुक्लायां
कार्त्तिकेमासिकेशवम्॥प्रसुप्तंबोधयेद्रात्रौश्रद्धाभक्तिसमन्वितइति॥मदनरत्नेपिभविष्ये
॥कार्त्तिकेशुक्लपक्षेतुएकादश्यांतथासुत॥मंत्रेणानेनराजेंद्रदेवमुत्थापयेद्द्विजः॥रामार्चन
चंद्रिकादौतुद्वादश्यामुक्तम्॥पारणाहेपूर्वरात्रेघंटादीन्वादयन्मुहुरिति॥अत्रदेशाचारतो
व्यवस्था॥तत्रवैदिकदेवस्यस्नानंपूर्वंमहद्भवेत्महापूजांततःकृत्वादेवमुत्थापयेत्सुधीः॥मं
त्रास्तुवाराहपुराणेउक्ताः॥ॐब्रह्मेंद्ररुद्राग्निकुवेरसूर्यसोमादिभिर्वंदितवंदनीय॥बुध्यस्वदे
वेशजगन्निवासमंत्रप्रभावेनसुखेनदेव॥इयंतुद्वादशीदेवप्रबोधार्थंविनिर्मिता॥त्वयैवसर्व
लोकानांहितार्थंशेषशायिना॥उत्तिष्ठोत्तिष्ठगोविंदत्यजनिद्रांजगत्पते॥त्वयिसुप्तेजगन्नाथ
जगत्सुप्तंभवेदिदम्॥उत्थितेचेष्टतेसर्वमुत्तिष्ठोत्तिष्ठमाधव॥गतामेघावियच्चैवनिर्मलंनिर्म
लादिशः॥शारदानिचपुष्पाणिगृहाणममकेशव॥इदंविष्णुरितिप्रोक्तोमंत्रउत्थापनेहरेरिति
॥एवंदेवमुत्थाप्यतदग्रेचातुर्मास्यव्रतसमाप्तिंकुर्यात्॥तदुक्तंभारते॥चतुर्द्धागृह्यवैचीर्णंचातुर्मा
स्यव्रतंनरः॥कार्त्तिकेशुक्लपक्षेतुद्वादश्यांतत्समापयेत्॥लघुनारदीये॥चातुर्मास्यव्रतानांचसमा
प्तिःकार्त्तिकेस्मृता॥मंत्रश्चनिर्णयामृतेसनत्कुमारेणोक्तः॥इदंव्रतंमयादेवकृतंप्रीत्यैतवप्रभो॥
न्यूनंसंपूर्णतांयातुत्वत्प्रसादाज्जनार्दनेति॥०

अथवाराहोक्तोबोधिनीविधिः

एकादश्यांरात्रौकुंभेपूर्णपात्रोपरिहेममाषमितंमत्स्यंपंचामृतेनसंस्नाप्यकुंकुमपीतवस्त्रयुगग
न्धाद्यैःसंपूज्यमत्स्यादिदशावतारान्संपूज्यजागरणंकृत्वाप्रातर्देवमाचार्यंचवस्त्राद्यैःसंपूज्य॥जग
दादिर्जगद्रूपोजगदादिरनादिमान्॥जगदादिर्जगद्योनिःप्रीयतांमेजनार्दनइति॥तत्वादक्षिणां
दत्वाब्राह्मणान्भोजयेदिति॥तथाब्राह्मे॥महातूर्यरवैरात्रौभ्रामयेत्स्यंदनेस्थितं॥उत्थितंदेव

वैशन्नगरेपार्थिवःस्वयं॥चतुरोवार्षिकान्मासान्नियमंयस्ययत्कृतं॥कथयित्वाद्विजेभ्यस्तद्
द्याद्भक्त्यासदक्षिणां॥यस्यभक्ष्यस्यनियमःकृतस्तत्तद्दद्यादित्यर्थः॥इदंतुकाशादावपिका
र्य्यं॥आशौचेतुप्रजाममेनकारयेत्॥कार्तिकद्वादशीपौर्णमासीचमन्वादिः॥सापूर्वाह्णिकीग्राह्या॥अत्र
न्यत्प्रागुक्तम्॥ कार्तिकशुक्लचतुर्दशीवैकुंठसंज्ञासाविष्णुपूजायांरात्रिव्यापिनीग्राह्या॥तदु
क्तंहेमाद्रौभविष्ये॥कार्तिकस्यसितेपक्षेचतुर्दश्यांनराधिप॥सोपवासस्तुसंपूज्यहरिंरात्रौजितें
द्रियाइति॥अस्यामेवविश्वेश्वरप्रतिष्ठादिनत्वात्तत्प्रीत्यर्थंयदीयवासादिक्रियतेतदारुणोदयव्या
पिनीग्राह्या॥तदुक्तंत्रिस्थलीसेतौसनत्कुमारसंहितायां॥वर्षेचहेमलंबाख्येमासेश्रीमतिकार्ति
के॥शुक्लपक्षेचतुर्दश्यामरुणाभ्युदयंप्रति॥महादेवतिथौब्राह्मेमुहूर्तेमणिकर्णिके॥स्नात्वावि
श्वेश्वरोदेव्याविश्वेश्वरमपूजयदिति॥तत्पूर्वदिनेचोपवासःकार्यः॥ततःप्रभातेविमलेकृत्वापू
जांमहाद्भुतां॥दंडपाणिर्महाधाम्निवनेस्मिन्कृतपारणइतितत्रैवोक्तेः॥शिवरहस्येपिपूजाजा
गराद्युक्त्वोक्तम्॥ततोरुणोदयेजातेस्नात्वास्नात्वाचभस्मना॥संध्यांसमाप्यविश्वेशंमामभ्यर्च्य
यथाविधि॥मद्भक्तान्भोजयामासस्वयंचैवबुभुजेततइति॥अत्रकार्तिकव्रतोद्यापनमुक्तं
॥पाद्मेकार्तिकमाहात्म्ये॥अथोर्ज्जव्रतिनःसम्यगुद्यापनविधिंशृणु॥ऊर्ज्जशुक्लचतुर्दश्यांकुर्या
दुद्यापनंव्रती॥तुलस्याउपरिष्टात्तुकुर्यान्मंडपिकांशुभाम्॥तुलसीमूलदेशेचसर्वतोभद्रमेव
च॥तस्योपरिष्टात्कलशंपंचरत्नसमन्वितं॥पूजयेत्तत्रदेवेशंसौवर्णंगुर्वनुज्ञया॥रात्रौजागर
णंकुर्याद्गीतवाद्यादिमंगलैः॥ततस्तुपौर्णमास्यांवैसपत्नीकान्द्विजोत्तमान्॥त्रिंशन्मितानथै
कंवास्वशक्त्यावानिमंत्रयेत्॥अतोदेवाइतिद्वाभ्यांजुहुयात्तिलपायसं॥ततोगांकपिलांदद्या
त्पूजयेद्विधिवद्गुरुमिति॥ कार्तिकीपौर्णमासीपराग्राह्या॥० अमापौर्णमा
सीपरेइतिदीपिकोक्तेः॥अत्रविशेषोहेमाद्रौब्राह्मे॥पुण्यामहाकार्तिकीस्याज्जीवेंद्वोःकृत्तिका
सुच॥तथा॥आग्नेयंतुयदाऋक्षंकार्तिक्यांभवतिक्वचित्॥महतीसातिथिर्ज्ञेयास्नानदानेषुचो
त्तमा॥यदातुयाम्यंभवतिऋक्षंतस्यांतिथौक्वचित्॥तिथिःसापिमहापुण्यामुनिभिःपरिकीर्ति
ता॥प्राजापत्यंयदाऋक्षंतिथौतस्यांनराधिप॥सामहाकार्तिकीप्रोक्तादेवानामपिदुर्लभेति॥
पाद्मेविशाखासुयदाभानुःकृत्तिकासुचचंद्रमाः॥सयोगःपद्मकोनामपुष्करेष्वतिदुर्लभः॥पद्म
कंपुष्करेप्राप्यकपिलांयःप्रयच्छति॥सहित्वासर्वपापानिवैष्णवंलभतेपदं॥यमः॥कार्तिक्यांपु
ष्करेस्नातःसर्वपापैःप्रमुच्यते॥माघ्यांस्नातःप्रयागेतुमुच्यतेसर्वकिल्बिषैः॥अस्यामेवसायं
कालेमत्स्यावतारोजातइत्युक्तंपाद्मेकार्तिकमाहात्म्ये॥वरान्दत्त्वायतोविष्णुर्मत्स्यरूपीभवेत्त
तः॥तस्यांदत्तंहुतंजप्तंतदक्षय्यफलंस्मृतमिति॥अत्रत्रिपुरोत्सवउक्तोभार्गवार्चनदीपिकायां॥
पौर्णमास्यांतुसंध्यायांकर्तव्यस्त्रिपुरोत्सवः॥दद्यादनेनमंत्रेणप्रदीपांश्चसुरालये॥कीटाःपतं
गामशकाश्चवृक्षाजलेस्थलेयेविचरंतिजीवाः॥दृष्ट्वाप्रदीपंनचजन्मभागिनोभवंतिनित्यंश्व
पचाहिविप्राः॥ अत्रवृषोत्सर्गोतिप्रशस्तः॥ तदुक्तंमात्स्ये॥कार्तिक्यांयो
वृषोत्सर्गंकृत्वानक्तंसमाचरेत्॥शैवंपदमवाप्नोतिशिवव्रतमिदंस्मृतमिति॥ अत्रकार्तिके

यद्दर्शनमुक्तं काशीखंडे ॥ कार्त्तिक्यां कृत्तिकायोगे यः कुर्यात्स्वामिदर्शनम् सप्तजन्म भवेद्विप्रो धना-
ढ्यो वेदपारग इति ॥ ० ॥ इति श्रीभट्टकमलाकरकृते निर्णयसिंधौ कार्त्तिकमासः ॥
वृश्चिके रवौ षोडशघटिकाः पुण्याः शेषं प्राग्वत् ॥ मार्गशीर्षकृष्णाष्टमी कालाष्टमी सा रात्रिव्यापि-
नी ग्राह्या ॥ मार्गशीर्षासिताष्टम्यां कालभैरवसन्निधौ ॥ उपोष्य जागरं कुर्वन्सर्वपापैः प्रमुच्य-
त इति काशीखंडाद्रात्रिव्रतत्वावगतेः ॥ कृष्णव्रतेषु सर्वेषु कर्तव्यासंमुखी तिथिरिति ब्रह्मवैवर्ता-
च्च ॥ दिनद्वयेंशतो रात्रिव्याप्तावुत्तरैव ॥ भैरवोत्पत्तेः प्रदोषकालीनत्वादिति केचित् ॥ तन्न ॥ शिव-
रहस्ये मध्याह्ने भैरवोत्पत्तेः श्रवणात् ॥ तथा च तत्रैव ॥ नित्यपूजादिकं कृत्वा मध्याह्ने संस्थिते र-
वौ विष्णुपक्षस्य ब्रह्मणो रुद्रेवज्ञाने उक्ते ॥ तदीयरूपादनघान्मतः श्रीकालभैरवः ॥ आविरासीत्तदा
लोकान्भीषयन्निखिलानपीति ॥ अत्रोपवास एव प्रधानमित्युक्तं तत्रैव उपोषणस्यांगभूतमर्घ्यदा-
नमिह स्मृतं ॥ तथा जागरणं रात्रौ पूजा याम चतुष्टये ॥ संध्यायामपि पूजैवोक्ता ॥ तेन मध्याह्नव्यापिनी युक्ता
दिनद्वयेंशतः स्पर्शे यांवा तद्व्याप्तौ पूर्वैव ॥ पूर्वोक्तवचनात् ॥ पारणं तु प्रातरेव यामत्रयोर्ध्वगामिन्यां प्रात-
रेव हि पारणेति वचनात् ॥ अत्र च कालभैरवपूजोक्ता त्रिस्थलीसेतौ ॥ कृत्वा च विविधां पूजां महासंभार-
विस्तरैः ॥ नरो मार्गसिताष्टम्यां वार्षिकं विघ्नमुत्सृजेत् ॥ तथा ॥ तीर्थे कालोदके स्नात्वा कृत्वा तर्पणमत्व-
रः ॥ विलोक्य कालराजानं निरयादुद्धरेत्पितॄनिति ॥ इयं च कार्त्तिकानंतरगौणचांद्राभिप्रायेण ॥ मार्ग-
शीर्षशुक्लपंचम्यां नागपूजोक्ता हेमाद्रौ स्कांदे ॥ शुक्ला मार्गशिरे पुण्या श्रावणे या च पंचमी ॥ स्नानदाने-
र्बहुफला नागलोकप्रदायिनीति ॥ इयं नागपूजायां षष्ठीयुतैव ग्राह्या ॥ पंचमी नागपूजायां कार्या ष-
ष्ठीसमन्विता ॥ तस्यां तु तुषिता नागा इतरा सचतुर्थिकेति मदनरत्ने वचनात् ॥ मार्गशीर्षशुक्लषष्ठी
चंपाषष्ठीति महाराष्ट्रेषु प्रसिद्धा ॥ सात्र परयुता ग्राह्या ॥ षण्मुनीरिति युग्मवाक्यात् ॥ पूर्वाह्ने दैविकं कु-
र्यादिति वचनादस्य च दैवकर्मत्वादियमेव योगविशेषेण चंपेत्युच्यते ॥ तदुक्तं ब्रह्मांडपुराणे मल्ला-
रिमाहात्म्ये ॥ मार्गभाद्रपदे शुक्ला षष्ठी वैधृतिसंयुता ॥ रविवारेण संयुक्ता सा चंपेतीह कीर्तिता ॥ वि-
शाखाभौमयोगेन सा च चंपेतीह विश्रुतेति मदनरत्ने पाठः ॥ मार्गशीर्षे मले पक्षे षष्ठ्यां वारे शुमालिनः
॥ शततारागते चंद्रे लिंगस्याद्दृष्टिगोचरमिति ॥ इयं योगवशेन पूर्वा परा वा कार्या ॥ चंपाषष्ठी सप्त-
मीयुतेति दिवोदासः ॥ इयमेव स्कंदषष्ठी सा पूर्वायुता ॥ कृष्णाष्टमी स्कंदषष्ठी शिवरात्रिश्चतुर्दशी ॥ ए-
ताः पूर्वयुताः कार्यास्तिथ्यंते पारणं भवेदिति भृगूक्तेः ॥ परेह्नि रात्रावाद्यायामध्ये पारणसंभवे इदं ॥
अन्यथोत्तरैवेति दिवोदासः ॥ अत्र पूजने षष्ठीश सेनाविदारक स्कंद महासेन महाबल ॥ रुद्रोमा-
ग्निज षड्वक्त्र गंगागर्भ नमोस्तु ते इति रजतं स्कंदं संपूज्य ॥ विप्राय दद्यादिति दिवोदासः ॥ मार्गशीर्ष-
शुक्लचतुर्दश्यां पिशाचमोचनतीर्थश्राद्धं त्रिस्थलीसेतौ भट्टैरुक्तम् ॥ तस्य प्राप्ते पैशाच्ये स्वपित्राद्यु-
द्देश्यकत्वे पार्वणत्वादपराह्णव्यापिनी ग्राह्या ॥ अज्ञातनामपिशाचाद्युद्देश्यत्वे त्वेकोद्दिष्टत्वान्म-
ध्याह्नव्यापिनी ग्राह्या ॥ अज्ञातनामपिशाचाद्युद्देश्यत्वे त्वेकोद्दिष्टत्वान्मध्याह्नव्यापिनीति ॥ कुल-
धर्मैर्वा तत्रैव ॥ मार्गशीर्षपौर्णमास्यां दत्तात्रेयोत्पत्तिः ॥ तदुक्तं स्कांदे सह्याद्रिखंडे ॥ मार्गशी-
र्षे तथा मासि दशमेह्नि सुनिर्मले ॥ मृगशीर्षयुते पौर्णमास्यां तस्य च वासरे ॥ जनयामास देदीप्य-

मानंपुत्रंसतीशुभं॥तद्दिष्णुमागतंज्ञात्वाचचित्रिनीमाकरोत्स्वयं॥दत्तवान्स्वस्यपुत्रत्वाद्दत्तात्रेयइतीश्व
रमिति॥इयंप्रदोषव्यापिनीतिवृद्धाः॥मार्गपौर्णिमानंतराष्टमीअष्टका॥एवंपौषादिमासत्रये
पि॥हेमंतशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाएकस्यांवेत्याश्वलायनोक्तेः।एकस्या
मष्टम्यांवैकाकार्य्येतिहरिदत्तः॥कश्चित्त्र्यंचंपुक्ताः॥प्रोष्ठपद्याष्टकाभूयःपितृलोकेभविष्यती
तियाप्रवचनात्।तत्रसप्तमीषुपूर्वेद्युःतत्परनवमीष्वन्वष्टकासुचश्राद्धमुक्तंकालादर्शे॥
मार्गशीर्षेचपौषेचमाघेप्रोष्ठेचफाल्गुने॥कृष्णपक्षेचपूर्वेद्युरन्वष्टकाइति॥यत्तुविष्णुः।अ
मावास्यास्तिस्रोष्टकास्तिस्रोन्वष्टकाइति।यच्चकौर्मे।अमावास्याष्टकास्तिस्रःपौषमासादि
षुत्रिष्विति॥तच्चतुर्थ्याअनावश्यकत्वार्थं।यातुरम्यमाचतुर्थीस्यात्तांचकुर्यात्प्रयत्नतः।इति
वायुब्रह्मांडपुराणात्॥श्राद्धमेतेष्वकुर्वाणोनरकंप्रतिपद्यते॥इतिविष्णूक्तेरितिशूलपाणिः
॥शाखाभेदाद्व्यवस्थेतितत्त्वं।वायुब्रह्मांडयोः॥आद्यापूपैःसदाकार्य्यामांसैरन्यासदाभवेत्।शा
कैःकार्य्यातृतीयास्यादेषद्रव्यगतोविधिः॥पौषादिक्रमः।अन्वष्टकातुप्रागेवनिर्णीता।तत्रा
ष्टम्यपराह्णव्यापिनीग्राह्या॥अथाच्छादनपर्य्यंतश्राद्धंयावेलावध्वे दिन्याश्वलायनकारि
कोक्तेरपराह्णकालत्वाच्चपार्वणस्य॥पूर्वेद्युरन्वष्टकाश्राद्धयोस्तुअष्टम्यनुरोधेननिर्णयः
अतएवसूत्रम्।पूर्वेद्युःपितृभ्योदद्यात्॥अपरेद्युरन्वष्टक्यमितिच॥अत्रचकामकालौविन्द्ये
देवौ॥इष्टिश्राद्धेक्रतुदक्षावष्टम्यांकामकालकाविति सायणीयेशंखोक्तेः॥अत्रश्राद्धाकरणे
प्रायश्चित्तमुक्तंऋग्विधाने।ऋग्भिर्युभिर्जपेन्मंत्रंशतवारंजनार्दिने।आन्वष्टक्यंयदामूलंसंप्रयो
यातिसर्वथेति॥अशक्तौत्वाश्वलायनः॥अथवापिभूतेष्टकाःपशुनास्थालीपाकेनवाप्यनडु
होयवसमाहरेद्दग्निनावाकक्षमुपोषेदेषामेष्टकेतिनत्वेवानष्टकःस्यादिति॥मार्गशीर्षादिषु
मलमासेसतितत्राष्टकानकार्य्याः॥चतुर्णामितिग्रहणादित्युक्तंनारायणवृत्तौ॥काठकगृ
ह्येपि॥महालयाष्टकाश्राद्धोपाकर्माद्यपिकर्मयत्॥स्पष्टमासविशेषाख्याविहितंवर्जयेन्मले
इति॥मार्गादिरविवारेषुकाम्यंव्रतमुक्तंहेमाद्रौ॥तत्रभक्ष्याण्युक्तानिसंग्रहेसौरधर्मे॥यत्रवि
त्वंगुलस्यास्त्रिपलमथघृतंमार्गशीर्षादिभक्ष्यंमुष्टीनांत्रिस्तिलानांत्रिपलदधितथादुग्धमा
गोमयंच॥त्रित्वंतोयांजलीनांत्रिमरिचकमथोत्रिःपलाःसक्तवःस्युर्गोमूत्रंशर्करासद्विरि
तिविधिनाभानुवारेक्रमेण॥

इतिश्रीभट्टकमलाकरकृतेनिर्णयसिंधौमार्गशीर्षनिर्णयः॥

धनुःसंक्रमेपराःषोडशघटिकाःपुण्याः॥अन्यत्प्राग्वत्॥अत्रोत्सर्जननिर्णयोवक्ष्यो
ण्युपाकर्मप्रसंगात्प्रागेवोक्तः॥कल्पतरौभविष्ये॥पौषेमासियदादेविशुक्लाष्टम्यांबुधोभवे
त्॥तस्यांस्नानंजपोहोमस्तर्पणंविप्रभोजनं॥मत्प्रीतयेकृतंदेविशतसाहस्रिकंभवेत्॥अ
त्रैवरोहिण्यार्द्रायोगेपुण्यतमत्वंतत्रैवज्ञेयम्॥पौषशुक्लैकादशीमन्वादिःसाचोक्ता॥माकृ
पौषपौर्णिमानंतराःसप्तम्यष्टमीनवम्योष्टकाद्याःप्रागुक्ताः॥पौषामावास्यायामर्द्धोदययो
गविशेषः॥तदुक्तंमदनरत्नेमहाभारते॥अमार्कपातश्रवणैर्युक्ताचेत्पौषमाघयोः॥अर्द्धो

दयः सविज्ञेयः कोटिसूर्य्यग्रहैः समः ॥ इतिपुष्यमाघयोर्मध्यवर्तिनीयोषीपौर्णमा।उत्तरामा
वास्येत्यर्थः ॥० इतिभट्टाः पुष्यस्यमाघस्यचेत्यर्थउक्तोमदनरत्ने ॥ तन्न ॥ हेमाद्रि
विरोधात् ॥० तत्रहेमाद्रावेवोक्तः ॥ तथा ॥ दिवैवयोगः शस्तोयनतुरात्रौकदा
चनेति ॥ इदमर्धमन्यनिबंधेष्वभावान्निर्णयामृतमात्रोक्तेर्निर्मूलमेव । तेनहेमाद्र्यादिमते
रात्रावर्द्धोदयोभवत्येव । केचित्तुकिंचिद्दूनोमहोदयइत्याहुस्तन्निर्मूलम् ॥ हेमाद्रौमदनरत्ने
चस्कांदे ॥ माघामायांव्यतीपातेआदित्येविष्णुदैवते ॥ अर्द्धोदयंतद्विख्याहुः सहस्रार्कग्रहैः स
मं ॥ तत्रैव ॥ माघमासेकृष्णपक्षेपंचदश्यांरवेर्दिने ॥ वैष्णवेनतुऋक्षेणव्यतीपातेमहद्भवे ।
व्रतंकुर्यादित्यग्रेन्वयः ॥ तत्रैवंब्रह्मविष्णुमहेशानांसौवर्णाः पलसंख्यया ॥ प्रतिमास्तुप्रक
र्तव्यास्तदर्द्धेनद्विजोत्तम ॥ सार्द्धशतत्रयंशोभोद्रोणानांतिलपर्वतः । कर्तव्योपर्वतोविष्णुरुद्र
योः पूर्वसंख्यया । शंभुरत्रब्रह्मा ॥ शय्यात्रयंततः कुर्य्यादुपस्करसमन्वितं ॥ तिलैर्होमंकृत्वा
प्रतिमांदद्यादित्युक्तं ॥ स्कांदे ॥ अर्द्धोदयेतुसंप्राप्तेसर्वंगंगासमंजलम् ॥ शुद्धात्मानोद्विजाः
सर्वेभवंतिब्रह्मसन्निभाः ॥ यत्किंचिद्दीयतेदानंतद्दानंमेरुसन्निभमिति ॥ अत्रदानविशेषो
निर्णयामृतेस्कांदे ॥ चतुःषष्टिपलंमुख्यममत्रंतत्रकारयेत् ॥ चत्वारिंशत्पलंवाथपंचविं
शतिरेववा ॥ अमत्रंपात्रम् ॥ तच्चकांस्यमयमित्युक्तंतत्रैव ॥ एवंसुघटितंकार्य्यंकांस्यभाज
नमुत्तममिति ॥ तथा ॥ निधायपायसंतत्रपद्ममष्टदलंलिखेत् ॥ पद्मस्यकर्णिकायांतुकर्ष
मात्रंसुवर्णकं ॥ तदभावेतदर्द्धंवातदर्द्धंवापिकारयेत् ॥ भूमौतुतंडुलैः शुद्धैः कृत्वाष्टदलमु
त्तमम् ॥ अमत्रंस्थापयेत्तत्रब्रह्मविष्णुशिवात्मकंतेषांपूजाततः कार्य्याश्वेतमाल्यैस्तुशोभनैः ।
वस्त्रादिभिरलंकृत्यब्राह्मणायनिवेदयेत् । मंत्रस्तु ॥ सुवर्णपायसामत्रयस्मादेतत्त्रयीमयं
आपन्नेस्तारकंयस्मात्तद्गृहाणद्विजोत्तम ॥ समुद्रमेखलांपृथ्वीसम्यग्दातुश्चयत्फलं । तत्फ
लंलभतेमर्त्यः कृत्वेदंदानमुत्तममिति ॥० इतिश्रीकमलाकरभट्टकृतेनिर्णय॰
सिंधौपौषः ॥ १० अथमाघस्नानं ॥०

तत्रविष्णुः ॥ तुलामकरमेषेषुप्रातः स्नायीसदाभवेत् ॥ हविष्यंब्रह्मचर्य्यंचमाघस्नानंमह
त्फलं ॥ इतिसौरमासउक्तः ॥० ब्राह्मेतुसावनमासउक्तः ॥ एकादश्यांशुक्लप
क्षेपौषमासेसमारभेत् ॥ द्वादश्यांपौर्णमायांवाशुक्लपक्षेसमापनं इति ॥ पाद्मेपि ॥ पुष्यस्यै
कादशींशुक्लामारभ्यस्थंडिलेशयः ॥ मासमात्रंनिराहारस्त्रिकालस्नानमाचरेत् ॥ त्रिका
लमर्चयेद्विष्णुंत्यक्तभोगोजितेंद्रियः ॥ माघस्यैकादशींशुक्लांयावद्विधावरोत्तमेति ॥ त्रि॰
कालस्नानंमासोपवासविषयं ॥ निराहारइत्युक्तेः ॥ पृथ्वीचंद्रोदयेत्वन्यथोक्तं ॥ विष्णुः ॥
दर्शेवापौर्णमासीवाप्रारभ्यस्नानमाचरेत् ॥ पुण्यान्यहानित्रिंशत्तुमकरस्थेदिवाकरइति
॥ अत्रदर्शमिति ॥ शुक्लादिमुख्यचांद्राभिप्रायेण । अयंतुपक्षोनेदानींप्रचरति ॥ अत्राधिका
रिणोभविष्ये ॥ ब्रह्मचारीगृहस्थोवावानप्रस्थोथभिक्षुकः ॥ बालवृद्धयुवानश्चनरनारीन
पुंसकाः ॥ स्नात्वामाघेशुभेतीर्थेप्राप्नुवंतीप्सितंफलं ॥ पाद्मे ॥ सर्वेधिकारिणोयत्रविष्णु॰

भक्तोयथानृपब्राह्मे॥उष्णोदकेनवास्नानमशक्तेसतिकुर्वते॥वृद्धेषुसर्वगात्रेषुउष्णोदंनविशिष्यते
॥वैद्यस्वामृतेगौडनिबंधे॥पौष्यांतुसमतीतायांयावद्भवतिपौर्णिमा॥माघमासस्यतावद्धिप्रज्ञाबि
स्रोविधीयते॥पितृणांदेवतानांचमूलकंनैवदापयेत्॥ब्राह्मणोमूलकंभुक्त्वाचरेच्चांद्रायणंव्रतं
अन्यथायातिनरकंक्षत्रविट्शूद्रएवच॥वर्जनीयंप्रयत्नेनमूलकंमदिरोपमं॥यदातुमाघोमल
मासोभवतितदाकाम्यानांतत्रसमाप्तिनिषेधान्मासद्वयंस्नानंतन्नियमाश्चकर्तव्याः॥मासोपवा
सपदंचांद्रायणादितुमलमासएवसमापयेत्॥तदुक्तंदीपिकायां॥नियतस्त्रिंशद्दिनत्वाच्चकुंभे
मास्यारभ्यसमापयेत्तमलिनेमासोपवासव्रतमिति॥मासोपवासपदंचांद्रायणादेरुपलक्षणं
स्नानारंभेचमंत्राविष्णुनोक्ताः॥तत्रचोत्थायनियमंगृह्णीयाद्विधिपूर्वकम्॥माघमासमिमंपू
र्णंस्नास्येहंदेवमाधव॥तीर्थस्यास्यजलेनित्यमितिसंकल्प्यचेतसीति॥प्रत्यहंमंत्रश्चपाद्मे॥
दुःखदारिद्र्यनाशायश्रीविष्णोस्तोषणायच॥प्रातःस्नानंकरोम्यद्यमाघेपापविनाशनं॥मक
रस्थेरवौमाघेगोविंदाच्युतमाधव॥स्नानेनानेनमेदेवयथोक्तफलदोभव॥इमंमंत्रंसमुच्चार्य
स्नायान्मौनसमन्वितइति॥प्रत्यहंसूर्यार्घ्यमंत्रश्चपृथ्वीचंद्रोदयेपाद्मे॥सवित्रेप्रसवित्रेचपरंधा
मजलेमम॥त्वत्तेजसापरिभ्रष्टंपापंयातुसहस्रधेति॥स्नानकालश्चसूर्योदयः॥त्रिस्थलीसे
तौ॥संप्राप्तेमाघमासेतुतपस्विजनवल्लभे॥क्रोशंतिसर्ववारीणिसमुद्गच्छतिभास्करे॥पुनीम
सर्वपापानित्रिविधानिनसंशयइतिनारदीयोक्तेः॥मकरस्थेरवौयोहिनस्नात्यभ्युदितेरवाविति
॥माघमासेरटंत्यापःकिंचिदभ्युदितेरवावितिचपाद्मवचनात्॥योमाघमासुषसिसूर्यकराभि
तप्तेस्नानंसमाचरतिचारुनदीप्रवाहे॥उद्धृत्यसप्तपुरुषान्पितृमातृवंश्यान्स्वर्गंप्रयात्यमरदेह
धरोनरोसौइतिभविष्योत्तरवचनाच्च॥ब्राह्मेत्वरुणोदयउक्तः॥अरुणोदयेतुसंप्राप्तेस्नानकाले
विचक्षणः॥माधवांघ्रियुगंध्यायन्नृपःस्नातिसुरद्विजितइति॥तथा॥अरुणोदयमारभ्यप्रातः
कालावधिप्रभो॥माघस्नानवतांपुण्यंक्रमात्त्रावधारणा॥उत्तमंतुसनक्षत्रंलुप्ततारंतुमध्य
मं॥सवितर्युदितेभूपततोहीनंप्रकीर्तितमिति॥तेनात्रशक्त्यपेक्षयाव्यवस्था॥इदंचस्नानंप्रश
स्तं॥काश्याःशतगुणंप्रोक्तंगंगायमुनसंगमे॥सहस्रगुणितासापिभवेत्पश्चिमवाहिनी॥पश्चि
माभिमुखीगंगाकालिंद्यासहसंगता॥हंतिकल्मषजंपापंसामाघेनृपदुर्लभेत्यादिपाद्मादिवचो
भ्यः॥विशेषस्तुपितामहस्थानप्रयागसेतौज्ञेयः॥ब्राह्मे॥यत्रकुत्रापिवामाघेप्रयागस्मरणान्वितः
करोतिमज्जनंतीर्थेसलभेद्गांगमज्जनम्॥तथासमुद्रेप्यतिप्रशस्तं॥तदुक्तंपृथ्वीचंद्रोदयेप्रभा
सखंडे॥माघेमासिचयःस्नायान्नैरंतर्येणभावतः॥पौंडरीकफलंतस्यदिवसेदिवसेभवेत्॥
माघस्नानंकाम्यमेवेतिकेचित्॥विष्ण्वादिवाक्येसदावश्यशब्दान्नित्यकाम्यमितितुयुक्तम्॥
मासपर्यंतंस्नानासंभवेत्र्यहमेकाहंवास्नायात्॥महामाघीपुरस्कृत्यशस्तोतत्रदिनत्रयं
मितिलिंगात्॥अस्मिन्नुयोगेत्वशक्तोपिस्नायादपिदिनत्रयं॥प्रयागेमाघमासेतुत्र्यहंस्नान
स्ययत्फलम्॥नाश्वमेधसहस्रेणतत्फलंलभतेभुवीत्यादिपाद्मादिवचनात्॥अत्रमकरसंक्रा
मरथसप्तमीमाघीतित्र्यहइत्येके॥माघशुक्लदशम्यादीत्यन्ये॥मकराद्यत्र्यहइत्यपरे॥माघस्ना

पश्चहरतिकेचित्॥त्रयोदश्यादीतिवहवः॥महामाघेंपुरस्कृत्यस्नानंतत्रदिनत्रयमितिपाद्मोक्ते
॥एतस्यार्थवादत्वाद्यत्किंचिद्दिनत्रयमितिमदाः।तत्वंतुसंदिग्धेमुख्यवाक्यशेषादितिपाद्मेत्रयो
दश्यादेर्वेति॥प्रयागंविनापिपाद्मे॥अस्मिन्योगेत्वशक्तोपिस्नायादपिदिनत्रयं॥माघस्नानेनि
यमास्तुनारदीये॥नवह्निंसेवयेत्स्नातोप्यस्नातोपिवरानने।होमार्थंसेवयेद्वह्निंशीतार्थंनकदा
चन॥अहन्यहनिदातव्यास्तिलाःशर्करयान्विताः॥त्रिभागस्तुतिलानांहिचतुर्थःशर्करान्वि
तः॥अनभ्यंगीवरारोहेसर्वंमासंनयेद्व्रती॥तथा॥अप्रावृतशरीरस्तुयःकश्चित्स्नानमाचरेत्।
पदेपदेश्वमेधस्यफलंप्राप्नोतिमानवः॥तथा॥शंखचक्रधरंदेवंमाधवंनामपूजयेत्॥वह्निं
हुत्वाविधानेनततस्त्वेकाशनोभवेत्।भूशय्याब्रह्मचर्येणशक्तःस्नानंसमाचरेत्।अशक्तो
ब्रह्मचर्यादौस्वेच्छासर्वत्रकथ्यते॥तिलस्नायीतिलोद्वर्तीतिलहोमीतिलोदकी॥तिलभुक्
तिलदाताचषट्तिलाःपापनाशनाइति॥तथा॥प्रयागासंभवेकाश्यांदशाश्वमेधजनितंफ
लंतेषांभवेद्ध्रुवमितिस्नानोत्तरंमदनपारिजातेविष्णुः।काष्टमोनान्यमस्कान्पूजयेत्पुरुषोत्तम
मू अवश्यमेवकर्तव्यंमाघस्नानमितिश्रुतेः।भविष्ये॥तैलमामलकांश्चैवतीर्थेदेयास्तुनित्यशः
॥ततःप्रज्वालयेद्वह्निंसेवनार्थंद्विजन्मनां॥एवंस्नानावसानेतुभोज्यंदेयमवारितम्॥भोजये
द्विजदांपत्यंभूषयेद्वस्त्रभूषणैः॥कंबलाजिनरत्नानिवासांसिविविधानिच॥चोलकानिचदेया
निप्रच्छादनपटास्तथा॥उपानहौतथागुप्तमोचकौपापमोचकौ॥अनेनविधिनादद्यान्माधवः।
प्रीयतामितिपाद्मे॥भूमौशयीतहोतव्यमाज्यंतिलसमन्वितम्॥तथा॥अन्नंचैवयथाशक्त्यादेयं
माघेनराधिप॥सुवर्णरक्तिकामात्रंदद्याद्देवदिनेतथा॥माघांतेतुविशेषोनारदीये॥माघावसाने
सुभगेषड्रसंभोजनंस्मृतं॥सूर्योमेप्रीयतांदेवोविष्णुमूर्तिर्निरंजनः॥दंपत्योर्वाससीसूक्ष्मेसप्त
धान्यसमन्विते॥त्रिंशन्मोदकादेयाःशर्करातिलसंयुताइति॥अत्रैकादशीविधानेनव्रतस्यो
द्यापनंनथेतिपाद्मवचनात्॥सर्वेह्निउपवासपूजनादिकृत्वापरेह्नितिलचर्वाज्यैरष्टोत्तरशतं।
होमंकृत्वासवित्रेप्रसवित्रेचेतिसर्वोक्तमंत्रमुक्त्वा।दिवाकरजगन्नाथप्रभाकरनमोस्तुते॥परिपू
र्णंकुरुष्वेहमाघस्नानमुपःपतेइतिसमापयेदितिसंक्षेपः॥मकरसंक्रांतौहेमाद्रिमतेपराश्चत्वा
रिंशद्घटिकाःपुण्याः॥त्रिंशत्कर्कटकेनाड्योमकरेतुदशाधिकाइतिब्रह्मवैवर्तात्॥माधवमते
तुविंशतिः॥त्रिंशत्कर्कटकेपूर्वामकरेविंशतिःपरेति॥वृद्धवसिष्ठोक्तेः॥यदातुसूर्यास्तात्पूर्वं
संक्रांतिर्भवतितदोभयमतेपूर्वमेवपुण्यकालः॥रात्रौतुप्रदोषेनिशीथेवामकरसंक्रमेमाधव
मतेद्वितीयदिनएवपुण्यं॥यद्यस्तमयवेलायांमकरंयातिभास्करः।प्रदोषेवार्द्धरात्रेवास्नानंदा
नंपरेहनीतिवृद्धगार्ग्यवचनात्॥अस्तमयःप्रदोषः॥प्रदोषेपूर्वरात्रे॥कार्मुकंतुपरित्यज्यझषं
संक्रमतेरविः॥प्रदोषेवार्द्धरात्रेवास्नानंदानंपरेहनीतिभविष्योक्तेश्च॥तदाभोगःपरेहनीति
हेमाद्रिपाठः॥कालादर्शनिर्णयामृतमदनरत्नपारिजातादयोप्येवमूचुः।दाक्षिणात्यास्त्वेतदे
वाद्रियंते।यत्तुहेमाद्रिणाऽर्धोवार्धरात्रोपर्यर्थेद्वितीयस्तत्पूर्वार्थेयथाप्रदोषेपूर्वेद्युस्तथार्द्धरात्रेपरे
ह्नीत्युक्तम्॥तत्सेनमोक्तु।तेनपरेह्निपुण्यंवक्तुंप्रदोषेइति॥दिनद्वयेपुण्यनिरासार्थमर्द्धरा

नः संतर्प्य तु यमं सर्वपापैः प्रमुच्यत इति ॥ माघशुक्लचतुर्थी सा प्रदोषव्यापिनी ग्राह्या ॥ माघशुक्लच-
तुर्थ्यां तु नक्तव्रतपरायणाः ये त्वां ढुंढे च पूजयंति तेऽर्च्याः सुरासुरैरिहामिति काशीखंडात् ॥ माघमा-
सि चतुर्थ्यां तु तस्मिन्काले उपोषितः ॥ अर्चयित्वा तु यो देवि जागरं तत्र कारयेत् इति ॥ त्रिस्थलीसेतौ
लैंगाच्च ॥ इयमेव कुंदचतुर्थी सा प्रदोषव्यापिनी ग्राह्या ॥ माघशुक्लचतुर्थ्यां तु कुंदपुष्पैः सदा शिवम्
। संपूज्य यो दिनक्षाशी स प्राप्नोति श्रियं नर इति ॥ कालादर्शकौमीजेः ॥ माघशुक्लपंचमी श्रीपंचमी
॥ तदुक्तं हेमाद्रौ वाराहे ॥ माघशुक्लचतुर्थ्यां तु वरमाराध्य च श्रियः ॥ पंचम्यां कुंदकुसुमैः पूजां कुर्या-
त्समृद्धये ॥ इयं माधवमते पूर्वा ॥ हेमाद्रिमते परा ॥ चैत्रशुक्ले श्रीपंचमीति दिवोदासः ॥ माघशुक्लस-
प्तमी रथसप्तमी सा अरुणोदयव्यापिनी ग्राह्या ॥ सूर्यग्रहणतुल्या तु शुक्ला माघस्य सप्तमी ॥ अरुणो-
दयवेलायां तस्यां स्नानं महाफलमिति चंद्रिकायां विष्णुवचनात् ॥ अरुणोदयवेलायां शुक्ला माघ-
स्य सप्तमी ॥ प्रयागे यदि लभ्येत कोटिसूर्यग्रहैः समेति वचनाच्च ॥ यत्तु दिवोदासीये ॥ अचलास-
प्तमी दुर्गा शिवरात्रिर्महाभरः ॥ द्वादशी वत्सपूजायां सुखदा प्राग्युता सदेति ॥ षष्ठीयुतत्वमुक्तं ॥ तद्य-
दा षष्ठ्यां द्विघटिकाद्वयं षष्ठी सप्तमी च परेद्युः क्षयवशादरुणोदयात् पूर्वं समाप्यते तत्परं ज्ञेयम् ॥ त-
त्र षष्ठ्यां सप्तमीक्षयं प्रवेश्यारुणोदये स्नानं कार्यम् ॥ मदनरत्ने भविष्योत्तरे ॥ माघे मासि सिते पक्षे
सप्तमी कोटिभास्करा ॥ कुर्युः स्नानार्घ्यदानाभ्यामायुरारोग्यसंपदः ॥ अत्र विधिर्हेमाद्रौ भविष्ये ॥
कृत्वा पक्षस्यमेकभक्तं सप्तम्यां निश्चलं जलं ॥ रात्र्यंते चालयेद्यावत्कृत्वा शिरसि दीपकं ॥ तथा जलं प्र-
क्रम्य ॥ न केन चाल्यते यावत्तावत्स्नानं समाचरेत् ॥ सौवर्णे राजते पात्रे भक्त्या लाबुमयेऽथवा ॥
तैलेन वर्त्तिदीप्तं वा महारजनरंजिता ॥ महारजनं कुसुंभम् ॥ समाहितमना भूत्वा दत्वा शिरसि यत्क-
म् ॥ भास्करं हृदये ध्यात्वा इमं मंत्रमुदीरयेत् ॥ नमस्ते रुद्ररूपाय रसानां पतये नमः ॥ वरुणाय नम-
स्तुभ्यं हरिवास नमोऽस्तु ते ॥ जले परिहरेद्दीपं ध्यात्वा संतर्पयेद्देवताः ॥ चंदनेन लिखेत्पद्ममष्टपत्रं सक-
र्णिकं ॥ मध्ये शिवं सपत्नीकं प्रणवेन च संयुतं ॥ पूर्वादिदलेषु रविभानुविवस्वद्भास्करसवित्रर्कस-
हस्रकिरणसर्वात्मकान् संपूज्य गृहं गच्छेदिति ॥ स्नानमंत्रस्तु काशीखंडे ॥ यद्यज्जन्मकृतं पापं म-
या जन्मसु सप्तसु ॥ तन्मे रोगं च शोकं च माकरी हंतु सप्तमी ॥ एतज्जन्मकृतं पापं यच्च जन्मांतरार्जित-
म् ॥ मनोवाक्कायजं यच्च ज्ञाताज्ञाते च ये पुनः ॥ इति सप्तविधं पापं स्नानान्मे सप्तसप्तिके ।
नरः ॥ केशवादित्यमालोक्य क्षणान्निष्कलुषो भवेत् ॥ दिवोदासीये मदनरत्ने च ॥ इक्षुदंडेन जलं-
चालयित्वा सप्तार्कपत्राणि च शिरसि निधाय ॥ पूर्वोक्तैर्मंत्रैः स्नात्वा तिलपिष्टमयाश्वपेहेमं सूर्यं।
संकल्प्य विप्राय दद्यात् ॥ अर्घ्यमंत्रो मदनरत्ने ॥ सप्तसप्तिवह प्रीत सप्तलोकप्रदीपन ॥ सप्तमीस-
हितो देव गृहाणार्घ्यं दिवाकर ॥ ततः ॥ जननी सर्वलोकानां सप्तमी सप्तसप्तिके ॥ सप्तम्याहृतके दे-
वि नमस्ते सूर्यमंडले इति प्रार्थयेत् ॥ सौरागमे ॥ अर्कपत्रैः सबदरैः दूर्वाक्षतस-
चंदनैः ॥ अष्टांगविधिना चार्घ्यं दद्यादादित्यतुष्टये ॥ अत्र दानविशेषो हेमाद्रौ भविष्ये ।
ताम्रपात्रे यथाशक्त्या मृण्मये वाथ शक्तिमान् स्थापयेत्तिलपिष्टं च सघृतं सगुडं तथा ॥ कांचनं ता-
लकं कृत्वा अशक्तस्तिलपिष्टजं ॥ संछाद्य रक्तवस्त्रेण पुष्पैर्धूपैरथार्चयेत् ॥ दानमंत्रस्तु ॥

चादित्यस्य प्रसादेन प्रातःस्नानफलेन च॥ दुःखदौर्भाग्यदःस्वप्नमयाद्दत्तं तु तालकं॥ तालकं करीभव...
नीतत्रैवोक्तं॥ दीपयात्रमितिहेमाद्रौ॥ तत्रैव भविष्योत्तरे॥ एवंविधं रथवरं रविवाजियुक्तं हेमचहेमय
त्रदीधितिनासमेतं॥ दद्याच्च माघसितसप्तमिवासरे यः सोऽसंगचक्रगतिरेव महीं भुनक्ति॥ इयं मन्वादिरू
पा॥ इयं च शुक्लपक्षस्थत्वात्॥ पौर्वाह्णिकी ग्राह्या॥ यदा माघो मलमासो भवति तदा मासद्वये
मन्वादिश्राद्धं कुर्यात्॥ मन्वादिकं तैथिकं च कुर्यान्मासद्वयेऽपि चेति स्मृतिचंद्रिकोक्तेः॥ माघशुक्लाष्ट
मी भीष्माष्टमी॥ तदुक्तं हेमाद्रौ पाद्मे॥ माघे मासि सिताष्टम्यां सतिलं भीष्मतर्पणं॥ श्राद्धं च ये नराः
कुर्युस्ते स्युः संततिभागिन इति॥ भारतेऽपि॥ शुक्लाष्टम्यां तु माघस्य दद्याद्भीष्माय यो जलं
संवत्सरकृतं पापं तत्क्षणादेव नश्यतीति॥ धवलनिबंधे स्मृतिः॥ अष्टम्यां तु सिते पक्षे भीष्माय तु
तिलोदकं॥ अन्नं च विधिवद्दद्युः सर्वे वर्णा द्विजातयः॥ सर्ववर्णा हि द्विजातय इति संबोधनं॥ तर्प
णमंत्रस्तत्रैव॥ भीष्मः शांतनवो वीरः सत्यवादी जितेंद्रियः॥ आभिरद्भिरवाप्नोतु पुत्रपौत्रोचितां
क्रियाम्॥ वैयाघ्रपद्यगोत्राय सांकृत्यप्रवराय च॥ अपुत्राय ददाम्येतज्जलं भीष्माय वर्मणे॥ वसूनामव
ताराय शंतनोरात्मजाय च॥ अर्घ्यं ददामि भीष्माय आबालब्रह्मचारिणे इति॥ एतच्च जीवत्पितृकेणा
पि कार्यमित्युक्तं॥ एतच्चावश्यमेव कार्यमिति दिवोदासीये॥ अत्र श्राद्धं काम्यम्॥ तर्पणं तु नित्यं ब्रा
ह्मणाद्याश्च ये वर्णा दद्युर्भीष्माय नो जलं॥ संवत्सरकृतं तेषां पुण्यं नश्यति सत्तमेति मदनरत्ने वचनात्॥
॥ माघशुक्ला द्वादशी भीष्मद्वादशी॥ तथा कृतमिदं वीर त्वन्नाम्ना भविष्यति॥ सा भीष्मद्वादशी प्रोक्ता
सर्वपापहरा शुभेति हेमाद्रौ पाद्मवचनात्॥ इयं सर्वैव युग्मवाक्यात्॥ माघी पूर्णिमा परे युक्ता मा
कृ॥ तथा हेमाद्रौ ब्राह्मे॥ मघास्थयोश्च जीवेंद्वोर्महामाघीति कथ्यते॥ तत्रैव ज्योतिषे॥ मेषस्थे यदा
सौरिः सिंहे च गुरुचंद्रमाः॥ भास्करः श्रवणर्क्षे च महामाघीति सा स्मृता॥ तथा भविष्ये॥ वैशाखी कार्ति
की माघी तिथयोऽतीव पूजिताः॥ स्नानदानविहीनास्ता न नेयाः पांडुनंदन॥ तथा॥ तिलपात्राणि दे
यानि कंबुकाः कंबलास्तथेति॥ माघपौर्णमास्यनंतराष्टमी माघी अष्टका तन्निर्णयः॥ सर्वैर्गृह्य
सूत्रकारैरष्टम्यामपरपक्षाणामष्टमीष्वष्टका एकस्यां वेत्याश्वलायनोक्तेः॥ तथा माघाष्टकां प्र
क्रम्य तामेकाष्टकेत्याचक्षत इत्यापस्तंबवचनाच्चेमां त्रियोगयाज्ञिजानेहेयम्॥ ॥ ॥ ॥

इति भट्टकमलाकरकृते निर्णयसिंधौ माघः समाप्तोऽयं ॥

कुंभे सर्वाः षोडश घटिकाः पुण्याः॥ शेषं प्राग्वत्॥ फाल्गुनकृष्णाष्टम्यां विशेषः कल्पतरौ॥ फाल्गु
नस्य च मासस्य कृष्णाष्टम्यां महीपते पक्षस्य॥ जाता दाशरथेः पत्नी तस्मिन्नहनि जानकी॥ उ
पोषितो रघुपतिः समुद्रस्य तटे तदा॥ रामपत्नी च संपूज्या सीता जनकनंदिनीति॥ फाल्गुनी चतु
र्दशी शिवरात्रिः॥ सा च केषुचिद्वचनेषु प्रदोषव्यापिनी ग्राह्येत्युक्तं॥ केषुचिन्निशीथव्यापिनी
॥ तत्राद्यं माधवीये वायवीये॥ त्रयोदश्यस्तगे सूर्ये चतसृष्वेव नाडिषु॥ भूतविद्धा तु या तत्र शि
वरात्रिव्रतं चरेत्॥ स्मृत्यंतरेऽपि॥ प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्दशी॥ रात्रौ जागरणं य
स्मात्तस्मात्तां समुपोषयेत्॥ अत्र प्रदोषो रात्रिः॥ उत्तरार्द्धे तस्या हेतुत्वोक्तेः॥ कामिकेऽपि॥ आ
दित्यास्तमये काले अस्ति चेद्या चतुर्दशी॥ तद्रात्रिः शिवरात्रिः स्यात्सा भवेदुत्तमोत्तमेति॥ द्वि

तीयापितत्रैवनारदसंहितायां॥ अर्द्धरात्रयुतायत्रमाघकृष्णचतुर्द्दशी॥ शिवरात्रिव्रतंतत्रसोऽश्व
मेधफलंलभेत्॥ स्मृत्यंतरेपि॥ भवेद्यत्रत्रयोदश्यांभूतव्याप्तामहानिशा॥ शिवरात्रिव्रतंतत्रकु
र्य्याज्जागरणंतथेति॥ ईशानसंहितायाम् माघकृष्णचतुर्द्दश्यामादिदेवोमहानि
शि॥ शिवलिंगतयोद्भूतःकोटिसूर्यसमप्रभः॥ तत्कालव्यापिनीग्राह्याशिवरात्रिव्रतेव्रती॥
नार्द्धरात्रादधश्चोर्ध्वंयुक्तायत्रचतुर्द्दशी॥ नैवतत्रव्रतंकुर्यादायुरैश्वर्यहानितः॥ अर्द्धरात्रश्च
द्वितीययामांत्यघटी॥ तृतीययामाद्यघटीद्वितीयरूपइतिमाधवः॥ वचनंतूक्तंप्राक्॥ एवंस
तिपूर्वेद्युरेवोभयव्याप्तौपूर्वैव॥ त्रयोदशीयदादेविदिनभुक्तिप्रमाणतः॥ जागरेशिवरात्रिश्च
कार्येभद्राजयान्विते॥ इतिस्कांदाच्च॥ दिनद्वयेनिशीथव्याप्तौतुहेमाद्रि
मतेपूर्वा॥ अर्द्धरात्रात्पुरस्ताच्चेज्जयायोगोयदाभवेत्॥ पूर्वविद्धैवकर्तव्याशिवरात्रिःशिवप्रियै
रितियमवचनात्॥ मदनरत्नेप्येवम् गौडाअप्येवमाहुः॥ निर्णयामृतेतुसर्वापिशिवरात्रि
प्रदोषव्यापिन्येव॥ अर्द्धरात्रवाक्यानिस्तुतिकमापेनप्रदोषस्यावकाशीन्युक्तं॥ तन्न॥ अर्द्धरा
त्रस्यपूर्वकर्मकालत्वोक्तेः॥ परदिनेप्रदोषनिशीथोभयव्याप्तिस्त्वपरैवेतिमाधवः॥ इदमेव
चयुक्तंप्रतीमः॥ परेद्युःप्रायुक्तार्द्धरात्रस्यैकदेशव्याप्तौपूर्वेद्युःसंपूर्णतद्व्याप्तौचसत्यांपरेद्युः
प्रदोषनिशीथोभययोगेपूर्वोक्तसंपूर्णव्याप्तेः॥ पूर्वैव॥ यथार्द्धरात्रेयस्यांतुलभ्यतेयाचतु
र्द्दशी॥ तस्यामेवव्रतंकार्यमत्प्रसादार्थिभिर्नरैः॥ तदूर्ध्वाधोन्विताभूतासाकार्याद्वतिभिःस
देतिमाधवमतेशानसंहितोक्तेः॥ पूर्वेद्युर्निशीथस्यपरेद्युःप्रदोषस्येत्येकैकव्याप्तौतुपूर्वैव॥
जयायोगस्यप्राशस्त्यात्॥ तदुक्तंनागरखंडे॥ माघफाल्गुनयोर्मध्येअ
सितायाचतुर्द्दशी॥ अनंगेनसमायुक्ताकर्तव्यासासदातिथिरिति॥ याम्येपि॥ अर्द्धरात्रात्पुर
स्ताच्चेज्जयायोगोयदाभवेत्॥ पूर्वविद्धैवकर्तव्याशिवरात्रिःशिवप्रियैरिति॥ स्कांदेपिभवेद्य
त्रत्रयोदश्यांभूतव्याप्तामहानिशी॥ शिवरात्रिव्रतंतत्रकुर्य्याज्जागरणंतथेति॥ महतामपि
पापानांदृष्टावैनिष्कृतिःपुरा॥ नदृष्टाकुर्वतांपुंसांकुहूःपूर्वेद्युर्निशीथादूर्ध्वंप्रवृत्तापरेद्युश्चनिशी
थादर्वागेवसमाप्तातदापरेद्युरेकव्याप्तिसत्वात्परैव॥ माघासितेभूतदिनंहिराजन्नुपैतियो
गंयदिपंचदश्या॥ जयाप्रयुक्तांनतुजातुकुर्य्याच्छिवस्यरात्रिंप्रियकृच्छिवस्येतिवचनात्॥
एवंदिनद्वयेप्रदोषव्याप्त्यभावेनिशीथव्याप्तिसत्वात्पूर्वैव॥ तेनदिनद्वयेनिशीथव्याप्तौप्रदो
षव्याप्त्यानिर्णयः॥ दिनद्वयेप्रदोषव्याप्तौनिशीथेननिर्णयः॥ एकैकव्याप्तौप्रदोषव्याप्त्या
तुनिशीथेननिर्णयइति॥ इयंचरविभौमसोमवारेषुशिवयोगेचातिप्रशस्ता॥ हेमाद्रौतीर्
र्थखंडेलैंगे॥ फाल्गुनस्यचतुर्द्दश्यांकृष्णपक्षेसमाहिताः॥ कृत्तिवासेश्वरंलिंगमर्चयंति
शिवंशुभे॥ तेषांतिपरमंस्थानंसदाशिवमनामयं॥ शिवरात्रिपारणेतुविरुद्धवाक्यानिदृश्य
ते॥ स्कांदे॥ कृष्णाष्टमीस्कंदषष्ठीशिवरात्रिचतुर्द्दशी॥ एताःपूर्वयुताःकार्यास्
तिथ्यंतेपारणंभवेदिति॥ जन्माष्टमीरोहिणीचशिवरात्रिस्तथैवच॥ पूर्वविद्धैवकर्तव्यातिर्
थिभांतेचपारणमिति॥ तिथिमध्येपिपारणंस्कांदेउक्तम्॥ उपोषणंचतुर्द्दश्यांचतुर्द्दश्यां

च पारणं कृतेः सुकृतलेशोपि लभ्यते वा न वा॥ ब्रह्माण्डोदरमध्ये तु यानि तीर्थानि संति वै। संपूज्या-
नि भवंतीह भूतायां पारणे कृते॥ तिथीनामेव सर्वासामुपवासव्रतादिषु॥ तिथ्यंते पारणं कुर्याद्विना
शिवचतुर्दशीमिति॥ अत्र यामत्रयादर्वाक्चतुर्दशीसमाप्तौ तदंते तदूर्ध्वगामिन्यां तु प्रातस्तिथिमध्य
एवेति॥ हेमाद्रिमाधवादयो व्यवस्थामाहुः॥ तन्न॥ तिथ्यंते तिथिभांते वा पारणं यत्र चोदितं॥ यामत्रयो-
र्ध्वगामिन्यां प्रातरेव हि पारणा॥ इत्यादिनाम्नायवचनेनैव व्यवस्थासिद्धेरुभयविधवाक्यवैयर्थ्यस्य दु-
हरत्वात्॥ वयं तु तिथ्यंते पारणं भवेदित्येतज्जन्माष्टम्यादिविषयमेव न तु शिवरात्रिविषयम् तद्गु पारणं
तु दर्शयुतत्वमात्रकथनार्थं॥ कथमन्यथा स्कांदे एव पूर्वमुदाहृतवाक्ये तिथिमध्ये पारणविधानं घट-
ते॥ तस्माद्विना शिवचतुर्दशीमिति पर्युदस्तशिवरात्र्याः सर्वप्रकारेषु तिथिमध्य एव पारणं नियमाचि-
राचारोप्येवमेव॥ दीपिकायां तु यामत्रयपि तिथ्यंते एवोक्तं॥ व्रतनिषेधंते निशीथेपि वाश्नीयादिति॥ म-
दनरत्नकालादर्शयोस्तु॥ सा चास्तमयपर्यंतव्यापिनी चेत्परेऽहनि॥ दिवैव पारणं कुर्यात्पारणे नैव दो-
षभागी स्यात्॥ तन्न॥ तिथिमध्ये पारणविधानान्निषिद्धफलयोगाच्च॥ तिथ्यंतानपेक्षणाद्दोषप्र-
सक्तौ॥ चतुर्थयामादास्तमितेः॥ तेनेदं शिवरात्रिभिन्नव्रतपरं ज्ञेयम्॥ इदं व्रतं संयोगपृथक्त्वन्यायेन नित्यं
काम्यं च॥ तथा च माधवीये स्कांदे॥ परात्परतरं नास्ति शिवरात्रिः परात्परम्॥ न पूजयति भक्त्येशं रु-
द्रं त्रिभुवनेश्वरं॥ जंतुर्जन्मसहस्रेषु भ्रमते नात्र संशयः॥ इति॥ अकरणे प्रत्यवायश्रुतेः वर्षे वर्षे महादे-
वि नरो नारी पतिव्रता॥ शिवरात्रौ महादेवं नित्यं भक्त्या प्रपूजयेदिति वीप्सा श्रुतेः॥ अर्णवोपदिक्ष-
येत्क्षोपनेहि भवानपि॥ चलंत्येते कदाचिद्वै निश्चलं हि शिवव्रतमिति वचनाच्च नित्यता॥ मम भ-
क्तस्तु यो देवि शिवरात्रिमुपोषकः॥ गणत्वमक्षयं दिव्यमक्षयं शिवशासनम्॥ सर्वान्भुक्त्वा महा-
भोगान् ततो मोक्षमवाप्नुयादिति स्कांदात्॥ द्वादशाद्विकमेतत्स्याच्चतुर्विंशाद्विकं तु वेति॥ तत्रैवेशान-
संहितावचनात्काम्यता॥ तत्रैव॥ शिवरात्रिव्रतं नाम सर्वपापविनाशनम्॥ आचंडालमनुष्या-
णां भुक्तिमुक्तिप्रदायकं॥ अत्र जागरोपवासपूजाः समुदिताः व्रतं न तु प्रत्येकम्॥ समुदितानां फ-
लसंबंधात्॥ यत्तु॥ अथवा शिवरात्रिं च पूजाजागरणैर्नयेत्॥ तथा॥ अखंडित-
व्रतो यो हि शिवरात्रिमुपोषयेत्॥ सर्वान्कामानवाप्नोति शिवेन सह मोदते॥ कश्चित्पुण्यविशेषेण
व्रतहीनोपि यः पुमान्॥ जागरं कुरुते तत्र स रुद्रसमतां व्रजेदित्यादि स्कांदं तदनुकल्पत्वादशक्तपरं॥
माघेतरा प्रतिमासशिवरात्रिस्तु शिवरात्रिशब्दस्य माघकृष्णचतुर्दश्यामेव रूढत्वात्॥ माघमासस्य
शेषे या प्रथमा फाल्गुनस्य च॥ कृष्णा चतुर्दशी सा तु शिवरात्रिः प्रकीर्तितेति हेमाद्रौ वचनाच्च नापं नि-
र्णयस्त्वेवेति॥ रात्रौ यामचतुष्टये पूजाविधानात्प्रतिदिने धिकारस्त्रिव्याप्तिः॥ सा याप्ता साम्ये कुरु-
र्वेवेति॥ हेमाद्रिरुविवान्॥ वस्तुतस्तु॥ प्रतिमासकृष्णचतुर्दश्यामपि॥ सर्वकामप्रदं कृष्णचतुर्द-
श्यां शिवव्रतमित्युपक्रम्य॥ चतुर्दशार्द्रकर्तव्यं शिवरात्रिव्रतं शुभमिति हेमाद्रौ कालोत्तरे॥ शिव-
रात्रिशब्दप्रयोगात्कौंडपायनाग्निहोत्रे नित्याग्निहोत्रधर्मातिदेशवत्तद्धर्मप्राप्तिः स्यादेव॥ अतः प्रदोष-
निशीथोभयव्याप्त्यैव निर्णय इति वयं प्रतीमः॥ अस्यारंभो हेमाद्रौ स्कांदे॥ आर्द्रो मार्गशिरे मासि दी-
पोत्सवदिनेपि वा॥ इत्युक्तेर्माघमासे वा द्वादशैवमुपोषयेत्॥ एवं द्वादशवर्षेषु द्वादशैव तपोध-

नान्॥वरयेदितिशेषः॥चतुर्दश्यांवाविप्रानाचार्यंचकृत्वा॥कुंभोपरिन्यसेद्देवमुमयासहितंशिवं॥सौ
वर्णोप्यथवारौप्येवृषभेसंस्थितंशुभे॥रत्नकोशेहेमीमूर्तिसंयुक्तस्थिरंचलंवालिंगंपंचामृतसहस्रशतंतद्
र्द्धमितरकुंभैःसंस्नाप्यसंप्रजाजागरणंकृत्वापरेद्युस्तिलान्सहस्रंशतंवाहुत्वाविप्रेभ्योवस्त्राणिद्वादश
गाश्चदत्वाचार्यायधेनुंशय्यांचदत्वा॥विप्रान्भोजयेदितिमदनरत्नेउक्तं॥माघामावास्यायुगादिः॥
तदुक्तम्॥माघमासेत्वमावास्येति॥अन्यत्प्राग्वत्॥तथासोपिविशेषोविष्णुपुराणे॥माघासिते
पंचदशीकदाचिदुपैतियोगंयदिवारुणेन॥ऋक्षेणकालःसपरःपितृणांनह्यल्पपुण्यैर्नृपल
भ्यतेसाविति॥वारुणंशतभिषा॥इदंचकुंभादित्येज्ञेयमितिहेमाद्रिः॥भारते॥कालेधनिष्ठायदि
नामतस्मिन्भवेत्तुभूपालतदापितृभ्यः॥दत्तंतिलान्नंप्रददातितृप्तिंवर्षायुतंतत्कुलजैर्मनुष्यैरि(
तिफाल्गुनीपौर्णमासीहोलिका॥साचसायाह्नव्यापिनीग्राह्या॥सायाह्नेहोलिकांकुर्यात्पूर्वा
ह्णेक्रीडनंगवामितिवचनादितिनिर्णयामृतेउक्तं॥सोतिनिर्बंधेतु॥प्रतिपद्भूतभद्रासुयार्चिता
होलिकादिवा॥संवत्सरंचतद्राष्ट्रंपुरंदहतिसाद्भुतम्॥प्रदोषव्यापिनीग्राह्यापौर्णिमाफाल्गुनीस
दा॥तस्यांभद्रामुखंत्यक्त्वापूज्याहोलानिशामुखेइतिनारदवचनात्॥प्रदोषव्यापिन्युक्ताहेमाद्रौ
मदनरत्नेचभविष्ये॥अस्यांनिशागमेपार्थसंरक्ष्याःशिशवोगृहे॥गोमयेनोपलिप्तेचसचतुष्केगृ
हांगणे॥इत्यादिनातत्रैवतद्विधानाच्च॥तेनेयंपूर्वविद्धा॥श्रावणीदुर्गनवमीदूर्वाचैवहुताशिनी॥
पूर्वविद्धैवकर्तव्याशिवरात्रिर्बलेर्दिनमितिबृहद्यमवचनेवेत्रोक्तेश्च॥दिनद्वयेप्रदोषव्याप्तौपरे
व॥पूर्वदिनेभद्रासत्वात्॥तत्रचहोलिकानिषेधात्॥तदुक्तंनिर्णयामृतेमदनरत्नेच॥पुराणास
मुच्चये॥भद्रायांदीपिताहोलाराष्ट्रभंगंकरोतिवै॥नगरस्यचनैवेष्टातस्मात्तांपरिवर्जयेत्॥त
थाभद्रायांद्वेनकर्त्तव्येश्रावणीफाल्गुनीतथा॥श्रावणीनृपतिंहंतिग्रामंदहतिफाल्गुनी॥तथा
॥दिनार्द्धात्परतोपिस्यात्फाल्गुनीपौर्णिमायदि॥रात्रौभद्रावसानेतुहोलिकादीप्यतेतदेति॥
यदातुपूर्वदिनेचतुर्दशीप्रदोषव्यापिनीपरदिनेचपौर्णिमाक्षयवशात्सायाह्नात्प्रागेवसमा
प्यतेतदापूर्वदिनेसंपूर्णरात्रौभद्रासत्वात्तत्रचतन्निषेधात्परेह्निप्रतिपद्येवकुर्यात्॥सा
र्द्धयामत्रयंवास्याद्द्वितीयदिवसेयदा॥प्रतिपद्वर्द्धमानातुतदासाहोलिकास्मृतेतिभविष्यवच
नादितिनिर्णयामृतकारः॥मदनरत्नेप्येवम्॥यत्तुवन्हौवन्हिंपरित्यजेदितिभविष्ये॥वन्हौइ(
होलिकायांवन्हिंप्रतिपदंवर्जयेदित्यर्थः॥तदुक्तंभिन्नविषयमितितत्रैवोक्तम्॥अन्येतुतस्यां
भद्रामुखंत्यक्त्वेति॥प्रदोषव्यापिनीनस्याद्यदापूर्वदिनेतदा॥भद्रामुखंवर्जयित्वाहोलिकायाः
प्रदीपनमितिनारदवचनात्॥निशागमेप्रपूज्येतहोलिकासर्वदाबुधैः॥नदिवापूजयेत्ढुंढांपू
जितादुःखदाभवेदितिदिवोदासीयेवचनात्॥यामत्रयोर्द्ध्वयुक्ताचेत्प्रतिपत्तुभवेत्तिथिः॥भ
द्रामुखंपरित्यज्यकार्याहोलानिशीथिभिरितिविद्याविनोदेभिधानाच्च॥भद्रामुखंविहायपू
र्वदिनेएवकार्यमित्याहुः॥भद्रामुखंतुनारदस्तापंचवदनंगलकास्तथैकेतिरत्नमालोक्तंज्ञेयं
॥शिष्टाचारोप्येवमेव॥अत्रचेच्चंद्रग्रहणंतदाततोन्योद्धिशिभद्रावर्जयेत्पौर्णमास्यांहोलिका
दीपनम्॥अथपरेह्निग्रस्तोदयस्तदापूर्वदिनेभद्रावर्ज्जरात्रिचतुर्थयामेविष्टिपुच्छेवाहो

लिकाकार्या॥ग्रहोत्तरंभवितव्यत्वात्॥सर्वं च दिवाहोलानिषेधादिति दिवोदासचंद्रप्रकाशौवस्तुत
स्तु॥परदिनेप्रदोषेपौर्णमासीसत्वेकर्मकालस्पर्शेचतुर्थयामादिगौणकालग्रहणेमानाभावाद्भद्रा
भावाच्च॥ग्रहणकालएवहोलाकार्या॥नचसर्वेषामेववर्णानांसूतकंराहुदर्शने॥स्नात्वाकर्माणिकु
र्वीतशृतमन्नंविवर्जयेदितिनिषेधात्कथंसूतकेहोलिकेतिवाच्यम्॥तस्योत्तरदेशीयत्वात्॥पूजा
मंत्रस्तु॥असृक्पाभयसंत्रस्तैःकृतात्वंहोलिबालिशैः॥अतस्त्वांपूजयिष्यामिभूतेभूतिप्रदाभवेति॥त
त्तुवार्तिककारैर्होलिकाआचारप्राप्तेत्युक्तम्॥तत्रहेमाद्र्युदाहृतभविष्यवचनान्यसिद्धानिकृत्वा
चिंताज्ञेया॥अस्याअधिकरणावत्॥हुताशनीमलमासेनभवति॥इयंमन्वादिरपि॥सापूर्वाह्णि-
कीग्राह्या॥मलमासेसतिमन्वादिश्राद्धंमासद्वयेकार्यमित्युक्तंप्राक्॥कृत्यचिंतामणौत्वत्र॥न
रोदोलागतंदृष्ट्वागोविंदंपुरुषोत्तमं॥फाल्गुन्यांसंयतोभूत्वागोविंदस्यपुरंव्रजेत्॥चैत्रकृष्णप्रति
पद्वसंतोत्सवःसाचौदयिकीग्राह्या॥चैत्रेमधुमासेतुप्रतिपद्युदितेरवावितिभविष्योक्तेः॥दिन
द्वयेतथात्वेपूर्वा॥वत्सरादौवसंतादौबलिराज्येतथैवच॥पूर्वविद्धैवकर्तव्याप्रतिपत्सर्वदाबुधै
रितिवृद्धवसिष्ठवचनात्॥अत्रविशेषोहेमाद्रौभविष्ये॥चैत्रेमासिमहाबाहोपुण्येतुप्रतिपद्दिने
॥यस्तत्रश्वपचंस्पृष्ट्वास्नानंकुर्यान्नरोत्तमः॥नतस्यदुरितंकिंचिन्नाधयोव्याधयोनृपेति॥तथा
॥प्रवृत्तेमधुमासेतुप्रतिपद्युदितेरवौ॥कृत्वाचावश्यकार्याणिसंतर्प्यपितृदेवताः॥वंदयेद्धो
लिकाभूतिंसर्वदुःखोपशांतये॥मंत्रश्च॥वंदितासिसुरेंद्रेणब्रह्मणाशंकरेणच।अतस्त्वंपा
हिनोदेविभूतिर्भूतिदाभवेति॥अत्रचूतकुसुमप्राशनमुक्तंतत्रैवपुराणसमुच्चये॥वृत्तेतुषा
रसमयेसितपंचदश्यांप्रातर्वसंतसमयेसमुपस्थितेच॥संप्राश्यचूतकुसुमंसहचंदनेनसत्यंहि
पार्थपुरुषोथसमाःसुखीस्यात्॥मंत्रस्तु॥चूतमग्र्यंवसंतस्यमाकंदकुसुमंतव॥सचंदनंपि
बाम्यद्यसर्वकामार्थसिद्धये॥इति॥चैत्रामावास्यामन्वादिः॥साऽपराह्णव्यापिनीग्राह्याकृष्णप-
क्षस्यत्वात्॥ इतिफाल्गुनः॥० एवंनिरूपितमिदंगहनंतुकालतत्त्वंविचार्यब
चनैश्चनयैश्चसम्यक्॥तद्दोषदृष्टिमपहायविवेचनीयंविद्वद्भिरन्यविरतंप्रणतोस्मितेषु॥
१ मयासहायासहायदिहगदितंमंदमतिनाकिमेतच्छक्यंवाध्यवसितुमपिस्वल्पमतिना॥
तदेवंयत्किंचिद्वदितमिहविख्यातमहिमा॥प्रतापोयंसद्योविकसतितुपित्रीश्चरणयोः॥
योभाट्टतंत्रगहनार्णवकर्णधारःशास्त्रांतरेष्वनिखिलेष्वपिमर्मभेत्ता॥योत्रश्रमःकिलकृ
तःकमलाकरेणप्रीतोस्तुनासुसुकृतीबुधरामकृष्णः॥०॥०॥०॥०॥०॥०॥

इतिश्रीनारायणभट्टसूरिसूनुरामकृष्णभट्टसुतदि
नकरभट्टानुजभट्टकमलाकरकृतेनिर्णयसिं
धौसंवत्सरकृत्यनामद्वितीयःपरिच्छेदः२

निर्णयसिंधौतृतीयपरिच्छेदे
प्रकीर्णकनिर्णयः॥

श्रीगणेशायनमः॥अथप्रकीर्णकनिर्णयः॥श्रीरामकृष्णतनयःकमलाकरसंज्ञितः॥

निरूप्यंतेतिथिकृत्संतुष्टकीर्तिवक्तुमुपक्रमः ।। तत्रादौ संस्कारेषु गर्भाधानम् ।। तत्र प्रथमरजोदर्शने दुष्टमास
ग्रहणसंक्रमादिफलं तच्छांत्यादि च निबंधतत्प्रयोगदीपिकायां भट्टकृतप्रयोगरत्ने च ज्ञेयम् ।। किंचि
न्नूच्यते ।। मदनरत्ने नारदः ।। अमावास्याष्टमीषष्ठीद्वादशीप्रतिपत्स्वपि ।। परिघस्य तु पूर्वार्द्धे व्यतीपाते च
वैधृतौ ।। संध्यासूपप्लवे विष्टावशुभं प्रथमार्त्तवं ।। रोगी पतिव्रता दुःखी पुत्रिणी भोगभागिनी ।। पति
व्रता क्लेशभोक्त्री सूर्यवारादिषु क्रमात् ।। वैधव्यं सुतलाभश्च मैत्र्यं शत्रुविवर्द्धनं मित्रलाभः शत्रुवृद्धि
कुलवृद्धिर्वधुनाशनम् ।। मरणं वै राष्ट्रवृद्धिश्च निराहारः कुलक्षयः ।। तेजश्च सुतनाशश्च कुलहानिति
थिक्रमात् ।। गर्गः ।। सुभगा चैव दुःशीला वंध्या पुत्रसमन्विता ।। धर्मयुक्ता व्रतपरा च परसंतानमोदि
नी ।। सुपुत्रा चैव दुष्पुत्रा पितृवेश्मरता सदा ।। दीना प्रजावती चैव पुत्राढ्या चित्रकारिणी ।। साध्वी प
तिप्रिया नित्यं सुपुत्रा कष्टचारिणी ।। स्वकर्मनिरता हिंस्रा पुण्यपुत्रादिसंयुता ।। नित्यं धनचयास
क्ता पुत्रधान्यसमन्विता ।। मूर्खा चाचारयुग्रूपवती दस्रादेः क्रमात्फलम् ।। नारदः ।। कुलीरवृषचा
यांगनावृश्चिकमातुलाघटाः ।। राशयः शुभदा ज्ञेया नारीणां प्रथमार्त्तवे ।। गर्गः ।। सुभगा श्वेतवस्त्रा स्या
द्दृढवस्त्रा पतिव्रता ।। क्षौमवस्त्रा स्त्रिनी शस्या नववस्त्रा सुखान्विता ।। दुर्भगा जीर्णवस्त्रा स्याद्रो
गिणी रक्तवाससा ।। नीलांबरधरा नारी पुष्पिता विधवा ततः ।। वस्त्रेषु विषमारक्तविद्वद्वःपुत्रमा
यात् ।। समाश्लिष्टात्मका चेति फलं स्यात्प्रथमार्त्तवे ।। अत्र स्त्रीसंगवर्जनमाह ।। वसिष्ठः ।। प्रभूतदो
षे यदि दृश्यते तत्सुष्ठु तदा शांतिककर्म कार्यम् ।। विवर्जयेद्वै तदेकशय्यां यावद्रजोदर्शनमुत्तमेऽह्रि
ज्ञोतिर्निबंधे वसिष्ठः ।। आद्यर्त्तौ पौषशुक्रोर्जमधुशुचिनभस्याश्वयुक्पापवारा रिक्तापर्वाष्टषष्ठ्यः
पितृपरसदने रात्रिसंध्यापराह्णे ।। मिश्रोग्रामूलनीस्णां विवरमनरुणाम्याधिकासंचरांशो मानः
पापस्थलग्नं सदरुणजरनीलरक्तांबरं च ।। आद्यर्त्तौ दुर्भगा नारी विष्कुंभे चेद्रजस्वला ।। वंध्या चैवा
तिगंडे च शूले शूलवती भवेत् ।। गंडे तु पुंश्चली नारी व्याघाते चात्मघातिनी ।। वज्रे च स्वैरिणी प्रोक्ता व्या
ते च पतिघातिनी ।। परिघे मृतवंध्या च वैधृतौ पतिमारिणी ।। शेषाः शुभावहा योगा यथा नामफ
लप्रदाः ।। शांतिमाह प्रयोगपारिजाते शौनकः ।। सार्तवानां तु नारीणां शांतिं वक्ष्यामि शौनकः ।। पंच
मेऽह्नि चतुर्थे वा यहानिष्यःपुरःसरम् ।। द्रोणप्रमाणधान्येन व्रीहिराशित्रयं भवेत् ।। कुंभत्रयं न्यसेद्रा
शौ तंतुवस्त्रादिवेष्टितम् ।। पूरयेत्तीर्थसलिलैः प्रतिकुंभं पृथक्पृथक् ।। सूक्तेनायनवर्चेन प्रसुव
श्चापरं न्यसेत् ।। ऋचा यायाः प्रवतस्तद्वत्तामभ्याच ततः क्रमात् ।। मध्यकुंभे क्षिपे द्वान्यमौषधानि च
हेम च ।। उदुंबरः कुशा दूर्वा राजीववटबिल्वकाः ।। विष्णुक्रांता च तुलसी वर्हिवंशः शंखपुष्पिका ।। शता
वर्याश्वगंधा च निर्गुंडी सर्षपद्वयम् ।। अपामार्गः पलाशश्च पनसो जीवकस्तथा ।। प्रियंगवश्च गोधू
माव्रीहयोऽश्वत्थ एव च ।। क्षीरं दधि च सर्पिश्च पद्मपत्रं तथोत्पलं ।। कुरंटकत्रयं गुंजा वचा भद्रकमुस्त
का ।। द्वात्रिंशदौषधानीह यथासंभवमाहरेत् ।। मृत्तिकाश्चौषधादीनि तन्मंत्रेणाक्षिपेत्क्रमात् ।।
कुंभोपरि न्यसेत्पात्रं कांस्यमृद्वेणुनात्रजं ।। भुवनेश्वरीं न्यसेत्तत्र रुद्राणीं च पुरंदरम् ।। जपेद्गायत्रीमा
होमा कृत्वी सूक्तं च जपेत्ततः ।। स्पृशन्वै दक्षिणं कुंभं मृत्विगेको जपेदथ ।। चत्वारि रुद्रसूक्तानि च तु
र्थो त्वराणि च ।। संस्पृशन्नुत्तरं कुंभं श्रीरुद्रं रुद्रसंख्यया ।। शन्नइंद्राग्नि सूक्तं च तत्रैव संस्पृशं जपे

त्॥ कुंभस्य पश्चिमे देशे शांतिहोमं समाचरेत्॥ दूर्वाभिस्तिलगोधूमैः पायसेन घृतेन च॥ तिसृभिश्चैव वह्
वीभिरेकैकाज्याहुतिर्भवेत्॥ अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा॥ गायत्र्यैव तु होतव्यं हविरत्र चतु
ष्टयं॥ ततः स्विष्टकृतं हुत्वा समुद्राद्रूर्मिरित्यृचा॥ संतनाम्ना स धाराद्यं नाशयेदुत मथा चरेत्॥ अथा
भिषेकं कुर्वीत प्रतिकुंभस्थितोदकैः॥ आपो हि ष्ठेति नवभिः सूक्तेन च ततः परम्॥ इंद्रोऽग्निः ग(?)मेत्येतै
र्वपावमानैः क्रमेण तु॥ उभयं शृणवच्च न स्त्वंसिदा विशस्य(?) कया॥ तैयंबकेन मंत्रेण जातवेदसे शर
कया॥ समुद्रज्येष्ठा इत्यार्द्रायं नोऽचत्रिभिः क्रमात्॥ इमा आपः स्वस्त्येतैर्वदेव(?) सत्वेति मंत्रतः॥ मंत्रेण चायत
मीशानं त्वमग्ने रुद्र इत्यथ तत्पुरुषाहीति मंत्रेण भुवनस्य पितरं तथा॥ या ते रुद्रेति मंत्रेण शिवसंकल्पमंत्रतः॥
इंद्रत्राणे(?)षभयं पंचमंत्रैश्च वाभिषेचयेत्॥ धेनुं पयस्विनीं दद्यादाचार्याय च भूषणैः॥ सदक्षिणमनड्वाहं च
र्यादुद्रजापिने॥ महाशांतिप्रजप्याथ ब्राह्मणान्भोजयेत्ततः इति॥ मदनरत्ने नारदः॥
तत्र शांतिं प्रकुर्वीत घृतदूर्वातिलाक्षतैः॥ प्रत्येकाष्टशतं चैव गायत्र्या जुहुयात्ततः॥ स्वर्णगोभूतिलान्दद्या
त्सर्वदोषापनुत्तये॥ प्रकारांतरं मदनरत्ने द्रष्टव्यम्॥ विस्तराद्भीत्या नोच्यते॥ अथ गोरजो(?)दर्शने तज्जातकर्म प्रसंगादेव
तिं वक्ष्यामः॥ प्रथमर्तौ पुष्पवत्या विधिविशेषः॥ स्मृतिचंद्रिकायाम्॥ प्रथमर्तौ तु पुष्पिरण्याः पतिपुत्रवती
स्त्रियः॥ अक्षतैरासनं कृत्वा तस्मिंस्तामुपवेशयेत्॥ हरिद्रागंधपुष्पादीन्दद्युस्तांबूलकं स्रजम्॥ दी
पैर्नीराजनं कुर्युः स्वदीये वाऽस्य गृहे॥ लवणं फलमुद्रादि दद्यात्ताभ्यः स्वशक्तितः इति॥ द्वितीयादिष्वृतुष्व
तन्नियमानाह॥ प्रयोगपारिजाते देवलः॥ अंजनाभ्यंजने स्नानं प्रवासं दंतधावनं॥ न कुर्यात्सार्त्तवा ना
री यहाणामीक्षणं तथा॥ अत्रिरपि॥ वर्जयेन्मधुमांसं च पात्रे खर्वे च भोजनं॥ गंधमाल्यं
दिवास्वापं तांबूलं चास्यशोधनं दग्धे शरावे भुंजीत पेयं चांजलिना पिबेत्॥ मदनरत्ने हारीतः॥
रजःप्राप्ता चेदधःशयीत॥ भूमौ कार्ष्णायसे पात्रे मृण्मये वाश्नीयात्॥ विष्णुधर्मोत्तरे॥ आ
हारगौरस्नानां च पुष्पालंकारधारणम्॥ अंजनं कंकतं गंधाः पीठशय्याधिरोहणं॥ अग्निसंस्पर्शनं
चैव वर्जयेच्च दिनत्रयं॥ तथा॥ प्रथमर्तौ सर्वस्त्रीगमनं न कार्यम्॥ भारजोदर्शनात्स्त्रीनेयाद्गत्वा
पतत्यधः॥ व्यर्थीकारेण शुक्रस्य ब्रह्महत्यामवाप्नुयादिति तत्रैवाश्वलायनोक्तेः॥ ततश्चतुर्थीगमन
माह॥ याज्ञवल्क्यः॥ षोडशर्तुर्निशाः स्त्रीणां तस्मिन्युग्मासु संविशेदिति॥ चतुर्थी
नावश्याहर्गोतमः॥ ऋतावुपेयात्सर्वत्र वा प्रतिषिद्धवर्जमिति॥ मनुः॥ ऋतुः स्वाभाविकः
स्त्रीणां रात्रयः षोडश स्मृताः॥ तासामाद्याश्चतस्रस्तु निंदितैकादशी च या॥ त्रयोदशी च शेषाः स्युः
प्रशस्ता दशरात्रयः॥ मदनरत्ने देवलः॥ तस्मात्त्रिरात्रं चंडालीं पुष्पितां परिवर्जयेत्॥ तत्र तिथ्यादी
नाह श्रीधरः॥ षष्ठ्यष्टमीं पंचदशीं चतुर्थीं च चतुर्दशीमप्युभयत्र हित्वा॥ शेषाः शुभाः स्युस्तिथयो निषे
के वाराः शशांकार्यसितेंदुजानां॥ उभयत्र हित्वा॥ शेषाः शुभाः स्युस्तिथयो निषेके वाराः शशांकार्य
सितेंदुजानां॥ उभयत्र पक्षद्वये॥ आर्यो गुरुः॥ सितः शुक्रः॥ इंदुजो बुधः॥ विष्णुप्रजेशरविमित्रसमी
रयोग्यमूलोत्तरावरुणभानि निषेककार्ये॥ पूज्यानि पुष्यवसुशीतकराश्विचित्रादित्याश्च मध्यम
फला विफलाः स्युरन्ये॥ विष्ण्वादिद्वे वन्यनक्षत्राणयुक्तानि रत्नमालायां भेशाद्द्य यमाग्निधा
तृशशिनः शर्वो दितिर्वाक्पतिः॥ कद्रूजा पितरो भगोऽर्यमरवीन्त्वष्ट्वायोमारुतः॥ शक्राग्नीत्वथ

थमित्ररंद्रनिर्ऋतिसोयं च विश्वे विधिर्गोविंदीवसवो पुपाजचरणाहिर्बुध्न्यपूषाभिधाः॥उत्तराश्चा
द्वेनोत्तरात्रयं॥अत्र मूलस्य शस्तत्वमुक्तम्॥० याज्ञवल्क्येन तु॥ एवं गच्छन्स्त्रि
यं क्षामां मघां मूलं च वर्जयेदित्युक्तम्॥तेनात्र विकल्पः॥अत्र समासु पुत्री विषमासु कन्येति ज्ञेयं युग्मा
सु पुत्रा जायंते स्त्रियोऽयुग्मासु रात्रिष्विति हेमाद्रौ शंखोक्तेः॥तत्राप्युत्तरोत्तरा प्रशस्ता॥ तदाह
आपस्तंबः॥ तत्राप्युत्तरोत्तरा प्रशस्तेति॥तत्रैव व्यासः॥रात्रौ चतुर्थ्यां पुत्रः स्यादल्पायुर्द्धन
वर्जितः॥पंचम्यां पुत्रिणी नारी षष्ठ्यां पुत्रस्तु मध्यमः॥सप्तम्यामप्रजा योषिदष्टम्यामीश्वरः पुमा
न्॥नवम्यां सुभगा नारी दशम्यां प्रवरः सुतः॥एकादश्यामधर्म्या स्त्री द्वादश्यां पुरुषोत्तमः॥त्रयोद
श्यां सुता पापा वर्णसंकरकारिणी॥धर्मज्ञश्च कृतज्ञश्च आत्मवेदी दृढव्रतः॥प्रजायते चतुर्दश्यां
पंचदश्यां पतिव्रता॥आश्रयः सर्वभूतानां षोडश्यां जायते पुमानिति॥अत्र चतुर्थदिननिषेधेपि॥
स्नातां चतुर्थे दिवसे रात्रौ गच्छेद्विचक्षणः इति॥महाभारतोक्तेश्चतुर्थेहनि स्नातायां युग्मासु वा गर्भं सं
दधातीति हारीतोक्तेर्विकल्पो ज्ञेयः॥ तत्रापि॥स्नाने रजस्वला या तु चतुर्थेहनि शस्यते॥गम्या
निवृत्ते रजसि नानिवृत्ते कथंचनेत्यापस्तंबोक्तेर्व्यवस्था ज्ञेया प्रभासखंडे मरीचिः॥शुद्धा भर्तुश्चतु
र्थेह्नि ॥
॥ स्नाने न स्त्री रजस्वला॥दैवे कर्मणि पित्र्ये च पंचमेहनि शुध्य
ति॥श्रौतकर्ममध्ये रजस्वला चेत्तत्र चतुर्थदिनेप्यधिकारः अथ यदा त्रिरात्रिणी स्यादथैना
मुद्रयेदित्यापस्तंबसूत्रात्॥चतुर्थेहनि गोमूत्रमिश्राभिः स्नाता वासोपोकृत्य जालानि मंत्रेण धारये
दिति सोमेप्युक्तं॥एवं सर्वत्र श्रौतकर्मणीति धूर्तस्वामिरामांडारादयः॥अत्र सर्वासु युग्मासु गमनमाव
श्यकं॥युग्मास्विति बहुवचननिर्देशादिति विज्ञानेश्वरः॥नचैकस्यां रात्रौ सकृदेव कार्यम्॥सुस्थ
इंदौ सकृत्पुत्रं लक्षण्यं जनयेत्पुमान्॥ इति याज्ञवल्क्योक्तेः इदं चर्तौ गमन
मन्यकाले प्रतिषेधादिना गमनासंभवे श्राद्धैकादश्यादावपि कार्यम्॥ब्रह्मचार्येव पर्वाण्याद्या
श्चतस्रश्च वर्जयेदिति याज्ञवल्क्योक्तेः॥ व्याख्यातं चेदं मिताक्षरायाम्॥यत्तु श्रा
द्धादौ ब्रह्मचर्यं विहितं तत्राप्यृतौ गच्छतो न ब्रह्मचर्यस्खलने दोष इति पार्वणीति बहुत्वेनाष्टमीचतु
र्दश्योर्ग्रहणमदनरत्नेप्येवम्॥यत्तु॥हेमाद्रौ शिवरहस्ये॥दिवा जन्मदिने चैव न कुर्यान्मैथुनं व्रती॥श्रा
द्धं दत्वा च भुक्त्वा च श्रेयोर्थी न च पर्वस्विति॥तदनृतुविषयम्॥ब्रह्मचार्येव भवति यत्र तत्राश्रमे
वसन्निति मनूक्तेः॥दर्शादौ तु न भवत्येव॥पर्वणां पर्युदस्तत्वात्॥अमावास्यामष्टमीं च पौर्णमा
सीं चतुर्दशीं॥ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः॥ इति विष्णुपुराणाच्च॥माधवीये
तु॥ऋतुकाले नियुक्तो वा नैव गच्छेत्स्त्रियं क्वचित्॥ तत्र गच्छन्समाप्नोति ह्यनिष्टफलमेव त्वि
ति वृद्धमनूक्तेः॥श्राद्धे ब्रह्मचर्यं नियतमित्युक्तम्॥पृथ्वीचंद्रोदयेप्येवम्॥एतन्मूलं संभवे ज्ञेय
म्। अनेकभार्यस्य तु यौगपद्ये हेमाद्रौ कश्यपः॥यौगपद्ये तु तीर्थानां विवाहक्रमशो व्रजेत्॥र
क्षणार्थमपुत्रां वा ग्रहणक्रमशोपि वेति॥ग्रहणमनुग्रहणम्॥अग्निविधाने॥ विष्णुर्योनिं जपेत्सू
क्तं योनिं स्पृष्ट्वा त्रिभिर्व्रती॥गर्भाधानं ततः कुर्यात्सुपुत्रो जायते ध्रुवम्॥आगमने दोषमाह प॥

राशरः ऋतुस्नातां तु यो भार्य्यां सन्निधौ नोपगच्छति ॥ घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ॥ अ
स्यापवादमाह मदनरत्ने व्यासः ॥ व्याधितो बंधनस्थो वा प्रवासेष्वथ पर्वसु ॥ ऋतुकालेपि नारीणां भ्रू
हत्याप्रमुच्यते ॥ वृद्धां वंध्यामसद्वृत्तां मृतापत्यामपुष्पिणीं ॥ कन्यां च बहुपुत्रां च वर्जयन्मुच्यते ॥ वृद्धां वं
ध्यामसद्वृत्तां मृतापत्यामपुष्पिणीं ॥ कन्यां च बहुपुत्रां च वर्जयन्मुच्यते भयात् ॥ वृद्धां गतरजस्कां ॥ ग
र्भाधानांगहोमाकरणे प्रायश्चित्तमाह पारिजाते आश्वलायनः ॥ गर्भाधानस्याकरणात्तस्यां जातस्
दुष्यति ॥ अकृत्वा गां द्विजे दत्त्वा कुर्यात्पुंसवनं पतिः ॥ गर्भाधानं च मलमासशुक्रास्तादावपि कार्यं
उत्सवेषु च सर्वेषु सीमंत ऋतुजन्मसु ॥ गुरुशुक्रयोश्चैव मौढ्यादौ नो विचारयेत् इति ज्योतिर्निबंधे भृगूक्तेः ॥ च
त्रैगमते पराशरः ॥ ऋतौ तु गर्भशंकित्वात्स्नानं मैथुनिनः स्मृतं ॥ अनृतौ तु यदा गच्छेच्छौचं मूत्रपुरीषव
त् ॥ स्त्रीणां तु न स्नानम् उभावप्यशुची स्यातां दंपती शयनं गतौ ॥ शयनादुत्थिता नारी शुचिः स्यादशु
पुमान् ॥ इति वृद्धशातातपोक्तेः ॥ अत्र कश्चिद्विशेष उच्यते ॥ तत्र रात्रौ रजस्वि
नीनां दिवारात्रिं त्रिभागीकृत्य आद्यभागद्वये चेत्पूर्वदिनं ग्राह्यं ॥ परतस्तूत्तरमिति मिताक्षरायां ॥ अन्ये तु ॥ अर्ध
रात्रात्प्राग्वा सूर्योदयात्पूर्वदिनमित्युक्तम् ॥ तत्र देशाचारतो व्यवस्था ॥ तथा ॥ सप्तदशदिनपर्यंतं पुनर्र
जोदृष्टौ स्नानमात्रम् ॥ अष्टादशे एकरात्रम् ॥ ऊनविंशे द्व्यहः ॥ विंशतिप्रभृति त्रिरात्रमिति तत्रैव बृहस्प
॥ यत्तु ॥ चतुर्दशदिनादर्वागशुचित्वं न विद्यते इति तत्र स्नानप्रभृतित्वमभिप्रेतम् ॥ एतच्च यस्या विंशति
दिनोत्तरं प्रायशो रजस्तस्या एव ॥ यस्यास्त्वर्वाक् प्रायशो रजस्तस्यास्तत्समर्थसारे ॥ त्रयोदशदिनादूर्ध्वं प्राप्त
रजोवतीनामेकादशदिनात्प्रागशुचित्वं नास्ति ॥ एकादशे दिने एकरात्रं ऊर्ध्वं त्रिरात्रमिति ॥ प्रयोगपारि
जातेप्येवं ॥ रोगजे तु नैव विशेषः ॥ संग्रहे ॥ रोगेण यद्रजः स्त्रीणामन्वहं हि प्रवर्तते ॥ नाशुचिस्तु भवेत्तेन यस्मा
द्वैकारिकं मतमिति ॥ कर्माधिकारस्तु रजोनिवृत्तावेव ॥ साधारणतावत्स्यात्स्नातापि स्त्री रजस्वला
॥ यावत्प्रवर्तमानं हि रजो नैव निवर्तते ॥ इति श्राद्धहेमाद्रौ शंखोक्तेः ॥ तत्रापि स्वकालेऽशु
चित्वमाह ऋष्यशृंगः ॥ रोगजे वर्तमानेपि काले निर्याति कालजं ॥ तस्मात्कालेऽप्रमत्तः स्यात्प्रयासंकारे
भवेत् ॥ तथा ॥ रजस्वलायास्त्वन्यरजस्वलांतरस्पर्शे अकामतः स्नानं ॥ कामतः उपवासः ॥ पंचगव्याशनं च ॥
असवर्णानां तु ॥ ब्राह्मण्याः क्षत्रियादिस्पर्शे क्रमेण पादकृच्छ्रार्द्धपादोनकृच्छ्रातिकृच्छ्राः ॥ क्षत्रियायास्तु
तु कृच्छ्रपाद एव ॥ क्षत्रियादीनां हीनवर्णास्पर्शे त्रिरात्रमुपवासः ॥ वैश्याशूद्रयोः सवर्णास्पर्शे अहोरात्रं द्विरा
त्रं वा ॥ एतच्च कामतः ॥ अकामतस्तु भार्याशुद्धेरनशनम् ॥ अकामतश्चांडालादिस्पर्शेऽप्यनशनमेव
प्राक् शुद्धेः ॥ कामतस्तु प्रथमेऽह्नि त्र्यहः ॥ द्वितीये द्व्यहः तृतीये एकाहः ॥ अस्पर्शे तु त्र्यहएकाहौ वा ॥ भुंजा
नाया श्वचांडालादिस्पर्शे षड्रात्रम् ॥ उच्छिष्टयोः स्पर्शे तु कृच्छ्रमादिमिताक्षरायां ज्ञेयम् ॥ असमर्थनारे
तु सर्वत्र बालापत्यायाः स्पर्शे स्नाने कृते भुक्तिः पश्चादनशनं प्रायश्चित्तमिति ॥ स्नानविधिमाह पराशरः ॥
स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला ॥ पात्रांतरिततोयेन स्नानं कृत्वा व्रतं चरेत् ॥ सिक्तगात्रा भवेद
द्भिः सांगोपांगा कथंचन ॥ न वस्त्रपीडनं कुर्यान्नान्यद्वासश्च धारयेत् ॥ अथ रजस्व
लास्नानं ॥ दिवस्तत्रभः ॥ आर्द्रानुराधाश्विनशीर्ष्यमेषु हस्तानिलाश्विलवासवेषु ॥ विशाख्यमः
र्क्षोत्तरभाद्रमेषु वरांगनास्नानविधिः प्रदिष्टः ॥ ज्वराभिभूता या नारी रजसा च परिप्लुता कथं तस्या भ

वेच्छौचंशुद्धिःस्यान्किनकर्मणा॥चतुर्थेहनिसंप्राप्तेस्पृशेद्मातुनांस्त्रियं॥सासचैलावगाह्यापःस्नात्वा
पुनःस्पृशेत्॥दशद्वादशकृत्वोवाचाचामेच्चपुनःपुनः।अंतेचवाससांत्यागस्ततःशुद्धाभवेत्तुसेति॥
इदंचातुरमात्रेविषयम्॥आतुरेस्नानउत्पन्नेदशकृत्वोह्यनातुरइतिपराशरोक्तेः॥रजसोज्ञानेतुपराशर
माधवीयेप्रजापतिः॥अविज्ञातेमलेसाचमलवद्दूसनायदि॥कृतंगृहेषुदुष्टंस्याच्छुद्धिस्तस्यास्त्रिरा
त्रतः॥देवजानीयेकारिकायाम्॥उच्छिष्टातुद्विजातीनांरजःस्त्रीयदिपश्यति॥उपवासमथोच्छिष्टेऊ
र्ध्वोच्छिष्टेत्र्यहंक्षिपेत्॥ अथपुंसवनम्॥ प्रयोगपारिजातेजातूकर्ण्यः॥द्वितीयेवातृ
तीयेवामासिपुंसवनंभवेत्॥व्यक्तेगर्भेभवेत्कार्यंसीमंतेनसहाथवा॥बृहस्पतिः॥तृतीयेमासिकर्त
व्यंगृष्टेरन्यत्रशोभने॥गृष्टेचतुर्थमासेतुषष्ठेमास्यथवाष्टमे॥सकृत्प्रसूतागृष्टिःस्यात्तेनप्रतिगर्भम
पिभवतीतिज्ञायते॥बह्वृचकारिकापि॥कर्त्तास्याद्देवरस्तस्यायस्याःपत्युरसंभवः॥आवर्त्ततइदंक
र्मप्रतिगर्भमितिस्थितिः॥ब्राह्मे॥गर्भाधानादिसंस्कर्त्तापिताश्रेष्ठतमःस्मृतः॥तदभावेकुलीनः१
स्यद्बांधवोवान्यगोत्रजः॥० मदनरत्नेसत्यव्रतः॥ मृतेदेशांतरगतेभर्त्तास्त्रीयत्रप्रसू
स्यता॥देवरोवागुरुर्वापिविप्रोवापिसमाचरेत् हेमाद्रौयमः॥० प्रथमेमासिद्विती
येवायदापुंनक्षत्रेणचंद्रमायुक्तःस्यादिति॥ वराहः॥० हस्तोमूलंश्रवणःपुनर्वसुमृगशिरस्तथा
पुष्य॥पुंसंज्ञकेषुकार्येष्वेतानिशुभानिधिष्ण्यानि॥अनुराधापिपुन्नक्षत्रं॥अनुराधानूहविशाखेयंत
इतिश्रुतेः॥ गर्गोपि॥ पुन्नामश्रवणस्तिष्योहस्तश्चैवपुनर्वसुः॥अभिजिन्प्रोष्ठपाश्चैवअनुराधान
यास्तुयुक्नृसिंहः॥रिक्तांपर्वचनवमीत्यक्त्वापुंसवनेशुभाः॥ज्योतिर्निबंधेवसिष्ठः॥मृत्युश्चसौरेस्तन
हानिरिंदोःसुतप्रजापुंसवनेबुधस्य॥काकीचवंध्याभवतीहशुक्रेस्त्रीपुत्रलाभोरविभौमजीवेः॥अन
वलोभनस्याप्ययमेवकालः॥दीपिकायांतुचतुर्थेनवलोभनमित्युक्तम्॥ अथसीमंतः॥०
हेमाद्रौवैजवापः॥ अथसीमंतोन्नयनंचतुर्थेपंचमेषष्ठेष्टमेवेति॥ वसिष्ठः चतुर्थेस
प्तमेमासिषष्ठेवाप्यथवाष्टमे॥ हेमाद्रौशंखः॥ गर्भस्पंदनेसीमंतोन्नयनंयावद्वानप्रसवः
कार्ष्णाजिनिः॥ गर्भलंभनमारभ्ययावन्नप्रसवस्तदा।सीमंतोन्नयनंकुर्य्याच्छंखस्यवचनंयथा
।मासस्त्वात्रसौरःसावनोवा॥ कालविधाने॥चतुर्थषष्ठाष्टममासभाजिसौरेणगर्भेप्रथमंविधेयम्
॥सीमंतकर्मद्विजभामिनीनांमासेष्टमेविष्णुबलिंचकुर्यात्॥ वसिष्ठः॥० चतुर्थेसावनेमा
सिषष्ठेवाप्यथवाष्टमे॥ज्योतिर्निबंधेनारदः॥अरिक्ताऽपर्वदिवसेकुजजीवार्कवासरे॥कालवि
धाने॥सीमंतेतिष्यहस्तादितिहरिशशभृन्मोक्षविष्णुत्तराख्याःपक्षच्छिद्रंचाहवसिष्ठः॥चतुर्दशी
चतुर्थीचअष्टमीनवमीतथा॥षष्ठीचद्वादशीचैवपक्षच्छिद्राह्वयाःस्मृताः॥क्रमादिनासुतिथिषुव
र्ज्जनीयाश्चनाडिकाः॥भूताष्टमनुतत्वांकदशशेषास्तुशोभनाः॥कालनिर्णये॥शुभसंस्थेनिशा
नाथेचतुर्थीचचतुर्दशी॥पौर्णमासींप्रशंसंतिकेचित्सीमंतकर्मणि॥बृहस्पतिः॥श्वैवपक्षःशु
भःप्रोक्तःकृष्णश्चांत्यत्रिकंविना॥चतुर्दशीचतुर्थीचमुक्त्वापक्षेशुभप्रदे॥नारदः॥विप्रक्षत्रियपोः१
कुर्य्याद्दिवासीमंतकर्मतत्॥वैश्यशूद्रकयोरेतद्दिवानिश्यपिकेचन॥वाराःपूर्वोक्ताएव॥एतच्च
सकृदेवकार्य्यमितिविज्ञानेश्वरः॥सकृच्चसंस्कृतानारीसर्वगर्भेषुसंस्कृतेतिदेवलोक्तेः॥सकृत्प्र

तेगर्भेवाकार्यमितिहेमाद्रिः॥सकृच्चकृतसंस्कारःसीमंतेनद्विजस्त्रियः॥यंयंगर्भंप्रसूयेतेसस्सर्वःसंस्कृतो
भवेदितिहारीतोक्तेः॥सीमंतोन्नयनंकर्मनस्त्रीसंस्कारइष्यते॥केचिद्गर्भस्यसंस्कारात्प्रतिगर्भंप्रयुज्यते
इतिहेमाद्रौविष्णुवचनाच्च॥स्त्रवाश्लोपादिकृतसीमंताप्रसवेत्कथंचन॥गृहीतपुत्राविधिवत्पुनःसं
स्कारमर्हति॥सीमंतेभोजनेप्रायश्चित्तमुक्तंपराशरमाधवीयेधौम्येन॥ब्रह्मौदनेचसोमेचसीमंतोन्न
यनेतथा॥जातकर्मनवश्राद्धेभुक्त्वाचांद्रायणंचरेत्॥अग्निविधानेतु॥व्रतादेशेजयेन्मंत्रंशतवारंन
संशयः॥सीमंतेचयदाभुंक्तेमुच्यतेकिल्बिषात्तदेति॥ अथगर्भिणीतत्पतिधर्माः॥वराहः॥
सामिषमशनंयत्नात्प्रमदापरिवर्जयेदतःप्रभृति॥गृह्यकारिकापि॥अंगारभस्मास्थिकपालतुष्ठी
शूर्पादिकेयूपविशेन्ननारी॥सोलूखलाधेदृषदादिकेवायंत्रेतुबाधेनतथैपविष्टा॥नोमार्जनीगो
मयपिंडकादौकुर्यान्नवारिण्यवगाहनंसा॥अंगारभूम्यानखैर्लिखेद्वस्त्राकलिंवप्रभंगमथोन
कुर्यात्॥नोमुक्तकेशीविवशायवास्यामुंक्तेनसंध्यावसरेनशेते॥नामंगलंवाक्यमुदीरयेन्नाप्यू
मालयंवृक्षतलेनयायात्॥विष्णुधर्मोत्तरे॥कटुतीक्ष्णकषायाणिचमृष्टलवणानिच॥आयासं
चव्यवायंचगर्भिणीवर्जयेत्सदा॥ हेमाद्रौकौडिन्यः॥ मुंडनंपिंडदानंचप्रेतकर्मचसर्वश
नजीवत्पितृकःकुर्यात्गुर्विणीपतिरेवच॥ मिताक्षरायां॥ उदन्वतोंभसिस्नानंनख
केशादिकर्तनं॥अंतर्वत्न्याःपतिःकुर्वन्नप्रजाजायतेध्रुवम्॥पृथ्वीचंद्रोदयेगारुडे॥गयायांपिंडदा
नस्पनकदाचित्तिराक्रिया॥अत्रकालेदाश्मर्यंयस्मृतेर्निषिद्धकालस्यैवापवादोनतुजीवत्पितृगर्भि
णी॥यथाशौचादिनिमित्तस्य॥अग्निहोत्रेयावज्जीवकालपरत्वाभावात्॥अन्यथाऽऽशौचेनि
मित्तेपिगयायांश्राद्धंस्यात्॥यत्रतुनिमित्तसंयोगस्यापवादोयथाशौचेग्निहोत्रादेः॥यथा
वाजीवत्पितृकस्यमातुर्गयान्वष्टकादौतत्रतदेवभवतिनान्यदितिसंक्षेपः॥प्रयोगपारिजातेकाश्य
पः॥गर्भिणीकुंजरघ्नादिशैलहर्म्यादिरोहणम्॥व्यायामंशीघ्रगमनंशकटारोहणंत्यजेत्॥शो
कंरक्तविमोक्षंचसाध्वसंकुक्कुटासनंव्यवसायंदिवास्वापंरात्रौजागरणंत्यजेत्॥ मदनरत्ने
स्कांदे॥ हरिद्राकुंकुमंचैवसिंदूरंकज्जलंतथा॥कूर्पासकंचतांबूलंमंगलाभरणंशुभं॥केश
संस्कारकबरीकरकर्णविभूषणं॥भर्तुरायुष्यमिच्छंतीदूषयेद्गर्भिणीनहि॥बृहस्पतिः॥चतुर्थेमा
सिषष्ठेवाप्यष्टमेगर्भिणीयदा॥यात्रानित्यंविवर्ज्यास्यादाषाढेतुविशेषतः॥ याज्ञवल्क्यः॥
दौहृदस्याप्रदानेनगर्भोदोषमवाप्नुयात्॥वैरूप्यंमरणंवापितस्मात्कार्यंप्रियंस्त्रियाः॥दौहृदं
गर्भिणीप्रियम्॥ तत्रैवाश्वलायनः॥ वपनंमैथुनंतीर्थंवर्जयेद्गर्भिणीपतिः
॥श्राद्धंचसप्तमान्मासादूर्ध्वंचान्यत्रवेदवित्॥श्राद्धेतद्भोजनमितिप्रयोगपारिजातः॥कालवि
धानेमुहूर्तदीपिकायांच॥क्षौरंशवानुगमनंनखकृंतनंचयुद्धादिवास्तुकरणंत्वतिदूरयानं॥उ
द्वाहमौपनयनंजलधेश्चगाहमायुःक्षयार्थमितिगर्भिणिकापतीनाम्॥ रत्नसंग्रहेगाल
वः॥ दहनंवपनंचैवचौलंवागिरिरोहणं॥नावआरोहणंचैववर्जयेद्गर्भिणीपतिः॥अ
न्यत्रापि॥अव्यक्तगर्भपतिरब्धियानंमृतस्यवाहंक्षुरकर्मसंगम्॥तस्यानुयानंनगयादितीर्थ
गणादिकंवास्तुविधिंनकुर्यात्॥अव्यक्तगर्भावनिताभवेत्मासत्रयात्परं॥ययमासात्परतःस्रु

तिर्नवमेरिस्ववासिनी॥० अथसूतिगृहप्रवेशः॥गर्गः॥ रोहिण्यैंदवयोस्त्रिषुस्वा
तीवारुणयोरपि॥पुनर्वसौपुष्यहस्तधनिष्ठासूत्तरासुच॥मैत्रेत्वाष्ट्रेतथाश्विन्यांसूतिकागारवे
शनं॥एतच्चसंभवे॥प्रसूतिसंभवेकालेसद्यएवप्रवेशयेदितिवसिष्ठोक्तेः॥तच्चनैर्ऋत्यांकार्य्यम्।
वारुण्यांभोजनगृहंनैर्ऋत्यांसूतिकागृहमितिवसिष्ठोक्तेः॥विष्णुधर्मोत्तरे।दशाहंसूतिकागा
रमायुधैश्चविशेषतः॥वन्हिनातिंदुकालातैःपूर्णकुंभैःप्रदीपकैः॥मुशलेनतथावारिवर्णकै
श्चित्रितेनच॥० अथजातकर्म॥पारिजातेवसिष्ठः॥० श्रुत्वाजातंपितापुत्रं
सचैलंस्नानमाचरेत्॥मनुःप्राङ्नाभिवर्द्धनात्पुंसोजातकर्मविधीयते॥वर्द्धनंछेदनं।हेमाद्रौबै
जवापः॥जन्मतोनंतरंकार्य्यंजातकर्मयथाविधि।दैवादतीतकालंचेदतीतेसूतकेभवेत्पृ
थ्वीचंद्रोदयेविष्णुधर्मे॥अच्छिन्ननाभिकर्तव्यंश्राद्धंचैवसुतजन्मनि॥पुत्रपदेनकन्यापिगृह्यते॥
॥तदाहतत्रैवकार्ष्णाजिनिः॥प्रादुर्भवेपुत्रपुत्र्योर्ग्रहणेचंद्रसूर्ययोः॥स्नात्वानंतरमात्मीयान्(
पितॄन्श्राद्धेनतर्पयेत्॥एतच्चरात्रावपिकार्य्यम्॥पुत्रजन्मनियात्रायांशर्वर्यांदत्तमक्षयमितित
त्रैवव्यासोक्तेः॥ बैजवापः॥ जातमात्रकुमारस्यजातकर्मविधीयते॥स्तनप्राशनतः
पूर्वंनाभिकर्तनतोपिवा॥एतेननैमित्तिकमपीदं॥जातेष्टिवृद्धाशौचांतेकार्य्यमितिशंकापरा
स्ता॥जातेकुमारेपित्र्यणामासीदान्नृण्यं॥तदहरितिहारीतोक्तेश्च॥अत्रश्राद्धमामेनहेम्नावा
कार्यमित्युक्तंपृथ्वीचंद्रोदयेआदित्यपुराणे॥जातश्राद्धेनदद्यात्तुपक्वान्नंब्राह्मणेष्वपीति॥ हे
माद्रिस्तु॥ पुत्रजन्मनिकुर्वीतश्राद्धंहेम्नैवबुद्धिमान्॥नपक्वेननचामेनकल्याणान्यभिका
मयन्नितिसंवर्तोक्तेर्हेम्नैवेत्याह॥एतच्चजननाशौचेमरणाशौचेचकार्य्यमित्याह॥मिताक्षरायां
प्रजापतिः॥आशौचेतुसमुत्पन्नेपुत्रजन्मयदाभवेत्॥कर्तुस्तात्कालिकीशुद्धिःपूर्वाशौचेनशु
ध्यति॥केचित्तु॥मृताशौचस्यमध्येतुपुत्रजन्मयदाभवेत्॥आशौचापगमेकार्यंजातकर्मयथा
विधीति॥स्मृतिसंग्रहोक्तेराशौचांतेकार्य्यमित्याहुः॥स्मृत्यर्थसारेपिविकल्पउक्तः॥मृदुध्रुवचर
क्षिप्रभेष्वेवामुदयेपिच॥गुरौशुक्रेथवाकेंद्रेजातकर्मचनामच॥शूद्रादिलक्षणमाहश्रीधरः॥रो
हिण्युत्तरभंस्थिरंगिरिशमूलेंद्रोरगादारुणं॥क्षिप्रंचाश्विदिनेशपुष्यमनलेंद्राग्नीतुसाधारणं
।उग्रंपूर्वमघांतकंमृदगतित्वाष्ट्रांत्यमैत्रंचरं॥विष्णुस्वातिशतोडुवस्वदितयःकुर्युःस्वसंज्ञाफलं
।अत्रसर्वत्रजातनामकर्मणोरुक्तकालातिक्रमेनक्षत्रादिकंज्ञेयं॥देशकालोपघाताद्यैःका
लातिक्रमणंयदि॥अनस्तगेज्येंदुसितेतत्कार्य्यंचोत्तरायणइतिमदनरत्नेनारदोक्तेः॥बृहस्प
तिरपि॥मुख्यालाभेविधिज्ञेनविधिश्चिंत्यःप्रमादतः॥नक्षत्रतिथिलग्नानांविचार्य्यैवंपुनःपुन
॥सूतकेसंध्यादौविशेषंवक्ष्यामः॥ अथजन्मनिदुष्टकालाः॥० तत्रगंडांतः॥
ज्योतिर्निबंधेनारदः॥पूर्णानंदाख्ययोस्तिथ्योःसंधिर्नाडीद्वयंतथा॥गंडांतंमृत्युदंजन्मयात्रो
द्वाहव्रतादिषु॥कुलीरसिंहयोःकीटचापयोर्मीनमेषयोः॥गंडांतमंतरालंस्याद्घटिकार्द्धंमृति
प्रदं॥सार्पेंद्रपौष्णभेष्वंत्यषोडशांशोभसंधयः॥तदग्रेभेष्वाद्यपादाभानांगंडांतसंज्ञकाः॥र
त्नमालायांपौष्णाश्विन्योःसार्पपित्र्यर्क्षयोश्चयच्चज्येष्ठामूलयोरंतरालं॥तद्गंडांतंस्याच्चतुर्ना।

डिकंहित्वाजन्मोद्वाहकालेष्वनिष्टम्॥ रत्नसंग्रहे॥ नवनीतादिरिष्टे॥सर्वेषांगंडजातानां
परित्यागोविधीयते॥वर्जयेद्दर्शनंयावत्तावत्षाण्मासिकंभवेत्।तिथ्यर्क्षगंडेपितृमातृनाशीलग्नस्य
संधौतनयस्यनाशः॥सर्वेषुनोजीवतिहंतिवंशंनजीवनंस्याद्बहुवारणाद्यैः॥ अथैषां
दानम्॥उक्तंगार्ग्ये॥तिथिगंडेत्वनड्वाहंनक्षत्रेधेनुरुच्यते॥कांचनंलग्नगंडेतुगंडदोषोविनश्य
ति॥उत्तरेतिलपात्रंस्यात्पुष्येगोदानमुच्यते॥अजाप्रदानंत्वाष्ट्रेस्यात्पूर्वाषाढेतुकांचनं॥उत्त
रातिष्यचित्रासुपूर्वाषाढाभ्दवस्यच॥कुर्याच्छांतिंप्रयत्नेननक्षत्राकारजांबुधः॥ अथाश्ले
षाफलम्॥ मूर्द्धास्यनेत्रगलकांसयुगंचबाहू॥हृज्जानुगुह्यपदमित्यहिदेहभागः॥बाणा
द्रिनेत्रहुतभुक्श्रुतिनागरुद्रषट्संदपंचशिरसःक्रमशस्तुनाड्यः॥राज्यंपितृक्षयोमातृनाशः
कामक्रियारतिः॥पितृभक्तोबलीस्वघ्नस्त्यागीभोगीधनीक्रमात्॥ ज्येष्ठाफलमुक्तंब्रह्म
यामले॥ज्येष्ठादौजननीमाताद्वितीयेजननीपिता॥तृतीयेजननीभ्रातास्वयंमाताचतुर्थके
॥आत्मानंपंचमेहंतिषष्ठेगोत्रक्षयोभवेत्॥सप्तमेचोभयकुलंज्येष्ठंभ्रातरमष्टमे॥नवमेश्व
शुरंहंतिसर्वंहंतिदशांशकइति॥ अथमूलफलंलल्लः॥ अभुक्तमूलसंभवंपरि
त्यजेच्चबालकं॥समाष्टकंपिताथवानतन्मुखंविलोकयेत्॥तदाद्यपादकेपिताविपद्यतेजन
न्यथ॥तृतीयकेधनक्षयश्चतुर्थकःशुभावहः॥प्रतीपमन्त्यपादतःफलंतदेवसार्पभे॥अभुक्त
मूलंत्वाहवृद्धवसिष्ठः॥ज्येष्ठांत्यघटिकाचैकामूलादौघटिकाद्वयं॥अभुक्तमूलमित्याहुर्जातं
तत्रविवर्जयेत्॥केचिज्ज्येष्ठांत्यमूलाद्यचपादंअभुक्तमूलमाहुः॥कश्यपसंहितायांत्वन्यथो
क्तं॥मूलाद्यपादजोहंतिपितरंतुद्वितीयजः॥मातरंस्यात्तृतीयोऽर्थान्सुहृदंचतुरीयजः॥फलं
तदेवसार्पर्क्षेप्रतीपंत्वन्त्यपादतः॥ अथमूलवृक्षः॥जयार्णवे॥॰ मूलंस्तंभ
स्त्वचाशाखापत्रपुष्पंफलंशिखा॥वेदाश्वमुनयश्चैवदिशश्चैवसवस्तथा॥नंदार्वर्णारसा
दृष्टामूलभेदःप्रकीर्तितः॥मूलेमूलविनाशायस्तंभेहानिर्धनक्षयः॥त्वचिभ्रातृविनाशायशाखामातृ
विनाशकृत्॥पत्रेसपरिवारःस्यात्पुष्पेनृपवल्लभः॥फलेमुलभतेराज्यंशिखायामल्पजीवितं॥अ
न्यत्रत्वन्यथोक्तं॥मूलेसप्तघटीषुमूलहननंस्तंभेऽष्टसुस्वक्षयं॥त्वग्दिग्बंधुविनाशनंचविटपेरुद्रैर्हं
तोमातुलः॥पत्रेवेदैःसुकृतिस्तुबाणकुसुमेमंत्रीफलेसागरैःराजावह्निशिखाल्पमायुरितितन्मू
लांघ्रिपेस्यात्फलं॥ भूपालवल्लभः॥ वृषालिसिंहेघुघटेचमूलंदिविस्थितंयु
ग्मतुलांगनांत्ये॥पातालगंमेषधनुःकुलीरनक्रेषुमर्त्येक्षितिसंस्मरंति॥स्वर्गेमूलेभवेद्राज्यंपा
तालेचधनागमं॥मृत्युलोकेयदामूलंतदाशून्यंसमादिशेत्॥ वसिष्ठः॥ नैर्ऋत्यभो
द्भूतसुतःसुतावास्विमाद्वश्यंश्वशुरंनिहंति॥तदंत्यपादेजनितोनिहंतितस्योक्तमेणहिभवेत्का
लत्रं॥सुरेशताराजनिताधवाग्रजंद्विदैवताराजनितातुदेवरं॥पुरंदरर्क्षेजनिजःसुतस्तथास्वसा
ग्रजंहंतिनपुत्रिकायदि॥ प्रयोगपारिजाते॥ मूलजाश्वशुरंहंतिव्यालजाचतं
द्गनां॥माहेंद्रजाग्रजंहंतिदेवरंतुद्विदैवजा॥नृसिंहप्रसादे॥धवाग्रजंहंतिसुरेंद्रजातातनयैवय
त्नाभगिनींपुमांश्च॥द्विदैवजादेवरमाशुहमाभ्द्रार्पानुजामाशुनिहंतिसूनुः॥पत्न्यग्रजामग्रजं

वाहंतिज्येष्ठस्त्रीजःपुमान्॥तथाभार्य्याग्रजंवास्वसारंवाशालकंवाद्विदैवजः॥क्रमकादेवरंहंतिविशाखां
त्यसमुद्भवा॥आद्यपादत्रयेनैवआद्यमेतुपुमान्भवेत्॥नहन्याद्देवरंकन्यातुलामिश्रद्विदैवजा॥
तद्दक्षांशीभवावर्ज्यादुश्चाद्वृश्चिकपुच्छवत्॥चित्राद्यार्द्धेपुष्यमध्येद्विपादेपूर्वाषाढाधिष्ण्यपादेतृ
तीये॥जातःपुत्रश्चोत्तरार्द्धेविधत्तेमातापित्रोर्भ्रातरंवालनाशं॥द्विमासंचोत्तरादोषःपुष्येचैव
त्रिमासिकः॥पूर्वाषाढाष्टमेमासिचित्राषाण्मासिकंफलं॥नवमासंतथाश्लेषामूलेचाष्ट
कवर्षकं॥ज्येष्ठायंचदशेमासिपुत्रदर्शनवर्ज्जिता॥ वसिष्ठः॥ व्यतीपातेऽगहानिः
स्यात्परिघेमृत्युमादिशेत्॥वैधृतौपितृहानिःस्यात्षष्ठेदारांवधतांव्रजेत्॥मूलेसमूलनाशः
स्यात्कुलनाशोधृतौभवेत्॥विष्कंभेगंडेचहीनेचसंध्ययोरुभयोरपि॥पर्वस्वपिप्रसूतीच
सर्वारिष्टभयप्रदः॥तद्वत्सदंतजातश्चपादजातस्तथैवच॥तस्मात्क्षांतिंप्रकुर्वीतग्रहाणां
क्रूरखेनसां॥ गर्गः॥कन्यांचतुर्दशीषोढाकुर्य्यादादौशुभंस्मृतं॥द्वितीयेपितरंहंतितृतीयेहं
तिमातरं॥चतुर्थेमातुलंहंतिपंचमेवंशनाशनं॥षष्ठेचधननाशःस्यादात्मनोवंशनाशनं॥
देवकीर्त्तिः॥यद्येकस्मिन्धिष्ण्येजायंतेदुहितरोऽथवासुताः॥पितुरंतकराःस्तेतेयद्यपरेश्रीनिर
तुलास्यात्॥गर्गः॥एकस्मिन्नेवनक्षत्रेभ्रात्रोर्वापितृपुत्रयोः॥प्रसूतिश्चतयोर्मृत्युर्भवेदेक
स्यनिश्चितं॥शौनकः॥ग्रहणेचंद्रसूर्यस्यप्रसूतिर्यदिजायते॥व्याधिपीडातदास्त्रीणांआ
दौतत्रतुदर्शनात्॥इत्यंसजापतेपस्यतस्यमृत्युर्नसंशयः॥शांतिस्तु॥नक्षत्राधिपतेरूपंसुव
र्णेनप्रकल्पयेत्॥सूर्यग्रहेसूर्यरूपंहेमचंद्रंतुराजतं॥राहुरूपंप्रकुर्वीतनागेनैवविचक्षणः
नागःसीसम्॥त्रयाणांचैवरूपाणांचैवरूपाणांस्थापनंतुकारयेत्॥आकृष्णेनाप्यायस्वस्वभा
नोरितिप्रजामतः॥नक्षत्रदेवतायास्तन्मंत्रेण॥संसर्ज्जंतुयजेत्सूर्यंसमिद्भिश्चार्कसंभवैः॥चंद्र
ग्रहेचपालाशैर्दूर्वाभीराहुमेवच॥समिद्भिर्ब्रह्मवृक्षस्यमेशायजुहुयाद्बुधः॥आज्येनचरुणा
चैवतिलैश्चजुहुयात्ततः॥पंचगव्यैःपंचरत्नैःपंचत्वक्पंचपल्लवैः॥जलैरौषधिकल्कैश्चअ
भिषेकंसमाचरेत्॥मंत्रैर्वारुणसंभूतैरापोहिष्ठादिभिस्त्रिभिः॥इमंमेगंगेपरतत्त्वायामी
तिमंत्रकैः॥यजमानस्ततोदद्याद्दक्षिणांप्रतिहृतिन्नयं॥मात्स्ये॥अकालप्रसवानार्य्यःकालाती
तप्रजास्तथा॥विकृतप्रसवाश्चैवयुग्मप्रसवकास्तथा॥अमानुषाअमुंडाश्चअजातव्यंजना
स्तथा॥हीनांगाअधिकांगाश्चजायंतेयदिवास्त्रियः॥पशवःपक्षिणश्चैवतथैवचसरीसृपाः
॥विनाशस्तस्यदेशस्यकुलस्यचविनिर्दिशेत्॥निर्वासयेत्तान्नगरात्ततःशांतिंसमाचरेत्॥
विष्णुधर्मोत्तरे॥उपरिप्रथमंयस्यजायंतेचशिशोर्द्विजाः॥दंतैर्वासहयस्यस्याज्जन्मभार्गवसत्त
म॥द्वितीयेचतृतीयेचचतुर्थेपंचमेतथा॥यदादंताश्चजायंतेमासिचैवमहद्भयं॥मातरंपितरं
वापखादेदात्मानमेवच॥० अथोर्ध्वदंतजननशांतिः॥ गजदंतगतंवा
लेतौस्वंवास्नापयेद्द्विजः॥तदभावेतुधर्मज्ञकांचनेवावरासने॥सर्वौषधैःसर्वगंधैर्बीजैःपुष्पैः
फलैस्तथा॥पंचगव्येनरत्नैश्चमृत्तिकाभिश्चभार्गव॥स्नापयेदित्यन्वयः॥स्थालीपाकेनधातारं
पूजयेत्तदनंतरम्॥समाहुत्वात्रकर्त्तव्यंतथाब्राह्मणभोजनम्॥अष्टमेहनिभद्रासनोपरिस्था

लं निवेश्य॥ भद्रासने निवेश्यैनं मृद्भिर्मूलैः फलैस्तथा॥ सर्वौषधैः सर्वगंधैः सर्वबीजैस्तथैव च॥ स्ना
पयेत्पूजयेच्चापि वह्निं सोमं समीरणम्॥ पर्वतांश्च तथा स्नातान् देवदेवं च केशवम्॥ एतेषामेव जु
हुयात् घृतमष्टौ यथाविधि॥ ब्राह्मणानां तु दातव्या तत्र संकल्प्य दक्षिणा॥ अष्टमेहनि विप्राणां तथा
देयाच्च दक्षिणा॥ कांचनं रजतं गाश्च भुवं वा धनमेव च॥ दंता नाम यमे मासि षष्ठे मासि ततः पुनः॥
दंता यस्य च जायंते माता वा म्रियते पिता॥ बालको म्रियते तत्र स्वयमेव न संशयः॥ दधिक्षौद्रघृता
क्ता नाम स्वर्णस्य समिधां तथा॥ जुहुयादष्टोत्तरशतं समंत्रेण तु मंत्रवित्॥ धेनुं च दक्षिणां दद्यात्ततः
संपद्यते सुखं॥ ज्योतिर्निबंधे तु अष्टमः शुभदस्तु क्रमात्॥ अष्टमादिषु दंतोत्थानं शुभावहमित्यत्र।
दुगुणसंविज्ञानं बहुव्रीहिणा वा नवमासादिग्रहणम्॥ ब्रह्मयामले॥ प्रथमं दंत
निर्मुक्तिरूर्ध्वं बालस्य चेद्भवेत्॥ क्षेपणाय मातुलस्येह तद्दोषो ज्ञा महर्षिभिः॥ सौवर्णे राजते वापि
ताम्रे कांस्यमयेपि वा॥ दध्योदनेन संपूर्णे पात्रे दद्याच्छिशोः करे॥ समंत्रं भाजनं दत्वा सपश्येन्मातु
लः शिशुं॥ सालंकारं सवस्त्रं च शिशुमालिंग्य सादरं॥ तत्र मंत्रः॥ रक्ष मां भागिने
य त्वं रक्ष मे सकलं कुलम्॥ गृहीत्वा गात्रं तस्मात् प्रसन्नो भव मे सदा॥ निर्विघ्नं कुरु कल्याणं निर्वि
घ्नं च समातरं॥ मय्यात्मानमधिष्ठाप्य चिरंजीव मया सह॥ एवं कृते विधाने तु विघ्नः कोपि न जायत
इति॥ अथ त्रिकशांतिः॥ शांतिसौख्ये॥ सुतत्रये सुता चेत्स्यात्तत्त्रये वा सुतो य
दि॥ मातापित्रोः कुलस्यापि तदानिष्टं महद्भवेत्॥ ज्येष्ठनाशो धनेहानिर्दुःखं वा सुमहद्भवेत्॥ त
त्र शांतिं प्रकुर्वीत वित्तशाठ्यविवर्जितः॥ जातस्यैकादशाहे वा द्वादशाहे शुभे दिने॥ आचार्यमृत्वि
जो वृत्वा ग्रहयज्ञपुरःसरं॥ ब्रह्मविष्णुमहेशेंद्रप्रतिमाः स्वर्णतः कृताः॥ पूजयेद्धान्यराशिस्थाः कल
शोपरि यत्नतः॥ पंचमे कलशे रुद्रं पूजयेद्रुद्रसंख्यया॥ रुद्रसूक्तानि चत्वारि शांतिसूक्तानि सर्व
शः॥ आचार्यो जुहुयात्तत्र समिदाज्यतिलांश्चरुं॥ अष्टोत्तरसहस्रं वा शतं वा विंशतिं तु वा॥ देवता
भ्यश्च तद्वंत्यादिभ्यो ग्रहपुरःसरम्॥ ब्रह्मादिमंत्रैरिंद्रस्य यतनंद्रमयामहे॥ ततः स्विष्टकृतं हुत्वा
बलिं पूर्णाहुतिं ततः॥ अभिषेकं कुटुंबस्य कृत्वाचार्यं प्रपूजयेत्॥ हिरण्यं धेनुरेका च ऋत्विजां
दक्षिणा ततः॥ आज्यस्य वीक्षणं कृत्वा शांतिपाठं तु कारयेदिति॥ ब्राह्मणान्भोजयेच्छक्त्यादी
नानाथांश्च तर्पयेत्॥ कृत्वैवं विधिना शांतिं सर्वारिष्टाद्विमुच्यते॥ इति गर्गसंहितोक्तत्रि
कशांतिः॥ अन्येषु मूलादिनक्षत्रेषु शांत्यादिप्रयोगपारिजाते शांतिरत्ने च ज्ञेयं॥ मिताक्षरायां
मार्कंडेयः॥ रक्षणीया तथा षष्ठी निशा तत्र विशेषतः॥ रात्रौ जागरणं कार्यं जन्मदानां तथा बलिः॥
पुरुषाः शस्त्रहस्ताश्च नृत्यगीतैश्च योषितः॥ रात्रौ जागरणं कुर्युर्दशम्यां चैव सूतके॥ व्यासः
सूतिकावासनिलया जन्मदा नाम देवताः॥ तासां यागनिमित्तं तु शुद्धिर्जन्मनि कीर्तिता॥ प्रथमे
दिवसे षष्ठे दशमे चैव सर्वदा॥ त्रिष्वेतेषु न कुर्वीत सूतकं पुत्रजन्मनि॥ अपरार्के ब्राह्मे
कन्याश्चतस्रो राकाद्या बालघ्नी चैव पंचमी॥ क्रीडनार्था च बालानां षष्ठी च शिशुरक्षिणी॥ स्वजे
नु पूजनीया वै वेश्मैत्राद्यैर्द्विजातिभिः॥ राकानुमतिः सिनीवाली कुहूरिति चतस्रः कन्यास्त्वर्थः॥
अथ दत्तकपुत्रपरिग्रहविधिः॥ पारिजाते शौनकः॥ शौनकोहं प्रवक्ष्यामि पु

त्रसंग्रहमुत्तमं॥ अपुत्रोमृतपुत्रोवापुत्रार्थंसमुपोष्यचवाससीकुंडलेदत्वाउष्णीषंचांगुलीयकं
॥वंधूनन्नेनसंभोज्यब्राह्मणांश्चविशेषतः॥अन्वाधानादियत्तंत्रंकृत्वाओत्पवनांतकं॥दातुः
समक्षंगत्वातुपुत्रंदेहीतियाचयेत्॥दानेसमर्थोदातास्मैयेयज्ञेनेतिपंचभिः॥देवस्यत्वेतिमंत्रे
णहस्ताभ्यांपरिगृह्यच॥अंगादंगेत्यृचंजप्त्वाआघ्रायशिशुमूर्द्धनि॥गृहमध्येतमाधायचरुंहु
त्वाविधानतः॥यस्त्वाहृदेत्यृचाचैवतुभ्यमग्रेत्र्यृचैकया॥सोमोददद्दित्येताभिःप्रत्यृचंपंचभि
स्तथा॥स्विष्टकृदादिहोमंचकृत्वाशेषंसमापयेत्॥ब्राह्मणानांसपिंडेषुकर्त्तव्यःपुत्रसंग्रहः॥
तदभावेसपिंडोवाऽन्यत्रतुनैवकारयेत्॥मिताक्षरादौतुव्याहृतिभिराज्येनहोमउक्तं॥सचहो
मो।नरंजलस्पर्शवदेयः॥नचवाक्पात्रेण॥व्याहृतिभिर्हुत्वाप्रतिगृह्णीयादितिवसिष्ठोक्तेः॥मा
तापितावादद्यातांयमद्भिःपुत्रमापदि॥सदृशंप्रीतिसंयुक्तंसज्ञेयोदत्रिमःसुतः इतिम
नूक्तेः॥ तत्रैववसिष्ठः॥नत्वेवैकंपुत्रंदद्यात् प्रतिगृह्णीयाद्वानस्त्रीपुत्रंदद्यात्प्रतिगृ
ह्णीयाद्वाअन्यत्रानुज्ञानाद्भर्तुरिति॥इदंचभर्तृसत्वे॥अन्यथा॥दद्यान्मातापितावायंसपुत्रो
दत्रिमःस्मृतइति॥ वचस्यासवचोविरोधःस्यात्॥ दानंप्रतिग्रहोयत्लक्षण
म्।यत्तु॥समंत्रकहोमस्यपुत्रप्रतिग्रहांगत्वात्॥व्याहृत्यादिमंत्रपाठेचस्त्रीशूद्रयोरनधिका
रात्॥तयोर्दत्तकःपुत्रोनभवत्येवेतिशुद्धिविवेकेरुद्रधरेणोक्तं॥वाचस्पतिमिश्रेणमाह॥तन्न॥
भर्त्रनुज्ञयास्त्रियाअपिप्रतिग्रहोक्तेः॥यद्यपिमेधातिथिनाभार्य्यात्ववदृष्टरूपंदृष्टरूपंदत्त
कत्वंहोमसाध्यमुक्तंस्त्रियाश्चहोमासंभवस्तथाऽपिव्रतादिवद्विप्रद्वाराहोमादिकारयेदितिह
रिनाथादयः॥संबंधतत्वेप्येवम्॥एवंशूद्रस्यापि॥स्त्रीशूद्राश्चसधर्माणइतिस्मृतेः॥अतए
वशूद्रकर्तृकहोमोविप्रद्वारैवपराशरेणोक्तः॥दक्षिणार्थंतुयोविप्रःशूद्रस्यजुहुयाद्धविः॥ब्राह्म
णस्तुभवेच्छूद्रःशूद्रस्तुब्राह्मणोभवेत्॥ अत्रमाधवाचार्य्यः॥ योविप्रःशूद्र
दक्षिणामादायतदीयंहविःशांतिपुष्ट्यादिसिद्ध्यैवैदिकैर्मंत्रैर्जुहोतितस्यविप्रस्यैवदोषःशूद्र
स्तुहोमफलंलभतएवेतिव्याचचक्षे॥दत्तकेविशेषः॥ कालिकापुराणे॥ पितुर्गो
त्रेणयःपुत्रःसंस्कृतःपृथिवीपते॥आचूडांतंनपुत्रःसपुत्रतांयातिचान्यतः॥चूडाद्याःयदिसं
स्कारानिजगोत्रेणवैकृताः॥दत्ताद्यास्तनयास्तेस्युरन्यथादासउच्यते॥ऊर्ध्वंतुपंचमाद्वर्षान्नद
त्ताद्याःसुतानृप॥गृहीत्वापंचवर्षीयंपुत्रेष्टिंप्रथमंचरेदिति॥पंचमोर्ध्वंतुस्वदानेच्छौरेवदानं
नान्यथा॥विक्रयंचैवदानंचननेयाःस्युरनिच्छवः॥दाराःपुत्राश्चसर्वस्वमात्मन्येवतुयोजयेत्
॥इतिहेमाद्रिमाधवधृतव्यासदक्षादिवचनात्॥याज्ञवल्क्यः॥स्वंकुटुंबाविरोधेनदेयंदा
रसुतादृते॥इतितदूर्ध्वंस्वदानानिच्छुसंस्कृतपरम्॥तेनसर्वस्वदानेच्छुस्वदानेच्छुदारपु
त्रदानंसिद्धम्॥योहि॥हिग्रभायारणःसुशेवोन्योदर्य्योमनसामन्तवाउ॥इतिश्रुतौदत्तकनिषे
धःसोऽप्यौरसातिशयार्थः॥अन्यथाशुनःशेपादिप्रतिग्रहश्रौतलिंगविरोधापत्तेः॥उपेयात्तव
पुत्रतामित्युक्तेः॥इदंचश्रौतलिंगंस्वयंदत्तक्रीतपरम्॥नदत्तकपरम्॥द्वादशविधपुत्रमध्ये
दत्तात्मातुस्वयंदत्तः॥क्रीतश्चताभ्यांविक्रीतइति॥याज्ञवल्क्येनतयोर्दत्तकाद्भेदोक्तेस्तयोश्चद

न्नौरसेतरेषांतुपुत्रत्वेनपरिग्रहइतिकलौनिषेधात्॥तेनसंस्कारोत्तरंदत्तकोनभवत्येवेतिसिद्
म्॥यत्तु॥विश्वजिदधिकरणेपश्वेतत्रपुत्रादीनांजातित्वेनस्वशब्दवाच्यत्वात्पुत्रत्वेनदानमाशं
क्यनिराकृतं॥जन्यपुंस्त्वस्यदानेतत्त्वानिष्पत्तेः॥दासत्वेनदानंभवत्येव॥पुत्रस्वत्वाभाववदत्रपु
त्रक्रयविक्रयादिपुनःशेफविक्रयादिश्रौतलिंगात्॥दासक्रयविक्रयादिव्यवहारायोगान्मु
ख्यएव॥पुत्रःकनिष्ठोज्येष्ठायांकनिष्ठायांचपूर्वजः॥कथंतयोर्विभागःस्यादितिचेत्संशयो
वेत्॥सदृशस्त्रीषुजातानांपुत्राणामविशेषतः॥नमातृतोज्यैष्ठ्यमस्तिजन्मतोज्यैष्ठ्यमुच्यतेति
नकनिष्ठायांपूर्वंजातएवज्येष्ठः॥नज्येष्ठायांपश्चाज्जातइत्यर्थः॥सएवश्राद्धाधिकारी॥ अ
थयमयोः संस्कारक्रमार्थंज्येष्ठकनिष्ठभावउच्यते॥मनुः॥जन्मज्येष्ठेनचाह्वानंसुब्रह्म
ण्यास्वपिस्मृतं॥यमयोश्चैवगर्भेषुजन्मतोज्येष्ठतामता॥देवलः॥यस्यजातस्ययमयोःपश्यं
तिप्रथमंमुखं॥संतानःपितरश्चैवतस्मिन्ज्येष्ठंप्रतिष्ठितं॥भागवतेतु॥द्वौतदाभवतोगर्भौसू
तिवेशविपर्ययादित्युक्तेः॥पश्चादुत्पन्नस्यज्येष्ठ्यमुक्तम्॥अत्रदेशाचारतोव्यवस्था॥पूर्वमे
वतूक्तम्॥गर्भाष्टमेइत्यादौविशेषनिर्देशएवगर्भग्रहणंनान्यत्र॥अन्यथातद्वैयर्थ्यात्॥ अ
थसूतिकास्नानम्॥० ज्योतिषे॥करेंद्रभाग्यानिलवासवांत्यमैत्रेंदवाश्विध्रुवभेहि
पुंसांतिथावरिक्तेशुभमामनंतिप्रसूतिकास्नानविधिंमुनींद्राः॥० अथनामकर्म॥
मदनरत्नेबृहस्पतिः॥ द्वादशेदशमेवापिजन्मतोपित्रयोदशे॥षोडशेविंशतौचैवद्वा
त्रिंशेवर्णतःक्रमात्॥याज्ञवल्क्यः॥अहन्येकादशेनाम॥ हेमाद्रौभविष्ये॥
नामधेयंदशम्यांतुद्वादश्यामास्यवेचन॥अष्टादशेहनितथावदंत्यन्येमनीषिणः॥दशम्यां
मतीतायामितिज्ञेयं॥आशौचापगमेनामधेयमितिविष्णूक्तेः॥गृह्यपरिशिष्टेपि॥जननाद्दश
रात्रेव्युष्टेशतरात्रेसंवत्सरेवानामकरणम्॥व्युष्टेगतेइति॥ज्योतिर्निबंधेगर्गः॥अमासंक्रांति
विष्ट्यादौप्राप्तकालेपिनाचरेत्॥श्रीधरः॥मित्रादित्यमघोत्तराशतभिषक्स्वातीधनिष्ठाश्रु
तप्राजेशाश्विशशांकपौष्णदिनकृत्पुष्येषुराशौस्थिरे॥छिद्रांपंचदशींविहायनवमींशुद्धेष्ट
मेभार्गवज्ञाचार्यामृतपादमागदिवसेनामानिकुर्याच्छिशोः॥मनुः॥शर्मांतंब्राह्मणस्यस्या
द्वर्मांतंक्षत्रियस्यतु॥वैश्यस्यधनसंयुक्तंशूद्रस्यप्रैष्यसंयुतम्॥मदनरत्नेनारदीये॥सूतकां
तेनामकर्मविधेयंस्वकुलोचितं॥नामपूर्वंतुमासस्यमंगलंसुसमाक्षरैः॥तत्रैवगार्ग्यः॥मा
सनामगुरोर्नामदद्याद्बालस्यवैपिता॥कृष्णोनंतोच्युतश्चक्रीवैकुंठोथजनार्दनः॥उपेंद्रो
यज्ञपुरुषोवासुदेवस्तथाहरिः॥योगीशःपुंडरीकाक्षोमासनामान्यनुक्रमात्॥अत्रमार्ग
शीर्षादिश्चैत्रादिर्वाक्रमइतिमदनरत्ने॥तन्मासनामप्रथमंदद्यात्संबुद्ध्यचैवहि॥देवालय
गजाश्वानांप्रेक्षणांवापिकूपयोः॥सर्वापणानांनामपणानांचिह्नार्थंयोषितान्नृणाम्॥का
व्यानांचकवीनांचपश्वादीनांचसर्वशः॥राजप्रसादवास्तूनांनामकर्मविशिष्यते॥नाक्ष
त्रमपिनामकार्यं॥अभिवादनीयंचसमीक्षेत॥तन्मातापितरौविद्यानामोपनयनादिमा
लापनोक्तेः॥कुलदेवतामासनक्षत्रसंबद्धंपितानामकुर्यादितिमदनरत्नेशंखोक्तेश्च॥त

चनक्षत्रपादाक्षरं ढ्यक्षरं कुर्यादित्युक्तं परिशिष्टे॥ तदक्षरादिकं नाम यस्मिन् धिष्ण्ये प
दक्षरमिति॥ सुदर्शनभाष्ये तु॥ रोरेमपूर्वे विपुरह्विरादौ ढान्ते च वान्यश्रवणाश्वयुक्षु॥ शेषेषु नाऽऽ
द्योःकपरः स्वरोन्यः स्याद्योरदीर्घः सविसर्ग इत्युक्तम्॥ ढान्त इति॥ प्रोष्ठपदे त्वाद्यो ढान्त्यरे च वृद्धिः प्रो
ष्ठपाद इति॥ अन्यमयभरणीशब्दः श्रुतावुक्तः॥ तत्र श्रवणादौ वचादिरहितः॥ अयभरणाः आयभ
रणा इत्यादि॥ मदनरत्ने वसिष्ठः॥ जन्माहे द्वादशाहे वा दशाहे वा विशेषतः॥ उ
त्तरे रेवतीहस्तमूलपुष्याः सवारुणाः॥ श्रवणादितिमैत्रं च स्वाती मृगशिरस्तथा॥ प्राजापत्यं धनि
ष्ठा च प्रशस्ता नामकर्मणि॥ अथ खट्वारोहः॥ पारिजाते बृहस्पतिः॥ खट्वारोहणकं का
र्यं त्रयोदशे द्वादशेऽपि वा॥ षोडशे दिवसे वापि द्वाविंशे दिवसेऽपि वा॥ ज्योतिर्निबंधे॥
करत्रये वैष्णवरेवतीषु दितिद्वये चाश्विनकध्रुवेषु॥ कुर्याच्छिशूनां नृपतेश्च नद्दादोलनं वै सुखि
नो भवंति॥ तत्रैव॥ आंदोलाशयने पुंसां द्वादशो दिवसः शुभः॥ त्रयोदशस्तु कन्यानां न नक्षत्रवि
चारणा॥ अस्मिन् दिवसे चेत्स्यान्निर्गमस्य प्रशस्यते॥ अथ दुग्धपानं॥
नृसिंहः॥ एकत्रिंशद्दिने चैव पयः शंखेन पाययेत्॥ अन्नप्राशननक्षत्रदिवसोदयराशिषु॥
अथ कर्णवेधः॥ मदनरत्ने वसिष्ठश्रीधरौ॥ मासे षष्ठे सप्तमे वाष्टमे वा॥ वे
ध्यौ कर्णौ द्वादशे षोडशेऽन्हि॥ मध्ये नान्हः पूर्वभागे न रात्रौ नक्षत्रे द्वे द्वे तिथी वर्जयित्वा॥ अत्र ज
न्ममासो वर्ज्यः॥ ज्योतिर्निबंधे गर्गः॥ मासे षष्ठे सप्तमे वाप्यष्टमे मासि वत्सरे॥
कर्णवेधं प्रशंसंति पुष्ट्यायुःश्रीविवृद्धये॥ मदनरत्ने॥ प्रथमे सप्तमे मासि अष्टमे दशमेऽथवा॥ द्वा
दशे च तथा कुर्यात्कर्णवेधं शुभावहं॥ हेमाद्रौ व्यासः॥ कार्त्तिके पौषमासे वा चैत्रे वा फाल्गुनेऽथ
वा॥ कर्णवेधं प्रशंसंति शुक्लपक्षे शुभे दिने॥ श्रीधरः॥ हरिहरकरचित्रासौम्यपौष्णोत्तरा
ख्यादितिवसुषु घटाली सिंहवर्ज्ये सुलग्ने॥ शशिगुरुबुधकाव्यानां दिने पर्वरिक्तारहिततिथिषु शु
द्धे नैधने कर्णवेधः॥ मदनरत्ने बृहस्पतिः॥ द्वितीया दशमी षष्ठी सप्तमी
च त्रयोदशी॥ द्वादशी पंचमी शस्ता तृतीया कर्णवेधने॥ सौवर्णी राजपुत्रस्य राजती विप्रवैश्ययोः॥
शूद्रस्य चायसी सूचिर्मध्यमाष्टांगुलात्मिका॥ हेमाद्रौ देवलः॥ कर्णरंध्रे रवेश्छाया न विशेदग्र
जन्मनः॥ तं दृष्ट्वा विलयं यांति पुण्यौघाश्च पुरातनाः॥ शंखः॥ अंगुष्ठमात्रसुषिरे कर्णे न भवतो
यदि॥ तस्मै श्राद्धं न दातव्यं दत्तं चेदासुरं भवेत्॥ अथ तांबूलभक्षणं॥ चंडेश्वरः॥
सार्द्धमासद्वये दद्यात्तांबूलं प्रथमं शिशोः॥ कर्पूरादिकसंमिश्रं विलासाय हिताय च॥ मूलार्क
चित्राकरजिष्ण्यहरींद्रभेषु पौष्णे सयाम्ये मृगशिरोदिनवासरेषु॥ अर्केंदुजीवभृगुबोधनवासरेषु
तांबूलभक्षणविधिर्मुनिभिः प्रदिष्टः॥ अथ निष्क्रमणम्॥ ज्योतिर्निबंधे यमः॥
तृतीये वा चतुर्थे वा मासि निष्क्रमणं भवेत्॥ यमः॥ ततस्तृतीये कर्तव्यं मासि सूर्यस्य दर्शनं॥
चतुर्थे मासि कर्तव्यं शिशोश्चंद्रस्य दर्शनं॥ अत्र सूर्येंदोःकर्मणि येच तयोः श्राद्धं न विद्यत इति
छंदोगपरिशिष्टात्॥ छंदोगानां निष्क्रमणे वृद्धिश्राद्धं नास्तीति कल्पतरुः॥ व्यासः॥ मैत्रे पुष्य
पुनर्वसु प्रथमभेषु पौष्णेऽनुकूले विधौ॥ हस्ते चैव सुरेश्वरे च मृगभे ताराशु शस्तासु च कुर्यान्नि

क्रमणंशिशोर्बुधगुरुशुक्रेष्वरिक्तेतिथौ॥कन्याकुंभतुलामृगारिभवनेसौम्यग्रहालोकिते
मदनरत्ने॥अन्नप्राशनकालेवाकुर्यान्निष्क्रमणक्रियां॥विष्णुधर्मे॥दिगीशानांदिनेतत्र
तथाचंद्रार्कयोर्द्विजः॥पूजनंवासुदेवस्यगगनस्यचकारयेत्॥वह्निर्निष्काशयेद्गेहात्शंख
पुण्याहनिःस्वनैः॥चंद्रार्कयोर्दिगीशानांदिशांचगगनस्यच॥निक्षेपार्थमिदंदद्मितेमेरक्षं
तुसर्वदा॥अप्रमत्तंप्रमत्तंवादिवारात्रमथापिवा॥रक्षंतुसततंसर्वेदेवाःशक्रपुरोगमाः॥मा
धवीये॥ मार्कंडेयः॥ अग्रतोथप्रविन्यस्यशिल्पभांडानिसर्वशः॥शस्त्राणिचैव
वस्त्राणिततःपश्येत्तुलक्षणम्॥प्रथमंयत्स्पृशेद्बालस्ततोभांडंस्वयंतदा॥जीविकातस्यबा
लस्यतेनैवतुभविष्यति॥ अथोपवेशनं॥ प्रयोगपारिजाते॥याम्येविष्णु
धर्मेच॥ पंचमेचतथामासिभूमौतमुप वेशयेत्॥तत्रसर्वेग्रहाःशस्ताभौमोप्यत्र
विशेषतः॥उत्तरात्रितयंसौम्यंपुष्यर्क्षंशक्रदैवतम्॥प्राजापत्यंचहस्तश्चशस्तमाश्विनमित्र
भं॥वराहंपूजयेद्देवंपृथिवींचतथाद्विजाः॥रक्षैनंवसुधेदेविसदासर्वगतंशुभे॥आयुःप्रमाणंस
कलंनिक्षिपस्वहरिप्रिये॥अचिरादायुषस्त्वस्ययेकेचित्परिपंथिनः॥जीवितारोग्यवित्तेषुनि
र्दहस्वाचिरेणतान्॥धारिणिशेषभूतानांमातात्वमसिकामधुक्॥अजराचाप्रमेयाचसर्वभू
तनमस्कृता॥चराचराणांभूतानांप्रतिष्ठानात्वयाधृसि॥कुमारंपाहिमातस्त्वंब्रह्मातदनुमन्य
ता॥ अथान्नप्राशनं॥पारिजातेनारदः॥ जन्मतोमासिषष्ठेस्यात्सौ
रेणान्नाशनंपरं॥तदभावेष्टमेमासिनवमेदशमेपिवा॥द्वादशेवापिष्ठेस्यात्सौरेणान्नाशनं
परम्॥संवत्सरेवासंपूर्णे॥केचिदिच्छंतिपंडिताः॥मदनरत्नेलौगाक्षिः॥षष्ठेन्नप्राशनंजाते
षुदंतेषुवेति॥ शंखः॥ संवत्सरेन्नप्राशनमर्द्धसंवत्सरेवेति॥ नारदः॥ षष्ठेवाप्य
ष्टमेमासिपुंसांस्त्रीणांतुपंचमे॥सप्तमेमासिवाकार्यंनवान्नप्राशनंशुभं॥रिक्तांदिनक्षयंनंदां
द्वादशीमष्टमीममांत्यक्त्वान्यतिथयः॥प्रोक्ताःसितजीवज्ञवासराः॥चंद्रवारंप्रशंसंतिकृष्णे
चांत्यत्रिकंविना॥श्रीधरः॥आदित्यतिष्यवसुसौम्यकरानिलाश्विचित्राजविष्णुवरुणोत्तर
पौष्णमित्राः॥बालान्नभोजनविधौदशमेविशुद्धेछिद्रांविहायनवमींतिथयःशुभाःस्युः॥
वसिष्ठः॥बालान्नभुक्तौव्रतबंधनेचराज्याभिषेकेखलुजन्मधिष्ण्यम्॥शुभंत्वनिष्टंसततंवि
वाहेसीमंतयात्रादिषुमंगलेषु॥ मार्कंडेयविष्णुधर्मयोः॥ ब्रह्माणंशंकरंविष्णुं
चंद्रार्कौचदिगीश्वरान्॥भुवंदिशश्चसंपूज्यहुत्वावन्हौतथाचरुं॥देवतापुरतस्तस्यधात्र्युत्सं
गगतस्यच॥अलंकृतस्यदातव्यमन्नंपात्रेसकांचने॥मध्वाज्यदधिसंयुक्तंप्राशयेत्पायसंतु
वेति॥ अथाब्दपूर्तिः॥व्यवहारनिर्णये॥नवांबरधरोभूत्वापूजयेच्चचिरायुषं॥ मार्कंडेयं
नरोभक्त्यापूजयेत्प्रयतस्तथा॥ततोदीर्घायुषंव्यासंरामंद्रौणिंकृपंबलिं॥प्रल्हादंचहनूमंतं
विभीषणमथार्चयेत्॥स्वनक्षत्रंजन्मतिथिंभाग्यंसंपूजयेन्नरः॥षष्ठींचदधिभक्तेनवर्षेवर्षे
पुनःपुनः॥तिथिनक्षत्रनाम्नाभिस्तिलहोमोप्युक्तः॥आदित्यपुराणे॥सर्वैश्चजन्मदिवसेस्ना
तैर्मंगलवारिभिः॥गुरुदेवाग्निविप्राश्चपूजनीयाःप्रयत्नतः॥स्वनक्षत्रंचपितरौतथादेवःप्र

ज्ञायते॥प्रतिसंवत्सरंयत्नात्कर्तव्यश्चमहोत्सवः॥ कल्पचिंतामणौ॥ गुडदुग्धति-
लान्नद्याद्धस्तेग्रंथौचबंधयेत्॥गुग्गुलंनिंबसिद्धार्थदूर्वागोरोचनादिकम्॥संपूज्यभानुविघ्नेशौ
महर्षिंप्रार्थयेदिदम्॥चिरजीवीयथात्वंभोभविष्यामितथामुने॥रूपवान्वित्तवांश्चैवश्रियायु-
क्तश्चसर्वदा॥मार्कंडेयनमस्तेस्तुसप्तकल्पांतजीवन॥आयुरारोग्यसिद्ध्यर्थंप्रसीदभगवन्मुने॥
चिरजीवीयथात्वंतुमुनीनांप्रवरद्विज॥कुरुष्वमुनिशार्दूलतथामांचिरजीविनं॥मार्कंडेयम-
हाभागसप्तकल्पांतजीवन॥आयुरारोग्यसिद्ध्यर्थमस्माकंवरदोभव॥सतिलंगुडसंमिश्रमंज-
ल्यर्द्धमितंपयः॥मार्कंडेयाद्वरंलब्ध्वापिबाम्यायुर्विवृद्धये॥इतिपयःपिबेत्॥तिथितत्त्वेस्कांदे
॥खंडनंनखकेशानांमैथुनाध्वगमौतथा॥आमिषंकलहंहिंसांवर्षवृद्धौविवर्जयेत्॥ त-
त्रैवदीपिकायां॥ कृतांतकुजयोर्वारेयस्यजन्मतिथिर्भवेत्॥ अनृक्षयोगसंप्राप्तौवि-
घ्नस्तस्यपदेपदे॥कृतांतःशनिः॥तस्यसर्वौषधिस्नानंगुरुदेवाग्निपूजनं॥इतिमनुः॥ मृतेज-
न्मनिसंक्रांतौश्राद्धेजन्मदिनेतथा॥अस्पृश्यस्पर्शनेचैवनस्नायादुष्णवारिणा॥अत्रजन्मति-
थिरौदयिकीग्राह्या॥युगाद्यावर्षवृद्धिश्चसप्तमीपार्वतीप्रिया॥रवेरुदयमीक्षंतेनतत्रतिथियुग्म-
तेतिकल्पतत्त्वार्णववचनात्॥विशेषोमत्कृतशूद्रधर्मेज्ञेयः॥ अथकटिसूत्रं॥प्रयो-
गपारिजातेब्राह्मे॥ प्रतिसंवत्सरांतर्द्वैवस्पेन्द्रणांविधिपरं॥दत्वागोभूहिरण्यादित-
थास्वर्णादिनिर्मितं॥वध्नीयात्कटिसूत्रंचवासःसंगृह्यनूतनं॥दूर्वांकुरैर्यथाज्ञेनचरुणाचयि-
ताकिनं॥आयुष्यहोमंकृत्वाचतर्पयेत्पितृदेवताः॥० अथचौलम्॥ प्रयोगपा-
रिजातेबहुरुशिष्यः॥ जाताधिकारोजन्मादितृतीयेब्देतुचौलकं॥आद्यब्देकुर्वतेकेचि-
त् पंचमेब्देद्वितीयके॥उपनीत्यासहैवेतिविकल्पाःकुलधर्मतः॥बृहस्पतिः॥तृतीयेब्देशि-
शोर्गर्भाज्जन्मतोवाविशेषतः॥पंचमेसप्तमेवापिस्त्रियाःपुंसोपिवासमं॥तत्रैवनारदः॥जन्मत-
स्तुतृतीयेब्देश्रेष्ठमिच्छंतिपंडिताः॥पंचमेसप्तमेवापिजन्मतोमध्यमंभवेत्॥अधमंगर्भतःस्या-
त्तुनवमैकादशेपिचेति॥ पारिजातेबृहस्पतिः॥ उत्तरायणगेसूर्येविशेषात्सौ-
म्यगोलके॥शुक्लपक्षेशुभंप्रोक्तंकृष्णपक्षेशुभेतरम्॥अशुभोंत्यत्रिभागःस्यात्कृष्णपक्षेविधा-
[illegible]ते॥तत्रैववसिष्ठः॥द्वित्रिपंचमसप्तम्यामेकादश्यांतथैवच॥दशम्यांचत्रयोदश्यांकार्यंक्षौरं
विजानता॥ नृसिंहीये॥षष्ठ्यष्टमीचतुर्थीचनवमीचचतुर्दशी॥द्वादशीदर्शपूर्णेद्वेप्रतिपच्चै-
वनिंदिताः॥वसिष्ठः॥ रवेरंगारकस्यैवसूर्यपुत्रस्यचैवहि॥निंदितादिवसाःक्षौरेशेषाःका-
र्यकराःशुभाः॥ ज्योतिर्निबंधेबृहस्पतिः॥ पापग्रहाणांवारादौविप्राणांशु-
भदंरवेः॥क्षत्रियाणांक्षमासूनोर्विट्शूद्राणांशनेःशुभं॥हस्ताश्विविष्णुपौष्णाश्चश्रविष्ठादित्य-
पुष्यभं॥सौम्यचित्रेनवक्षौरेउत्तमानवतारकाः॥त्रीण्युत्तराणिवायव्यंरोहिणीवारुणंतथा॥
क्षौरेषण्मध्यमाःप्रोक्ताःशेषाद्वादशगर्हिताः॥निधनेजन्मनक्षत्रेवैनसेचंद्रमाष्टमे॥विपत्कारे
वधेक्षौरंप्रत्यरेचविवर्जयेत्॥अत्रलग्नशुद्धिरन्येचयोगाःज्योतिर्विद्भ्योज्ञेयाः॥अन्येचविशेषाः
श्मश्रुकर्मनिर्णयेवक्ष्यंते॥एतच्चशिशोर्मातरिगर्भिण्यांनकार्यंतदाह॥ज्योतिर्निबंधेमदनर-

नेच वृद्धगार्ग्यः॥ उत्तचूडाकृतौ माता यदि स्याद्गर्भिणी भवेत्॥ शस्त्रेण मृत्युमाप्नोति तस्मात्क्षौर
विवर्जयेत्॥ अस्यापवादमाह। तत्रैव नारदः। सूनोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत्। पंचाब्दा
त्प्रागथोर्ध्वं तु गर्भिण्यामपि कारयेत्। यदि गर्भविपत्तिः स्याच्छिशोर्वा मरणं यदि॥ सहोपनीत्या
कुर्याच्चेत्तदा दोषो न विद्यते॥ बृहस्पतिः॥ गर्भिण्यां मातरि शिशोः क्षौरकर्म न कारयेत्। व्रताभि
षेकेष्वेवं स्यात्कालो वेदव्रतेष्वपि॥ गर्भिण्यामपि पंचमासपर्यंतं न दोष इत्युक्तं मुहूर्त्तदीपि
कायां गार्ग्येण॥ पंचममासादूर्ध्वं मातुर्गर्भस्य जायते मृत्युरिति॥ मदनरत्ने बृहस्पतिः। उत्तचू
डाकृतौ माता गर्भिणी यदि सा भवेत्॥ विपद्यते गुरुस्तत्र दंपती शिशुरेव तः। गर्भे मातुः कुमार
स्य न कुर्याच्चौलकर्म तु॥ पंचमासादधः कुर्यादत ऊर्ध्वं न कारयेत्॥ गर्गः ज्वरसो
त्पादने यस्य लग्नं तस्य न कारयेत्॥ दोषनिर्गमनात्पश्चात्स्वस्थो धर्मं समाचरेत्॥ लग्नमिति
मंगलोपलक्षणम्॥ ज्योतिर्गर्गः॥ विवाहोत्सवयज्ञेषु माता यदि रजस्वला॥ त
दा स मृत्युमाप्नोति पंचमं दिवसं विना॥ वसिष्ठः॥ यस्य मांगलिकं कार्यं तस्य माता
रजस्वला॥ ऊर्ध्वं न देवा॥ तत्रैव बृहस्पतिः॥ प्रारब्धमभ्युदयश्राद्धं पुत्रसंस्कारकर्मणि। पत्नी रज
स्वला चेत्स्यान्न कुर्यात्तत्पिता तदा॥ पितेति कर्त्तृमात्रोपलक्षणम्। संकटे तु वाक्यसारे उक्तम्।
अलाभे सुमुहूर्त्तस्य रजोदोषे ह्युपस्थिते॥ श्रियं संपूज्य विधिवत्ततो मंगलमाचरेत्। एतच्च मंड
नोत्तरं न कार्यं। न मंडनाच्चापि हि मुंडनं च गोत्रैकतायां यदि नाद्भेद इति॥ मदनरत्ने वसिष्ठो
क्तेः॥ तत्रैव कात्यायनः॥ कुलेऽऋतुत्रयादर्वाङ्मंडनान्न तु मुंडने॥ प्रवेशान्निर्गमो नेष्टो न कुर्या
न्मंगलत्रयम्॥ वृद्धमनुः॥ एकमातृजयोरेकवत्सरे पुरुषस्त्रियोः॥ न समानक्रियां कुर्यान्मा
तृभेदे विधीयते॥ आशौचे तु संग्रहे॥ संकटे समनुप्राप्ते सूतके समुपागते॥ कूष्मांडीभिर्घृतं हु
त्वा गां च दद्यात्पयस्विनीम्॥ चूडोपनयनोद्वाहप्रतिष्ठादिकमाचरेदिति॥ ज्योतिर्निबंधे व
शिष्ठः षोडशे वर्षे विवाहादेस्तथैव च॥ अंतर्वत्न्यां च जायायां नेष्यते मुंडनं क्वचित्। अयमविशे
षो विवाहप्रकरणे वक्ष्यते॥ दीपिकायां॥ न चूडा जन्मभाग्येपदारुणे सुशनौ कुजे॥ प्रतिपद्भ
द्ररिक्तासु विद्यारंभस्तु पंचमे॥ प्रयोगरत्ने॥ मध्ये शिरसि चूडा स्याद्वसिष्ठानां तु
दक्षिणे॥ उभयोः पार्श्वयोरत्रिकश्यपानां शिखा मता॥ माधवीये त्वेवम्॥ आपस्तंबस्त्वा
ह। तूष्णीं केशान्विनीय॥ यथर्षि शिखा निदधाति॥ यथर्षि॥ प्रवरसंख्यया॥ तासां मध्यशिखा
वर्ज्जमुपनयने वपनं कार्यम्॥ प्रतिदिशं प्रवपतीत्युपनयने तैत्तिरीयोक्तेः॥ रिक्तो वा एषोऽनपिहि
तो यन्मुंडस्तस्यैतदपिधानं यच्छिखेति श्रुतेः॥ विशिखो व्युपवीतश्च यत्करोति न तत्कृतमिति
निषेधाच्च॥ सर्वे तु वचनात्सशिखं॥ वपनमिति सुदर्शनभाष्ये उक्तम्। यत्तु कुमार्या विशिखा
इवेति लिंगं तच्छंदोगपरं॥ अपरार्के मदनरत्ने च लौगाक्षिः॥ दक्षिणतः कमुजा वसिष्ठाना
मुभयतोऽत्रिकश्यपानां मुंडा भृगवः पंचचूडाः॥ अंगिरसो वाजिमेके मंगलार्थं॥ शिखिनो
न्ये यथाकुलधर्मं वेति॥ कमुजा शिखा॥ वाजिः केशपंक्तिः स्मृतिदर्पणे। एका शिखा दक्षि
णतो वसिष्ठगोत्रस्य पंचांगिरसां भृगोस्तु॥ निकाशिखा कश्यपगोत्रजानां शिखो भयत्रापि

यथाकुलंवा॥एतच्छूद्रातिरिक्तविषयं॥शूद्रस्यानियताःकेशवेशाइतिवसिष्ठोक्तेः।यत्तुया
ज्ञे॥नशिखीनोपवीतीस्यान्नोच्चरेत्संस्कृतांगिरमितिशूद्रमुपक्रम्योक्तम्।तदसच्छूद्रस्येति
केचित्॥विकल्पइतियुक्तम्॥अतएवहारीतः।स्त्रीशूद्रौतुशिखांछित्वाक्रोधाद्वैराग्यतोपि
वा॥प्राजापत्यंप्रकुर्वीतांनिष्कृतिर्नान्यथाभवेत्॥एतत्परिग्रहपक्षे॥अत्रदेशभेदाद्व्यव
स्थेतिदिक्॥ ज्योतिर्निबंधे॥ नन्दोत्तरदेशेतुसिंहस्थदेवमंत्रिणि।शुभक
र्मनकुर्वीतनिषेधोनास्तिदक्षिणे॥ अत्रभोजनेप्रायश्चित्तमुक्तंमाधवीये॥निर्वृ
त्तेचूडहोमेतुप्राङ्नामकरणात्तथा॥चरेत्सांतपनंभुक्त्वाजातकर्मणिचैवहि।अतोन्येषु
तुसंस्कारेषूपवासेनशुद्ध्यति॥एतेसंस्काराःस्त्रीणाममंत्रकाःकार्य्याः॥होमस्तुसमंत्रक
इति॥प्रयोगपारिजाते॥आश्वलायनोपि॥होमस्तत्पंतुपुंवत्स्यात्स्त्रीणांचूडाकृतावपीति
मनुरपि॥अमंत्रिकातुकार्येयंस्त्रीणामावृदशेषतइतिहोमोप्यमंत्रइत्येके॥संस्काराःस्त्री
णांमहोमकास्तूष्णींस्युरितिस्मृत्यर्थसारेहोमोनेतिस्पष्टमुक्तत्वात्॥अथविद्यारंभः।मदनरत्नेनृ
सिंहः।अक्षरस्वीकृतिंकुर्यात्प्राप्तेपंचमहायने॥उत्तरायणगेसूर्येकुंभमासंविवर्जयेत्।
दीपिकायाम्।पंचवर्षेपञ्चमकेकालेषष्ठीरिक्ताशनिकुजं॥अनध्यायान्विनात्वादिवंयंथश्च
तंगुरुं।श्रीधरः॥हस्तादित्यसमीरमित्रपुरुजिज्ज्येष्ठाश्विचित्राच्युतेष्वाराकोंशदिनोदयादि
रहितेराशौस्थिरेचोभ॥यो॥पक्षेपूर्णनिशाकरेप्रतिपदंरिक्तांविहायाष्टमींषष्ठीमष्टम
ष्टमशुद्धभाजिभवनेप्रोक्तास्मरेस्वीकृतिः।विष्णुधर्मे।पूजयित्वाहरिंलक्ष्मींतथादेवींसरस्वती
म्॥स्वविद्यासूत्रकारांश्चस्वविद्यांश्चविशेषतः॥एतेषामेवदेवानांनाम्नातुजुहुयाद्धृतं॥द
क्षिणाभिर्द्विजेन्द्राणांकर्तव्यंचात्रपूजनं॥अथधनुर्विद्या॥दीपिकायां॥अदितिगुरुयमार्क
स्वातिचित्राश्विपित्र्यध्रुवहरिवसुमूलेष्विंदुभागांत्यमैत्रेऽनिशशिबुधवारेविष्णुबोधेवियो
षेसुसमयतिथियोगेचापिविद्याप्रदानं॥अथानुपनीतस्यविशेषः॥प्रागुपनयनात्कामचा
रवादभक्षाइति॥भक्षणंलशुनादेरपीतस्यविशेषः॥प्रागुपनयनात्कामचारवादभक्षाइति
नभक्षणंलशुनादेरपीतिहरदत्तः।अपरार्के॥वृद्धशातातपः॥शिशोरभ्युक्षणंप्रोक्तंबालस्या
चमनंस्मृतम्।रजस्वलादिसंस्पर्शेस्नानमेवकुमारके॥प्राक्चूडाकरणाद्बालःप्रागन्नप्राश
नाच्छिशुः॥कुमारकस्तुविज्ञेयोयावन्मौंजीनिबंधनम्॥आपस्तंबोपि॥अन्नप्राशनात्त्रया
तोभवत्यासंवत्सरादित्येकेइति।गौतमीये॥नतद्युपस्पर्शनादाशौचं॥तस्यानुपनीतस्यचंडा
लादिस्पृष्टस्यापिस्पर्शेन्नस्नानं॥इदंचषड्वर्षात्प्राक्॥ऊर्ध्वंतुस्नानंभवत्येव॥बालस्य
पंचमाद्वर्षाद्रक्षार्थंशौचमाचरेदितिस्मृतेः॥कामचाराद्विकेप्येवम्॥ऊनेकादशवर्षस्य
पंचवर्षात्परस्यच॥चरेद्गुरुःसुहृच्चैवप्रायश्चित्तंविशुद्धये॥अतोबालतरस्यास्यनापराधो
नपातकमितिस्मृतेरितिहरिदत्तः।स्मृत्यर्थसारेप्येवम्॥अथोपनयनम्॥आश्वलायनः॥
गर्भाष्टमेष्टमेवाब्देपंचमेसप्तमेपिवा।द्विजत्वंप्राप्नुयाद्विप्रोवर्षेत्वेकादशेनृपः॥मनुःब्रह्म
वर्चसकामस्यकार्यंविप्रस्यपंचमे॥राज्ञोबलार्थिनःषष्ठेवैश्यस्यार्थार्थिनोष्टमे॥विष्णुः

षष्ठेतुधनका

तोविप्रःपुनःसंस्कारमर्हति॥ ज्योतिर्निबंधेनारदः सर्वेषांजीवशुक्रार्कवाराःप्रोक्ता
व्रतेशुभाः॥चंद्रार्कौमध्यमौज्ञेयौसामवाहुजयोःकुजः॥शाखाधिपतिवारश्चशाखाधिपबलं
तथा॥शाखाधिपतिलग्नंचदुर्लभंत्रितयंव्रते॥शाखाधिपाश्चरत्नसंग्रहे॥ऋगथर्वसाम
यजुषामधिपागुरुसौम्यभौमसिताः॥जीवसितौविप्राणांक्षत्रस्यारोक्षमूर्विशांचंद्रइतिपा
रिजातेबृहस्पतिः॥बह्वृचानांगुरुर्वारोयजुर्वेदजुषांकवेः॥सामगानांधरासूनोरथर्वविदुषां
रवेः॥अत्रलग्नादिदैवज्ञेभ्योज्ञेयं॥विस्तरभयान्नोच्यते॥लल्लः॥व्रतेन्हिपूर्वसंध्यायांवारि
दोयदिगर्जति॥तद्दिनेस्यादनध्यायोव्रतंतत्रविवर्जयेत्॥ ज्योतिर्निबन्धे॥ नांदीश्रा
द्धेकृतेचेत्स्यादनध्यायस्त्वकालिकः॥तदोपनयनंकार्य्यंवेदारंभंनकारयेत्॥एतद्बह्वृचा
तिरिक्तानांतेषांतद्दिनेवेदारंभाभावात्॥अतस्तेषामुपनयनंनभवत्येव॥एतच्चप्रातस्तनि
ते॥सायंस्तनितेतुदिवैवचरुंश्रपयित्वासायंसंध्योत्तरंहोमंकुर्य्यात्॥नसंध्यागर्जितकाले
नष्टस्तुस्यात्तद्दूषिते॥ब्रह्मौदनंपचेदग्नौपक्वमन्नंनदुष्यतीतिसंग्रहोक्तेरिति॥ प्रयोगर
त्नेभट्टचरणाः॥ अत्रशांतिरप्युक्ता॥नृसिंहप्रसादे॥ब्रह्मौदनविधेःपूर्वमब्दोयेगर्जि
तेयदि॥तदाविघ्नकरंज्ञेयंवटोरध्ययनस्यतु॥तस्यशांतिप्रकारंतुवक्ष्येशास्त्रानुसारतः॥प्र
धानंपायसंसाज्यंद्रव्यंशांतिपजीभवेत्॥सूक्तंबृहस्पतेर्विद्वान्पठेत्मंत्राविरुद्धये॥गायत्री
चैवमंत्रःस्यात्प्रायश्चित्तंतुसर्पिषा॥धेनुंसवत्सकांदद्यादाचार्य्यायपयस्विनीं॥ब्राह्मणान्
भोजयेत्पश्चात्ततोब्रह्मौदनंचरेत्॥उपनयनेचाधिकारिणः॥ माधवीयेवृद्धमनुनो
क्तेः॥ पितापितामहोभ्राताज्ञातयोगोत्रजोग्रजः॥उपानयेधिकारीस्यात्पूर्वाभावेप
रःपरः॥प्रयोगरत्ने॥पितैवोपनयेत्पुत्रंतदभावेपितुःपिता॥तदभावेपितुर्भ्रातातदभावेपिसो
दरः॥पितेतिविप्रपरंनक्षत्रियादेः॥तेषांपुरोहितएव॥उपनयनस्यदृष्टार्थत्वात्॥तेषांचा
ध्यापनेनधिकारात्॥अत्रपितृमस्यज्येष्ठभ्रात्रभावेधिकारः॥असंस्कृतास्तुसंस्कार्याभ्रा
तृभिःपूर्वसंस्कृतैरितियाज्ञवल्क्योक्तेः॥तेनेदमविभक्तपरम्॥पूर्वंतुविभक्तपरम्॥मातुःरजो
दोषेतुप्रागुक्तम्॥ अथषण्ढमूकादीनांविशेषः॥ प्रयोगपारिजातेब्राह्मे॥
ब्राह्मण्यांब्राह्मणाज्जातोब्राह्मणःस्यादितिश्रुतिः॥तस्माच्चखंडबधिरकुब्जवामनपंगुषु॥जडगद्ग
दरोगार्त्तशुष्कांगविकलांगिषु॥मत्तोन्मत्तेषुमूकेषुशयनस्थेनिरिंद्रिये॥ध्वस्तपुंस्त्वेषुचैतेषु
संस्काराःस्युर्यथोचितम्॥मत्तोन्मत्तौनसंस्कार्य्याविति केचित्प्रचक्षते॥कर्मस्वनधिकाराच्च
पातित्यंनास्तिचैतयोः॥तदपत्यंचसंस्कार्य्यमपरेत्वाहुरन्यथा॥संस्कारमंत्रहोमादीन्करोत्या
चार्य्यएवतु॥उपनेयांश्चविधिवदाचार्यःस्वसमीपतः॥आनीयाग्निसमीपंवासावित्रीस्पृश्य
वाजयेत्॥कमासीकरणादन्यत्सर्वंविप्रेणकारयेत्॥एवमेवद्विजैर्जातौसंस्कार्यौकुंड
गोलकावितिस्मृत्यर्थसारेप्येवम्॥कुंडगोलकयोःसंस्कार्यत्वंश्राद्धेनिषेधश्चक्षेत्रजपुत्रविष
यः॥अमस्याब्राह्मण्येनोपनयनाद्यप्राप्तिःइत्यपरार्कः॥उपनयनंचकुमारंभोजयित्वाकार्य
म्॥प्रागेवैनंतदहर्भोजयंतीतिमदनपारिजातेगोभिलोक्तेः॥गायत्र्युपदेशश्चोत्तरतोग्नेःकार्यः

॥उत्तरेणाग्निमुपविशतःप्राङ्मुखश्चाचार्यःप्रत्यङ्मुखइतरोधीहिभोइतिशांखायनसूत्रोक्तेः
यद्यपिकात्यायनेनाथास्मैसावित्रीमन्वाहोत्तरतोग्नेःप्रत्यङ्मुखायेत्युक्त्वादक्षिणतस्तिष्ठतआ
सीनायवैकेइतिविकल्पउक्तः॥तथापिकातीयानामेवसः॥बह्वृचानांतूत्तरएव॥वैदेक्यात्॥भि
क्षायांविशेषमाहकात्यायनः॥मातरमेवाग्रेभिक्षेत॥ पराशरमाधवीये॥ मातरं
वास्वसारंवामातुर्वाभगिनींनिजां॥भिक्षेतभिक्षांप्रथमंयाचैनंनविमानयेत्॥ अथसं
स्कारलोपेशौनकः॥ आरभ्याधानमाचौलात्कालेतीतेतुकर्मणां॥व्याहृत्याज्यंसुसं
स्कृत्यहुत्वाकर्मयथाक्रमं॥एतेष्वेकैकलोपेतुपादकृच्छ्रंसमाचरेत्॥चूडायाअर्द्धकृच्छ्रः
स्यादापदित्वेवमीरितम्॥अनापदितुसर्वत्रद्विगुणंद्विगुणंचरेत्॥ पारिजातेकात्याय
नः॥ लुप्तेकर्मणिसर्वत्रप्रायश्चित्तंविधीयते॥प्रायश्चित्तेकृतेपश्चाल्लुप्तंकर्मसमाचरे
त्॥स्मृत्यर्थसारेप्येवम्॥कारिकायांतुप्रायश्चित्तेकृतेतीतंकर्मकृताकृतमित्युक्तम्॥प्राय
श्चित्तेकृतेपश्चादतीतमपिकर्मवै॥कार्यमित्येकआचार्यानेत्यन्येतुविपश्चितइति॥ त्रि
कांडमंडनेनतु॥ कालातीतेषुकार्येषुप्राप्तेष्वन्यपरेषुच॥कालातीतानितान्येवविद
ध्यादुत्तराणितुइत्युक्तम्॥तत्रसर्वेषांतंत्रेणनांदीश्राद्धंकुर्यात्॥देशकालकर्तॄणैक्यात्॥गा
णपाः क्रियमाणानांमातॄणांपूजनंसकृत्॥सकृदेवभवेच्छ्राद्धमादौनपृथगादिष्वितिछंदो
गपरिशिष्टात्॥एतद्बहूनामपत्यानांयुगपत्संस्कारकरणविषयमितिवोपदेवः॥अतीत
संस्काराणांयुगपत्करणइत्यन्ये॥तत्रापिचौलस्यउपनीत्यासहेतिपक्षेउपनीतिदिनेए
वतन्मुण्डनंनपूर्वदिने॥सहत्वस्यदिवसैक्येसन्निकृष्टतरत्वात्॥वृद्धाचारोप्येवं॥उपनीतिदिने
मध्यान्हसंध्यामाह॥ पारिजातेजैमिनिः॥ यावद्ब्रह्मोपदेशस्तुतावत्संध्यादिकंन
च॥ततोमध्यान्हसंध्यादिसर्वंकर्मसमाचरेदिति॥ब्रह्मगायत्री॥यत्तुवचनम्॥उपायनेतुक
र्तव्यंसायंसंध्येउपासनं॥आरभेद्ब्रह्मयज्ञंतुमध्यान्हेतुपरेहनीति॥तच्छाखांतरविषयमितिपा
रिजातः॥विकल्पइतियुक्तंपश्यामः॥उपनयनाग्निस्त्रिरात्रंधार्य्यः॥अहमेतमग्निंधारयंनी
त्यापस्तंबोक्तेः॥बौधायनसूत्रेतुसदाधारणमप्युक्तम्॥उपनयनादिरग्निस्तमौपासनमित्या
चक्षतेपाणिग्रहणादित्येके॥नित्योधार्योनुगतोनिर्मथ्यइति॥इदंजातारणिपक्षे॥अन्यथा
मंथनासंभवात्॥ब्रह्मयज्ञेविशेषमाह॥ तत्रैवजैमिनिः॥ अनुपाकृतवेदस्यक
र्तव्योब्रह्मयज्ञकः॥वेदस्थानेतुसावित्रीगृह्यतेतत्समीपतइति॥येषांतद्दिनएववेदारंभस्तेषां
नेदमितिदिक्॥ अथब्रह्मचारिधर्माः॥याज्ञवल्क्यः॥ मधुमांसांजनोच्छिष्टशुक्त
स्त्रीप्राणिहिंसनं॥भास्करालोकनाश्लीलपरिवादादिवर्जयेत्॥मनुः॥ अभ्यंगमंजनंचाक्ष्णो
रुपानच्छत्रधारणं॥वर्जयेदितिप्रकृतम्॥ पारिजाते॥कौर्मे॥नादर्शंचैवबीक्षेतनाच
रेद्दंतधावनं॥गुरूच्छिष्टंभेषजार्थंप्रयुंजीतनकामतः॥एतन्निषिद्धमध्वादिविषयम्॥अन्य
स्यगुरूच्छिष्टस्यसर्वदाप्राप्तेः॥सचेद्व्याधीयीतकामंगुरोरुच्छिष्टंभेषजार्थंसर्वंप्राश्नीयादिति
॥वसिष्ठोक्तेः॥ज्येष्ठभ्रातुरित्यपिज्ञेयम्॥पितुर्ज्येष्ठस्यभ्रातुरुच्छिष्टंभोज्यमित्यापस्तंबोक्तेः॥

गुरुपुत्रेतुस्मृत्यर्थसारे उक्तम्। गुरुवद्गुरुपुत्रः स्यादन्यत्रोच्छिष्टभोजनात्॥ प्रचेताः॥ तांबूलाभ्यंजनं
चैवकांस्यपात्रेचभोजनं॥ यतिश्चब्रह्मचारीचविधवाचविवर्जयेत्॥ यमः॥ मेखलामजिनंदंडमुप
वीतंचनित्यशः॥ कौपीनंकटिसूत्रंचब्रह्मचारीतुधारयेत्॥ अग्नींधनंभैक्ष्यचर्यामधःशय्यांगुरो
र्हितं॥ कुर्यादितिशेषः॥ मेखलामाहाश्वलायनः॥ तेषांमेखलामौंजीब्राह्मणस्य धनुर्ज्याक्षत्रि
यस्यावीवैश्यस्येति॥ आचार्यः॥ त्रिवृतामेखलाकार्यात्रिवारंस्यात्समावृता॥ तद्ग्रंथयस्त्रयःका
र्याः पंचवासप्तवापुनः॥ मनुः॥ मौंजीत्रिवृत्समाश्लक्ष्णाकार्याविप्रस्यमेखला॥ त्रिवृताग्रंथिनैके
नत्रिभिःपंचभिरेववा॥ अथदंडाः॥ मनुः॥ ब्राह्मणोबैल्वपालाशौक्षत्रियोवाटखा
दिरौ॥ पैप्पलौदुंबरौवैश्योदंडानर्हंतिधर्मतः॥ एषामभावेगौतमः॥ यज्ञियोवासर्वेषांमूर्द्धलला
टनासाग्रप्रमाणाइति॥ अजिनमाहाश्वलायनः॥ अहतेनवाससासंवीतमैणे
येनवाजिनेनब्राह्मणोरौरवेणक्षत्रियआजेनवैश्यमिति॥ यद्यप्यैणेयशब्देनमृगीचर्मैवोच्यते
स्तथापाठमितियाज्ञिकास्मृतेः॥ ऐणेयमेण्याश्चर्माद्यमेणस्यैणमुभेत्रिष्वित्यमरकोशाच्च॥ त
थापिकृष्णरुरुबस्तान्यजिनानीतिशंखोक्तेः सर्वेषांवारौरवमितिशंखोक्तेःचमृगचर्मणासह
मृगीचर्मणोविकल्पोज्ञेयः॥ वस्त्राजिनयोस्तुविकल्पः कार्पासंवाविकृतमितिगौतमोक्तेः
अथयज्ञोपवीतम्॥ मनुः॥ कार्पासमुपवीतंस्याद्विप्रस्योर्ध्ववृतंत्रिवृत्॥ मदनपारिजातेदेवलः॥
कार्पासक्षौमगोवालशणवल्कतृणादिकं॥ यथासंभवतोधार्यमुपवीतंद्विजातिभिः॥ शुचौदे
शेशुचिःसूत्रंसंहतांगुलिमूलके॥ आवेष्ट्यषण्णवत्यातत्त्रिगुणीकृत्ययत्नतः॥ अब्लिंगकैश्चमं
त्रैःसम्यक्प्रक्षाल्योर्ध्ववृतंत्रिवृत्॥ अप्रदक्षिणमावृत्तंसावित्र्यात्रिगुणीकृतम्॥ ततःप्रदक्षिणाव
र्तंसमंस्यान्नवसूत्रकं॥ त्रिरावेष्ट्यदृढंबध्वाब्रह्मविष्णुशिवान्नमेत्॥ तन्नवतंतुकार्यंसावित्र्या।
त्रिगुणंकुर्यान्नवसूत्रंतुतद्भवेदितितेनैवोक्तेः॥ भृगुः॥ वामावर्त्तवलितंत्रिगुणंकृत्वादक्षिणा
वर्त्तवलितंत्रिगुणंकार्यं॥ सएकस्तंतुः॥ एवंत्रितंतुकमित्यर्थः॥ छंदोगपरिशिष्टे॥ त्रिवृदूर्ध्व
वृतंकार्यंतंतुत्रयमधोवृतं॥ त्रिवृतंचोपवीतंस्यात्तस्यैकोग्रंथिरिष्यते॥ ऊर्ध्ववृतंदक्षिणावा
र्तमूर्ध्वंकृत्वावलितं॥ कात्यायनः॥ पृष्ठदेशेचनाभ्यांचधृतंयद्विंदतेकटिं॥ तद्धार्यमुपवीतं
स्यान्नातिलंबंनचोच्छ्रितम्॥ वसिष्ठः॥ नाभेरूर्ध्वमनायुष्यमधोनाभेस्तपःक्षयः॥ तस्मान्नाभि
समंकुर्यादुपवीतंविचक्षणः॥ पारिजातेदेवलः॥ उपवीतंवटोरेकंद्वेतथेतरयोः
स्मृते॥ एकमेवयतीनांस्यादितिशास्त्रस्यनिश्चयः॥ सएव॥ बहूनिवायुष्कामस्य॥ तत्रमंत्रमाह
सएव॥ यज्ञोपवीतमितिवाव्याहृत्यावापिधारयेत्॥ हेमाद्रौ॥ यज्ञोपवीतेद्वेधा
र्येश्रौतेस्मार्तेचकर्मणि॥ तृतीयमुत्तरीयार्थेवस्त्राभावेतदिष्यते॥ देवलः॥ सावित्र्यादशकृ
त्वोद्भिर्मंत्रिताभिस्तदुक्षयेत्॥ विच्छिन्नंवाप्यधोयातंभुक्त्वानिर्मितमुत्सृजेत्॥ मनुः॥ मेख
लामजिनंदंडमुपवीतंकमंडलुं॥ अप्सुप्रास्यविनष्टानिगृह्णीतान्यानिमंत्रवत्॥ अथैतत्प्रा
यश्चित्तम्॥ मनुः॥ अकृत्वाभैक्ष्यचरणमसमिध्यचपावकं॥ अनातुरःसप्तरात्रमवकीर्णिव्रतं
चरेत्॥ अमत्याआपदित्यागेतुयाज्ञवल्क्यः॥ भैक्ष्याग्निकार्येत्यक्त्वातुसप्तरात्रमनातुरः॥ का

मावकीर्णोरेताभ्यांजुहुयादाहुतिद्वयं॥उपस्थानंततःकुर्य्यात्समासिंचत्वनेनतु॥मंत्रास्तु॥
॥मिताक्षरायांज्ञेयाः॥सकृल्लोपेतुजपविधाने॥मानसीकेजपेन्मंत्रंशतसंख्यंशिवालये॥अ
ग्निकार्य्यंविनाभुंक्तेनपापंब्रह्मचारिणः॥ स्मृत्यर्थसारेतु॥ संध्याग्निकार्य्यलोपे
स्नात्वाष्टसहस्रंजपः॥भिक्षालोपेष्टशतं॥अभ्यासेद्विगुणंपुनःसंस्कारश्चेत्युक्तं॥आशार्केसं
वर्त्तः॥यःसंध्यांचैवनोपास्तेअग्निकार्यंयथाविधि॥गायत्र्यष्टसहस्रंतुजपेत्स्नात्वासमाहितः॥अ
ग्निकार्य्यंसंध्याद्वयेकार्य्यम्॥अग्निकार्य्यंततःकुर्य्यात्संध्ययोरुभयोरपीति॥ याज्ञवल्क्योक्तेः
सायमेववा॥सायमेवाग्निमिन्धीतेत्येकेइतिलोगाक्षिणोक्तेः॥ पारिजातेशातातपः॥
ब्रह्मचारीतुयोश्नीयान्मधुमांसंतथैवच॥प्राजापत्यंचरेत्कृच्छ्रंव्रतशेषंसमापयेत्॥कृच्छ्रविधाने॥
सर्वोधिप्राजयेन्मंत्रलक्षंचैवशिवालये॥ब्रह्मचारीस्वधर्मस्थःस्खलनंचेत्स्वर्गमेवनत्॥ स्त्रीसंगमे
तुमनुः॥ अवकीर्णीतुकाणेनगर्दभेनचतुष्पथे॥स्थालीपाकविधानेनयजेद्वैनिर्ऋतिंनि
शि॥विस्तरस्तुमिताक्षरादौज्ञेयः॥उपवीतनाशेतुहारीतः॥मनोव्रतपतीभिश्चतस्रआज्याहुती
र्हुत्वापुनःप्रतीयात्॥ तत्रैवमरीचिः॥ ब्रह्मसूत्रंविनाभुंक्तेविण्मूत्रंकुरुतेथवा
॥गायत्र्यष्टसहस्रेणप्राणायामेनशुध्यति॥मनुः॥भोशब्दंकीर्त्तयेदंतेस्वस्यनाम्नोभिवादने॥
आयुष्मान्भवसौम्येतिवाच्योविप्रोभिवादने॥अकारश्चास्यनाम्नोंतेवाच्यःपूर्वाक्षरःप्लुतः॥श
र्मन्नितिनकारांतश्शर्वइत्यर्थः॥अभिवादनप्रत्यभिवादनादौविशेषः॥स्मृत्यर्थसारपारिजात
दौज्ञेयः॥ यमः॥ आयानयिकानीयांसंसंध्यायामभिवादयेत्॥विनाशिष्यंचपुत्रंचदौहित्रं
दुहितृःपतिं॥ अथपुनरुपनयनं॥पारिजातेशातातपः॥ लशुनंगृंजनंजग्ध्वाप
लांडुंचतथाशुनं॥उष्ट्रमानुषकेभाश्वरासभीक्षीरभोजनात्॥उपायनंपुनःकुर्य्यात्तप्तकृच्छ्रंचरे
न्मुहुरिति॥ हेमाद्रौवृद्धमनुः॥ जीवन्यदिसमागच्छेद्घृतकुंभेनिमज्यच॥उद्धृत्यस्ना
पयित्वास्यजातकर्मादिकारयेत्॥ तत्रैवपाद्मे॥ प्रेतशय्याप्रतिग्राहीपुनःसंस्कारम
र्हति॥चंद्रिकायांबौधायनः॥ सिंधुसौवीरसौराष्ट्रान्तथाप्रत्यंतवासिनः॥अंगवंगकलिंगां
श्चगत्वासंस्कारमर्हति॥ हेमाद्रौप्रायश्चित्तकांडेवृद्धगौतमः॥खरमुष्ट्रंचमहिषमनड्वाहम
जंतथा॥वस्तमारुह्यपुरुषःकोशेचांद्रंविनिर्दिशेत्॥ मार्कंडेयः॥ खरमारुह्यविप्र
स्तुयोजनंयदिगच्छति॥तत्सकृच्छ्रत्रयंप्रोक्तंशरीरस्यविशोधनं॥पुनर्जन्मप्रकुर्वीतघृतगर्भ
विधानतः॥ मदनरत्नेमिताक्षरायांच स्नानमात्रमुक्तम्॥ मनुः अ
ज्ञानात्प्राश्यविण्मूत्रंसुरासंसृष्टमेवच॥पुनःसंस्कारमर्हंतित्रयोवर्णाद्विजातयः॥ मिता
क्षरायांपराशरः॥ यःप्रत्यवसितोविप्रःप्रव्रज्यातोविनिर्गतः॥अनाशकनिवृत्तश्चगार्ह
स्थ्यंचेच्चिकीर्षति॥सचरेत्त्रीणिकृच्छ्राणित्रीणिचांद्रायणानिच॥जातकर्मादिभिःसर्वैःसं
स्कृतःशुद्धिमाप्नुयात्॥बौधायनसूत्रे॥ अथोपनीतस्यव्रतानिभवंतिनास्योच्छिष्टंभुं
जीतान्यत्रपितृज्येष्ठाभ्यांनस्त्रियासहभुंजीतमधुमांसश्राद्धसूतकान्नानिदशाहसंधिनीक्षीरं
च्छत्राकनिर्यासोविलापनंगणान्नंगणिकान्नमित्येतेषुपुनःसंस्कारःप्रतिषिद्धदेशगमनमित्ये

केषामथाप्युदाहरंति॥सुराष्ट्रं सिंधुसौवीरमवंतीं दक्षिणापथं॥एतानिब्राह्मणोगत्वापुनःसं
स्कारमर्हति॥अथपुनःसंस्कारंव्याख्यास्यामो देवयजनप्रभृत्याग्निमुखान्कृत्वापालाशीं समिध
माज्येनाक्त्वाभ्याधायवाचयति॥पुनस्त्वादित्यारुद्रावसवः० कामाःस्वाहेत्यथान्यत्प्रायश्चित्तेजु
होतियन्मआत्मनोमिन्दाभूत्पुनरग्निश्चक्षुरदादिति॥द्वाभ्यामथपक्वाज्जुहोतिसप्ततेअग्ने॰घृतेन
स्वाहेत्यथाआहुतीरुपजुहोतियेनदेवाःपवित्रेणेतितिसृभिरनुच्छंदसंस्विष्टकृत्प्रभृतिसिद्धमा
धेनुवरप्रदानात्स्थापरमापरिधानात्कृत्वापालाशीं समिधमाधायाथान्यत्प्रायश्चित्तेजुहोत्य
व्याहृतीर्जुहोति॥ अथाप्यत्रब्राह्मणवचनादेवसावित्र्याशतकृत्वोघृतमभिमंत्र्यप्राश्यपूतः
प्रायश्चित्तीभवति॥गुरोर्वाप्युच्छिष्टंभुंजीतेत्याप्युदाहरंति॥वपनंदक्षिणादानंमेखलादंडम
जिनंभैक्ष्यचर्याव्रतानिचनिवर्त्तंतेपुनःसंस्कारकर्मणीति॥ आश्वलायनगृह्ये॥ य
थोपेतस्यर्त्विगादिनापुनः॥संस्कारउक्तः॥तथा॥पित्रादिव्यतिरेकेणब्रह्मचारिणःप्रेतकर्म
करणेपुनरुपनयनमित्यपरार्कादयः॥त्रिस्थलीसेतौ॥कर्मनाशाजलस्पर्शात्करतोयावि
लंघनात्॥गंडकीबाहुतरणात्पुनःसंस्कारमर्हति॥ गौडास्तु॥ करतोयाजलस्पर्शा
त्कर्मनाशाविलंघनादितिपठंति॥तन्न॥दानधर्मेषुकरतोयास्नानेप्राशस्त्योक्तेः॥करतोये
सदानीरेसरिच्छ्रेष्ठेतिविश्रुते॥आप्लावयसियोराणांपापंहरकरोद्भवे इतिस्मृतिदर्पणेचंद्रिका
लिखितस्नानमंत्राच्च॥ पाराशरः॥ अजिनंमेखलादंडोभैक्ष्यचर्याव्रतानिच॥
निवर्त्तंतेद्विजातीनांपुनःसंस्कारकर्मणि॥ हरदत्तस्तु॥ यएकंवेदमधीत्यान्यंवे
दमध्येतुमिच्छतितस्यपुनरुपनयनंतेनप्रतिवेदमुपनयनंकर्त्तव्यमित्याह॥ चान्येनैतन्मन्यंते॥
सर्वेभ्योवेदेभ्यःसावित्र्यनूच्यत॥ इत्यापस्तंबोक्तेः॥ तद्विधिःकारिकायां॥ वे
दांतरमधीत्यैवकश्चिद्वेदंयेत्वधीयते॥उपनीतिरियंतेषामलंकरणवर्जिता॥यद्वैतदुपनीत
स्यप्रायश्चित्तंयदाभवेत्॥कृताकृतंचवपनंमेधाजननमेवच॥मेधाजननसद्भावेव्रतचर्या
भवेदिह॥अनुप्रवचनीयंचतदभावेद्वयंनहि॥परिदानंनकार्यंस्यात्त्रिमितानंतरंत्विदम्॥
ऋद्ध्यास्यावाचयेत्स्थानेतत्सवितुर्वरेणीमहेइति॥ यत्तुहारीतः॥ द्विविधाःस्त्रियःब्रह्मवा
दिन्यःसद्योवध्वश्च॥तत्रब्रह्मवादिनीनामुपनयनमग्नींधनंवेदाध्ययनंस्वगृहेचभैक्ष्यचर्येति
॥सद्योवधूनामुपनयनंकृत्वाविवाहःकार्यइति॥तद्युगांतरविषयम्॥पुराकल्पेषुनारीणां
मौंजीबंधनमिष्यते॥अध्यापनंचवेदानांसावित्रीवाचनंतथेतियमोक्तेः॥ अथा
नध्यायाः॥पारिजाते॥हारीतः॥प्रतिपत्सुचतुर्दश्यामष्टम्यांपर्वणोर्द्वयोः॥श्वोनध्यायेचश
र्वर्यांनाधीयीतकदाचन॥ नारदः॥ अयनेविषुवेचैवशयनेबोधनेहरेः॥अन
ध्यायस्तुकर्त्तव्योमन्वादिषुयुगादिषु॥ निर्णयामृते॥ चातुर्मास्यद्वितीयासु
मन्वादिषुयुगादिषु॥ अनध्यायस्तुकर्त्तव्योयाचसोपपदातिथिः॥ गर्गः॥ सुचार्द्धे
तपसिचयाद्वितीयाविधुक्षये॥चातुर्मास्यद्वितीयास्ताःप्रवदंतिमनीषिणःस्मृत्यर्थसारेपि
॥आषाढीकार्त्तिकीफाल्गुनीसमीपस्थद्वितीयाश्चेति॥मनुः॥उपाकर्मणिचोत्सर्गेत्रिरा

त्रक्षपणांस्मृतं॥अष्टकासुमहोरात्रमृत्वंतासुचरात्रिष्विति॥उत्सर्गेतुमनूक्तःपक्षिण्यहोरात्राभ्यांअह
स्वविकल्पइतिविज्ञानेश्वरः॥अष्टकाशब्देनसप्तम्यादित्रयंज्ञेयं॥निर्णीतःकाखिरात्रमंत्यामेकेइति
गौतमोक्तेः॥ऋत्वंतास्वितिसौरर्त्वंतासु॥चांद्रांतस्यपर्वत्वेनैवनिषेधसिद्धिरितिसर्वज्ञनाराय
णाः॥एतेनित्याः॥नैमित्तिकानप्याह॥ याज्ञवल्क्यः॥अहःप्रेतेष्वनध्यायःशिष्यर्त्विग्गुरुबं
धुषु॥उपाकर्मणिचोत्सर्गेस्वशाखश्रोत्रियेतथा॥संध्यागर्जितनिर्घातभूकंपोल्कानिपातने॥समा
प्यवेदंद्युनिशमारण्यकमधीत्यच॥पंचदश्यांचतुर्दश्यामष्टम्यांराहुसूतके॥ऋतुसंधिषुभुक्त्वावा
श्राद्धिकंप्रतिगृह्यच॥पशुमंडूकनकुलश्वाहिमार्जारमूषकैः॥कृतेंतरेत्वहोरात्रंशक्रपातेतथो
च्छ्रये॥ग्रहणेषुनिशोक्तावपिग्रस्तास्तेत्र्यहमित्युक्तंप्राक्॥स्मृत्यर्थसारेतु॥रात्रौग्रहेतिस्रोरात्रीः
॥दिवाचत्र्यहमित्युक्तम्॥मनुःसौरः॥भुक्तेतुस्वविषयं॥ऊर्ध्वंभोजनादुत्सवइतिगौतमोक्तेः
श्राद्धिकमहेकोद्दिष्टभिन्नम्॥तत्रतुत्र्यहमितिमनुः॥स्मृत्यर्थसारेचैवं॥यत्तु॥पक्षाद्यंतरायेत्र्यह
मुपवासोविप्रवासश्चेतिगौतमोक्तम्॥तत्प्रथमाध्ययने॥ याज्ञवल्क्यः॥ श्वक्रोष्टु
गर्दभोलूकसामबाणार्तनिस्वने॥अमेध्यशवशूद्रांत्यश्मशानपतितांतिके॥देशेऽशुचावात्म
निचविद्युत्स्तनितसंप्लवे॥भुक्त्वार्द्रपाणिरंभोंतरर्धरात्रेतिमारुते॥पांसुप्रवर्षेदिग्दाहेसंध्यानीहा
रभीतिषु॥धावतःपूतिगंधेचशिष्टेचगृहमागते॥खरोष्ट्रयानहस्त्यश्वनौवृक्षेरिणरोहणे॥सप्त
विंशदनध्यायानेतांस्तात्कालिकान्विदुः॥बाणोवंशः॥शततंतुवीणेतिहरदत्तः॥अमेध्याःस्त
निकादयः॥स्तनितंगर्जितं॥वर्षाकालेऽन्यत्रगर्जवृष्टिविद्युतांयोगपद्येआकालिकः॥वर्षासुतात्का
लिकइतिनारायणः॥ऐतरेयोपनिषदिअपर्तौवर्षेत्रिरात्रमिति॥मृगादिज्येष्ठांतंवर्षर्तुः॥तंविना
वर्षादौत्रिरात्रमनध्यायइतिवेदभाष्येउक्तम्॥संध्यागर्जेतुहारीतः॥सायंसंध्यास्तनितेरात्रिःप्रा
तःसंध्यास्तनितेऽहोरात्रम्॥रात्रौविद्युत्परात्राववधिः॥विद्युतिनक्तंचापररात्रादितिगौतमोक्तेः
दिनतृतीयांशोत्तरंतुविद्युतिसर्वरात्रमित्याहसएव॥त्रिभागादिप्रवृत्तौसर्वमिति॥अर्धरात्रेमध्यया
मद्वयेइतिविज्ञानेश्वरः॥मध्यदंडचतुष्टयेइतिनिर्णयामृते॥मनुः॥नविवादेनकलहेनसेनायांनसं
गरे॥नभुक्तमात्रेनाजीर्णेनवमित्वानसूतके॥रुधिरेचस्रुतेगात्राच्छस्त्रेणचपरिक्षते॥कौर्म्मे॥
श्लेष्मांतकस्यछायायांशाल्मलेर्मधुकस्यच॥कदाचिदपिनाध्येयंकोविदारकपित्थयोः॥मनु
ः॥शयानःप्रौढपादश्चकृत्वाचैवावसक्थिकाम्॥नाधीयीतामिषंजग्ध्वासूतकान्नाद्यमेवच॥
प्रौढपादःपादोपरियाददानः॥आसनारूढपादइतिहरदत्तः॥सोपपदास्वपिप्रागुक्तं॥स्मृत्य
र्थसारे॥श्रवणद्वादशीमहाभरण्योःप्रेतद्वितीयायांरथसप्तम्यामाकाशेशवदर्शनेचाहोरात्रम्॥
असपिंडेगुरौत्रिरात्रम्॥आचार्येउपाध्यायेचपक्षिणी॥आचार्यभार्यापुत्रशिष्येष्वहोरात्रं॥अ
भ्युत्थानेगोविप्रमृतौत्रिरात्रयः॥अयनेविषुवेचपक्षिणी॥आकालवृष्टौच॥आरण्यमार्जारस
र्पनकुलपंचनखादेरंतरागमनेत्रिरात्रम्॥आरण्यश्वशृगालादिवानररजकादौद्वादशरात्रं
खरवराहोष्ट्रचांडालसूतिकोदक्याशवादौमासम्॥गोगवयाजानास्तिकादौत्रिमासं॥शशमे
षश्वपाकादौवर्षमासम्॥गजगंडसारसिंहव्याघ्रमहायानकिकुनध्यादावब्दमनध्यायः॥शो

मनदिनेचानध्यायः॥विवाहप्रतिष्ठोद्यापनादिष्वासमाप्तेः॥सगोत्राणामनध्यायः॥उदयेस्तमये
वापिमुहूर्त्तत्रयगामियत्॥तद्दिनंतदहोरात्रमानध्यायविदोविदुः॥केचिदाहुःकश्चिच्छेषावन्न
ह्निनाडिकाः॥तावद्देवत्वनध्यायोनतन्मिश्रेद्दिनांतरे॥प्रदोषंत्वाहप्रजापतिः॥षष्ठीचद्वादशी
चैवअर्द्धरात्रौननाडिका॥प्रदोषेनत्वधीयीततृतीयानवनाडिका॥ निर्णयामृतेगर्गः
रात्रौयामद्वयादर्वाक्सप्तमीवात्रयोदशी॥प्रदोषःसतुविज्ञेयःसर्वविद्याविगर्हितः॥रात्रौन
वसुनाडीषुचतुर्थीयदिदृश्यते॥प्रदोषःसतुविज्ञेयोवेदाध्ययनगर्हितः॥कौर्मेऽनध्यायास्तु
नांगेषुनेतिहासपुराणयोः॥नधर्मशास्त्रेष्वन्येषुपर्वण्येतानिवर्जयेत्॥ शौनकः नि
त्यजपेचकाम्येचक्रतौपारायणेपिच॥नानध्यायोस्तिवेदानांग्रहणे
गृहणेस्मृतः॥ इत्यनध्यायाः॥ अथमहानाम्न्यादिव्रतम्॥ श्रीधरः॥
तिथिनक्षत्रवारांशवर्गोदयनिरीक्षणम्॥चौलवत्सर्वमाख्यातंसगोदानव्रतेषुच॥एतेषां
लोपेशौनकः॥व्रतानिविधिनाकृत्वास्वशाखाध्ययनंचरेत्॥अकृत्वाभ्यस्यतेयेनसपापीवि
धिघातकः॥प्रत्येकंकृच्छ्रमेकैकंचरित्वाज्याहुतीःशतम्॥हुत्वाचैवतुगायत्र्यास्नायादित्या
हशौनकः॥स्मृत्यर्थसारेतु॥त्रीन्षड्वाद्वादशवाकृच्छ्रान्कृत्वापुनर्व्रतंचरेदित्युक्तम्॥ अथ
समावर्त्तनम्॥ सुरेश्वरः॥भौमभानुजयोर्वारेनक्षत्रेचव्रतोदिते॥ताराचंद्रविशुद्धौचस्यात्समावर्त्तन
क्रिया॥बौधायनसूत्रेतुरोहिण्यांतिष्ये उत्तरयोःफाल्गुन्योर्हस्तेचित्रायांमैत्रेविशाखयोर्वास्नायादि
त्युक्तम्॥ वसिष्ठः॥ स्नानंमध्याह्नकालेतुहारणंकारयेत्कुंभेऽर्वान्हेतदभावेतुकुर्यात्
स्नानंयथाविधिः॥सर्वऋतवोविवाहस्येतिसूत्राद्यदादक्षिणायनेविवाहस्तदासमावर्त्तनमपित
त्रैव॥अन्यथोदगयनेसमावर्त्तने अनाश्रमीनतिष्ठेतेतिविरोधः॥इत्यादिउक्तंसुदर्शनभाष्ये॥एत
द्ब्रह्मचारिव्रतलोपप्रायश्चित्तंकृत्वाकार्यं॥ तदाहबौधायनः॥ शौचमाचारमभि
क्षाग्निकार्यराहित्यकौपीनोपवीतमेखलादंडाजिनाधारणोदिवास्वापच्छत्रपादुकास्त्रग्विधा
रणोद्वर्त्तनानुलेपनांजनद्यूतनृत्यगीतवाद्यादिभिर्व्रतीब्रह्मचारीकृच्छ्रत्रयंचरेन्महाव्याहृतिहो
मंचकुर्यात्॥समावर्त्तनोत्तरंसर्वमृतानांत्रिरात्रमाशौचंकार्य्यम्॥आदिष्टीनोदकंकुर्यादाव्रतस्य
समापनात्॥समाप्तेतूदकंदत्वात्रिरात्रमशुचिर्भवेदितिमनूक्तेः॥आदिष्टीब्रह्मचारीतिविज्ञानेश्वरः
॥ब्रह्मचर्येयदिकश्चिन्मृतस्तदात्रिरात्रमध्येविवाह कार्य्योन्यथानेतिसिध्यतिजननेतुसत्यपि
नत्रैरात्रं॥तत्रातिक्रांताशौचाभावादुदकंदत्वेतिवचनाच्चेतिदिक्॥तत्रापिविकल्पः॥पितर्य्य
पिमृतेनैषान्दोषोभवतिकर्हिचित्॥आशौचंकर्मिणोनैस्यात्ऋत्विग्वाब्रह्मचारिणामितिछंदो
गपरिशिष्टात्॥स्नातकव्रतमाहव्यासः॥यज्ञोपवीतद्वितयंसोदकंचकमंडलुम्॥छत्रंचोष्णीष
ममलंपादुकेचाप्युपानहौ॥रौक्मेचकुंडलेवेदंकृत्तकेशनखःशुचिः॥वेदोदर्भवटुः॥मनुः॥उपा
नहौचवासश्चधृतमन्नेनधारयेत्॥उपवीतमलंकारमजंकारकमेवच॥अस्मान्यपिवद्धचयंष्ट९
सःमादिभ्योत्तेयानि॥ अथक्षुरिकाबन्धः॥ज्योतिर्निबंधेनारदः॥क्षुरिकाबंधनंवक्ष्येनृपा
णांप्राक्करग्रहात्॥विवाहोक्तेषुमासेषुशुक्लपक्षेप्यनस्तगे॥जीवेशुक्रेचभूपुत्रेचंद्रताराबला

...ते॥ मौंजीबंधः शुभतिथिशुक्रजीवबलान्वितः॥ स्यादह्नि त्र्यंशे॥ राजपुत्राणां मौंज्यभावे वस्त्रबंधन
म्॥ मौंजीबंधोक्ततिथ्यादौ कार्यं सौमदिनं विना॥ अथ विवाहः॥ याज्ञवल्क्यः॥
अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्॥ अनन्यपूर्विकां कांतामसपिंडां यवीयसीम्॥ अरो
गिणीं भ्रातृमतीमसमानार्षगोत्रजां॥ लक्षण्यां बाह्याभ्यंतरलक्षणैर्युक्तां॥ बाह्यानि काशीखंडा
दौ प्रसिद्धानि॥ अंतराणि पृष्ठेपि उक्त्वैतानि आश्वलायनोक्तानि॥ मनुः॥ असपिंडा च या मातुरसगो
त्रा च या पितुः॥ सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने॥ दारे मातुर्गृहीता असपिंडापि सगो
त्रा...स्त्रीनिवृत्तये॥ चकारान्मातुरसगोत्रा॥ दत्तकस्य पितुर्जनककुले। पितुरसगोत्रापि सपिं
डत्वान्निषिद्धेत्यन्ये॥ अकारः॥ सपिंडतां सापिंड्यरहितां॥ तच्चैकशरीरावयवान्वयेन भवति।
पुत्रस्य हि पितृमातृशरीरस्यावयवाः पुत्रयोर्नादिषु साक्षात्परंपरया वा शुक्रशोणितादि
षेणानुसृताः॥ यद्यपि पत्न्याः पत्या सह सपत्नीनां च परस्परं नैतत्संभवति तथाप्याधारत्वे
नैकशरीरावयवान्वयोस्त्येव॥ अस्थिभिरस्थीनीति मंत्रलिंगात्॥ एकस्या हि पितृशरीरस्याव
यवाः पुत्रद्वारा तास्वाहिता इति मदनरत्नपारिजातविज्ञानेश्वरादयः॥ वाचस्पतिः शुद्धिविवेका
शूलपाणिप्रभृतयो गौडमैथिलास्त्वेवम्॥ श्रुतिरपि॥ एतत्षाट्कौशिकं शरीरं त्रीणि पितृत
स्त्रीणि मातृतोऽस्थिस्नायुमज्जानः पितृतस्त्वङ्मांसरुधिराणि मातृत इति॥ प्रजामनु प्रजायते
इति च॥ चंद्रिकायामेवं मेधातिथिमाधवादयस्तु॥ एकपिंडदानक्रियान्वयित्वं सापिंड्यं॥ ले
पभाजश्चतुर्थाद्याः पित्राद्याः पिंडभागिनः॥ पिंडदः सप्तमस्तेषां सापिंड्यं साप्तपौरुषमिति म
त्स्योक्तेः॥ न च पितृव्यादिष्वेतन्नास्तीति वाच्यम्॥ तत्कर्तृकैकश्राद्धे देवतैक्येन तत्सत्त्वात्॥ एवं द
त्तककर्तृकश्राद्धेपि ये देवताभूतास्तेषां मध्ये यः कश्चिदन्यकर्तृकश्राद्धे प्रविशति तेषां सापिं
ड्यं॥ तथा स्त्रीणामपि भर्तृकर्तृकश्राद्धे सहाधिकारित्वेन तदन्वयात्॥ एकत्वं सा गता भर्तुः पिं
डे गोत्रे च सूतके इति स्मृतेश्च श्रुतीनां चैवंगम्यार्थत्वात्॥ तस्य सापिंड्यनिमित्तत्वे मानाभाव
त्॥ न च मातुलादिष्वेतन्नास्तीति वाच्यम्॥ मातामहरूपदेवतैक्यात्॥ ननु गुरुशिष्यादेरपि
श्राद्धदेवतात्वात्॥ सपिंडत्वं स्यात्॥ किं बहुना सर्वाभावे नृपतिः कारयेत्तस्य रिक्थत इति मा
र्कंडेयपुराणाद्राज्ञोपि श्राद्धकर्तृत्वात् सापिंड्यप्रसंगः॥ सत्यं॥ पंचमात्सप्तमादूर्ध्वं मातृतः पितृ
तस्तथेति याज्ञवल्क्यवचनेन मातापितृसंबंध एव तत्सत्त्वात्॥ ऊर्ध्वं सापिंड्यं निवर्तत इति शेषः
ननु पंचमत्वाद्यत्र नियम्यते न मातृतस्त्वादिवाक्यभेदात्॥ मैवम्॥ मातृकुले पंचमत्व
स्य पितृकुले सप्तमत्वस्य च बोधने गुरुत्वात्॥ पौरुषेयत्वाद्दोष इति चेन्न॥ तुल्यमन्यत्रापि॥
अन्यकर्तृके एतत्सत्त्वे पितृत्वं वा देवतात्वाभावाच्च॥ किंच॥ अवयवान्वयपक्षे यथा योगरू
ढ्यापरिहारस्तथेहापि तेन मातृकुले पितृकुले चैकपिंडदानक्रियान्वयित्वं सापिंड्यमित्याहुः।
तेनैकस्य पितामहः परस्य प्रपितामहः सपिंडा भवंति॥ अत्र केचिदुभयतः सापिंड्यनिवृत्तावेवो
द्वाहो नान्यथेत्याहुः॥ शुद्धिविवेके तु अन्यस्य निवृत्तावन्यस्य सगोत्रत्ववत् सापिंड्यस्य सप्तवि
यौगिकत्वेन संयोगवदुभयनिरूप्यत्वादेकतो निवृत्तावन्यतो निवृत्तेरावश्यकत्वात् मूलपुरुषमा

कौसौद्वाहादीनामस्माद्वचनादप्रामाण्यमित्युक्तम्॥ स्मृत्यन्तरेपि॥ उद्वहेन्नैव सिन्धौ मैमा
तुलस्य सुतां द्विजैः॥ मन्त्यादाश्च नराः सर्वे व्यभिचाररताः स्त्रियः॥ उत्तरे मध्यमा वैश्यस्पृश्या
न्दृणां रजस्वला॥ इत्यनाचारत्वमाह॥ अत एव हेमाद्रौ मात्स्ये॥ कर्णाटकादीनां तत्कारिणां
श्राद्धे निषेधः॥ वौपदेवेनापि लिखितं श्राद्धे॥ यत्र मातुलजोद्वाही यत्र वै वृषलीपतिः॥ श्राद्धं
न गच्छेत्तद्विप्रस्तत्र यच्च निरामिषमिति॥ तस्मान्मातृतः पंच पितृतः सप्त चन्यमोद्वहेदिति सि
द्धं॥ संबंधविवेके सुमंतुः॥ ब्राह्मणानामेकपिंडस्वधानामादशमाद्धर्मा विच्छित्तिर्भवति॥ आ
सप्तमाद्द्वित्थ विच्छित्तिर्भवति आतृतीयात्पिंडविच्छित्तिरन्यथा पिंडाशौचक्रियाविच्छेदाद
हाहातुल्यो भवति॥ अस्यार्थमाह॥ शूलपाणिः॥ जीवत्पित्रादित्रिकस्य
वृद्धप्रपितामहादयस्त्रयः श्राद्धदेवतात्वात्पिंडभाजो भवंति॥ तदूर्ध्वं त्रयो नवपुरुषपर्यंतालेप
भाजः॥ श्राद्धकर्ता च दशम इति॥ दशमादूर्ध्वं सापिंड्यनिवृत्तिः॥ दशमादित्युपलक्षणम्॥
तेन पितृपितामहजीवने नवपुरुषपर्यंतं पितृजीवने चाष्टपुरुषपर्यंतं सापिंड्यमिति ज्ञेय
म्॥ अपुत्रधनग्रहणे सन्निहिताभावे सप्तपुरुषपर्यंतमधिकारः॥ धनग्राहिणामारभ्य तृती
यः पौत्रस्तद्दृष्टश्राद्धविच्छेदः॥ अन्यथा धनहारित्वे पुत्रश्राद्धाद्यकरणेत्र तदूहेत्यर्थः॥ आतृ
तीयादित्यनूढकन्याविषयम्॥ अप्रत्तानां तु स्त्रीणां त्रिपुरुषी विज्ञायत इति वसिष्ठोक्तेः॥ एतच्चाशौचा
विषयं सापिंड्यं न तु विवाहादौ॥ तत्र पूर्वोक्तवचनैः पंचमात्सप्तमात्त्व नियमादिति मेधातिथिप्रमुखा दा
क्षिणात्याः॥ वाग्दानोत्तरमेतदिति शुद्धिविवेकः मातृकुलविषयं कानीनकन्याविषयं चैतत्॥ अ
न्यथा अप्रत्तानां तथा स्त्रीणां सापिंड्यं साप्तपौरुषं॥ प्रत्तानां भर्तृसापिंड्यं प्राह देवः प्रजापतिरिति॥
कौर्मेणाविरोधः स्यादिति रत्नाकरस्मृतितत्त्वादिगौडग्रंथाः॥ युक्तं चैतत्॥ अन्यथा कर्मोपत्नीपुरु
षत्रयपर्यंतमेव सूतकं स्यान्नोर्ध्वम्॥ सापत्नमातामहकुले त्वाह मिताक्षरायां शंखः॥ यद्येकजा
ता बहवः पृथक्क्षेत्राः पृथग्जनाः॥ एकपिंडाः पृथक्छौचाः पिंडस्त्वावर्तते त्रिषु॥ पृथक्क्षेत्रा
भिन्नजातीयस्त्रीषु जाताः पृथग्जनाः सजातीयभिन्नमातृषु जाताः॥ अत्र त्रिपुरुषं सापिंड्यमि
ति विज्ञानेश्वरो व्याचख्यौ॥ पृथ्वीचंद्रोदये सापिंड्यदीपिकायां चैवम्॥
मदनपारिजाते तु पृथक्क्षेत्राः भिन्नमातृजाः पृथग्जनाः भिन्नजातीयाः॥ एतद्विजातीयसापत्नमा
तृकुलविषयम्॥ सवर्णसापत्नमातृकुले चतुःपुरुषं सापिंड्यं॥ पंचमीं सप्तमीं चैव मातृतः पितृ
तस्तथेति॥ वसिष्ठोक्तेः॥ सप्तमीमिति ब्राह्मणादीनां स्त्रियास्त्वदारोत्पन्नपितृ
कुलविषयं चेत्युक्तम्॥ तत्स्वकपोलकल्पितत्वादुग्र्यौतरविरोधाच्च निर्मूलम्॥ पितृपत्न्यः सर्वा मा
तरस्त्युक्त्वा सुमंतुना तत्पत्न्या भागिनेयानीति पृथङ्निषेधाच्च॥ अन्यथा सपिंडत्वेन निषेधा
त्॥ सपत्नमातुलत्वादिनिर्देशोऽनर्थः॥ अत एव तेन स्मृतिकौमुद्यां सवर्णसापत्नमातामहकु
लपरत्वेन तथैव शंखवचनं व्याख्यातम्॥ तेन वासिष्ठं पंचमीं सप्तमीमतीतेत्यत्र व्याख्येयम्॥ तस्
स्मात्त्वाद्येवव्याख्यायुक्ता प्रयोगरत्ने भट्टैः॥ स्मृतितत्त्वादिगौडग्रंथेषु च सपत्नमातामहकुले पा
वदुक्तं वाचनिकमेव सापिंड्यमुक्तम्॥ यथाह सुमंतुः॥ मातृपितृसंबंधादासप्तमादविवाह्या भवंति

रभ्यासप्तमोवरः मूलपुरुषमारभ्यद्वितीयातृतीयादिकामुद्वहेदित्याहुः॥सिद्धांतस्तुनवधूवरयोः
स्वतःसापिंड्यंकिंतुकूटस्थसंततित्वात्॥तत्सापिंड्यमेव॥अतोष्टमवरमतिक्रम्याप्यसापिं
ड्येपिकन्यायाःकूटस्थेनसापिंड्यात्तत्संततिस्थत्वाद्वरस्यापितत्सापिंड्यएवेत्यविवाहः॥सा
पिंड्यासापिंड्ययोःप्रतियोगिभेदेनविरोधादित्याहुः॥इदमेवयुक्तम्॥आशौचेप्येवंसापिंड्यंज्ञेय
म्॥यत्तुमध्येविच्छिन्नमपिसापिंड्यमेकपुत्रिवदुक्तम्॥आशौचेप्येवंसापिंड्यंज्ञेयम्॥य
त्तुमध्येनरस्तुवर्त्ततेयथाकूटस्थात्पंचम्योःकन्ययोःपुत्रौ॥तत्रनिवृत्तिः॥तदपत्ययोस्त्वनुवृ
त्तत्रापिनसापिंड्यासापिंड्ययोर्दोषः॥संबंधिभेदात्॥तेनतत्रनविवाहः॥अत्रकूटस्थमारभ्य
गणनाकार्या॥तदुक्तम्॥वध्वावरस्यवातातःकूटस्थाद्यदिसप्तमः॥पंचमीचेत्तयोर्माताततत्सापिं
ड्यंनिवर्त्ततइति॥कूटस्थोमूलपुरुषः॥विश्वरूपनिबंधे॥एवमुक्तप्रकारेणपितृबंधुसप्तमा
त्॥ऊर्ध्वमेवविवाह्यत्वंपंचमान्मातृबंधुतः॥संतानोभिद्यतेयस्मात्स्वबीजाद्भयतश्च॥तस्मा
दायगणोद्दीमान्वरयावच्चकन्यका॥स्मृतितत्वेनारदः॥आसप्तमात्पंचमाच्चबंधुभ्यःपितृ
मातृतः॥अविवाह्यासगोत्राचसमानप्रवरातथा॥अत्रबंधुभ्यइतिपंचमीनिर्देशात्पितुःपितृ
स्वसृपुत्रात्सप्तमीमातुः॥पितृष्वसृपुत्राच्चपंचमीमपित्यजेत्॥एवमन्यबंधुष्वपिज्ञेयम्॥तत्रापि
गोत्रान्त्ययेवीगपिविवाहंकुर्यात्॥वक्ष्यमाणवचनात्॥त्रिगोत्रगणनाचमातामहगोत्रापे
क्षयानतुस्वापेक्षया॥अन्यथापितुःपितामहदुहितुर्दौहित्रीपुत्रीपरिणेयास्यात्॥मध्याःमा
तामहगोत्रापेक्षयातुत्रिगोत्रांतर्गतेनविवाहप्रसंगइतिसंबंधतत्वादयोगोऽयंपथाः॥संबंधवि
वेकेशूलपाणिराह॥पंचमात्सप्तमाच्चार्वागपित्रिगोत्रांतरेनाविवाह्य॥असंबंधाभावे
त्मातुःपिंडेनैवोदकेनवा॥साविवाह्याद्विजातीनांत्रिगोत्रांतरिताचयेतिइहन्मनूक्तेःसपिंडके
पिकत्रैव्यत्रिगोत्रान्तरतोयदीतिदेवलोक्तेश्चेति॥एतच्चदाक्षिणात्यानमन्यंते॥यत्तुवसिष्ठः॥
पंचमींसप्तमींचैवमातृतःपितृतस्तथेति॥यच्चविष्णुपुराणम्॥पंचमींमातृपक्षाच्चपितृपक्षा
च्चसप्तमीम्॥गृहस्थउद्वहेत्कन्यांन्यायेनविधिनानृपेति॥तत्पंचमींसप्तमींमतीत्येतिव्याख्येय
म्॥पंचमेसप्तमेचैवयेषांवैवाहिकीक्रिया॥क्रियापराअपिहितेपतिताःशूद्रतांगताइत्यपरा
र्कमरीचिवचनात्॥हारलतायांशंखलिखितौ॥सपिंडतातुसर्वेषांगोत्रतःसाप्तपौरुषी॥पिंड
श्चोदकदानंचआशौचंचतदानुगम्॥गोत्रसंतानम्॥आशौचंतानमित्याप्यगच्छतीत्यर्थः॥
शुद्धिविवेकेशुद्धिचिंतामणौचब्राह्मे॥सर्वेषामेववर्णानांविज्ञेयासाप्तपौरुषी॥सपिंडता॥
ततःपश्चात्समानोदकधर्मता॥ततःकालवशात्तत्रविस्मृतौनामगोत्रतः॥समानोदकसंत
त्ततावन्मात्रापिनश्यति॥सप्तोर्ध्वंत्रयःसोदकास्ततोगोत्रजाः॥तेनैवब्राह्मेऽप्यविभक्तधनास्त्वे
तेसपिंडाःपरिकीर्त्तिताः॥तेनाविभक्तधनाभावेविभक्तःसपिंडोधनहारीनान्यथेत्यर्थः॥ते
नविवाहेआशौचेधनग्रहणेचत्रिधासापिंड्यंसिद्धम्॥यत्तुपंचमींमातृतःपरिहरेत्सप्तमींपि
तृतस्त्रीन्मातृतःपंचपितृतोवेतिपैठीनसिस्मृतौत्रीनित्यनुकल्पइतिमाधवोक्तेः॥पंचमींस
प्तमींचैवमातृतःपितृतस्तथा॥दशभिःपुरुषैःख्यातात्श्रोत्रियाणांमहाकुलात्॥उद्वहेत्सप्त

माहूर्ध्वं तदभावे तु सप्तमीम्॥ पंचमीं तदभावे तु पितृपक्षे त्वयं विधिः॥ सप्तमीं च तथा षष्ठीं पंचमीं
च तथैव च॥ एवमुद्वाहयेत्कन्यां न दोषः शाकटायनः॥ तृतीयां वा चतुर्थीं वा पक्षयोरुभयोर
पि॥ विवाहयेन्मनुः प्राह पाराशर्यो गिरा यमः॥ यस्तु देशानुरूपेण कुलमार्गेण चोद्वहेत्॥
नित्यं संव्यवहार्य्यः स्याद्वेदो चैतत्प्रदृश्यते॥ इति चतुर्विंशतिमतात्॥ चतुर्थीमुद्वहेत्कन्यां चतु
र्थं पंचमीं पि वा॥ पराशरमते षष्ठीं पंचमीं न तु पंचमीमिति पराशरोक्तेः चानुकल्पत्वेनाप
दि पंचम्यादिपरिणयनं कार्यमिति प्रतीयते॥ अत्र हि तदभावे इति स्पष्टमेवानुकल्पत्वमु
क्तम्॥ तत्त्वयथाश्रुतं ज्ञेयम्॥ पूर्वोक्तमरीचिवचोविरोधात्॥ वस्तुनि विकल्पासंभवात्॥
पंचमात्सप्तमाद्दीनां यः कन्यामुद्वहेद्द्विजः गुरुतल्पी स विज्ञेयः सगोत्रां
चैवमुद्वहन्निति विज्ञानेश्वरोक्तेः॥ पाराशरस्य मूलाभावश्च॥ तस्मात् मदनपारिजाताद्युक्तदिशा
दत्तकसापत्न्यसंबंधाद्यनुप्रवेशे ब्राह्मणादीनां क्षत्रियादिसपिंडविषये या पूर्वोक्ता निने
यानि न त्वनुकल्प इति भ्रमितव्यम्॥ यत्तु स्मृतिचंद्रिकामाधवादयश्चाहुः॥ तृतीये संगच्छा
वहे चतुर्थे संगच्छावहा इति शतपथश्रुतेः॥ तथा जहूर्मातुलस्येव योषा भागस्ते पैतृष्वसे
यी वपामिवेति॥ गर्भे तु नौ जनिता दंपती करिति च मंत्रवर्णात्॥ मातृष्वसृसुतां केचित्
पितृष्वसृसुतां तथा॥ विवहंति क्वचिद्देशे संकोच्यापि सपिंडतामिति निबंधांतरोक्तेश्च॥ मा
तुलकन्योद्वाहः कार्यः॥ यद्यपि पितृष्वसृकन्योद्वाहोपि प्राप्तस्तथाप्यस्वर्ग्यं लोकविद्विष्टमि
ति॥ निषेधाद्वचनांतरेण तदुद्वाहस्याविधानाच्च न कार्यः॥ अयं तु दाक्षिणात्यानां शिष्टा
चारात् कार्य इति॥ न च पूर्वोक्तश्रुतीनामर्थवादमात्रत्वं॥ मानांतरेणासिद्धोपरि हि देवे
भ्यो धारयतीतिवदनुवादानुपपत्त्या विधिकल्पनात्॥ यत्तु शातातपः॥ मातुलस्य सुतामूढ्वा
मातृगोत्रां तथैव च॥ समानप्रवरां चैव त्यक्त्वा चांद्रायणं चरेत्॥ यच्च मनुः पैतृष्वसेयीं भगि
नीं स्वस्त्रीयां मातुरेव च॥ मातुश्च भ्रातुराप्तस्य गत्वा चांद्रायणं चरेत्॥ एतास्तिस्रस्तु भार्या
र्थे नोपयच्छेत्तु बुद्धिमान्॥ यच्च व्यासः॥ मातुः सपिंडा यत्नेन वर्ज्जनीया द्वि
जातिभिरिति॥ तद्गांधर्वादिविवाहोढमातृविषयम्॥ तत्र पितृगोत्रानिवृत्तेः॥ अत एव मा
र्कंडेयपुराणम्॥ गांधर्वादिविवाहेषु पितृगोत्रेण धर्मविदिति॥ ब्राह्मादिविवाहे तु परिणे
येवेति॥ भट्टसोमेश्वरोपि तृतीयेध्याये वाक्यपादे मातुलकन्योद्वाहमुदाहृत्य स्मृतिविरोधे
नाचारप्राप्तस्यास्य वार्त्तिके बाधोक्तावपि पूर्वोक्तश्रौतलिंगबलीयस्त्वादस्य कर्त्तव्यतामाह॥
तदिदं दत्तकस्य पालककृत्रिममातृसोदरकन्याविषयत्वेनासवर्णमातुलकन्याविषय
त्वेन युगांतरपरत्वेन चोपपन्नमप्यविज्ञाभितरमणीयं यथा तथास्तु॥ तथापि कलौ नाव
निषिद्धमेव॥ गोत्रान्मातुः सपिंडाच्च विवाहो गोवधस्तथेत्यादिपुराणात्॥ माधवीये बौधाय
नीयस्य निंदामाह॥ पंचधा विप्रतिपत्तिर्दक्षिणतः तथोत्तरतः अनुपेतेन स्त्रिया च सह भोजनं
पर्युषितभोजनं मातुलपितृष्वसृदुहितृपरिणयनमिति॥ अथोत्तरतः सीधुपानादिकमुक्त्वा
इतर इतरस्मिन्कुर्वन्दुष्यति इतर इतरस्मिन्निति भट्टसोमेश्वरेणापि स्मृतिविरुद्धानां मातुल

कोसौद्वाहादीनामस्माद्वचनादप्रामाण्यमित्युक्तम्॥ बृहस्पतिरपि॥ उद्वहन्ते दाक्षिणात्या मा
तुलस्य सुता द्विजैः॥ मत्स्यादाश्च नराः सर्वे व्यभिचाररताः स्त्रियः॥ उत्तरे मद्यपा नार्यः स्पृश्या
नृणां रजस्वला॥ इत्यनाचारत्वमाह॥ अत एव हेमाद्रिमात्स्या॥ कर्णाटकादीनां तत्कारिणां
श्राद्धे निषेधः॥ वोपदेवेनापि लिखितं तद्वाक्ये॥ यत्र मातुलजोद्वाही यत्र वै वृषलीपतिः॥ श्राद्धं
न गच्छेत्तद्विप्रस्तावे यच्च निरामिषमिति॥ तस्मान्मातृतः पंच पितृतः सप्त चान्यत्रोद्वहेदिति सि
द्धं॥ संबंधविवेके सुमंतुः॥ ब्राह्मणानामेकपिंडस्वधानामादशमादम्पाविच्छित्तिर्भवति॥ आ
सप्तमाद्रिक्थविच्छित्तिर्भवत्या तृतीयात्पिंडविच्छित्तिरस्मथा पिंडाशी चक्रियाविच्छेदाद्
हा॥ तुल्यो भवति॥ अस्यार्थमाह॥ शूलपाणिः॥ जीवत्पित्रादित्रिकस्य
द्वप्रपितामहादयस्त्रयः श्राद्धदेवतात्वात्पिंडभाजो भवंति॥ तदूर्ध्वं त्रयो नवपुरुषपर्यंतं लेप
भाजः॥ श्राद्धकर्ता च दशम इति॥ दशमादूर्ध्वं सापिंड्यनिवृत्तिः॥ दशमादित्युपलक्षणम्॥
तेन पितृपितामहजीवने नवपुरुषपर्यंतं पितृजीवने चाष्टपुरुषपर्यंतं सापिंड्यमिति ज्ञेय
म्॥ अपुत्रधनग्रहणे सन्निहिताभावे सप्तपुरुषपर्यंतमधिकारः॥ चतुर्थ्यादिषामारभ्य तृती
यः पौत्रस्तदूर्ध्वं श्राद्धविच्छेदः॥ अन्यथा धनहारित्वेऽपुत्रश्राद्धाद्यकरणात्तस्येहेत्यर्थः॥ आतृ
तीयादित्यनूढकन्याविषयम्॥ अप्रत्तानां तु स्त्रीणां त्रिपुरुषी विज्ञायते इति वसिष्ठोक्तेः॥ एतच्चाशौचवि
षयं सापिंड्यं न तु विवाहादौ॥ तत्र हर्षोक्तवचनैः पंचमसप्तमत्वनियमादिति मेधातिथिप्रमुखाचा
ह्रिणानाः॥ वाग्दानोत्तरमेतदिति शुद्धिविवेकः॥ मातृकुलविषयं कानीनकन्याविषयं चैतत्॥ अ
न्यथा अप्रत्तानां तथा स्त्रीणां सापिंड्यं साप्तपौरुषं॥ प्रत्तानां भर्तृसापिंड्यं प्राह देवः प्रजापतिरिति॥
कौर्मेण विरोधः स्यादिति रत्नाकरस्मृतितत्त्वादिगौडग्रंथाः॥ युक्तं चैतत्॥ अन्यथा कर्मोपनीतो पुरु
षत्रयपर्यंतमेव सूतकं स्यान्नोर्ध्वम्॥ सापत्नमातामहकुले त्वाह मिताक्षरायां संग्रहः॥ पत्येकजा
ता बहवः पृथक्क्षेत्राः पृथक्जनाः॥ एकपिंडाः पृथक्शौचाः पिंडस्त्वावर्तते त्रिषु॥ पृथक्क्षेत्रा

भिन्नजातीयस्त्रीषु जाताः पृथग्जनाः सजातीयभिन्नमातृषु जाताः॥ अत्र त्रिपुरुषं सापिंड्यमि
ति विज्ञानेश्वरो व्याचख्यौ॥ पृथ्वीचंद्रोदये सापिंड्यदीपिकायां चैवम्॥
मदनपारिजाते तु पृथक्क्षेत्राः भिन्नमातृजाः पृथग्जनाः भिन्नजातीयाः॥ एतद्विजातीयसापत्नमा
तृकुलविषयम्॥ सवर्णसापत्नमातृकुले चतुःपुरुषं सापिंड्यं॥ पंचमीं सप्तमीं चैव मातृतः पितृ
तस्तथेति॥ वसिष्ठोक्तेः॥ सप्तमीमिति ब्राह्मणादीनां क्षत्रियादिदारोत्पन्नापितृ
कुलविषयं चेत्युक्तम्॥ तत्स्वकपोलकल्पितत्वाद्ग्रंथांतरविरोधाच्च निर्मूलम्॥ पितृपत्न्यः सर्वा मा
तरस्त्वुक्ता सुमंतुना तदपत्यानि भागिनेयानीति पृथक् निषेधाच्च॥ अन्यथा सपिंडत्वेन निषेधा
त्॥ सपत्नमातुलत्वादिनिर्देशोऽप्यर्थः॥ अत एव तेन स्मृतिकौमुद्यां सवर्णसापत्नमातामहकु
लपरत्वेन तथैव शंखवचनं व्याख्यातम्॥ तेन वासिष्ठं पंचमीं सप्तमीमतीतेत्यभ्याख्येयम्॥ त
स्मान्मात्रैव व्यवस्था युक्ता प्रयोगरत्ने भट्टैः॥ स्मृतितत्त्वादिगौडग्रंथेषु च सपत्नमातामहकुले प
वदज्ञं वाचनिकमेव सापिंड्यमुक्तम्॥ यथाह सुमंतुः॥ मातृपितृसंबंधादासप्तमाद्विवाहाभाव

आपंचमाद्न्येमां॥ पितृपत्न्यः सर्वा मातरस्तद्भ्रातरो मातुलास्तद्भगिनी मातृष्वसारस्तद्दुहितरश्च
भगिन्यस्तदपत्यानि भागिनेयान्यन्यथा संकरकारिणः स्युरित्यध्यायपितुरेतदेवेति॥ आपंचमा
दिति मातृकुले त्रिगोत्रां तरितविषयं वेति प्राञ्चः॥ मात्स्ये॥ समानप्रवरां चैव शिष्यसंततिरेव च
॥ ब्रह्मदातुर्गुरोश्चैव संततिः प्रतिषिध्यते॥ तद्भगिनी मातृष्वसा रत्नितुत्राकरेण पठितम्॥ क्व
चिद्वचनाद्विवाहः॥ यथाश्वलायनपरिशिष्टे त्वविरुद्धसंबंधामुपयच्छेतेत्युक्त्वा विरुद्धसंबंधः स्व
यमेवोक्तः॥ यथा भार्यास्वसुर्दुहिता पितृव्यपत्नी स्वसा चेति॥ बौधायनः॥ मातुः सपत्न्या भगि
नीं तत्सुतां च विवर्जयेत्॥ पितृव्यपत्न्या भगिनीं तत्सुतां च विवर्जयेत्॥ अतो मातृष्वसुः सापत्न
पुत्रकन्याप्यविवाह्या॥ सापत्नमातृकुलजामिति मदनपारिजातोक्तेरिति केचित्॥ केचित्तु ज्ये
ष्ठभ्राता पितुः सम इति मनूक्तेस्तत्पत्न्या मातृत्वात्तत्पितुर्मातामहत्वाज्ज्येष्ठभ्रातृपत्नीभगिनीनपि
वाह्या॥ तथा उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पितेति मनूक्तेर्गुरुणा त्रिपुरुषं सापिंड्यं॥
सख्यापि निर्वार्च्यं॥ अतस्तेषां कन्या नोद्वाह्याः॥ गायत्र्या उपदेष्टुश्च कन्यां नैवोद्वहेद्द्विजः॥ गुरो
श्च कन्यां शिष्यो वा तत्संततिः पितेष्यते॥ पुरुषत्रयपर्यंतं भ्रातृत्वेनैतदिष्यते॥ वाक्संबंधव
तां तेनेह संबंधभागिनां॥ विवाहो न कर्तव्यो लोकगर्हाप्रसक्तितः इति वचनाच्चेत्याहुः॥ त
त्र मूलं चिंत्यम्॥ दत्तकविषये तूच्यते॥ तत्र गौतमः॥ ऊर्ध्वं सप्तमात्पितृबंधुभ्यो बीजिनश्च मातृ
बंधुभ्यः पंचमादिति बंधुग्रहणाद्दत्तकमात्रपरमिदं किंतु संतानेपि॥ एतत्संतत्यादि सर्वं
द्व्यामुष्यायणपरमिति हरिदत्तः॥ अत्र स्मृतिचंद्रिका॥ नियोगा
द्युत्पादयितुस्स्याद्बीजिनोप्यूर्ध्वं सप्तमादित्यर्थ इति॥ दत्तकस्य जनकविषयमेतदिति सापिंड्य
मीमांसायां तेन दत्तस्य जनककुले साप्तपौरुषं जननीकुले पांचपौरुषं सापिंड्यम्॥ दत्तकोना
दिपुत्राणां बीजवतुः सपिंडता॥ सप्तमी पंचमी चैव गोत्रित्वं पालकस्य चेति बृहन्मनूक्तेः॥ बी
जिनश्चेति गौतमोक्तेश्च॥ पालकपितृकुले तु पंचपुरुषं पालकमातृकुले त्रिपुरुषम्॥ तथा चा
परार्के पैठीनसिः॥ त्रीन्मातृतः पंच पितृतः पुरुषानतीत्योद्वहेदिति॥ एतत्स एव व्याचख्यौ॥
दत्तकादीन्पुत्रान्पितृपक्षतो निवर्तपिंडगोत्रार्षेयान्॥ मन्येत द्वचने पंच पितृत इति नान्या
न्प्रतीति॥ यत्तु॥ वृद्धगौतमः॥ स्वगोत्रे पुत्रतायेस्युर्दत्तक्रीतादयः सुताः॥
विधिना गोत्रमायांति तत्सापिंड्यं विधीयते॥ यच्च वसिष्ठः॥ अन्यशाखोद्भवो
दत्तः पुत्रश्चैवोपनायितः॥ स्वगोत्रेण स्वशाखोक्तविधिना स्वशाखभागिति॥ यच्च नारदः॥
धर्मार्थवर्द्धिताः पुत्रास्तत्तज्ज्ञेनैव पुत्रवत्॥ अंशपिंडविभागित्वं तेषु केवलमीरितमिति॥ त
त्पालककुले साप्तपौरुषं॥ सापिंड्यं नेत्येवपरं न तु सर्वथा सापिंड्यनिषेधपरमिति सापिंड्य
मीमांसायाम्॥ मदनपारिजातादपि दत्तकानुप्रवेशेऽप्यसापिंड्यं प्रतिभाति॥ त
था हि॥ तिसृत्रीनतीत्य पितुराहत्यपस्य मातादत्तपुत्री प्रतिग्रहीत्रा पुत्रीकृता तस्याः प्रतिग्र
हीतुः कुले त्रीनतीत्येति॥ पंच पितृत इति पस्य दत्तपुत्रः पिता तस्य यज्जनककुलं तद्विषय
मित्युक्तम्॥ वस्तुतस्तु॥ एवं वचसां महानिबंधेषु प्रकाश्यनुपलंभात्परार्कादिलिखनाभा

वात्॥ एवंचोक्तव्यवस्थायाश्चप्रतिभानानुरूपत्वाद्यैरेतल्लिखितं तेषामेव शोभते॥ मन्मते तु पालककुले ए
कपिंडदानक्रियान्वयित्वरूपं साप्तपौरुषमेव सापिंड्यं बीजिनश्चेति॥ गौतमोक्तेर्जनककुलेपि तावदे
व त्रीन्॥ मातृतस्मादित्युसवर्णासापत्नमातृकुलपरमुपयोगिकजातावहवदिति॥ शांखे कवाक्य
त्वादिति युक्तं प्रतिभाति॥ अत एवास्पष्टामुख्यायणत्वं हेमाद्रिप्रवरमंजरीनित्यनारायणा॰
दिभिरुक्तं॥ भट्टसोमेश्वरेणापि पृथायाः कुंतिभोजस्य पालकत्वमात्रेपि ऊर्ध्वं सप्तमात्पितृबंधु
भ्यो बीजिनश्चेति गौतमोक्तेर्द्विमायाः पृथायाः जनकस्य शूरसेनस्य कुलेपि साप्तपौरुषं पालक
कुलेपि तावदेव॥ सापिंड्यमुक्तमपि वाकारणाग्रहणेरत्यत्र॥ सापिंड्यदीपिकायां तु दत्तक्रीता
दीनां जनकगोत्रेणोपनयने कृते जनककुले साप्तपौरुषं सापिंड्यं पालकमातापितृकुले॥ त्रि
पुरुषं पिंडनिर्वापाच्चिर्वापलक्षणं त्रिपुरुषं सापिंड्यं पालकगोत्रेणोपनयने तत्कुले साप्तपौ
रुषमित्युक्तम्॥ तन्न॥ चूडोपनयनसंस्कारा निजगोत्रेण वै कृताः॥ दत्ताद्यास्तनयास्ते स्युरन्यथा
दास उच्यते इति॥ कालिकापुराणादुपनयनानंतरं दत्तकनिषेधात् त्रिपुरुषमित्यत्रापि मूलं मृ
ग्यमित्यलं बहुना॥ मातृपितृद्वारकसापिंड्यवतीनां कन्यानामियं संख्या एव वाजपेयिनोक्ताः॥
उद्वोढुः पितरौ पितुश्च पितरौ तज्जन्मकद्वंद्वपतिद्वंद्वं तस्य चतुष्कमष्ट च ततोप्यस्य क्रमात्षोडश
वंशारंभकदंपती प्रमितिरित्यासप्तकसंरदा एकैकान्वयकन्यकाः पितृकुले त्वासप्तकं स्युर्वै
॥ यद्यप्येकस्य बहवः सुताः स्युस्तदपीह तु॥ संबंधसाम्यादेकैव गणितेप्यवधार्यताम्॥ एक
स्मान्मिथुनात्सुता यदुहितानां द्वंद्वं यतद्वयातस्माद्द्वंद्वचतुष्कमष्ट च ततोतः षोडशातो रदाः॥ या
वत्सप्तमकक्रमं स्थितमतः कन्या इहैकान्वये तावंतो गुणिता रसैकस्वहशैवंशे सपिंडाः पितुः॥
मातुर्जन्मदंपती च मिथुनद्वंद्वं तयोः सागरास्तस्याः पंचमकक्रमं च मितिरित्येकान्वयः पुंसु
ते॥ द्वंद्वाद्द्वंद्वयुगं ततो व्ययदतोष्टं पंचकक्षं शरक्षोण्यः॥ सप्तगुणाः शराग्निविधवो मातुः सपिं
डाः कुले॥ कुलद्वयस्य कन्यकायुता मिथः सपिंडकाः॥ द्विमाधुदग्धराट्शो विवाहकर्मवर्जिता
इति॥ एतच्च सर्ववर्णसाधारणम्॥ सर्वत्र सापिंड्यसद्भावादिति विज्ञानेश्वरोक्तेः पंचमात्सप्त॰
मादूर्ध्वं मातृतः पितृतः क्रमात्॥ सपिंडतानिवर्तेत सर्ववर्णेष्वयं विधिरिति हरनाथधृतदेवल
वचनाच्च॥ संबंधतत्त्वे सुमंतुः॥ पितृष्वसृसुतां मातृष्वसृसुतां मातुलसुतां मातृसगोत्रां समा
नार्षेयीं विवाह्य चांद्रायणं चरेत्परित्यज्यैनां मातृवद्बिभृयादिति दिक्॥ ऋषेरिदमार्षं प्रवरः॥
गोत्रप्रसिद्धं॥ समाने आर्षे गोत्रे यस्य तस्माज्जाताया न भवति तां॥ अथ संक्षेपेण
गोत्रप्रवरनिर्णयः॥ नो च भिन्नौ निषेधे निमित्तं॥ सगोत्रायदुहितरं न प्रयच्छेदि॰
त्यापस्तंबोक्तेः असमानप्रवरैर्विवाह इति गौतमोक्तेश्च॥ तत्र गोत्रलक्षणमाह प्रवरमंजर्यां
बौधायनः॥ विश्वामित्रो जमदग्निर्भरद्वाजोथ गौतमः॥ अत्रिर्वसिष्ठः कश्यप इत्येते सप्तर्षयः
॥ सप्तानामृषीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रमिति॥ यद्यपि केवलभार्गवेष्वार्ष्टिषेणा
दिषु केवलांगिरसेषु च हरितादिषु नैतत्॥ भृग्वंगिरसो रुक्तेष्वनंतर्गतेः॥ तथाप्यत्रेष्वपत्रिरे
वेति केचित्॥ अत एव स्वस्वप्रवरे प्रवरैक्यादेवात्राविवाह उक्तः॥ यद्यपि वसिष्ठादीनां तगो

त्रत्वमुक्तम्॥तेषांसप्तर्षित्वेनतदपत्यत्वाभावात्॥तथापितत्पूर्वमविवक्षिताद्यपत्यत्वेन
गोत्रत्वमुक्तम्॥अतएवसर्वेषांपरेषांचैतद्गोत्रम्॥अत्रविशेषोस्मत्कृतेप्रवरदर्पणेज्ञेय
म्॥प्रवरास्तुप्रवरणात्प्रवराः॥कल्पकाराह्निवासिष्ठेतिहोतावसिष्ठवदित्यध्वर्युरित्यादि॰
नायेषाम्वरणमामनंतितेप्रवराः॥तच्चवरणंयद्यपिगोत्रभूतस्यापिवाचितद्दृश्यते॥तथा
पिऋषिवदृषिभेदोद्रष्टव्यः॥अन्यथातेषांआर्षेयएकार्षेयइत्यादिनिर्देशानुपपत्तेः॥अन्ये
तुतद्गोत्राणांआर्षेयइतिभेदमाहुरितिदिक्॥तत्वंतुगोत्रभूतस्यपितृपितामहप्रपिताम
हाएवप्रवराः॥पितैवाग्रेथपुत्रोथपौत्रइतिशतपथश्रुतेः॥परंपरंप्रथममित्याश्वला
यनोक्तेश्च॥अत्रविशेषमाहबौधायनः॥एकएवऋषिर्यावत्प्रवरेष्वनुवर्तते॥तावत्स
मानगोत्रत्वमन्यत्रभृग्वंगिरसांगणादिति॥स्मृत्यर्थसारे॥त्रियमाणतयावापिसन्नयावा
नुवर्तनं॥एकस्यदृश्यतेयत्रतद्गोत्रंतस्यकथ्यते॥भृग्वंगिरोगणेषुतुमाधवीयेस्मृत्यंतरे
पंचानांत्रिषुसाम्यादविवाहस्त्रिषुद्वयोः॥भृग्वंगिरोगणेष्वविशेषेष्वेकोपिवारयेत्॥शे
षगोत्रेष्वेकोसमानःप्रवरेविवाहंवारयेदित्यर्थः॥बौधायनोपि॥भृग्वंगिरसावधिकृत्य॰
द्व्यार्षेयसन्निपातेऽविवाहस्त्र्यार्षेयाणां॥त्र्यार्षेयसन्निपातेऽविवाहःपंचार्षेयाणामिति॥
भृग्वंगिरोगणेष्वविशेषेष्वेकोपिवारयेत्॥भृग्वंगिरोगणेष्वपिजमदग्निगौतमभरद्वाजेष्वे
कप्रवरसाम्येसर्वेषामप्यसाम्येवासगोत्रत्वादेवाविवाहइतिदिक्॥ अथगोत्रा
णिप्रवराश्चोच्यंते॥ तत्रबौधायनः॥ गोत्राणांतुसहस्राणिप्रयुतान्य
र्बुदानिच॥ऊनपंचाशदेवैषांप्रवराऋषिदर्शनात्॥ तत्रसप्तभृगवः॥ वत्सा
विदाआर्ष्टिषेणायस्कामित्रयुवःवैन्याशुनकाइति॥वत्सानांभार्गवच्यावनाप्नवानौर्वजा
मदग्न्येतिभार्गवौर्वजामदग्न्येतिवाभार्गवच्यावनाप्नवानेतिवा॥विदानांभार्गवच्यावनाप्न
वानौर्वबैदेतिपंच॥भार्गवौर्वजामदग्न्येतिवाएतौद्वौजामदग्न्यसंज्ञौ॥आर्ष्टिषेणानांभार्ग
वच्यावनाप्नवानार्ष्टिषेणानूपेतिभार्गवार्ष्टिषेणानूपेतिवा॥एषांत्रयाणांपरस्परमवि
वाहः॥वात्सानांभार्गवच्यावनाप्नवानेतिवत्सपुरोधसयोः॥पंचभार्गवच्यावनाप्नवानवा
त्सपौरोधसेतिबैजवनैमथितेति॥एतेत्रयःक्वचित्॥एषामविरुद्धैर्विवाहः॥अत्रतत्तद्ग
णस्थाऋषयोन्यश्चविशेषोमत्कृतेप्रवरदर्पणेज्ञेयः॥यस्कानांभार्गववैतहव्यसावेतसे
ति॥मित्रायुवानांभार्गववाध्र्यश्वदैवोदासेति॥भार्गवच्यावनदैवोदासेतिवा॥वाध्र्यश्वेत्ये
कोवा॥वैन्यानांभार्गववैन्यपार्थेति॥एतेएवश्यैताः॥शुनकानांशुनकेतिवागार्त्समदेति
वाभार्गवगार्त्समदेतिद्वौवाभार्गवशौनहोत्रगार्त्समदेतित्रयोवा॥वैदविश्वज्योतिषांभार्ग
ववैदवैश्वज्योतिषेति॥साठरमाठराणांभार्गवशाठरमाठरेति॥एतौद्वौक्वचित्॥यस्कादीनां
स्वगणंत्यक्त्वासर्वैर्विवाहः॥तदुक्तंस्मृत्यर्थसारे॥यस्कामित्रयुवोवैन्याःशुनकाःप्रवरैक्यतः
स्वंस्वंहित्वागणंसर्वैर्विवहेयुःपरस्परैरिति॥ अथांगिरसः॥ तेगौतमाभर
द्वाजाःकेवलांगिरसश्चेतित्रिधा॥तत्रगौतमादश॥आयास्याःशारद्वताःकौमंडादीर्घतमसः

औशनसःकारेणुपालयः॥राहूगणाःसौमराजकावामदेवाबृहदुक्थाश्चेति॥तत्रायास्यानां
आंगिरसायास्यगौतमेति॥शारद्वतानामांगिरसौतथ्यकाक्षीवतगौतमकौमंडेतिवा॥आंगिर
सायास्यौशिजगौतमकाक्षीवतेतिवा॥आंगिरसौतथ्यगौतमौशिजकाक्षीवतेतिवा॥आं
गिरसौतथ्यगौतमौशिजकाक्षीवतेतिवा॥आंगिरसौशिजकाक्षीवतेतित्रयोवा॥दीर्घतम
सामांगिरसौतथ्यकाक्षीवतगौतमदैर्घतमसेतित्रयोवा॥औशनसामांगिरसगौतमौशनसे
तित्रयः॥कारेणुपालानामांगिरसगौतमकारेणुपालेतित्रयः॥राहूगणानामांगिरसराहू
गणगौतमेति॥सोमराजकानामांगिरससौमराजकगौतमेति॥वामदेवानामांगिरसवाम
देव्यगौतमेति॥बृहदुक्थानांआंगिरसौमांगिरसबार्हदुक्थ्यगौतमेति॥आंगिरसवामदेव्या
मदेवबार्हदुक्थेतिवा॥उतथ्यानांआंगिरसौतथ्यगौतमेति॥औशिजानांआंगिरसऔ
शिजकाक्षीवतेति॥आयास्यत्वः॥आंगिरसआयास्यौशिजगौतमकाक्षीवतेतिकात्यायनः॥
एतौद्वौकेचित्॥राघुवानामांगिरसराघुवगौतमेतिकेचित्॥तत्रमूलंचिंत्यं॥एषांसर्वेषांगौ
तमानामविवाहः॥ अथभरद्वाजाः॥ तेचत्वारः॥भरद्वाजाः॥गर्गाः॥
ऋक्षाःकपयइति॥भरद्वाजानामांगिरसबार्हस्पत्यभरद्वाजेतित्रयः॥गर्गाणामांगिरसबार्ह
स्पत्यभरद्वाजसैन्यगार्ग्येतिपंच॥आंगिरससैन्यगार्ग्येतिवा॥अन्त्ययोर्व्यत्ययोवा॥भारद्वाज
गार्ग्यसैन्येतिवा॥गर्गभेदानामांगिरसतैत्तिरकापिभुवेति॥ऋक्षाणांकपिलानांचांगिर
सबार्हस्पत्यभरद्वाजवान्दनमातवचसेतिपंच॥आंगिरसवान्दनमातवचसेतित्रयोवा॥
कपीनामांगिरसामहीयवौरुक्षयसेति॥आमभुवामांगिरसभारद्वाजबार्हस्पत्यमंत्रवरा
मनवेतिपंच॥अयंकचित्॥भरद्वाजानांसर्वेषामविवाहः॥ अथकेवलांगिरसः॥
हरितानामांगिरसांबरीषयौवनाश्वेति॥आघोमांधातावा॥कुत्सानामांगिरसमांधातृकौत्सेति॥क
ण्वानामांगिरसाजमीढकाण्वेति॥आंगिरसघौरकाण्वेतिवा॥रथीतराणामांगिरसवैरूपराथी
तरेति॥आंगिरसवैरूपपार्षदश्वेतिवा॥अष्टादंष्ट्रपार्षदवैरूप्येतिवा॥अन्त्ययोरसनाविमौद्ग
ल्येतिवा॥विष्णुवृद्धानामांगिरसपौरुकुत्सत्रासदस्यवेति॥एषांस्वगणेविहायसर्वैर्विवाहोभ
वति॥हरितकुत्सयोस्तुनभवति॥अथात्रयः तेचत्वारः॥आत्रेयाःवाद्भुतकाःगविष्ठिराःमुद्ग
लाइति॥आत्रेयाणामात्रेयार्चनानसश्यावाश्वेति॥वाद्भुतकानामात्रेयार्चनानसवाद्भुतकेति।
धनंजयानामात्रेयार्चनानसधानंजय्येतिकेचित्॥गविष्ठिराणामात्रेयार्चनानसगाविष्ठिरेति।
आत्रेयगाविष्ठिरपौर्वातिथेतिवा॥मुद्गलानामात्रेयार्चनानसपौर्वातिथेति॥वामरथ्यसुमंग
लबैजवापानामात्रेयार्चनानसश्यावाश्वेति॥आत्रेयार्चनानसगाविष्ठिरेतिवा॥सुमंग
लानामत्रिसुमंगलश्यावाश्वेतिकेचित्॥अत्रेःपुत्रिकापुत्राणामात्रेयवामरथ्यपौत्रिकेति
॥अत्रीणांसर्वेषामविवाहः॥ अथविश्वामित्राः॥ तेदश॥ कुशि
कालौहिताःरौक्षकाःकामकायनाःअजाःकताःधनंजयाः अघमर्षणाःपूरणाःइंद्रकौशिका
इति॥कुशिकानांवैश्वामित्रदेवरातौदलेति॥लौहितानांवैश्वामित्राष्टकलौहितेति॥अन्त्य

योर्व्यत्ययोवा।वैश्वामित्रमाधुछंदसाष्टकेतिवा॥वैश्वामित्राष्टकेतिद्वौवा।।रौक्षकानांवैश्वामित्र
गाथिनरैवणेति॥वैश्वामित्ररौक्षकरैवणेतिवा॥कामकायनानांवैश्वामित्रदेवश्रवसदेवतरसे
ति॥अजानांवैश्वामित्रमधुछंदसाजेति।वैश्वामित्राश्मरथ्यवाधूलेतिवा॥अघमर्षणानांवि
श्वामित्राघमर्षणकौशिकेति॥पूरणानां॥वैश्वामित्रपौरणेतिद्वौ।विश्वामित्रदेवरातपौरणेति
वा॥इंद्रकौशिकानांविश्वामित्रेंद्रकौशिकेतिद्वौ॥धनंजयानांविश्वामित्रमाधुछंदसधानंजये
ति॥वैश्वामित्रमाधुछंदसाघमर्षणेतिवा॥कतानांवैश्वामित्रकात्यात्कीलेति॥एतेबौधायनो
क्ताः॥रौहिणानांवैश्वामित्रमाधुछंदसरौहिणेति।रेणूनांवैश्वामित्रगाथिनरैणवेति॥वेणूनां
वैश्वामित्रगाथिनवैणवेति॥जह्नूनांवैश्वामित्रशालंकायनकौशिकेति॥आश्मरथ्यानांवैश्वा
मित्राश्मरथ्यवाधूलेति।उदवेणूनांवैश्वामित्रगाथिनरैणवेति॥एतेआश्वलायनमात्स्योक्ताः
अन्येस्त्वन्येपिबहूगणाउक्ताः॥ तेऽन्यत्रमत्कृतौज्ञेयाः॥एषांविश्वामित्रा
णामविवाहः॥ अथकश्यपाः॥ तेपंच।निध्रुवाःकश्यपाःशंडिलारेभाः
लौगाक्षयश्च।निध्रुवानांकाश्यपावत्सारनैध्रुवेति॥कश्यपानांकाश्यपावत्सारासितेति॥रेभा
णांकाश्यपावत्साररैभेति।शंडिलानांकाश्यपावत्सारशांडिल्येति॥अन्त्यस्यानेदेवलोवासितोवा
॥शांडिल्यासितदेवलेतिवा॥काश्यपाऽसितदेवलेतिवा॥अन्त्ययोर्व्यत्ययोवा॥देवलासितेतिद्वौ
वा॥लौगाक्षीन्वक्ष्यामः।एषांकश्यपानामविवाहः॥ अथवसिष्ठाः ते
पंच॥वसिष्ठाःकुंडिनाउपमन्यवः॥पराशराजातूकर्ण्याश्चेति॥वसिष्ठानांवासिष्ठेंद्रप्रमदाभ
रद्वसिति॥वासिष्ठेत्येकोवा॥कुंडिनानांवासिष्ठमैत्रावरुणकौंडिन्येति॥उपमन्यूनांवासिष्ठेंद्र
प्रमदाभरद्वसव्येति॥वसिष्ठाभरद्वस्विंद्रप्रमदेतिवा॥आद्ययोर्व्यत्ययोवा॥पराशराणांवासि
ष्ठशाक्त्यपाराशर्येति॥जातूकर्ण्यानांवासिष्ठात्रिजातूकर्ण्येति॥वसिष्ठानांसर्वेषामवि
वाहः॥अन्त्यस्यानिमिश्च॥ अथागस्त्यः॥ तेचत्वारः इध्मवाहाःसोम
वाहाःसांभवाहाःयज्ञवाहाश्चेति॥आद्यानामागस्त्यदार्ढच्युतैध्मवाहेति॥आगस्त्येत्येकोवा
।सोमवाहानामागस्त्यदार्ढच्युतसोमवाहेति॥सांभवाहानांसांभवाहीत्यः॥यज्ञवाहानांयज्ञ
वाहीत्यः॥आद्योऽस्त्रोक्तावेव॥सारवाहानांतदंतास्त्रयः॥दर्भवाहानांतदंतास्त्रयः॥अगस्त्या
नामागस्त्यमाहेंद्रमायोभुवेति॥पूर्णमासानामागस्त्यपौर्णमासपारणेति॥हिमोदकाना
मागस्त्यहैमवर्चिहैमोदकेति॥पाणिकानामागस्त्यपैनायकपाणिकेति॥एतेषट्काचित्
॥आगस्त्यानांसर्वेषामविवाहः॥ अथद्विगोत्राः॥ शौंगशैशिरीणामांगि
रसबार्हस्पत्यभारद्वाजकात्यात्कीलेतिपंच॥कात्यात्कीलयोःस्थानेशौंगशैशिरीवा॥
आंगिरसकात्यात्कीलेतित्रयोवा॥एषांभरद्वाजैर्विश्वामित्रैश्चाविवाहः॥एवंकपिलानां
कतानांच।संकृतिपूतिमाषादीनामांगिरसगौरिवीतसांकृत्येति।शाक्त्यगौरिवीतसांकृत्ये
तिवा॥एतेसांख्यगणास्त्वेवसिष्ठैःशौंगशैशिरैर्लौगाक्षिभिश्चाविवाहः॥कश्यपैरपीतिप्रयो
गपारिजाते॥लौगाक्षीणांकाश्यपावत्सारवासिष्ठेति॥काश्यपावत्सारासितेतिवाएतेह।

वसिष्ठानन्तंकश्यपाः॥एषांवसिष्ठैःकश्यपैःसहत्र्यार्षेयश्चाविवाहः॥देवरातस्यजामदग्न्यै
र्विश्वामित्रैश्चाविवाहइतिप्रयोगपारिजाते॥तदुक्तं॥बह्वृचश्रुतौमध्येवांगिरसःसन्तुपे
यांतवपुत्रतां॥आंगिरसोजन्मनास्म्याजीगर्तिःश्रुतःकविरित्यंगिरोगणस्यत्वेनभार्गवजाम
दग्न्यत्वस्यतेर्बाधात्‌तेनप्रत्यक्षश्रुत्याहंविश्वामित्रस्यतेश्चबाधात्॥तेनद्वौदेवरातौ॥एक
आंगिरसःश्रुत्युक्तःअसौभार्गवः॥कल्पभेदेप्यांगिरसेनदेवरातेनजमदग्नेर्भवत्येवविवाहःभा
र्गवेणतुनेतितत्वं॥धनंजयानांविश्वामित्रैरत्रिभिश्चाविवाहः॥जातूकर्ण्यानांवसिष्ठैरत्रिभि
श्चाविवाहः॥एवंदत्तकक्रीतकृत्रिमस्वयंदत्तपुत्रिकापुत्रादीनांउत्पादकपालकयोःपित्रोर्गो
त्रप्रवरावर्ज्याविति॥प्रवरमंजरीनारायणवृत्तिप्रयोगपारिजातादयः॥अत्रसर्वत्रोपपत्तयःमू
लंचमत्कृतेप्रवरदर्पणेज्ञेयमितिदिक्॥क्षत्रियवैश्ययोस्तुपुरोहितगोत्रप्रवरावेवेतिसर्वसि
[illegible]
[illegible]
[illegible]
[illegible]
[illegible]
[illegible]
[illegible]
[illegible]
चतुर्विंशतिमते॥यस्तुदेशानुरूपेणकुलमार्गेणचोद्वहेत्॥नित्यंसव्यवहार्यःस्यादिदाचं
नत्प्रदर्शनमितिदिक्॥तथाचभृगुः॥यस्मिन्देशेपुरेग्रामेत्रैविद्येनगरेपिवा॥योयत्रविहितो
धर्मस्तंधर्मंनविचालयेदिति॥पुनश्चतुर्विंशतिमते॥यस्मिन्देशेयआचारःपारंपर्यक्रमा
गतः॥वर्णानांकिलसर्वेषांससदाचारउच्यते॥स्वगोत्राज्ज्ञानेतुसत्याषाढः॥अथानाज्ञा
तवंशीयः॥पुरोहितप्रवरेणाचार्यप्रवरेणवेति॥आचार्यगोत्रप्रवरानभिज्ञस्तुद्विजःस्वयं॥द
त्वात्मानंतुकस्मैचित्तद्गोत्रप्रवरोभवेत्॥यद्वास्वगोत्रप्रवरविधुरोजमदग्निजः॥विवाह॰
चनतेनैवगोत्रेणानुसमाचरेत्इतिकश्चित्॥॰ अथमातृगोत्रनिर्णयः
शातातपः॥ मातुलस्यसुतामूढ्वामातृगोत्रांतथैवच॥समानप्रवरांचैवगत्वाचां
द्रायणंचरेत्॥ यद्यपि॥सगोत्रांमातुरप्येकेनेच्छंत्युद्वाहकर्मणि॥जन्मनाम्नोरविज्ञाने
तूद्वहेदविशंकितइतिव्यासोक्तेः॥अज्ञातनामत्वेनसगोत्रत्वदोषः।तथापिनेदंकलौप्रव
र्तते॥गोत्रान्मातुःसपिंडाच्चविवाहोगोवधस्तथेतिकलिवर्ज्यत्वोक्तेः॥इदंमातृगोत्रवर्जनं॰
माध्यंदिनीयानामेव॥मातृगोत्रंमाध्यंदिनीयानामितिसत्याषाढोक्तेरितिकश्चित्महार्ण॰
वकल्पितंतन्निर्मूलम्॥ अन्यथायज्ञेरादेः कात्यायनस्यतु गोत्रनिषेधः
॥अतएवाहप्रवरमंजरीकारः॥दोषस्यातिगुरुत्वात्सर्वेषांमातृगोत्रंवर्ज्यमिति॥यत्तु

जैरादीनां माध्यंदिनीयानामप्याचरणाच्च ॥ एकस्मिन्प्रवरे तुल्ये मातृगोत्रे वरस्य च ॥ न तमु-
द्वाहेन कुर्वीत सा कन्या भगिनी स्मृतेति मातृकुले प्रवरचिंतनमुक्तं तदासुरादिविवाहोढापर-
मिति दिक् ॥ विस्तरस्तु ग्रंथांतरेभ्यो ज्ञेयः ॥ सगोत्रादिविवाहे प्रायश्चित्तं स्मृत्यर्थसारे ॥ उक्तं
सगोत्रसंबंधविवाहविषये स्थितं ॥ यदि कश्चिज्ज्ञानतस्तां कन्यामूढ्वोपगच्छति ॥ गुरुतल्प-
व्रतांश्चरेद्गर्भस्तज्जोंत्यतां व्रजेत् ॥ भोगतस्तां परित्यज्य पालयेज्जननीमिव ॥ अज्ञानादेवं चे-
दुढ्वा त्रिभिर्गर्भस्तु काश्यपः ॥ एवं सापिंड्येपि ॥ सपिंडापत्यदारेषु प्राणत्यागो विधीयते ॥ इ-
ति बृहद्यमोक्तेः ॥ तिथितत्वे बौधायनः ॥ सपिंडां सगोत्रां चेदयत्नोपयच्छेन्मातृवदेनां बिभृ-
यात् ॥ कन्याविवाहकालउक्तो ज्योतिर्निबंधे ॥ षडब्दमध्ये नोद्वाह्या कन्या वर्षद्वयं यतः ॥ सो-
मो भुंक्ते ततस्तद्वद्गंधर्वश्च तथानलः ॥ राजमार्तंडः ॥ अयुग्मे दुर्भगा नारी युग्मे तु विधवा भवेत्
॥ तस्माद्गर्भान्विते युग्मे विवाहे सा पतिव्रता ॥ मासत्रयादूर्ध्वमयुग्मवर्षे युग्मेपि मासत्रयमे-
व यावत् ॥ विवाहशुद्धिं प्रवदंति संतो वात्स्यादयः स्त्रीजनिजन्ममासात् ॥ पराशरमाधवीये
तु ॥ जन्मतो गर्भाधानाद्वा पंचमाब्दात्परं शुभं ॥ कुमारीवरणं दानं मेखलाबंधनं तथेत्युक्तं
॥ संबंधनत्वियमः ॥ कन्या द्वादशवर्षाणि याप्रदत्ता वसेद्गृहे ॥ ब्रह्महत्या पितुस्तस्याः सा कन्या
वरयेत्स्वयं ॥ भारते ॥ त्रिंशद्वर्षः षोडशाब्दां भार्यां विंदेत नग्निकां ॥ अष्टवर्षाष्टवर्षां वा धर्मे
सीदति सत्वरः ॥ अतोप्रवृत्ते रजसि कन्यां दद्यात्पिता सकृत् ॥ तत्रैव ॥ सप्तसंवत्सरादूर्ध्वं विवा-
हः सार्ववर्णिकः ॥ कन्यायाः शस्यते राजन्नन्यथा धर्मगर्हितः ॥ राजमार्तंडः ॥ राहुग्रस्ते तथायु-
द्धे पितॄणां प्राणसंशये ॥ अतिप्रौढा च या कन्या नानुकूल्यं प्रचक्षते ॥ चकारादतिबालापि
प्राणसंशय इत्युक्तेः ॥ मनुः ॥ त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीं ॥ त्र्यष्टवर्षोष्टवर्षां
वा धर्मे सीदति सत्वरः ॥ यद्यपि ॥ विवाहस्त्वष्टवर्षायाः कन्यायाः शस्यते बुधैरिति संवर्तोक्ते-
रतऊर्ध्वं रजस्वलेत्यादेश्च दशवर्षादूर्ध्वं विवाहो निषिद्धस्तथापि दातुरभावे द्वादशषोडशा-
ब्दे ज्ञेये ॥ त्रीणि वर्षाण्यृतुमती कांक्षेत पितृशासनमिति ॥ पराशरमाधवीये बौधायनोक्ते-
श्च ॥ मनुः ॥ स्त्रीसंबंधे दशैतानि कुलानि परिवर्जयेत् ॥ हीनक्रियं निष्पुरुषं निश्छंदो रोमशा-
र्शसं ॥ क्षय्यामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च तथा ॥ नर्क्षवृक्षनदीनाम्नीं न च भीष-
णनामिकां ॥ यमः ॥ तस्मादुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत् ॥ तथा मूलजा-
दीनां फलमायुक्तम् ॥ तथा वर्णवश्यग्रहमैत्र्यादिघटितविचारो ज्योतिर्विद्भ्यो ज्ञेयः ॥ वि-
स्तरात्तु नोच्यते ॥ अथ गुर्वर्कबलं ॥ ज्योतिर्निबंधे गर्गः ॥ स्त्रीणां गुरुब-
लं श्रेष्ठं पुरुषाणां रवेर्बलं ॥ तयोश्चंद्रबलं श्रेष्ठमिति गर्गेण भाषितं ॥ जन्मत्रिदशमारिस्थः
पूजया शुभदो गुरुः ॥ विवाहेथ चतुर्थाष्टद्वादशस्थो मृतिप्रदः ॥ देवलः ॥ नष्टात्मजा धन-
वती विधवा कुशीला पुत्रान्विताह्यधना सुभगा विपुत्रा ॥ स्वामिप्रिया विगतपुत्रधवा ध-
नाढ्या वंध्या भवेत्सुरगुरौ क्रमशोभिजन्म ॥ बृहस्पतिः ॥ ऋषचापकुलीरस्थो जीवोप्य-
शुभगोचरः ॥ अतिशोभनतां दद्याद्विवाहोपनयादिषु ॥ लग्नाद्द्वादशदशमचतुर्थे जन्मनि

षष्ठाष्टमेतृतीयेच॥शार्ङ्गपाणिग्रहणेजीवेवैधव्यमाप्नोतिगर्गः॥सर्वत्रापिशुभंदद्यात्द्वाद
शाब्दात्परंगुरुः॥पंचषष्ठाष्टयोरेवशुभगोचरतामतः॥सप्तमाब्देचवर्षेपुत्रोच्चस्वर्क्षगतोप
दि॥अशुभोपिशुभंदद्यात्शुभदःसुतकिंपुनः॥रजस्वलायाःकन्यायागुरुशुद्धिंनचिंतयेत्
॥अष्टमेपिप्रकर्तव्योविवाहस्त्रिगुणार्चनात्॥अर्कगुर्वोर्बलंगौर्यारोहिण्यर्कबलाश्रितं
।कन्यांचंद्रबलाप्रोक्तावृषलीलग्नतोबला॥अष्टवर्षाभवेद्गौरीनववर्षाचरोहिणी॥दश
भवेत्कन्याअतऊर्ध्वंरजस्वला॥ अथबृहस्पतिशांतिः॥शौनकः॥ कन्या
वोद्वाहकालेतुआनुकूल्यंनविद्यते॥ब्राह्मणस्योपनयनेगुरोर्विधिरुदाहृतः॥सुवर्णेन
गुरुंकृत्वापीतवस्त्रेणवेष्टयेत्॥ईशान्यांधवलंकुंभंधान्योपरिनिधायच॥दमनंमधुप
र्ण्यंचपलाशंचैवसर्षपान्॥मांसीगुडूच्यपामार्गौविडंगीशंखिनीवचाम्॥सहदेवीहरि
क्रांतांसर्वौषधीशतावरीबलांचसहदेवीचनिशाद्वितयमेवच॥कृत्वाज्यभागपर्यंतंस्व
शाखोक्तविधानतः॥ग्रहोक्तमंडलेभ्यर्च्यपीतपुष्पाक्षतादिभिः॥देवपूजोत्तरेकालेततः
कुंभानुमंत्रणं॥अश्वत्थसमिधश्चाज्यंपायसंसर्पिषायुतम्॥यवव्रीहितिलाःसाम्यामं
त्रेणैवबृहस्पतेः॥अष्टोत्तरशतंसर्वंहोमशेषंसमापयेत्॥पुत्रदारसमेतस्यअभिषेकंस
माचरेत्॥कुंभाभिमंत्रणोक्तैश्चसमुद्रज्येष्ठमंत्रतः॥प्रतिमांकुंभवस्त्रंचआचार्यायनि
वेदयेत्॥ब्राह्मणान्भोजयेत्पश्चाच्छुभदःस्यान्नसंशयः॥ इतिबृहस्पतिशांतिः
शौनकः॥गुर्वादित्येव्यतीपातेवक्रातीचारगेगुरौ॥नष्टेशशिनिशुक्रेवाबालेवृद्धेयवाद्य
रौ॥पौषेचैत्रेयवर्षासुशरद्यधिकमासके॥केतूद्गमेनिरंशेर्केसिंहस्थेऽमरमंत्रिणि
।विवाहव्रतयात्रादिपुरहर्म्यगृहादिकम्॥क्षौरंविधोयविघ्नंचयत्नतःपरिवर्जयेत्॥
मदनपारिजातेऽत्रिः॥ सागरे॥बालेशुक्रेवृद्धेशुक्रेतद्वज्जीवेन
ष्टेजीवे॥बालेजीवेजीवेसिंहेसिंहादित्येजीवादित्ये॥तथामलिम्लुचेमासिसुराचार्येऽति
चारगे॥वापीकूपविवाहादिक्रियाःप्राग्युदितास्त्यजेत्॥सिंहस्थंमकरस्थंचगुरुंयत्ने
नवर्जयेत्॥लल्लः॥अतीचारगतोजीवस्तंराशिंनैतिचेत्पुनः॥लुप्तःसंवत्सरोज्ञेयःसर्वकर्मबहि
ष्कृतः॥सिंहस्थगुरोरपवादमाहपराशरः॥गोदाभागीरथीमध्येनोद्वाहःसिंहगेगुरौ॥मक
रस्थेसर्वदेशेतथामीनगतेरवौ॥० वसिष्ठोपि॥० विवाहोदक्षिणेकूलेगौत
म्यानेतरत्रतु॥भागीरथ्युत्तरेकूलेगौतम्यादक्षिणेतथा॥विवाहोव्रतबंधश्चसिंहस्थेज्येन
दुष्यति॥कन्यादातृक्रममाहयाज्ञवल्क्यः॥विवाहोत्रनवंध॥ ।पितापितामहोभ्रातास
कुल्योजननीतथा॥कन्याप्रदःपूर्वनाशेप्रकृतिस्थःपरःपरः॥अप्रयच्छन्समाप्नोतिभ्रूण
हत्यामृतावृतौ॥गम्यंत्वभावेदातॄणांकन्याकुर्यात्स्वयंवरं॥भ्रातॄणांसंस्कृतानामेवाधि
कारः॥० याज्ञवल्क्यः॥ असंस्कृतास्तुसंस्कार्याभ्रातृभिःपूर्वसंस्कृतैः॥भ
गिन्यश्चनिजादंशाद्दत्वांशंतुतुरीयकं॥अत्रचकारेणपूर्वसंस्कृतैरित्यस्यानुवृत्तेर्विवाह
पर्याप्तद्रव्यदानेसांशसमांशाचतुर्थांशभागदानेवासंस्कृतग्रहणंव्यर्थंस्यात्॥अतःकार्यंनिय

मोयं॥तेनानुपनीतभ्रातृमात्रादिसत्त्वेमात्रादेरेवाधिकारेणभ्रातुरित्युक्तम्संबंधतत्त्वादौ। क-
न्यास्वयंवरेमातुर्दातृत्वेचताभ्यामेवनांदीश्राद्धंकार्य्यंतत्रचस्वयंप्रधानसंकल्पमात्रंकृत्वान्यद्ब्रा-
ह्मणद्वाराकारयेदितिप्रयोगपारिजाते॥असंस्कृतभ्रात्राद्यभावेस्वयमेवनांदीश्राद्धंकुर्या-
न्माता॥पुत्रेषुविद्यमानेषुनान्यंवैकारयेत्स्वधामितिनिषेधादुपनयनेनकर्माधिकारस्यजा-
तत्वाच्चेति॥ पृथ्वीचंद्रोदयः॥ माधवीयेऽपरार्केचनारदः॥पितादद्या-
त्स्वयंकन्यांभ्रातावानुमतेपितुः॥मातामहोमातुलश्चसकुल्योबांधवस्तथा॥मातात्वभावेस-
र्वेषांप्रकृतौयदिवर्त्तते॥तस्यामप्रकृतिस्थायांकन्यांदद्युःस्वजातयः।सकुल्यःपितृपक्षीयः
बांधवोमातृवंश्यः॥मदनपारिजातेकात्यायनः॥स्वयमेवौरसींदद्यात्पित्रभावेस्वबांधवाः॥
मातामहस्ततोन्याहिमातावाधर्मजांसुतां॥ततोमामौरसीभिन्नांधर्मजांनियोगात्क्षेत्रजांमा-
तामहोमातुलोवादद्यात्॥तेनौरसीदानेपितृबंधुषुसत्सुमातामहादीनांनाधिकारः॥अनुम-
तिंविना॥अस्यापवादस्तत्रैव॥दीर्घप्रवासयुक्तेषुपौगंडेषुचबंधुषु॥मातातुसमयेदद्यादौर-
सीमपिकन्यकां॥ मनुः॥ यदातुनैवकश्चित्स्यात्कन्याराजानमाव्रजेत्॥परकी-
यकन्यादानेविशेषो॥ मदनरत्नेस्कांदे॥ आत्मीकृत्यसुवर्णेनपरकी-
यांतुकन्यकां॥धर्म्मेणविधिनादानंसमगोत्रेपियुज्यते॥अत्रप्रकृतिस्थग्रहणादप्रकृतिस्थे-
नकृतमकृतमेव॥स्वतंत्रोपदितंकार्यंकुर्यादप्रकृतिंगतः॥तदप्यकृतमेवस्यादस्वातंत्र्यस्य
हेतुतः॥ इत्यपरार्केनारदोक्तेः॥ यदितुसप्तपदीविवाहहोमादिप्रधानंजा-
तंतदांगवैकल्येपिनावृत्तिर्विवाहस्य॥गौडाअप्येवमाहुः॥ तंत्रेवमरीचिः॥ गौ-
रीदत्त्वाकटस्थंवैकुंठरोहिणींददत्॥कन्यादद्ब्रह्मलोकंरौरवंतुरजस्वलां॥ अथमा-
सनिर्णयः॥ तत्रजन्ममासेविशेषःप्रागुक्तः॥ज्योतिःप्रकाशेव्यासः॥माघफाल्गुन-
वैशाखेषुज्येष्ठामार्गशीर्षके॥ज्येष्ठेवाषाढमासेचसुभगावित्तसंयुता॥श्रावणेवापियोषेवा
कन्याभाद्रपदेतथा॥चैत्राश्वयुक्कार्त्तिकेषुयातिवैधव्यतांलघु॥ नारदः॥ माघ-
फाल्गुनवैशाखज्येष्ठमासाःशुभावहाः॥कार्त्तिकोमार्गशीर्षश्चमध्यमौनिंदिताःपरे॥ व-
सिष्ठः॥ पौषेपिकुर्य्यान्मकरस्थितेर्केचैत्रेभवेन्मेषगतोयदास्यात्॥प्रशस्तमाषाढकृ-
तेविवाहंवदंतिगर्गोमिथुनस्थितेर्के॥आचार्य्यचूडामणौज्योतिर्गर्गराजमार्त्तंडौ॥मांगले-
षुविवाहेषुकन्यासंवरणेषुच॥दशमासाःप्रशस्यंतेचैत्रपौषविवर्ज्जिताः॥ आपस्तं-
बः॥ सर्वऋतवोविवाहस्यशैशिरौमासौपरिहाप्योत्तमंचनैदाघं॥अत्रमाघफाल्गु-
नाषाढवर्जनवमासामुख्यःकालइतिसुदर्शनभाष्येस्थितायांब्रह्मविद्यातीर्थैश्चोक्तम्॥
बौधायनसूत्रेपि॥ सर्वेमासाविवाहस्यशुचितपस्तपस्यमित्येके॥तेनपूर्वोत्तरौ
वर्जयेच्छिशिरसंबंधिनौमासौयौषचैत्रौविवाहइतिनिर्णयामृतव्याख्यानंमौर्ख्यकृतमपि-
त्युपेक्ष्यम्॥निशिचेत्सर्वेषुद्वादशस्वपिमासेषुउद्वहेदितिकालादर्शः॥यत्तुज्योतिषेमाघा-
दिविधयस्तेगृह्यसूत्राणांद्विजपरत्वेनप्राबल्याच्छूद्रादिपराः॥ज्योतिषे॥वात्स्योवदंमनू

नमिच्छति तथा रेभ्यो यनचोत्तरं ॥ श्रीवासंतमृतुं विहाय मुनयो मांडव्य शिष्या जगुः चैत्रं प्रोष्ठपा
राशरः ॥ परिणये सौषं चर्दौ भौम्यं प्राषाढादिचतुष्टयं नहि तदा कैश्चित्सदिष्टं बुधैः ॥ चंडेश्वरः
मार्गमासि तथा ज्येष्ठे क्षौरं परिणयं व्रतम् ॥ ज्येष्ठपुत्रदुहित्रोस्तु यत्नेन परिवर्जयेत् ॥ कृत्तिकास्थ
रवित्यक्त्वा ज्येष्ठपुत्रस्य कारयेत् ॥ उत्सवादिषु कार्येषु दिनानि दश वर्जयेत् ॥ रत्नकोशे
॥ जन्मर्क्षे जन्मदिवसे जन्ममासे शुभं त्यजेत् ॥ ज्येष्ठमासाद्यगर्भस्य शुभं वर्ज्यं स्त्रिया अपि ॥
पराशरः ॥ अज्येष्ठा कन्यका यत्र ज्येष्ठपुत्रो वरो यदि ॥ व्यत्ययो वा तयोस्तत्र ज्येष्ठो मासः
शुभप्रदः ॥ मिहिरः ॥ ज्येष्ठस्य ज्येष्ठकन्याया विवाहो न प्रशस्यते ॥ तयोरन्यतरे ज्येष्ठे ज्येष्ठो मा
सः प्रशस्यते ॥ द्वौ ज्येष्ठौ मध्यमौ प्रोक्तावेकं ज्येष्ठं सुखावहं ॥ ज्येष्ठत्रयं न कुर्वीत विवाहे सर्वसंम
तं ॥ यत्तु ॥ सार्वकालमेके विवाहमिति तदासुरादिविवाहविषयं ॥ धर्म्येषु विवाहेषु कालप
रीक्षणं नाधर्म्येष्विति गृह्यपरिशिष्टात् ॥ रत्नमालायामप्येवम् ॥ तेनासुरादयो माघचैत्रा
दिनिषिद्धेष्वपि भवंति ॥ अथ दश दोषाः व्यवहारोच्चये ॥ वेधश्च ल
त्ता च तथैव पातस्त्वार्द्रं रवेर्घोटशयोगचक्रम् ॥ युतिश्च जामित्रसुपग्रहश्च बाणास्य वन्ने
चदशैव दोषाः ॥ एषां लक्षणं ज्योतिषे ज्ञेयम् ॥ अतीचारगे गुरौ तु वसिष्ठः ॥ अतीचारगते जी
वे वर्जयेत्तदनंतरं ॥ विवाहादिषु कार्येषु अष्टाविंशतिवासरान् ॥ रत्नमालायां ॥
एकपंचनवयुग्मषट्दशत्रीणि सप्त चतुरष्टलाभदः ॥ द्वादशाजवृषभादिराशितो घातचं
द्र इति कीर्तितो बुधैः ॥ नारदः ॥ भूबाणनंदद्व्यष्टाश्च रसदिक्वह्निशैल
जाः ॥ वेदा वसुशिवादित्या घातचंद्रो यथाक्रमम् ॥ यात्रायां युद्धकार्येषु घातचंद्रं विवर्जयेत्
॥ विवाहे सर्वमांगल्ये चौलादौ व्रतबंधने ॥ घातचंद्रो नैव चिंत्य इति पाराशरोऽब्रवीत् ॥ ज्योति
र्निबंधे ॥ विवाहचौलव्रतबंधयज्ञे पट्टाभिषेके च तथैव राज्ञां ॥ सीमंतयात्रासु तथै
व जाते नो चिंतनीयः खलु घातचंद्रः ॥ अकालजा भवेयुश्चेद्विद्युन्नीहारवृष्टयः ॥ प्रत्यर्कप
रिवेषेंद्रचापाभ्रध्वनयो यदि ॥ दोषाय मंगलेनूनमदोषायैव कालजाः ॥ अकालदृष्टि
स्वरूपमाह लल्लः ॥ पौषादिचतुरो मासान् प्रोक्ता वृष्टिरकालजेति ॥ शार्ङ्गधरः ॥
निर्घाते क्षितिचलने ग्रहयुद्धे राहुदर्शने चैव ॥ आयं च दिनात्कन्या परिणीता नाशमुपया
ति ॥ उल्कापातेंद्रचापप्रबलघनरजोधूमनिर्घातविद्युद्दृष्टिप्रत्यर्कदोषादिषु सकलबुधै
स्त्याज्यमेवैकमात्रं ॥ दुःस्वप्ने दुर्निमित्ते शुभफलदशे दुर्भगे नोन्मातवृद्धौ । चौले मौंजीनि
बंधे परिणयनविधौ सर्वदा त्याज्यमेव ॥ ज्योतिःप्रकाशे ॥ अर्वाक् षो
डशनाड्यः संक्रांतिषु परतः परतः ॥ उपनयनव्रतयात्रापरिणयनादौ विवर्ज्यास्ताः गर्गः
दिग्दाहे दिनमेकं च ग्रहे सप्त दिनानि तु ॥ भूकंपे च समुत्पन्ने त्र्यहमेव तु वर्जयेत् ॥ उल्का
पाते त्रिदिवसं धूमे पंच दिनानि च ॥ वज्रपाते चैकदिनं वर्जयेत्सर्वकर्मसु ॥ दर्शनादर्श
नाद्राहुकेत्वोः सप्तदिनं त्यजेत् ॥ यावत्केतूदमस्तावदशुभः समयो भवेत् ॥ अस्यापवादो
द्भुतसागरे ॥ अथ दिवसत्रयमध्ये मृडयानीयं यदा भवति ॥ उत्पातदोषशमनं तदैव संभा

हुराचार्याः॥ संबंधतत्वे॥ भूकंपादेर्न दोषोस्ति वृद्धिश्राद्धे कृते सति॥ अथ परिहार्यैकमाया
वैधव्ययोगे विशेष उच्यते मार्कंडेयपुराणे॥ बालवैधव्ययोगे तु
कुंभद्रुप्रतिमादिभिः॥ कृत्वा लग्नं ततः पश्चात्कन्योद्वाह इति चापरे॥ तत्र पुनर्भूदोषाभा
व उक्तो विधानखंडे॥ स्वर्णांबुपिप्पलानां च प्रतिमा विष्णुरूपिणी॥ तया सह विवाहे तु पु
नर्भूत्वं न जायते॥ सूर्यारुणसंवादे॥ विवाहात्पूर्वकाले च चंद्रतारावलान्विते॥ विवाहो
क्ते च मंडपे कुंभेन सह चोद्वहेत्॥ सूत्रेण वेष्टयेत्पश्चाद्दशतंतून्विधानतः॥ कुंभं च
कृत्वा देहं तयोरेकांतमंदिरे॥ ततः कुंभं च निःसार्य प्रमज्य सलिलाशये॥ ततोभिषेचनं कु
र्यात्पंचपल्लववारिभिः॥ कुंभप्रार्थनमत्रैव॥ वरुणांगस्वरूपाय जीवनानां समाश्रय॥
पतिं जीवय कन्यायाश्चिरं पुत्रसुखं कुरु॥ देहि विष्णो वरं देव कन्यां पालय दुःखतः॥ ततो
लंकारवस्त्राद्यं ब्राह्मणाय प्रतिपादयेत्॥ इति कुंभविवाहः॥ तदान
मपि तत्रैवोक्तम्॥ ... पसाधुमामेष्य संसृज्य विविधाहृयो॥ तस्मै दद्या ... वि
ष्णोर्मूर्तिं चतुर्भुजाम्॥ शुद्धस्वर्णसुवर्णेन वित्तशक्त्याथवा पुनः॥ निर्मितां रुचिरां शंखगदा
चक्राब्जसंयुतां दधानां वाससी पीते कमलोत्पलमालिनीम्॥ सदक्षिणां च तां दद्यान्मंत्रमे
तमुदीरयेत्॥ यन्मया प्राचि जनुषि घ्नत्या पतिसमागमम्॥ विषोपविषशस्त्राद्यैर्हतो वाति
विरक्तया॥ प्राप्यमानं महाघोरं यशःसौख्यधनापहम्॥ वैधव्याद्यतिदुःखौघनाशाय सु
खलब्धये॥ बहुसौभाग्यलब्ध्यै च महाविष्णोरिमां तनुम्॥ सौवर्णीं निर्मितां शक्त्या तुभ्यं संप्र
ददे द्विज॥ अनघाद्याहमस्मीति त्रिवारं प्रजपेदिति॥ एवमस्त्विति तस्यां किं गृहीत्वा स्वगृहं
विशेत् ततो वैवाहिकं कुर्याद्विधिना मृगीदृशः॥ अन्येप्यश्वत्थविवाहवृक्षसेचनादयस्त
त्रैव ज्ञेयाः॥ विस्तरभयान्नोच्यंते॥ अथ प्रतिकूलादि॥ ज्योतिर्निबं
धे गर्गः॥ कृते तु निश्चये पश्चान्मृत्युर्भवति कस्यचित्॥ तदा न मंगलं कुर्यात्कृ
ते वैधव्यमाप्नुयात्॥ ज्योतिर्मेधातिथिः॥ वधूवरार्थं घटिते सुनिश्चिते वरस्य गेहेप्यथ क
न्यकायाः॥ मृत्युर्यदि स्यान्मनुजस्य कस्यचित्तदा न कार्यं खलु मंगलं बुधैः॥ मंगलं
विवाहः॥ स्मृतिचंद्रिकायाम्॥ कृते वाङ्निश्चये पश्चान्मृत्युर्भवति गो
त्रिणः॥ तदा न मंगलं कार्यं नारी वैधव्यदं ध्रुवम्॥ भृगुः॥ वाग्दानानंतरं यत्र कुलयोः क
स्यचिन्मृतिः॥ तदोद्वाहो नैव कार्यः स्ववंशक्षयदो यतः॥ शौनकः॥ वरव
ध्वोः पिता माता पितृव्यश्च सहोदरः॥ पितृव्यस्त्री सुतो भ्राता भगिनी चाविवाहिता॥ एभिरत्र
विपन्नैश्च प्रतिकूलं बुधैः स्मृतम्॥ अन्यैरपि विपन्नैस्तु केचिदूचुर्न तद्भवेत्॥ सोऽन्यः॥ वाग्दा
नानंतरं माता पिता भ्राता विपद्यते॥ विवाहो नैव कर्तव्यः स्ववंशहितमिच्छता॥ संकटे तु
मेधातिथिः॥ वाग्दानानंतरं यत्र कुलयोः कस्यचिन्मृतिः॥ तदा संवत्सरादूर्ध्वं विवाहः शुभ
दो भवेत्॥ स्मृतिरत्नावल्याम्॥ पितुरब्दमशौचं स्यात्तदर्धं मातुरेव च॥ मासत्रयं तु भार्यायाः
स्तदर्धं भ्रातृपुत्रयोः॥ अन्येषां तु सपिंडानामाशौचं मासमीरितम्॥ तदंते शांतिकं कृत्वा तत्

ण्डोलनंविधीयते॥ज्योतिःप्रकाशे॥प्रतिकूलेपिकर्त्तव्योविवाहोमासतःपरः॥शांतिंविधाय
गांदत्वावाग्दानादिचरेत्तुनः॥शांतिंविनायकशांतिंतथाचमेधातिथिः॥संकटेसमनुप्राप्ते
याज्ञवल्क्येनयोगिना॥शांतिंकृत्वागणेशस्यकृत्वातांशुभमाचरेदिति॥प्रतिकूलेनकर्त्तव्योगर्भधा
वदृतुत्रयम् प्रतिकूलेपिकर्त्तव्यमित्याहवृहद्वसिष्ठः॥प्रतिकूलेसपिंडस्यमासमेकंविवर्जयेत्॥ ज्यो
तिःसागरे॥ दुर्भिक्षेराष्ट्रभंगेचपित्रोर्वाप्राणसंशये॥प्रौढायामपिकन्यायांनानुकूल्यंप्रतीक्ष
ते॥मेधातिथिः॥पुरुषत्रयपर्यंतंप्रतिकूलंस्वगोत्रिणाम्॥प्रवेशनिर्गमौतद्वत्तथामुंडनमंडने॥प्रे
तकर्माण्यपनिर्वर्त्यचरेन्नाभ्युदयक्रियाम्॥आचतुर्थंततःपुंसिपंचमेशुभदंभवेत्॥ अथर
जोदोषनिर्णयमाह॥माधवीये॥ प्रारंभात्प्राग्विवाहस्यमातायदिरजस्वला॥निरभि
स्वकर्त्तव्यासहत्वश्रुतिचोदनात्॥प्रारंभान्नांदीश्राद्धात्॥नांदीमुखंविवाहादौविप्रादिनानसेवप्रार
भोक्तः॥मेधातिथिः॥चौलेव्रतबंधेचविवाहेयज्ञकर्मणि॥भार्यारजस्वलायस्यप्रायस्तस्यनशो
भनं॥वधूवरान्यतरयोर्जननीचेद्रजस्वला॥तस्याःशुद्धेःपरंकार्यंमांगल्यंमनुरब्रवीत्॥ वृद्ध
मनुः॥ विवाहव्रतचूडासुमातायदिरजस्वला॥तदानमंगलंकार्यंशुद्धौकार्यंशुभेप्सुभिः॥ग
र्गः॥ यस्योद्वाहादिमांगल्येमातायदिरजस्वला॥तदानतत्प्रकर्त्तव्यमायुःक्षयकरंयतः॥नांदीश्रा
द्धोत्तरंरजोदोषेतुकपर्दिकारिकासु॥सूतिकोदक्ययोःशुद्ध्यैगांदद्याद्धोमपूर्वकं॥प्रातिकर्मणिशुद्धिः
स्यादितरस्मिन्नशुद्ध्यति॥अलाभेसुमुहूर्त्तस्यरजोदोषेचसंगते॥श्रियंसंपूज्यतत्कुर्यात्पाणिग्रह
णमंगलम्॥हैमींमाषमितांपद्मांश्रीसूक्तविधिनार्चयेत्॥प्रत्यृचंपायसंहुत्वाअभिषेकंसमाचरे
दिति॥सूतकादिसंकटेतुकूष्मांडीभिर्घृतंहुत्वापयस्विनींगांदत्वाविवाहादिकुर्यादितिचप्रागुक्तं॥

अथैकक्रियानिर्णयः॥ज्योतिर्निबंधेवृद्धमनुः॥

एकमातृजयोरेकवत्सरेपुरुषस्त्रियोः॥नसमानक्रियांकुर्यान्मातृभेदेविधीयते॥एतेनैकस्यपुंसोवि
वाहद्वयमेकदिनेनिषिद्धंमातृभेदाभावात्॥ नारदः॥ पुत्रोद्वाहात्परंपुत्रीविवाहोनकर्त
तुत्रये॥नतयोर्व्रतमुद्वाहान्मंडनादपिमुंडनं॥ वराहः॥ विवाहस्त्वेकजातानांषण्मासाभ्यंतरे
यदि॥असंशयंत्रिभिर्वर्षैस्तत्रैकाविधवाभवेत्॥ नमंडनाच्चापिहि मदनरत्नेवसिष्ठः॥
नपुंविवाहोर्ध्वमृतुत्रयेपिविवाहकार्यंदुहितुःप्रकुर्यात्॥नमंडनाच्चापिहिमुंडनंचगोत्रैकतायांय
दिनास्तिभेदः॥एकोदरस्थानांविवाहस्त्वेकस्मिन्पाणिग्रहणंनिषेधम्॥वत्सरासमध्येमुनयःसम
सुर्नमुंडनंमंडनतोपिकार्यम्॥एतच्चपार्थस्तत्रैव॥ऋतुत्रयस्यमध्येवैरमास्यस्यप्रवेशनं॥तथा
ह्येकोदरस्यापिविवाहस्तुप्रशस्यते॥साएवसाम्॥फाल्गुनेचैत्रमासेतुपुत्रोद्वाहोपनायने॥भेदा
दब्दस्यकुर्वीतनर्तुत्रयविलंबनं॥संहिताप्रदीपे॥ऊर्ध्वंविवाहात्तनयस्यनैवकार्योविवाहोदुहितुः
समार्द्धं॥अमाप्यकर्मापितुरालयंचवधूःप्रवेशास्यगृहेनचार्यो॥ मदनरत्नेवसिष्ठः॥
द्विशोभनंत्वेकगृहेपिनेष्टंशुभंतुपश्चान्नवभिर्दिनैस्तु॥आवश्यकेशोभनमुत्सवोवाद्वारेथवा
पिविभेदतोवा॥एकोदरप्रसूतानांनानाविकार्यंत्र्यंभवेत्॥भिन्नोदरप्रसूतानांनेतिशातातपोब्रवी
त्॥ ज्योतिर्निबंधेकात्यायनः॥ कुलेऽर्तुत्रयपादर्वाक्मंडनान्नतुमुंडनं॥प्रोक्तान्निर्ग

मौनेस्त्रीनकुर्यान्मंगलत्रयम्॥कुर्वंतसुनयः केचिदन्यस्मिन्वत्सरेलघु॥लघुवागुरुकार्यंवाप्राप्तेनैमि
त्तिकंतुयत्॥पुत्रोद्वाहप्रवेशाख्यः कन्योद्वाहस्तुनिर्गमः॥मुंडनंचौलमित्युक्तंव्रतोद्वाहौतुमंगलं॥चौ
लंमुंडनमेवोक्तंवर्जयेन्मुंडनात्परं॥मौंजीचोभयतःकार्यायतोमौंजीनमुंडनं॥अभिन्नेवत्सरेपिस्यात्त
द्दहस्तत्रभेदयेत्॥अभेदेतुविनाशःस्यान्नकुर्य्यादेकमंडपे॥संकटेतुकपर्दिकारिकासुवराहमि
हिरस्त्व॥उद्वाह्यपुत्रीन्नपितापिदध्यात्पुत्रान्तरस्योद्वहनंकदाचित्॥यावच्चतुर्थंदिनमत्रपूर्वंसमाप्य
चान्योद्वहनंविदध्यात्॥ कश्यपः॥ मौंजीबंधस्तथोद्वाहःषण्मासाभ्यंतरेपिवा
॥पुत्र्युद्वाहंनकुर्वीतविभक्तानांनदोषकृत्॥ ज्योतिर्निबंधे॥ विवाहमारभ्यच
तुर्थिमध्येश्राद्धंदिनंदर्शदिनंयदिस्यात्॥वैधव्यमाप्नोतितदासुकन्याजीवेत्पतिश्चेदनपत्यतास्या
त्॥तथा॥विवाहमध्येयदिचेत्स्वयाहस्तत्रस्वमुख्याःपितरोनयांति॥इत्तेविवाहेपरतस्तुकुर्या
च्छ्राद्धंस्वधाभिर्नतुहर्षयेतम्॥येवाभद्रंदूषयंतिस्वधाभिरितिश्रुतेश्च॥मासिकविषयेहेमाद्रौशा
ठ्यायनिः॥प्रेतश्राद्धानिसर्वाणिसपिंडीकरणंतथा॥अपकृष्यापिकुर्वीतकर्तुंनांदीमुखंद्विजः॥
वृद्धिविनाप्रकर्षेदोषमाह॥ तत्रैवउशनाः॥ वृद्धिश्राद्धविहीनस्तुप्रेतश्राद्धा
नियश्चरेत्॥सश्राद्धीनरकेघोरेपितृभिःसहमज्जतीति॥ मेधातिथिः॥ प्रेतकर्माण्य
निर्वर्त्यचरेन्नाभ्युदयक्रियां॥आचतुर्थंततःपुंसियंचमेशुभदंभवेत्॥ स्मृत्यंतरे॥ स
पिंडीकरणादर्वागपकृष्यकृतान्यपि॥पुनरप्यपकृष्यंतेवृद्ध्युत्तरनिषेधनात्॥ स्मृतिसारा
वल्याम्॥ भ्रातृयुगेस्वसृयुगेभ्रातृस्वसृयुगेतथा॥एकस्मिन्मंडपेचैवनकुर्य्यान्मंडनद्व
यम्॥सोदरविषयमेतत्॥यमः॥एकोदरप्रसूतानामेकस्मिन्वासरेपुनः॥विवाहंनैवकुर्वीत
मंडनोपरिमुंडनं॥ गार्ग्यः॥ भ्रातृयुगेस्वसृयुगेभ्रातृस्वसृयुगेतथा॥नकुर्यान्मंगलंकिं
चिदेकस्मिन्मंडपेहनि॥एकस्मिन्वासरेमासेकुर्यायमलजातयोः॥क्षौरंचैवविवाहंचमौंजीबंध
नमेवच॥ ज्योतिर्विवरणे॥ एकोदरयोर्द्वयोरेकदिनोद्वहनेभवेन्नाशः॥नद्यं
तरएकदिनेवोप्याद्भुःशंकटेचशुभं॥ऊर्ध्वंविवाहात्कुमदीनरस्यनारीविवाहोनऋतुत्रयस्यात्॥
नारीविवाहान्नदहेपिशस्तन्नरस्यपाणिग्रहमाहुरार्याःभिन्नमातृजयोस्तुएकविवाहान्नदहे॥ पि
शस्तन्नरस्यपाणिग्रहमाहुरार्याः भिन्नमातृजयोस्तुएकविवाहमाह॥ मेधातिथिः॥
पृथक्मातृजयोःकार्योविवाहस्त्वेकवासरे॥एकस्मिन्मंडपेकार्यःपृथक्वेदिकयोस्तथा॥पु
ष्पपट्टिकयोःकार्य्यंदर्शनंनशिरःस्थयोः॥भगिनीभ्यामुभाभ्यांचयावत्सप्तपदीभवेत्॥यमयो
स्तुविशेषःमदनकारिकायाम्॥एकस्मिन्वत्सरेचैकवासरेमंडपेतथा॥कर्तव्यंमंगलंस्वस्रोर्भ्रा
त्रोर्यमलजातयोः॥ ज्योतिर्निबंधेनारदः॥ प्रत्युद्वाहोनैवकार्योनैकस्मैदुहितृ
द्वयम्॥नैवैकजन्मयोःपुंसोरेकजन्मेतुकन्यके॥ तथा॥ नैवंकदाचिदुद्वाहोमेकदामुं
डनद्वयं॥नैकजन्मेतुकन्येद्वेपुत्रयोरेकजन्मयोःनपुत्रीद्वयमेकस्मैप्रदद्यात्तुकदाचनेति॥ क
न्यायारजोदर्शनेतुअपरार्के संवर्तः॥माताचैवपिताचैवज्येष्ठभ्रातातथैवच॥त्रयस्तेनरकंयां
तिदृष्ट्वाकन्यांरजस्वलां॥हारीतः॥पितुर्गेहेतुयाकन्यारजःपश्यत्यसंस्कृता॥साकन्यावृषलीज्ञेया

तत्पतिर्वृषलीपतिः॥ देवलात्रिकश्यपाः॥ सर्वोर्ईतदेवा॥भ्रूणहत्यापितुस्तस्याःसाकन्या
वृषलीस्मृता॥यस्तांसमुद्वहेत्कन्यांब्राह्मणोज्ञानदुर्बलः॥अश्राद्धेयमपांक्तेयंतंविद्याद्वृषलीपतिं
॥ माधवीयेबौधायनः॥ त्रीणिवर्षाण्यृतुमतीकांक्षेतपितृशासनं॥ विष्णुः
ऋतुत्रयमुपास्यैवकन्याकुर्यात्स्वयंवरं॥अत्रवरस्यदोषाभावमाहयमः॥कन्याद्वादशवर्षाणि
याप्रदत्तावसेद्गृहे॥भ्रूणहत्यापितुस्तस्याःसाकन्यावरयेत्स्वयं॥एवंचोपनतांपत्नींनावमन्येतक
दाचन॥नगृतांवधकींविंद्यान्मनुःस्वायंभुवोब्रवीत्॥मनुः॥अलंकारंनाददीतपितृदत्तंस्वयंवरा॥
पितृदत्तंमातृदत्तंस्तेयीस्याद्यदितंहरेत्॥वरंप्रत्याह॥पित्रेनदद्याच्छुल्कंतुकन्यामृतुमतींहरन्॥
सहिस्वाम्यादतिक्रामेदृतूनांप्रतिरोधनात्॥अत्रप्रायश्चित्तमुक्तमाश्वलायनेन॥कन्यामृतु
मतींशुद्धांकृत्वानिष्कृतिमात्मनः॥शुद्धिंचकारयित्वातामुद्वहेदात्तशस्त्रधीः॥पितानष्टानृतून्स्वयं
ञ्चास्तुगणयेदादितःसुधीः॥दानावधिगृहेयस्तात्पालयेच्चरजोवती॥दद्यात्तद्दतुसंख्यागाःशक्त
कन्यापितायदि॥दातव्यैकापिनिःस्वेनदानेतस्यायथाविधि॥दद्याद्वाब्राह्मणेभ्यश्चमतिनिःस्वःस
दक्षिणाम्॥तस्यातीतर्तुसंख्येभ्युवरायप्रतिपादयेत्॥उपोष्यत्रिदिनंकन्यारात्रौपीत्वागवांपयःअ
दृष्टरजसेदद्यात्कन्यायैरत्नभूषणं॥तामुद्वहन्वरश्चापिकूष्मांडैर्जुहुयाद्घृतम्॥ मदन
पारिजातेयज्ञपार्श्वः॥ विवाहेविततेतन्त्रेहोमकालउपस्थिते॥कन्यामृतुमतींदृष्ट्वाकथं
कुर्वंतियाज्ञिकाः॥स्नापयित्वातुतांकन्यामर्चयित्वायथाविधि॥युंजानामाहुतिंहुत्वाततस्तंत्रं
प्रवर्तयेत्॥ बौधायनसूत्रे॥ अथयदिकन्योपसाद्यमानावोह्यमानावारजस्वला
स्यात्तामनुमंत्रयेत्॥पुमांसौमित्रावरुणौपुमांसावश्विनावुभौ॥पुमानिंद्रश्चसूर्यश्चपुमांसं
वर्द्धात्वियमिति॥ अथद्वादशरात्रमलंकृत्वाप्राशयेत्॥पंचगव्यमथशुद्धांकृत्वाविव
हेत्॥अत्रगांधर्वादयष्टौविवाहास्तद्व्यवस्थाचाकरेज्ञेया॥ मनुः॥ षडानुपूर्व्याविप्रस्य
क्षत्रस्यचतुरोवरान्॥विट्शूद्रयोस्तुतानेवविद्याद्धर्म्यान्नराक्षसान्॥चतुरःआसुरगांधर्वराक्षस
पैशाचान्॥तान्राक्षसवर्ज्यान्वैश्यशूद्रयोःस्मरेत्॥आसुरंवैश्यशूद्रयोः॥ हेमाद्रौपैठी
नसिः॥ राक्षसोवैश्यस्य॥पैशाचःशूद्रस्य॥प्रचेताः॥पैशाचोसंस्कृतप्रसूतानांप्रति
लोमजानांच॥मनुः॥राक्षसस्तथासुरौवैश्येशूद्रेचांत्यस्तुगर्हितः॥क्षत्रियादेःसंकटेपैशाचमाह
॥माधवीयेवत्सः॥ सर्वोपायैरसाध्यास्यात्सुकन्यापुरुषस्ययां॥चौर्येणापिविवा
हेनसाविवाह्यारहःस्थिता॥गांधर्वादिविवाहेषूदकपूर्वकंदानमाह॥तत्रैवयमः॥नोदके
ननवाचाचकन्यायाःपतिरुच्यते॥पाणिग्रहणसंस्कारात्पतित्वंसप्तमेपदे॥ पराशर
माधवीयेदेवलोपि॥ गांधर्वादिविवाहेषुपुनर्वैवाहिकोविधिः॥कर्तव्यश्चत्रिभिर्व
र्णैःसमर्थेनाग्निसाक्षिकः॥त्रैवर्णिकैर्गांधर्वादौविप्रवर्ज्यमधिकारउक्तः॥तत्रैवपरिशिष्टे
गांधर्वासुरपैशाचाविवाहाराक्षसाश्चयः॥पूर्वंपरिग्रयस्तेषुपश्चाद्धोमोविधीयते॥अतो
होमादर्वाक्कृतेभार्यात्वाभावाद्दानंतरंदेया॥तथाचअत्रैववसिष्ठबौधायनौ॥बलादपहृ
ताकन्यामंत्रैर्यदिनसंस्कृता॥अन्यस्मैविधिवद्देयायथाकन्यातथैवसेति॥अत्रमंत्रसंस्का

राभावेन्यस्मैदानस्यसर्वविवाहेषुसाम्याद्बलादपहारेराक्षसपैशाचयोर्विशेषवचनंव्यर्थं।।तेनतयो
र्निसंस्कृतासंस्कृतावेत्याकन्यानुमत्यभावेऽन्यस्मैदेयेतिव्याख्येयं।। मदनपारिजातेनारदः
पाणिग्रहणिकामंत्रानियतंदारलक्षणं।।तेषांनिष्ठाचविज्ञेयाविद्वद्भिःसप्तमेपदे।। स्मृति
चंद्रिकायामपरार्केचैवं।।आशौचेतुयाज्ञवल्क्यः।।दानेविवाहयज्ञेचसंग्रामेदेशविप्लवे।।आ
पद्यपिचकष्टायांसद्यःशौचंविधीयते।।केषामित्यपेक्षिते।। ब्रह्मपुराणेउक्तं।। दा
तुःप्रतिगृहीतुश्चकन्यादानेचनोभवेत्।।विवाहविघ्नःकन्यायालाजाहोमादिकर्मणीति।।व्रत
यज्ञविवाहेषुश्राद्धेहोमेर्चनेजपे।।आरब्धेसूतकंनस्यादनारब्धेतुसूतकमितिविष्णुवचना
च्च।।प्रारंभस्तेनैवोक्तःप्रारंभोवरणंयज्ञेसंकल्पोव्रतसत्रयोः नांदीमुखंविवाहादौश्राद्धेपाक
परिक्रियेति।।वरणमितिमधुपर्कपरं।।गृहीतमधुपर्कस्ययजमानाच्चऋत्विजः।।पश्चाद
शौचेपतितेनभवेदितिनिश्चयः।। इतिब्रह्मोक्तेः।। मधुपर्कात्पूर्वंतुभवत्येवाशौ
चमितिशुद्धिविवेकः।। रामांडारभाष्येप्येवं।। नांदीमुखावधिश्चस्मृत्यंतरे।।एक
विंशत्यहर्यज्ञेविवाहेदशवासराः।।त्रिषट्चौलोपनयनेनांदीश्राद्धंविधीयते।।आरंभाभावे
पच्चविष्णुः।।नदेवप्रतिष्ठाविवाहयोःपूर्वसंभृतयोरपीति।।अत्रप्रायश्चित्तमाहमदनपारिजा
तेविष्णुः।।अनारब्धविशुद्ध्यर्थंकूष्मांडैर्जुहुयाद्घृतं।।गांदद्यात्पंचगव्याशीततःशुद्ध्यतिसूत
की।।संग्रहेपि।।संकटेसमनुप्राप्तेसूतकेसमुपागते।।कूष्मांडीभिर्घृतंहुत्वागांचदद्यात्पयस्वि
नीं।।चूडोपनयनोद्वाहप्रतिष्ठादिकमाचरेत्।।यदैवसूतकप्राप्तिस्तदैवाभ्युदयक्रिया।।अन्ना
दिषुविशेषःषट्त्रिंशन्मते।।विवाहोत्सवयज्ञेषुत्वंतरामृतसूतके।।परैरन्नंप्रदातव्यंभोक्तव्यं
चद्विजोत्तमैः।।परैरसगोत्रैः।।भुंजानेषुतुविप्रेषुत्वंतरामृतसूतके।।अन्यगेहोदकाचांताःस
र्वेतेशुचयःस्मृताः।।एतदाशौचात्पूर्वमपृथक्कृतान्नविषयम्।।तदशेषमन्नंत्याज्यमित्यर्थः
।।पृथक्कृतेतुबृहस्पतिराह।।विवाहोत्सवयज्ञेषुत्वंतरामृतसूतके।।पूर्वसंकल्पितान्नेषुनदो
षःपरिकीर्तितइति।।धर्मार्थेविवाहकरणेफलमुक्तंमहाभारते।।ज्ञात्वास्ववित्तसामर्थ्यादेकं
वोद्वाहयेद्द्विजम्।।तेनाप्याप्नोतितत्स्थानंशिवभक्तोनरोध्रुवं।। अपरार्केदक्षः।।
मातापितृविहीनंतुसंस्कारोद्वाहनादिभिः।।यःस्थापयतितस्येहपुण्यसंख्यानविद्यते।। म
दनरत्नेभविष्ये।। विवाहादिक्रियाकालेतत्क्रियासिद्धिकारणम्।।यःप्रयच्छति
तद्धर्मज्ञःसोऽश्वमेधफलंलभेत्।।कन्यागृहेभोजननिषेधोपितत्रैव।।अप्रजायांतुकन्यायां
नभुंजीतकदाचन।।दौहित्रस्यमुखंदृष्ट्वाकिमर्थमनुशोचति।। अपरार्केआदिपुराणे
।।विष्णुर्जामातरंमन्येतस्यकोपंनकारयेत्।।अप्रजायांतुकन्यायांनाश्नीयात्तस्यवैगृहे।।ब्रह्म
देयांनवैकन्यांदत्वाश्नीयात्कदाचन।। अथभुंजीतमोहाच्चेत्पूयास्येनरकेवसेत्।।तत्रै
वकश्यपः।।अहतंयंत्रनिर्मुक्तंवासःप्रोक्तंस्वयंभुवा।।पश्चात्तन्मांगलिक्येषुतावत्कालंनसर्व
दा।।यंत्रनिर्मुक्तंनूतनं।।विवाहमध्येस्त्रियासहभोजनेपिनदोषइत्याहहेमाद्रौप्रायश्चित्त
कांडेगालवः।।विवाहकालेयात्रायांपथिचौरसमाकुलेअसहायोभवेद्विप्रस्तदाकार्यंद्विज

न्मभिः॥एकयानसमारोहएकपात्रेचभोजनं॥ विवाहेपथियात्रायांकृत्वाविप्रोनदोषभाक्
॥अन्यथादोषमाप्नोतिपश्चाच्चांद्रायणंचरेत्॥ मिताक्षरायामप्येवम्॥रत्नमालाया
म्॥ मूलमैत्रमृगरोहिणीकरैःपौष्णमारुतमघोत्तरान्वितैः॥भौमशौरिरविवारवर्जिते
पाणिपीडनविधिर्विधीयते॥अत्रानिष्टनक्षत्रादौदानमुक्तंज्योतिषे॥ वियन्नारेगुडंदद्यान्नि
धनेतिलकांचनं॥प्रत्यरेलवणंदद्याच्छागंदद्यात्रिजन्मसु॥चंद्रेचशंखंलवणंचतारेतिथौवि
रुद्धेत्वथतंदुलांश्च॥धान्यंचदद्यात्करणेचवारेयोगेविरुद्धेकनकंप्रदेयम्॥विवाहेमंडपमा
ह॥ वसिष्ठः॥ षोडशारत्निकंकुर्याच्चतुर्द्वारोपशोभितं॥मंडपंतोरणैर्युक्तंतत्रवे
दिंप्रकल्पयेत्॥अष्टहस्तंतुरचयेन्मंडपंवाद्विषट्करं॥ दैवज्ञमनोहरे॥ चित्रा
विशाखाशततारकाश्विनीज्येष्ठाभरण्यौशिवभाच्चतुष्टयम्॥हित्वाप्रशस्तंफलतैलवेदि
काप्रदानकंकंडनमंडपादिकं॥हेमाद्रौव्यासः॥कंडनंदलनंयवारकंमंडपस्तंभहरिद्वर्णका
घृखिलं॥तत्संबंधिगतागतस्तंभेवैवाहिकेकुर्यात्॥यवारकंचिकसाइतिप्रसिद्धं॥वैवाहि
केतुदिवसेशुभेवाथातिथौशुभेचतुर्थिकंप्रकुर्वीतविधिदृष्टेनकर्मणा॥वेदीमाहनारदः॥हस्तोच्छ्रि
तांचतुर्हस्तैश्चतुरस्रांसमंततः॥स्तंभैश्चतुर्भिःसुश्लक्ष्णांवामभागेतुसद्मनि॥समांतथाचतुर्दिक्षुसो
पानैरतिशोभितां॥प्रागुदक्प्रवणांरंभास्तंभहंसशुकादिभिः॥एवंविधामारुरुहेमिथुनंसाग्नि
वेदिकामिति॥ सप्तर्षिमते॥ मंगलेषुचसर्वेषुमंडपोगृहमानतः॥कार्यःषोडश
हस्तोवाद्व्यूनहस्तोदशावधिः॥स्तंभैश्चतुर्भिरेवात्रवेदीमध्येप्रतिष्ठिता॥हस्तोच्छ्राः॥सोपानप
श्चिमतःउपरिभागेउक्तापरिमाणाच्छिन्नम्॥ अथमृदाहरणम्॥ज्योतिर्निबंधे॥नारदः
कर्तव्यंमंगलेष्वादौमंगलायांकुरार्पणम्॥नवमेसप्तमेवापिपंचमेदिवसेपिवा॥तृतीयेबीज
नक्षत्रेशुभवारेशुभोदयेसम्यग्गृहाण्यलंकृत्यवितानध्वजतोरणैः॥सहवादित्रनृत्याद्यैर्गत्वाप्रा
गुत्तरांदिशं॥तत्रमृत्तिकांतांश्लक्ष्णांगृहीत्वापुनरागतः॥मृण्मयेष्वथवावैणवेषुपात्रेषुयोज
येत्॥अनेकबीजसंयुक्तांतोयपुष्पोपशोभितां॥ शौनकः॥ आधानंगर्भसं
स्कारंजातकर्मचनामच॥हित्वान्यत्रविधातव्यंमंगलेंकुरवापनम्॥ बृहस्पतिः॥
आत्यंतिकेषुकार्येषुकार्यसद्योंकुरार्पणम्॥अत्रैववाद्यंनहरिद्रावंदनंचकार्यम्। ज्यो
तिःप्रकाशे॥चतुर्थोमंडपःश्रेष्ठःसप्तमःपंचमस्तथा॥नवमैकादशौश्रेष्ठौनेष्टौषष्ठतृतीयकौ
विवाहभेस्वोदयेवाकन्यावरणमाचरेत्॥वरस्यापिवरणमाहचंडेश्वरः॥उपवीतंफलंपुष्पंवा
सांसिविविधानिच॥देयंवरायवरणेकन्याभ्रात्राद्विजेनवेति॥वाग्दानोत्तरंवरमरणेअपरार्के
स्मृतिचंद्रिकायांचवसिष्ठः॥अद्भिर्वाचाचदत्तायांम्रियेतोर्ध्वंवरोयदि॥नचमंत्रोपनीतास्या
त्कुमारीपितुरेवसा॥ यत्तुनारदः॥ उद्वाहितापिसाकन्यानचेत्संप्राप्तमैथुना॥
पुनःसंस्कारमर्हेवयथाकन्यातथैवसेति॥ यच्चकात्यायनः॥ वरोयदन्यजा
तीयःपतितःक्लीबएवच॥विकर्मस्थःसगोत्रोवादासोदीर्घामयोपिवा॥ऊढापिदेयासान्यस्मै
सहावरणाभूषणेति॥इदंकलौनिषिद्धम्॥देवरेणसुतोत्पत्तिर्दत्ताकन्यानदीयतेइत्यादिनपुरा

गोकलौनिषेधात्॥दत्ताशब्दऊढापरः॥ऊढायाःपुनरुद्वाहमितिहेमाद्राबुक्तेः॥अतएवस
गोत्रासपिंडादिविवाहेपिभोगतस्तांपरित्यज्यपालयेज्जननीमिवेत्युक्तो॥ननुक्वापिपुनर्विवाहउ
क्तः॥देशांतरगमनेतुकात्यायनः॥वरयित्वातुयःकश्चित्प्रणश्येत्पुरुषोयदा॥ऋत्वागमांस्
त्रीनतीत्यकन्यान्यंवरयेद्वरम्॥ अयमर्थोनारदेपि॥ प्रतिगृह्यतुयःकन्यांवरो
देशांतरंव्रजेत्॥त्रीनृतून्समतिक्रम्यकन्यान्यंवरयेद्वरं॥शुल्कदानेतुमनुवसिष्ठौ॥कन्यायां
दत्तशुल्कायांम्रियतेयदिशुल्कदः॥देवरायप्रदातव्यायदिकन्यानुमन्यते॥ चंद्रिकायां
कात्यायनः॥ प्रदायशुल्कंगच्छेद्यःकन्यायाःस्त्रीधनंतथा॥धार्यासावर्षमेकंतुदेयान्य
स्मैविधानतः॥अनेकेभ्योहिदत्तायामनूढायांतुतत्रैव॥सर्वागतश्चसर्वेषांलभ्येनाथवरस्तुता
म्॥पश्चाद्धारेणयद्दत्तंतस्याःप्रतिलभेतसः॥अथागच्छेत्त्वनोढायांदत्तंसर्वंवरोहरेत्॥ मनुः
नानुशुश्रुमजात्वेतत्पूर्वेष्वपिहिजन्मसु॥शुल्कसंज्ञेनमूल्येनछन्नंदुहितृविक्रयम्॥ अन्यांचेद्द
र्शयित्वान्यावोढुःकन्याप्रदीयते॥तउभेएकशुल्केनवहेदित्यब्रवीन्मनुः मनुः॥ नद
त्वाकस्यचित्कन्यांपुनर्दद्याद्विचक्षणः॥दत्वापुनःप्रयच्छन्हिप्राप्नोतिपुरुषानृतं॥पंचपश्वा
नृतेहंतीत्युक्त्वासहस्रपुरुषानृतनम्॥सएव॥एतत्तुनपरेचक्रुर्नापरेजातुसाधवः॥यदन्यस्या
न्यनुज्ञायपुनरन्यस्यदीयते॥सकृदाहददानीतित्रीण्येतानिसकृत्सकृत्॥ भारतेप्येवम्
याज्ञवल्क्यःसकृत्प्रदीयतेकन्याहरंस्तांचौरदंडभाक्॥ याज्ञवल्क्यः॥ दत्तामपि
हरेत्पूर्वांश्रेयांश्चेद्वरआव्रजेत्॥पूर्वस्यदोषसत्वेदद्यादिति॥विज्ञानेश्वरः संबंधतत्त्वेवसिष्ठः
॥कुलशीलविहीनस्यषंढादिपतितस्यच॥अपस्मारिविधर्मस्यरोगिणांवेषधारिणांदत्तामपि
हरेत्कन्यांसगोत्रोढांतथैवच॥ मनुः॥ षंढांधवधिरादीनांविवाहोस्तियथोचितम्॥ विवा
हासंभवेतेषांकनिष्ठोविवहेत्तदा॥पितृव्यपुत्रेसापत्नेपरदारसुतेषुच॥विवाहाधानयज्ञादौ
परिवेदोनदूषणम्॥अग्रहत्त्वंचविस्तरभीतेर्नोच्यतेइतिदिक्॥ अथनांदीश्राद्धेविशेषंत
दधिकारिविशेषंचाग्रेवक्ष्यामः॥इदंचाद्यविवाहेपिताकुर्यात्॥द्वितीयादौवरएवकुर्यात्॥नां
दीश्राद्धंपिताकुर्यादाद्येपाणिग्रहेपुनः॥अतऊर्ध्वंप्रकुर्वीतस्वयमेवतुनांदिकमितिस्मृतेः॥ त्रि
कांडमंडनोपि॥ पित्रोस्तुजीवतोःकुर्यात्सुतःपाणिग्रहंपरं॥पितुर्नांदीमुखंश्राद्धंनो
क्तंतस्यमनीषिभिरिति॥ रेणुकारिका॥ उक्तेकालेविवाहांगंकुर्यान्नांदी
मुखंपिता॥देशांतरेविवाहश्चेत्तत्रगत्वाभवेदिदं॥लग्नघटीस्थापनमाह॥ नारदः॥
षडंगुलमितोत्सेधंद्वादशांगुलमायतम्॥कुर्यात्तालवत्ताम्रपात्रंतद्दशभिःपलैः॥ताम्रपा
त्रेजलेपूर्णेमृत्पात्रेवाथवाशुभे॥मंडलार्द्धोदयंवीक्ष्यरवेस्तत्रविनिक्षिपेत्॥तत्रमंत्रः॥ मु
ख्यंत्वमसियंत्राणांब्रह्मणानिर्मितंपुरा॥भावाभावायदंपत्योःकालसाधनकारणमिति॥
वरस्यमधुपर्कमाह॥ याज्ञवल्क्यः॥ प्रतिसंवत्सरंत्वर्घ्याःस्नातकाचार्यपा
र्थिवाः॥प्रियोविवाह्यश्चतथायज्ञंप्रत्यृत्विजःपुनः॥अत्रविशेषोगृह्यपरिशिष्टे॥वरस्ययाभवे
त्काचीयंकर्मतत्कारयामधुपर्कइतियाज्ञिकाः॥जयंतस्तु॥वरणवदर्चनंयजमानस्या

स्वयैवमधुपर्कमित्याह॥ नत्वनारियंतेवृद्धाः॥ अत्रपंचाशता भवेद्वृद्धानदंडं विष्टरस्तनरमादित्यृह्य
परिशिष्टादेर्विष्टरादिलक्षणंमधुपर्कादिविधिश्चस्वगृह्याज्ज्ञेयः॥ कन्यादानेप्रतितामहपूर्वकंतै
त्तुक्तं॥ स्मृत्यर्थसारेनांदीमुखेविवाहेचप्रपितामहपूर्वकं॥ नामसंकीर्तयेद्विद्वानन्यत्रपितृपूर्वकं
नांदीमुखस्वेरितिवह्वृचाद्यतिरिक्तविषयम्॥ गृह्यपरिशिष्टेपित्राद्यानुलोम्यंस्मानान्॥ व्यासः
भुक्त्वासमुद्वहेत्कन्यांसाविद्रीग्रहणंतथाउपोषितःसुतांदद्याद्दर्चितायद्विजायतु॥ भुक्त्वेतिम
धुपर्केवैधभोजनपरं॥ गृह्यपरिशिष्टे॥ कन्यांवरयमाणानामेषधर्मोविधीय
ते॥ प्रत्यङ्मुखायवरयंतिप्रतिगृह्णंतिप्राङ्मुखाः मदनरत्नेहेमाद्रौचऋष्यशृंगः॥ वर
गोत्रंसमुच्चार्यप्रपितामहपूर्वकं॥ नामसंकीर्तयेद्विद्वान्कन्यायाश्चैवमेवहि॥ तिष्ठेत्पूर्वमुखो
दातावरःप्रत्यङ्मुखोभवेत्॥ मधुपर्कार्चितायेनातस्मैदद्यात्सदक्षिणां॥ उदपात्रंततोगृह्यमंत्रे
णानेनदापयेत्॥ गौरीकन्यामिमांविप्रयथाशक्तिविभूषितां॥ गोत्रायशर्मणेतुभ्यंदत्तांविप्र
समाश्रयः॥ भूमिंगांचैवदासींचवासांसिचस्वशक्तितः॥ महिषीवाजिनश्चैवदद्यात्स्वर्णमणी
नपि॥ ततःस्वगृह्यविधिनाहोमाद्यंकर्मकारयेत् यथाचारंविधेयानिमंगलकुतुकानिच॥ ए
तत्कन्यादानंत्रिःकार्यमितिशौनकः॥ गृहप्रवेशनीयहोमेविशेषमाहाश्वलायनः॥ अर्द्धरात्रे
व्यतीतेतुपरेद्युःप्रातरेवहि॥ गृहप्रवेशनीयःस्यादितियज्ञविदोविदुरिति॥ चौपासनहोमेविशेष
माह॥ शौनकः॥ यदिरात्रौविवाहाग्निरुत्पन्नःस्यात्तथासति॥ उपक्रम्योत्तरस्मा
न्हःसायंपरिचरेदमुं॥ यदिरात्रौनवनाडीमध्येऽग्नुत्पत्तिस्तदातदेवहोमारंभः॥ तदुत्तरंचेत्पर
दिनेसायमारंभइतिसुदर्शनभाष्येउक्तं॥ अथदेवकोत्थानं॥ समेवद्विव
सेकुर्याद्देवकोत्थापनंबुधः॥ षष्ठंचविषमंनेष्टंमुक्त्वापंचमसप्तमौ॥ निर्णयदीपेगा
र्ग्यः॥ नांदीश्राद्धेकृतेपश्चाद्यावन्मातृविसर्जनं॥ दर्शश्राद्धंक्षयश्राद्धंस्नानंशीतोदके
नच॥ अपसव्यंस्वधाकारंनित्यश्राद्धंतथैवच ब्रह्मयज्ञंचाध्ययनंनदीसीमातिलंघनं॥ उपवासव्रतंचै
वश्राद्धभोजनमेवच॥ नैवकुर्युःसपिंडाश्चमंडपोद्वासनावधिः॥ बृहस्पतिः॥ तीर्थेविवा
हेयात्रायांसंग्रामेदेशविप्लवे॥ नगरग्रामदाहेचस्पृष्टास्पृष्टंनदुष्यति॥ योगयाज्ञवल्क्यः॥
नस्नायादुत्सवेतीतेमंगलंविनिवर्त्यच॥ अनुव्रज्यसुहृद्बंधूनर्चयित्वेष्टदेवताम्॥ ज्योतिषे
॥ स्नानंसचैलंतिलमिश्रकर्मप्रेतानुयानं॥ कलशप्रदानं॥ अपूर्वतीर्थामरदर्शनंच
चविवर्जयेन्मंगलतोऽब्दमेकम्॥ मासषट्कंविवाहादौव्रतप्रारंभणेनच॥ जीर्णभांडादिनत्याज्यंगृ
हसंमार्जनंतथा॥ ऊर्ध्वंविवाहात्पुत्रस्यतथाचव्रतबंधनात्॥ आत्मनोमुंडनंचैववर्षंवर्षार्द्ध
मेवच॥ अभ्यंगेसूतकेचैवविवाहेपुत्रजन्मनि॥ मांगल्येषुचसर्वेषुनधार्यंगोपिचंदनं॥ ज्यो
तिर्निबंधे॥ उद्वाहात्प्रथमेचतुर्थदिवसेभर्तुर्गृहेकन्यकाहन्यात्तज्जननीक्षयेनिजतनुंभ्रा
तृंश्चयतिस्नेहकं॥ पौषेचश्वशुरंयतिंचमलिनेचैत्रेस्वपित्रालयेतिष्ठंतीपितरंनिहंतिनभयं.
तेषामभावेभवेत्॥ निबंधे॥ विवाहात्प्रथमेपौषेआषाढेचाधिमासके॥ नसाभर्तुर्गृहे
तिष्ठेच्चैत्रेपितृगृहेतथा॥ हेमाद्रौस्मृत्यंतरे॥ विवाहव्रतचूडासुवर्षमर्द्धंतदर्द्धकं॥ पिंड

दानेमृदास्नानंनकुर्यात्तिलतर्पणम्॥ अथवधूप्रवेशः॥जयतुंगे॥ मार्गशीर्षेतथा
माघेमाघवेज्येष्ठसंज्ञके॥सुप्रशस्तेभवेद्वेश्मप्रवेशोनवयोषिताम्॥ नारदः॥ आरभ्यो
द्वाहदिवसात्तत्षष्ठेवाप्यष्टमेदिने॥वधूप्रवेशःसंपत्त्यैदशमेथसमेदिने॥ संग्रहे॥ विवा
हमारभ्यवधूप्रवेशोयुग्मेतिथौषोडशवासरांतः॥ऊर्ध्वंततोऽब्देऽयुजिपंचमांतादतःपरस्तान्नि
यमोनचास्ति॥ नारदः॥ समेवर्षेसमेमासेयदिनारीगृहंव्रजेत्॥आयुष्यंहरतेभर्तुः
सानारीमरणंव्रजेत्॥प्रयोगरत्नेतु॥वधूप्रवेशःप्रथमेतृतीयेशुभप्रदःपंचमकेथवाब्दे॥द्वि
तीयकेवाथचतुर्थकेवाषष्ठेवियोगामयदुःखदःस्यादित्युक्तम्॥तत्रमूलंचिंत्यम्॥ बृहद्व
सिष्ठोपि॥षष्ठाष्टमेवादशमेदिनेवाविवाहमारभ्यवधूप्रवेशः॥पंचांगसंशुद्धदिनंविनापि वि
धावसद्भोच्चरगेपिकार्यः॥ लल्लः॥ स्वभुवनपुरप्रवेशेदेशानांविप्लवेनयोद्वाहे॥नव
वध्वागृहगमनेप्रतिशुक्रविचारणानास्ति॥ मांडव्यः॥ नित्ययानेगृहेजीर्णेप्राशनां
तेयुसमत्सु॥वधूप्रवेशमांगल्येनदोषोऽप्युगुरुशुक्रयोः॥ ज्योतिःप्रकाशे॥ वामेशुक्रेण
वोढायाःसुखहानिश्चदक्षिणे॥धनंधान्यंचपृष्ठस्थेसर्वनाशःपुरस्थिते॥नवोढायास्तवैधव्
यंयदुक्तंसन्मुखेभृगौ॥नदेवविबुधेज्ञेयंकेवलंतुद्विरागमे॥स्वीयतोऽभ्युदितेशुक्रेयत्रायाद्दक्षिणा
परे॥यस्मादभ्युदितेचैवयायात्तर्वीत्तरेदिशो॥व्यवहारतत्त्वे॥योष्मान्कराश्चश्रवणाश्चपुष्महस्तत्र
येमूलमघोत्तरासु॥पुष्येचमैत्रेचवधूप्रवेशोरिक्तोत्तरेत्यर्ककुजेचशस्तः॥ गर्गः॥ व्यतीपातेच
संक्रांतौग्रहणेवैधृतावपि॥श्राद्धंविनाशुभंनैवप्राप्तकालेपिमानवः॥ तथा॥ अमासं
क्रांतिविष्ट्यादौप्राप्तकालेपिनाचरेदिति॥० अथद्विरागमनं॥रत्नोच्चये॥०
माघफाल्गुनवैशाखेशुक्लपक्षेशुभेदिनेगुर्वादित्यविशुद्धौस्यात्तिस्यपत्नीद्विरागमः॥ बाद
रायणः॥ नीहारांशुदिनोत्तरादितिगुरुब्रह्मानुराधाश्विनी॥शक्रोभास्करवायुविष्णुवरुण
त्वाष्ट्रप्रशस्तेतिथौ॥कुंभाजालिगतेरवौशुभकरेप्रागोदयेभार्गवेजीवज्ञास्फुजितांदिनेनववधू
वेश्मप्रवेशःशुभः॥ अथपुनर्विवाहः॥श्रीधरीये॥ पुनर्विवाहंवक्ष्यामिदंपत्योःशु
भवृद्धिदं॥लग्नेंदुलग्नयोर्दोषेग्रहतारादिसंभवे॥अन्येषुशुभकालेषुदुष्टयोगादिसंभवे॥वि
वाहेचापिदंपत्योराशीनादिसमुद्भवे॥तस्यदोषस्यशांत्यर्थंपुनर्वैवाहमिष्यते॥ याज्ञव
ल्क्यः॥ सुरापीव्याधिताधूर्तावंध्यार्थघ्न्यप्रियंवदा॥स्त्रीप्रसूश्चाधिवेत्तव्यापुरुषद्वेषिणीत
था॥ मनुः॥ वंध्याष्टमेधिवेत्तव्यादशमेतुमृतप्रजा॥एकादशेस्त्रीजननीसद्यस्त्व
प्रियवादिनीति॥ संग्रहेतु॥ अप्रजांदशमेवर्षेस्त्रीप्रजांद्वादशेत्यजेत्॥मृतप्रजांपं
चदशेसद्यस्त्वप्रियवादिनीं॥एकामुत्क्रम्यकामार्थमन्यांलब्धुंयइच्छति॥समर्थस्तोषयित्वा
र्थैःपूर्वोढामपरांवहेत्॥ याज्ञवल्क्यः॥ आज्ञासंपादिनींदक्षांवीरसूंप्रियवा
दिनीं॥त्यजन्दाप्यस्तृतीयांशमद्रव्योभरणंस्त्रियाः॥ मनुः॥ अधिविन्नातुयाना
रीनिर्गच्छेद्रोषितागृहात्॥सासद्यःसन्निरोद्धव्यात्याज्यावाकुलसन्निधाविति॥ हेमाद्रौ
कात्यायनः॥ अग्निशिष्टादिशुश्रूषांबहुभार्यःसवर्णया॥कारयेत्तद्बहुत्वंचेज्ज्येष्ठयागर्हि

तानचेरिति॥ याज्ञवल्क्यः॥ सत्यामन्यांसवर्णायांधर्मकार्यंनकारयेत्॥सवर्णासुवि
धौधर्म्येज्येष्ठयानविनेतरा॥द्वितीयविवाहहोमेग्निमाह॥ कात्यायनः॥ सदारोन्यान्पुनर्दा
रानुद्वोढुंकारणांतरात्॥यदिच्छेदग्निमान्कर्तुंक्वहोमोस्यविधीयते॥स्वेग्नावेवभवेद्धोमोलौ
किकेनकदाचन॥ त्रिकांडमंडनोपि॥ आधायांविद्यमानायांद्वितीयामुद्व
हेद्यदि॥तदावैवाहिकंकर्मकुर्यादावसथेग्निमान्॥सुदर्शनभाष्येतुद्वितीयविवाहहोमो
लौकिकेएवनशर्वोयांसनरस्तूक्तम्॥इदंचासंभवे॥तत्रचाग्निद्वयसंसर्गःकार्यः॥ तदाह
शौनकः॥ अथाग्न्योर्गृह्ययोर्योगंसपत्नीभेदजातयोः॥सहाधिकारसिद्ध्यर्थमहंवक्ष्या
मिशौनकः॥आरोग्यशुद्धहेत्वर्थंधर्मलोभभयान्वयम्॥कृतेतत्रविवाहेचव्रतांतेतुपरेहनि॥
पृथक्स्थंडिलयोरग्निसमाधाययथाविधि॥तंत्रंकृत्वाज्यभागांतमन्वाधानादिकंततः॥जुहुया
त्स्वेपत्न्यग्नीतयान्वारब्धआहुतीः॥अग्निमीळेपुरोहितंसूक्तेनानवर्चेनतु॥समिध्येनंसमारो
प्यअयंतेयोनिरित्यृचा॥प्रत्यवरोहेत्यनयाकनिष्ठाग्नौनिधायतं॥आज्यभागांततंत्रादिकृत्वार
भ्यतदादितः॥समन्वारब्धराताभ्यांपत्नीभ्यांजुहुयाद्धुतं॥चतुर्गृहीतमेताभिर्ऋग्भिःषड्भिर्यथा
क्रमं॥अग्नावग्निश्चरतीत्यग्निनाग्निःसमिध्यते॥अस्तीदमितितिसृभिःपाहिनोअग्नएकया॥त
तःस्विष्टकृदारभ्यहोमशेषंसमापयेत्॥गोयुगंदक्षिणादेयाश्रोत्रियायाहिताग्नये॥यत्स्मार
कायदिस्मृतादग्न्यातेनैवतांपुनः॥आदधीतान्ययासार्द्धमाधानविधिनागृहीति॥ बौधाय
नसूत्रेतु॥ अथयदिगृहस्थोद्वेभार्येविंदेतकथंतत्रकुर्यादिति॥यस्मिन्कालेविं
देतोभावप्यग्नीपरिचरेदपराग्निमुपसमाधायपरिस्तीर्याज्यंविलाप्यस्रुचि॥चतुर्गृहीतंगृहीत्वान्वा
रब्धायांजुहोतिनमस्तऋषेगदाव्यथायैत्वास्वधायैत्वामान॥इंद्राभिमतस्त्वदृक्षारिष्टासएवा
ब्रह्मन्नवेदस्तुस्वाहेत्यथायंतेयोनिर्ऋत्वियइतिसमिधिसमारोपयेत्॥पूर्वाग्निमुपसमाधायजु
ह्वानउद्बुध्यस्वाग्नइति॥समिधमाधायपरिस्तीर्यस्रुचिचतुर्गृहीत्वाद्वयोर्भार्ययोरन्वारब्धयोर्य
जमानोभिमृशतियोब्रह्माब्रह्मणइत्येतेनसूक्तेनैकचतुर्गृहीतंजुहोत्यग्निमुखात्कृत्वापका
ज्जुहोतिसनिमित्तंसंकल्पयामितिपुरोनुवाक्यामनूच्याकस्यस्विष्टकृत्प्रभृतिसिद्धमाधेनुवर
प्रदानादथाग्रेणाग्निंदर्भस्तंबेहुतशेषंनिदधातिब्रह्मजज्ञानंपिताविराजमितिद्वाभ्यां॥द्विती
यादिविवाहेकालउक्तःसंग्रहे॥प्रमदामृतिवासरादितःपुनरुद्वाहविधिर्वरस्यच॥विषमे
युगवत्सरेशुभोयुगलेचापिमृतिप्रदोभवेत्॥तृतीयविवाहनिषेधोमात्स्ये॥उद्वहेद्रतिसि
ध्यर्थंतृतीयांनकदाचन॥मोहादज्ञानतोवापियदिगच्छेत्तुमानुषी॥नश्यत्येवनसंदेहोगर्ग
स्यवचनंयथेति॥ संग्रहे॥ तृतीयांयदिचोद्वाहेत्तर्हिसाविधवाभवेत्॥चतुर्थादिवि
वाहार्थंतृतीयेर्कंसमुद्वहेत्॥तद्विधिस्त्वरविशर्मीहंसेवा॥वरःसंकल्पस्वस्तिवाचननांदीश्रा
द्धंकृत्वाचार्यंवृत्वा॥आकृष्णेनेतिछायायुतंसूर्यमर्केसंपूज्यगुडौदनंदत्वावस्त्रेणतंतुभिरावे
ष्ट्य॥त्रिलोकवासिन्सप्ताश्वच्छाययासहितोरवे॥तृतीयोद्वाहजंदोषंनिवारयसुखंकुरु॥इति
संप्रार्थ्यजलेनत्रिःसिंचेत्॥ममप्रीतिकरायेयंमयासृष्टापुरातनी॥अर्कजाब्रह्मणासृष्टाऽस्

साकं प्रतिरक्षतु॥ नमस्ते मङ्गले देवि नमः सवितुरात्मजे॥ त्राहि मां कृपया देवि पत्नीत्वं मे इहागता॥
अर्क त्वं ब्रह्मणा सृष्टः सर्वप्राणिहिताय च॥ त्रक्षाणामादिभूतस्त्वं देवानां प्रीतिवर्द्धनः॥ तृतीयोद्व
हजं पापं मृत्युं चाशु विनाशयेति॥ ततः आचार्यः काश्यपगोत्रामादित्यप्रपौत्रीं सवितुः पौत्रीं ममपुत्री
मर्ककन्याममुकगोत्राय वराय दास्य इति वाग्दानं कृत्वा वरस्य मधुपर्कं कृत्वान्तःपटं धृत्वा स्व
स्ति न इति सूक्तं जप्त्वार्कवल्कमादत्वार्ककन्यामिमामित्यादिना कन्यादानमंत्रमुक्त्वा दक्षिणां दद्या
त्॥ ततो गायत्र्यावेष्टितसूत्रेण बृहत्सामेति मंत्रेणार्ककर्णं बध्वार्कस्य चतुर्दिक्षु कुंभेषु विष्णुं संपू
ज्याग्निं प्रतिष्ठाप्याघारांते संगोभिरिति बृहस्पतये यस्मै त्वा कामकामायेत्य चाग्नये व्यस्तसमस्तव्या
हृतिभिराज्यं हुत्वाचार्याय गोयुगं दत्वा॥ मयाकृतमिदं कर्म स्थावरेषु जरायुणा॥ अर्कापत्यानि
नो देहि तत्सर्वं क्षंतुमर्हसीति नमेदिति दिक्॥ इति निर्णयसिंधौ विवाहः॥

अथाधानम्॥ रत्नमालायां॥ प्राजापत्येष्वभे सद्विदैवे पुष्ये ज्येष्ठास्वैंदवे कृत्तिकासु॥
अग्न्याधानं चोत्तराणां त्रयेऽपि चित्रादित्ये कीर्तितं गर्गमुख्यैः॥ आश्वलायनः॥ अ
ग्न्याधेयं कृत्तिकासु रोहिण्यां मृगशिरसि फाल्गुनीषु॥ विशाखयोरुत्तरयोः प्रोष्ठपदयोरित्येषां
कस्मिंश्चिद्वसंते॥ यद्वा ब्राह्मण आदधीत ग्रीष्मवर्षाशरत्सु क्षत्रियवैश्यो यकृष्टाय स्मिन्॥ क
स्मिंश्चिद्वा नादधीत सोमेन यक्ष्यमाणो नर्तुं पृच्छेन्न नक्षत्रं सोमाधाने ऋत्वाद्यनालोचनमात्रा-
दिपरं॥ अथो खलु यदैवैनं श्रद्धोपनमेदथादधीत सैवास्यर्द्धिरिति॥ नदेतदार्त्तस्यातिविलंबाद्य
द्यायुक्तस्य भवतीति बौधायनोक्तेरिति मदनरत्ने॥ वृद्धगार्ग्यः॥ पुष्याग्नेयस्तुतरा
दित्ययोर्ब्रह्मज्येष्ठाचित्राशक्रद्विदैवेंदुभेषु॥ कुर्युर्वह्न्याधानमाधेयं संततयोऽग्नौ येष्वेव विप्रादिव-
र्णाः॥ कालादर्शे॥ अग्निहोत्रं दर्शपूर्णमासावप्युत्तरायणे॥ उपक्रम्य यथाकालमुपासीरन्द्वि
जातयः॥ सोमं च पशुबंधं च सर्वाश्च विकृतीरपि॥ सौम्यायने यथाकालं विदध्युर्गृहमेधिनः॥ अ
त्र विशेषः पूर्वमुक्तः॥ अग्निहोत्रकाल उक्तश्छंदोगपरिशिष्टे॥ उदिते नुदिते चैव समयाध्युषि
ते तथा॥ सर्वथा वर्त्तते यज्ञ इतीयं वैदिकी श्रुतिः॥ एषां स्वरूपं तत्रैव॥ रात्रेः षोडशे भागे ग्रहन
क्षत्रभूषिते॥ कालं त्वनुदितं ज्ञात्वा होमं कुर्याद्विचक्षणः॥ तथा॥ प्रभातसमये
तीते नष्टे नक्षत्रमंडले रविर्यावन्न दृश्येत समयाध्युषितं च तत्॥ रेखामात्रं प्रदृश्येत रश्मिभिश्च
समन्वितं॥ उदितं तद्विजानीयात्तत्र होमं प्रकल्पयेत्॥ आश्वलायनः॥ उषोदय्यु
षित उदिते वा सायं तु स एव॥ अस्तमिते होम इति॥ गौणकालमाह स एव॥ प्रदोषांतो होमका-
लः संगवांतः प्रातरिति॥ छंदोगपरिशिष्टे॥ यावत्सम्यङ्न भाव्यंते नभस्यृक्षाणि सर्वतः॥ न च लो
हितमायेति तावत्सायं तु हूयते॥ बौधायनेप्येवम्॥ तस्याग्निहोत्रेण प्रादुष्करणहोमकालौ व्या
ख्याताविति॥ आश्वलायनोक्तेः॥ अथावसथ्याधानं॥ पारस्करः॥ आवसथ्या
धानं दारकाले दायाद्यकाल एकेषामिति॥ दायाद्यकालो विभागकालः॥ मदनरत्ने व्या
सः॥ अग्निर्वैवाहिको येन न गृहीतः प्रमादिना॥ पितर्युपरते तेन गृहीतव्यः प्रयत्नतः॥ योऽगृ
हीत्वा विवाहाग्निं गृहस्थ इति मन्यते॥ अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः॥ ज्येष्ठभ्रात

[illegible]॥ [illegible]पितृव्यःतेनपुत्रोपि
[illegible]॥ [illegible]नाविना॥ [illegible]
[illegible]॥ [illegible]
[illegible]स्थितः॥ [illegible]
यःपरिवित्तिस्तुपूर्वजः॥ इतिमनुशातातपोक्तेः॥स्मात्तेष्वेवम्॥ सोदर्येतिष्ठ
तिज्येष्ठेनकुर्य्याद्दारसंग्रहं॥आवसथ्यंतथाधानंपतितस्त्वन्यथाभवेदितितत्रैवगार्ग्योक्तेः॥
आज्ञायांत्वदोषमाहसुमंतुः॥ज्येष्ठोभ्रातायदातिष्ठेदाधानंनैवचाश्रयेत्॥अनुज्ञातस्तुकुर्वीत
शंखस्यवचनंयथा॥ वृद्धवसिष्ठः॥ अग्रजस्तुयदानग्निरादध्यादनुजःकथं॥
अग्रजानुमतःकुर्य्यादग्निहोत्रंयथाविधिहारीतः॥सोदराणांतुसर्वेषांपरिवेत्ताकथंभवेत्॥दा
रैस्तुपरिविद्यंतेनाग्निहोत्रेणनेज्यया॥अधिकारिणोपिभ्रातुरनुज्ञयाकुर्यादितिमदनपारिजा
तः॥विवाहस्त्वनुज्ञायानेत्यर्थः॥सोदरेतरसोदराणांसापत्नदत्तकादीनांनदोषः॥दत्तकस्या
पिसोदरविवाहाभावेदोषएव॥तदाहहेमाद्रौवसिष्ठः॥पितृव्यपुत्रान्सापत्यान्परनारीसुतां
स्तथा॥दाराग्निहोत्रसंयोगेनदोषःपरिवेदने॥परनारीसुतादत्तकादयः॥देशांतरेविशेषमाह
सएव॥अष्टौदशद्वादशवर्षाणिज्येष्ठंभ्रातरमनिविष्टमप्रतीक्षमाणःप्रायश्चित्तीभवतीति॥कि
वादावप्यदोषमाहकात्यायनः॥देशांतरस्थक्लीवैकवृषणानसहोदरान्॥वेश्यातिसक्तपतित
शूद्रतुल्यातिरोगिणः॥जडमूकांधबधिरकुब्जवामनखंजकान्॥अतिवृद्धानभार्यांश्चकृषिस
क्तान्नृपस्यच॥धनवृद्धिप्रसक्तांश्चकामतोकारिणस्तथा॥कुटिलोन्मत्तचोरांश्चपरिविंदन्नदु
ष्यति॥आशार्ङ्गेपि॥उन्मत्तःकिल्बिषीकुष्ठीपतितःक्लीबएववा॥राजयक्ष्मामयावीचनन्या
य्यःस्यात्प्रतीक्षितुम्॥एवंज्येष्ठेक्लिन्नहस्तादावपिनपरिवेत्तृत्वम्॥ तदाहत्रिकांडम
ंडनः॥ [illegible]॥अग्निहोत्रविवाहेचप्रयोगप्रथमे
[illegible]॥न [illegible] जादावनीतानेविद्यमानेपिसोदरे॥ना
धिकारविघातोस्तिभिन्नोदर्येपिचौरसे॥पग्वंधमूकबधिरपतितोन्मादहूषणे॥सन्यस्तक्लि
न्नहस्तादौषद्ढाषंडादिदूषसे॥जनकेसोदरेज्येष्ठेकुर्यादेवेनरःक्रियामिति॥आरोहतंदशांगु
ल्यंकरीमिमेत्याधानेमंत्रवर्णाच्च॥ शाकरीरंगुली॥ नत्वरत्नेषुक्तं॥आगवे
कल्यात्सर्वमाह्निताग्नित्वेःधित्क्रियेतेवनित्येषु॥आधानंतुनकुर्य्यात्तस्यनैमित्तिकत्वादिति
॥एवंचतुरंगुलोपि॥षडंगुलकाणाविकर्णादेस्त्वरूपेवाधिकारः॥एकादशसुदशांगुलेते
शरीरकार्श्येचाविप्रतिषिद्धमितिहिरण्यकेशिसूत्रेकर्मांशांतिहेतोरेवांगवैकल्यस्यनिषेधा
त्॥अतएवद्राह्यायणसूत्रेपाज्यश्चप्रथमेस्त्रिभिर्गुणैरितिन्यूनांगस्याप्यधिकारउक्तः॥ अ
पराके उशनाः॥ पितापितामहोयस्यअग्रजोवाथकस्यचित्॥तपोग्निहोत्रमंत्रेषुन
दोषःपरिवेदने॥पितुरनाज्ञायामप्यदोषमाह॥ मदनरत्नेसुमंतुः॥ पित्राथस्य
नुनाधानंकथंप्रत्रस्तुकारयेत्॥अग्निहोत्रेऽधिकारोस्तिशंखस्यवचनंयथेति॥नाधायेतन्ना

नंकथंपुत्रस्तुकारयेत्॥ अग्निहोत्रेधिकारोस्तिशंखस्यवचनंयथेति॥ क्रुतमित्यर्थः॥ एत
न्न्यायमिवेतिहेमाद्रिः॥ यत्तुपितुःसत्यप्यनुज्ञानेनाधानंकदाचनेति॥ तत्तत्त्यधिकारेज्ञेय
॥० अथशूद्रस्यसंस्कारः॥ यमः॥ शूद्रोप्येवंविधःकार्य्योविनामंत्रेणसंस्कृतः॥ न
नचित्समस्तजच्छंदसांतप्रजायतिः॥ छंदसामंत्रेण॥ व्यासोपि॥ गर्भाधानंपुंसवनंसीमं
जातकर्मच॥ नामक्रियानिष्क्रमोन्नप्राशनंवपनक्रिया॥ कर्णवेधोव्रतादेशोवेदारंभःक्रि
विधिः॥ केशांतःस्नानमुद्वाहोविवाहाग्निपरिग्रहः॥ त्रेताग्निसंग्रहश्चैवसंस्काराःषोडशस्मृताइत्युक्त्वा
॥ नवैताःकर्णवेधांतामंत्रवर्ज्यंक्रियाःस्त्रियाः॥ विवाहोमंत्रतस्तस्याःशूद्रस्यामंत्रतोदशेति॥ म
नरत्नेहिरण्यगर्भदानेतु॥ गर्भाधानंपुंसवनंसीमंतोन्नयनंतथा॥ कुर्याद्धिरण्यगर्भस्यततस्तेद्विज
गवस्त्वित्युक्त्वा॥ जातकर्मादिकाःकुर्यात् क्रियाःषोडशचापरा॥ इत्यत्रस्त्रियाजातकर्मनामकर
निष्क्रमान्नप्राशनचूडाविवाहाःषट्॥ शूद्राणांतुषडेतेपंचमहायज्ञाश्चेत्येकादशेत्युक्तं॥ रूपना
यणहरिहरभाष्ययोरेवम्॥ शार्ङ्गधरस्तु॥ द्विजानांषोडशैवस्युःशूद्राणांद्वादशैवतु॥ पंचैवमिश्र
जातीनांसंस्कारानाममंत्रतइत्याह॥ अपरार्कस्तु॥ गर्भाधानमृतौपुंसइत्यत्राह॥ एतच्चातुर्व
र्ण्यपरम्॥ नद्विजातिमात्रपरं॥ तथासत्युपनयनंविधायवाच्यंस्यादिति॥ ते
नतन्मतेऽष्टौभवंति॥ ब्राह्मेतु॥ विवाहमात्रसंस्कारंशूद्रोपिलभतांसदेत्युक्तम्॥ अत्रसदसच्छूद्र
गोचरत्वेनदेशभेदाद्वाव्यवस्था॥ यत्तुमनुः॥ नशूद्रेपातकंकिंचिन्नचसंस्कारम
र्हतीतितदर्थमाहमेधातिथिः॥ यत्साम्नातोनिषिद्धंस्तेयानृतादिनतदतिक्रमेऽस्यपापंयथाद्वि
जानाम्॥ उपनयनरूपंसंस्कारंचनार्हतीतितेनतूष्णींकार्य्याः॥ शूद्रोवर्णश्चतुर्थोपिवर्णत्वाद्ध
र्ममर्हति॥ वेदमंत्रस्वधास्वाहावषट्कारादिभिर्विनेतिव्यासोक्तेः॥ अमंत्रस्यतुशूद्रस्यविप्रोमंत्रे
णगृह्यतेइतिमरीच्युक्तेश्च॥ इयंपरिभाषासर्वार्था॥ तेनशूद्रधर्मेषुसर्वत्रविप्रेणमं त्रःप
ठनीयःसोपियौराणएवेतिशूलपाणिः॥ एवंस्त्रीणामपीतिदिक् ॥ ० ॥ ० ॥ ० ॥ ० ॥

इतिश्रीमद्भट्टरामकृष्णभट्टात्मजकमलाकर
भट्टकृतेनिर्णयसिंधौसंस्कारनिर्णयः

अथक्षुद्रकालाः ॥ ० ॥

तत्रजलाशयस्य॥ वराहः॥ हस्तोमघानुराधापुष्यध्रुवनिष्टोत्तराशिरोहिरपः॥ शतभिषगित्यारंभे
कूपानांशस्यतेभगणः हेमाद्रौभविष्ये॥ तस्मिन्सलिलसंपूर्णेकार्त्तिकेतुविशेषतः॥ सुनयश्चे
चित्स्वतिथ्यतीतेचोत्तरायणे॥ नकालनियमस्तत्रसलिलंतत्रकारणंदीपिकायां॥ मार्त्तंडेंद
तु पुष्टौ सुरजिद्दशयनेमाघषट्कसस्तुत्वेमूलापाढोत्तराश्विभ्रवणागुरुकार्येोघ्नशक्राजचंद्रे॥
मैत्रेब्राह्मेचपूर्णामदनरविनिथौ१२सद्वितीयातृतीये॥ कार्य्यातोयःप्रतिष्ठाशुगुरुसितदिनेका
लशुद्धेसुलग्ने॥ वराहः॥ आग्नेयदिकोणेग्रामस्यगृहस्यवाभवतिकूपः॥ नित्यंसकरोतिभयं
दाहंचसमानसंतापं॥ नैर्ऋत्येबालभयंवनितानाशंचवायव्ये॥ दिक्त्रयसेतन्यत्काशेषास्तुशुभा
वहाःकूपाः॥ वास्तुशास्त्रे॥ भूतिःपुष्टिःपुत्रहानिःपुरंध्रीनाशंमृत्युःसंपदःशत्रुवाधा॥ किंचित्सौ

स्वंशंभुकोणादिकुर्यात्कूपयोर्मध्येगेहमर्थक्षयंच॥उत्सर्गविधिश्चोक्तोवह्वृचपरिशिष्टे॥ अ
थातोवापीकूपतडागयज्ञान्व्याख्यास्यामः॥पुरणेनप्रदकसमीपेऽग्निंसमाधायवारुणंचरुंश्रपयि
त्वायामीतिपंच॥त्वन्नोअग्नइतिद्वेइमंमेवरुणेतिच॥स्विष्टकृतंतंव्रमंमार्जनांतेधेनुंतारयेन्मा
मनुमंत्रयेदिदंसलिलंपवित्रंकुरुष्वशुद्धाःपूताअमृताःसंतुनित्यम्॥मांतारयंतीकुरुतीर्था
भिषेकंलोकाल्लोकंतरतेतीर्यतेचेतिपुच्छदेशेनावरुह्यउत्तीर्यापोअस्मानित्यपराजितायांदिशु
त्यापयेत्॥सूयवसाद्भगवतीतिहिंकृत्वेद्विहिंकरावतीत्यलंकृतांविप्रायदद्यादितरांवाशक्त्यादक्षि
णांनतउत्सृजेद्देवपितृमनुष्याःप्रीयंतामिति॥ब्राह्मणान्भोजयित्वास्वस्त्ययनंवाचयीत॥विस्तर
स्तुमात्स्योक्तोस्मत्कृतेजलाशयोत्सर्गविधौज्ञेयः॥कूपादेरुत्सर्गाकरणेदोषउक्तोभविष्ये॥सद्वाज
लंपवित्रंस्यादपवित्रमसंस्कृते॥कुशाग्रेणापियोराजेंद्रनस्प्रष्टव्यमसंस्कृते॥तथावापीकूपतडागा
दौपञ्जलंस्यादसंस्कृते॥अपेयंतद्भवेत्सर्वंपीत्वाचांद्रायणंचरेत्॥ अथवृक्षारोपण
म्॥चंडेश्वरः॥ आदित्यचांद्रपितृतिष्यविशाखपौष्णमूलोत्तरात्रयतुरंगमवारुणाख्यार
नेषुतारकगणेषुनहितंनराणांवृक्षादिरोपणमिहोपदिशंतिधीराः॥ अथमूर्तिप्रति
ष्ठा॥वसिष्ठः॥ हस्तत्रयेमित्रहरित्रयेचपौष्णद्वयादित्यसुरेज्यभेषु॥नित्योत्तराषाढश
शांकभेषुसर्वामरस्थापनमुत्तमंस्यात्॥मात्स्ये॥चैत्रेवाफाल्गुनेवापिज्येष्ठेवामाधवेतथा॥माघे
वासर्वदेवानांप्रतिष्ठाशुभदाभवेत्॥ नारदस्तुचैत्रंनिषेधति॥ विचैत्रेष्वेव
[illegible]
[illegible]
[illegible]
यांधनप्रदा॥चतुर्थ्यांनाशमाप्नोतियमस्यस्यात्सुखावहा॥वनायकस्यदेवस्यतथातत्राहितप्र
दा॥पंचम्यांश्रीयुताकर्तुर्वरदाचतथाभवेत्॥षष्ठ्यांलक्ष्मीयुतानित्यंसप्तम्यांरोगनाशिनी॥अ
ष्टम्यांधान्यबहुलानवम्यांचविनश्यति॥भद्रकाल्याःकृतात्रकर्तुर्भवतितुष्टये॥धर्मवृद्धिकरी
ज्ञेयादशम्यांतुतथातिथौ॥एकादश्यांतथायुक्ताद्वादश्यांसर्वकामदा॥त्रयोदश्यांतथाज्ञेया॥
चतुर्दश्यांविनश्यति॥कृष्णपक्षेपंचदश्यांकर्तुःक्षयकरीभवेत्॥पंचदश्यांतथायुक्तासर्वका
मकरीभवेत्॥ मात्स्ये॥ आषाढेद्वेतथामूलमुत्तरात्रयमेवच॥ज्येष्ठाश्रवणरो
हिण्यःपूर्वाभाद्रपदातथा॥हस्ताश्विनीरेवतीचपुष्योमृगशिरस्तथा॥अनुराधातथास्वाती
प्रतिष्ठासुप्रशस्यते॥ श्रीपतिः॥ रोहिणीपुनर्वसुपौष्णवैष्णवस्वकराश्विन्यश्विनीवास
वानुराधेंद्वजीवभेषुगदितंविष्णोःप्रतिष्ठापनं॥पुष्येशस्तमभिजित्सुरेश्वरकयोर्विघ्नाधिप
स्कंदयोर्मैत्रेतिग्मरुचेःकरेनिर्ऋतिभेदुर्गादिकानांशुभम्॥गणपरिवृढरक्षोयक्षभूतासुरा
णां अयमफणिसरस्वत्यादिकानांचपौष्णेश्रवसिसुगतनाम्नोवासवेलोकपानांनिगदित
मखिलानांस्थापनंचस्थिरेषु॥तेजस्विनीक्षेमकृदग्निदाहविधायिनीस्याद्वनदात्वदाव॥आनं
दकृत्कल्पविनाशिनीचसूर्यादिवारेषुभवेत्प्रतिष्ठा॥ माधवीयेवैखानसः॥ मा

भैरववाराहनरसिंहत्रिविक्रमाः॥ महिषासुरहंत्र्यश्च स्थाप्या वै दक्षिणायने॥ वैशब्दोप्यर्थे लिंग
प्रतिष्ठायां विशेषः॥ हेमाद्रौ लक्षणसमुच्चये॥ उत्तरायणगते भानौ लिंगस्थापन
मुत्तमं॥ दक्षिणे त्वयने प्रज्ञ त्रिवर्षाद्भयावहं॥ स्वगृहे स्थापनं नेष्टं तस्माद्दक्षिणायने॥ स्थाप
नं तु प्रकर्तव्यं शिशिरादावृतुत्रये॥ प्रावृषि स्थापितं लिंगं भवेद्रुद्रयोगदं॥ हेमंते ज्ञानदं चैव श्रे
ष्ठास्यादयने मुक्तिमीहतां॥ दक्षिणे तु मुमुक्षूणां मलमासेन साद्व्योरिति शैवसिद्धांतशेखरो
क्तेर्मुक्तिकामः शिशिरे गर्वभूतिदम्॥ लक्ष्मीप्रदं वसंते च ग्रीष्मे च जयशांतिदं॥ यतीनां सर्वकाले
च लिंगस्थापनं मतं॥ रत्नावल्यां॥ माघफाल्गुनवैशाखज्येष्ठाषाढेषु पंचसु
॥ मासेषु शुक्लपक्षेषु लिंगस्थापनमुत्तमं॥ विष्णुरप्याह तत्रैव वैखानसः॥ मार्गशीर्षादिमासे
ष्वे निर्दिष्टो ब्रह्मणा पुरा॥ मासेषु फाल्गुनः श्रेष्ठश्चैत्रो वैशाख एव च॥ वृषे वाप्याश्वयुज्यासे श्राव
णे मासि वा भवेत्॥ बौधायनसूत्रे विष्णुप्रतिष्ठामुपक्रम्याहोदगयने श्रोणायां वा यानि चान्यानि पु
ण्यनक्षत्राणीति॥ कृत्तिकादिविशाखांतर्धिनित्यर्थः॥ सर्वदेवेषु मासविशेषो हेमाद्रौ विष्णुधर्मे॥
माघे कर्तुर्विनाशाय फाल्गुने शुभदा भवेत्॥ लोकानंदकरी चैत्रे वैशाखे वरसंयुता॥ आज्ञायुता
सदा ज्येष्ठे आषाढे धर्मवृद्धिदा॥ श्रावणे धनहीना स्यात् प्रोष्ठपादे विनश्यति॥ आश्विने नाश
माप्नोति वह्निना कार्तिके तथा॥ सौम्ये सौभाग्यमतुलं पौषे तु स्थिरमुत्तमा॥ दोषान्विताधिमासे
स्यात्कर्तुरात्मन एव चेति॥ अत्र श्रावणाश्विनयोर्निषेधो मार्गशीर्षविधिश्च विष्णुव्यतिरिक्तवि
षयः॥ पूर्वोक्तवचनादिति हेमाद्रिः॥ माघश्रावणभाद्रपदनिषेधः॥ शिवव्यतिरिक्तविषयः॥
तत्रतत्योक्तेः॥ देवीस्थापने तत्रैव विशेषो देवीपुराणे॥ देव्या माघेश्विने मासे उत्तमा सर्वकाम
दा तथा॥ न तिथिर्न च नक्षत्रं नोपवासोत्र कारणम्॥ सर्वकालं प्रकर्तव्यं कृष्णपक्षे विशेषतः
अन्यश्चात्र विचारो हेमाद्रौ ज्ञेयः॥ नारदः॥ हंत्यर्थहीना कर्तारं मंत्रहीना तु ऋत्वि
जं॥ स्त्रियं लक्षणहीना तु न प्रतिष्ठासमो रिपुः॥ अत्राधिकारिण उक्ताः॥ कल्पकल्प
तरौ देवीपुराणे॥ वर्णाश्रमविभेदेन देवाः स्थाप्यास्तु नान्यथा॥ ब्रह्मा तु ब्राह्मणैः स्था
प्यो गायत्रीसहितः प्रभुः॥ चतुर्वर्णैस्तथा विष्णुः प्रतिष्ठाप्यः सुखार्थिभिः॥ भैरवोपि चतुर्वर्णै
रंत्यजानां तथा मतः॥ मातरः सर्वलोकेषु स्थाप्याः पूज्याः सुरोत्तमाः॥ लिंगं गृही यतिर्वापि सं
स्थाप्य तु यजेत्सदा॥ शिवः सर्वस्वभविष्यो॥ यस्तु पूजयते लिंगे देवादिं मां जगत्पतिं॥ ब्राह्मणक्ष
त्रियो वैश्यः शूद्रो वा मत्परायणः॥ तस्य प्रीतः प्रदास्यामि शुभान् लोकाननुत्तमान्॥ तिथितत्वे
स्कांदे॥ शूद्रः कर्माणि यो नित्यं स्त्रिया निकुरुते प्रिये॥ तस्याहमर्चां गृह्णामि चंद्रखंडविभूषि
ते॥ ब्रह्मचारी गृहस्थो वा वानप्रस्थश्च सुव्रते॥ एवं दिने दिने देवि पूजयेद्देविकापतिं॥ समासी
देवदेवेश प्रणवेनैव पूजयेत्॥ नमोंतेन शिवेनैव स्त्रीणां पूजा विधीयते॥ एतच्च पुराणप्रसि
द्धजीर्णलिंगपूजाविषयं॥ यानि तु त्रिस्थलीसेतौ॥ नारदीये॥ यः शूद्रसंस्प
ष्टं लिंगं वा हरिमेव वा॥ स सर्वयातनाभोगी यावदाचंद्रतारकं॥ पाखंडपूजितं लिंगं नत्वा पाखं
डतां व्रजेत्॥ आभीरपूजितं लिंगं नत्वा नरकमश्नुते॥ यः षड्भिः पूजितं लिंगं विष्णुं वापि नमेन्नरः

श्रेष्ठमिहोच्यते॥ षट्पंचकचतुर्मानं मध्यमं त्रिविधं स्मृतं॥ त्र्येकांगुलमानं यत्त्रिविधं तत्कनी
यसं॥ एवं नवविधं प्रोक्तं चरलिंगं यथाक्रमं॥ अथ पंचसूत्रीनिर्णयः। गौतमीतंत्रे।
लिंगमस्तकविस्तारो लिंगोच्छ्रायसमो मतः॥ परिधिस्तत्त्रिगुणितस्तद्वत्पीठं व्यवस्थितं॥ प्रनालि
का तथैव स्यात्पंचसूत्रविनिर्णयः॥ अत्रेदं तत्त्वं॥ लिंगमस्तकविस्तारं लिंगोच्चतासमं कृत्वा
तत्त्रिगुणसूत्रवेष्टनार्हलिंगस्थौल्यं कृत्वा तत्समं वेष्टनं चतुरस्रं वा पीठविस्तारमधश्चोर्ध्वं च कुर्या
त्॥ पीठोच्चता तु लिंगोच्चतातो द्विगुणा॥ पीठमध्ये लिंगाद्द्विगुणस्थूलं पीठोच्चता॥ तृतीयांशे
न कंठं कृत्वा तस्योर्ध्वमधश्च समं वप्रद्वयं वा कृत्वा लिंगविस्तारषष्ठांशेन पीठोपरि बाह्यमेख
लां कृत्वा तदंतः संलग्नं तत्समं खातं च कृत्वा पीठाद्बहिर्लिंगसमदीर्घां पीठार्द्धदीर्घां वा मूले दैर्घ्यसमविस्ता
रामग्रे तदर्द्धविस्तारां तृतीयांशेन मध्ये खातां पीठवत्समेखलां प्रणालिकां कुर्यादिति। अत्र मूलं सिद्धांत
शेखरे शैवागमे च ज्ञेयं॥ तिथितत्त्वे ब्राह्मे॥ सर्वत्रैव प्रशस्तोऽब्जः शिवसूर्यार्चनं विना॥ तत्रैव वाराहपाद्मयोः॥
गृहे लिंगद्वयं नार्च्यं शालग्रामद्वयं तथा॥ द्वे चक्रे द्वारकायास्तु नार्च्ये सूर्यद्वयं तथा॥ शक्तित्रयं तथा नार्च्यं
गणेशत्रयमेव च॥ द्वौ शंखौ नार्चयेच्चैव भग्नां च प्रतिमां तथा॥ नार्चयेच्च तथा मत्स्यकूर्मादिदशकं त
था॥ गृहेऽग्निदग्धा भग्नाश्च नार्च्याः पूज्या वसुंधरे॥ एतासां पूजनान्नित्यमुद्वेगं प्राप्नुयाद्गृही॥ शालग्रा
माः समाः पूज्याः समेषु द्वितयं न हि॥ विषमा नैव पूज्यास्तु विषमेष्वेक एव हि॥ शालग्रामशिला भग्ना
पूजनीया सचक्रका॥ खंडिता स्फुटिता वापि शालग्रामशिला शुभा॥ वाराहे॥ दद्याद्भक्ताय यो देवि
शालग्रामशिलां नरः॥ सुवर्णसहितां दिव्यां पृथ्वीदानफलं लभेत्॥ तत्रैव॥ यः पुनः पूजयेद्भक्त्या शा
लग्रामशिलाशतं॥ तत्फलं नैव शक्नोहं वक्तुं वर्षशतैरपि॥ विष्णुपुराणे॥ ब्राह्मणः क्षत्रियो वैश्यः
शूद्रश्च पृथिवीपते॥ स्वधर्मतत्परो विष्णुमाराधयति नान्यथा॥ अविभक्तानामपि पृथग्देवपूजामा
ह प्रयोगपारिजाते॥ आश्वलायनः॥ पृथगप्येकपाकानां ब्रह्मयज्ञो द्विजातिनां॥ अग्निहोत्रं सुरार्चा च
संध्या नित्यं भवेत्पृथक्॥ तत्रैव विष्णुधर्मे॥ शालग्रामशिलां वापि चक्रांकितशिलां तथा॥ ब्राह्मणः
पूजयेन्नित्यं क्षत्रियादिर्न पूजयेत्॥ एतत्स्पर्शसहितपूजाविषयं शूद्रो वानुपनीतो वा स्त्रियो वाप
तितोपि वा॥ केशवं वा शिवं वापि स्पृष्ट्वा नरकमश्नुते॥ ब्राह्मण्यपि हरं विष्णुं न स्पृशेच्छ्रेय इच्छती॥
सनाथा मृतनाथा वा तस्या नास्तीह निष्कृतिः॥ स्त्रीणामनुपनीतानां शूद्राणां च जनेश्वर॥ स्पर्श
ने नाधिकारोस्ति विष्णोर्वा शंकरस्य वेति स्कांदात्॥ स्पर्शरहिता तु तयोर्भवत्येव॥ शालग्रामं न स्पृ
शेद्धीनवर्णो वसुंधरे॥ स्त्रीशूद्रकरसंस्पर्शो वज्रस्पर्शाधिको मतः॥ मोहाद्यः संस्पृशेच्छूद्रो योषि
द्वापि कदाचन॥ स पतेन्नरके घोरे यावदाभूतसंप्लवं॥ यदि भक्तिर्भवेत्तस्य स्त्रीणां वापि वसुंधरे॥
दूरादेवास्पृशन्पूजां कारयेत्सुसमाहितः इति वाराहोक्तेः॥ शालग्राममात्रनिषेधो न प्रतिमादौ
॥ सर्ववर्णैस्तु संपूज्याः प्रतिमाः सर्वदेवताः॥ लिंगान्यपि तु पूज्यानि मणिभिः कल्पितानि चेति॥ तत्रै
वोक्तेः॥ चत्वारो ब्राह्मणैः पूज्यास्त्रयो राजन्यजातिभिः॥ वैश्यैर्द्वावेव संपूज्यौ तथैकः शूद्रजातिभि
रिति स्कांदाच्च॥ अन्ये तु दीक्षितादीक्षितविषयत्वेन व्यवस्थामाहुः॥ विष्णुधर्मे॥ तयोरसंभवे
र्चा वै सा चेह नवधा स्मृता॥ रत्नजा हेमजा चैव राजती ताम्रजा तथा॥ रैतिकी च तथा लौही शैलजा

द्रुमजा तथा ॥ अधमाधमा च विज्ञेया मृण्मयी प्रतिमा च या ॥ एषां फलानि तत्रैव ज्ञेयानि ॥ तत्रैव यामेश
लिङ्गामंत्रकम्प ॥ तत्राप्यामलकीतुल्यात्स्थूलस्थैव यथा भवेत् ॥ यथा यथा शिला स्थूला तथा स्यात्तु मह
त्फलं ॥ तथा ॥ यवमात्रं तु गर्तः स्याद्यत्रार्द्धं लिङ्गमुच्यते ॥ शिवनाभिरिति ख्यातस्त्रिषु लोकेषु दुर्लभः ॥
तत्रैव ॥ शालिग्राममयी मुद्रा संस्थिता यत्र कुत्रचित् ॥ वाराणस्या यवाधिक्यं समंताद्योजनत्रयं ॥ यो
मृतस्तत्समीपे तु मृतो वानीयते ततः ॥ स वै मोक्षमवाप्नोति सत्यं सत्यं न चान्यथा ॥ तत्रैव ॥ चक्रांक
मिथुनं पूज्यं नैकं चक्रांकमर्चयेत् ॥ चक्रांकमिथुनात्सार्द्धं सालग्राममथ पूजयेत् ॥ तत्रैव वाराहे ॥
म्लेच्छदेशेऽशुचौ वापि चक्रांको यत्र तिष्ठति ॥ योजनानां तथा त्रीणि मम क्षेत्रं वसुंधरे ॥ तत्रैव शालग्रा
मे त्रकम्प ॥ क्रयक्रीता परिज्ञेया मध्यमा याचिताधमा ॥ प्रयोगपारिजाते वाराहे ॥ एवं लक्षणसंप
न्ना पारंपर्यक्रमागता ॥ उत्तमा सा तु विज्ञेया गुरुदत्तापि तत्समा ॥ अथ पार्थिवपूजा
नंदिपुराणे ॥ आयुष्मान्बलवाञ्छ्रीमान्पुत्रवान्धनवान्सुखी ॥ वरमिष्टं लभेल्लिंगं
पार्थिवं यः समर्चयेत् ॥ तस्मात्तु पार्थिवं लिंगं ज्ञेयं सर्वार्थसाधकं ॥ तत्रैव ॥ गोभूहिरण्यवस्त्रादि
बलिपुष्पनिवेदने ॥ ज्ञेयो नमः शिवायेति मंत्रः सर्वार्थसाधकः ॥ सर्वमंत्राधिकश्चायमोंकाराद्यः ष
डक्षरः ॥ भविष्ये ॥ मूर्त्तयोऽष्टौ शिवस्यैताः पूर्वादिक्रमयोगतः ॥ आग्नेय्यंताः प्रपूज्यास्तु वेद्यां लिंगे
शिवं यजेत् ॥ अत्र न प्राचीमयतः शंभोरिति रुद्रयामले निषेधान्नांतराले गे शिवं प्राची किंतु प्रसि
द्धैव ॥ तिथितत्त्वे देवीपुराणे ॥ मृदाहरणसंघट्टप्रतिष्ठाह्वानमेव च ॥ स्नपनं पूजनं चैव विसर्जन
मतः परं ॥ हरो महेश्वरश्चैव शूलपाणिः पिनाकधृक् ॥ शिवः पशुपतिश्चैव महादेव इति क्रमात् ॥
स्कांदे ॥ शुष्काण्यपि च पत्राणि श्रीवृक्षस्य निवेदयेत् ॥ तत्रैव भविष्ये ॥ धूत्तूरकै
श्च यो लिंगं सकृत्पूजयते नरः ॥ स गोलक्षफलं प्राप्य शिवलोके महीयते ॥ योगिनीतंत्रे शि
वागारे झल्लकं च सूर्यागारे च शंखकं ॥ दुर्गागारे वंशवाद्यं मधुरीं च न वादयेत् ॥ आह हेमाद्रौ स्कां
दे ॥ स्पृष्ट्वा रुद्रस्य निर्माल्यं सवासा आप्लुतः शुचिः ॥ प्रयोगपारिजाते क्रियासारे मध्यमानामिका
मध्ये पुष्पं संगृह्य पूजयेत् ॥ अंगुष्ठतर्जन्यग्राभ्यां निर्माल्यमपनोदयेत् ॥ अपनीतं च निर्माल्यं च
ण्डेशाय निवेदयेत् ॥ अशून्यमस्तकं लिंगं सदा कुर्वीत पूजकः ॥ शूलपाणौ लैंगे ॥ वरं प्राणपरि
त्यागः शिरसो वापि कर्त्तनं ॥ न त्वेवाऽपूज्य भुंजीत शिवलिंगं महेश्वरं ॥ सूतके मृतके चैव न त्याज्यं
शिवपूजनम् ॥ तिथितत्त्वे लैंगे ॥ विना भस्मत्रिपुंड्रेण विना रुद्राक्षमालया ॥ पूजितोऽपि महादेवो
न स्यात्तस्य फलप्रदः ॥ तस्मान्मृदापि कर्त्तव्यं ललाटे वै त्रिपुंड्रकं ॥ रुद्राक्षधारणे विशेषः शिवरह
स्ये ॥ एकवक्त्रः शिवः साक्षाद्ब्रह्महत्यां व्यपोहति ॥ अवध्यत्वं प्रतिस्रोतो वह्निस्तंभं करोति च ॥ द्वि
वक्त्रो हरगौरी स्याद्गोवधाद्यघनाशकृत् ॥ त्रिवक्त्रो ह्यग्निजन्मा च पापराशिं प्रणाशयेत् ॥ चतुर्वक्त्र
स्स्वयं ब्रह्मा नरहत्यां व्यपोहति ॥ पंचवक्त्रस्तु कालाग्निरगम्याभक्ष्यपापनुत् ॥ षड्वक्त्रस्तु गुहो ज्ञेयो
भ्रूणहत्यादि नाशयेत् ॥ सप्तवक्त्रस्त्वनंतः स्यात्स्वर्णस्तेयादिपापहृत् ॥ विनायकोऽष्टवक्त्रः स्या
त्सर्वानृतविनाशकृत् ॥ भैरवो नववक्त्रस्तु शिवसायुज्यकारकः ॥ दशवक्त्रः स्मृतो विष्णुर्भूत
प्रेतभयापहः ॥ एकादशमुखो रुद्रो नानायज्ञफलप्रदः ॥ द्वादशास्यस्तथादित्यः सर्वरोगनि

वहेराः। त्रयोदशमुखः कामः सर्वकामफलप्रदः॥ चतुर्दशास्यः श्रीकंठो वंशोद्धारकरः परः॥ इति तथा॥ विना मंत्रेण यो धत्ते रुद्राक्षं भुवि मानवः॥ स याति नरकान्घोरान्यावदिंद्राश्चतुर्दश॥ पंचामृतेन च गव्येन स्नानकाले प्रयोजयेत्॥ रुद्राक्षस्य प्रतिष्ठायां मंत्रं पंचाक्षरं तथा॥ त्र्यंबकादिमंत्रं च तथा तत्र प्रयोजयेत्॥ यद्वा॥ ॐ अघोरे ॐ ह्रीं अघोरतर ॐ ह्रौं ह्रूं नमस्ते रुद्ररूपे हुं स्वाहा॥ अनेनाभिमंत्र्य धारयेत्॥ तथा॥ अष्टोत्तरशतं कार्या चतुःपंचाशदेव वा॥ सप्तविंशतिमाना वा ततो हीनाधमा स्मृता प्रजापतिः॥ मोक्षार्थी पंचविंशत्या धनार्थी त्रिंशतं जपेत्॥ पुष्ट्यार्थी पंचविंशत्या पंचदश्याभिचारके॥ सप्तविंशतिरुद्राक्षमालया देहसंस्थया॥ यत्करोति नरः पुण्यं सर्वं कोटिगुणं भवेत्॥ यो ददाति द्विजेभ्यश्च रुद्राक्षं भुवि सन्मुखम्। तस्य प्रीतो भवेद्रुद्रः स्वपदं च प्रयच्छतीति॥ पदार्थादर्शे बोपदेवः रुद्राक्षान्कंठदेशे द्वादशैव॥ बाह्वोरिंदोः कलाभिर्नयनयुगकृते एकमेकं शिखायां॥ वक्षस्यष्टाधिकं यः कलयति शतकं स स्वयं नीलकंठः॥ हेमाद्रौ शिवधर्मे॥ स्नानं पलशतं ज्ञेयमभ्यंगं पंचविंशतिः॥ पलानां द्वे सहस्रे तु महास्नानं प्रकीर्तितं। पंचविंशत्पलैर्लिंगे त्वभ्यंगं कारयेद्बुधः॥ शिवस्य सर्पिषा स्नानं प्रोक्तं पलशतेन च॥ तावता मधुना चैव दध्ना चैव ततः पुनः। तावतैव च क्षीरेण गव्येनैव भवेत्ततः। भूयः सार्द्धसहस्रेण पलानामिक्षवेण च॥ रसेन कारयेत्स्नानं भक्त्या चोष्णांबुना ततः॥ विस्व दौ तु स्कांदे॥ क्षीराद्दशगुणं दध्याघृतं तेनैव दशोत्तरम्॥ घृताद्दशगुणं क्षौद्रं क्षौद्राच्चेक्षुरसं तथा॥ ब्राह्मे॥ देवानां प्रतिमा यत्र घृताभ्यंगं समाचरेत्॥ पलानि तत्र देयानि अष्टाद्व्यापंचविंशतिः॥ इदं कौटीकृताभिप्रायेण॥ तत्रैव संग्रहे॥ विष्वक्सेनाय दातव्यं नैवेद्यस्य शतांशकं॥ पादोदकं प्रसादं च लिंगे चंडेश्वराय तु॥ पंचायतनसन्निवेशमाह बोपदेवः॥ पदार्थादर्शे च॥

शंभौ मध्यगते हरीनहरभूदेव्यो हरौ शंकरेभास्यनागसुतारवौ हरगणेशाजांबिकास्थापिताः॥ देव्यां विष्णुहरैकदंतरवयो लंबोदरेजेश्वरेनाम्बाः शंकरभागतोतिसुखदा व्यस्ता ह्यहानिप्रदाः॥ शंकरभागतः ईशानकोणादारभ्य प्रदक्षिणमित्यर्थः॥ अत्र दिक्स्वरूपमुक्तं॥ प्रयोगपारिजाते मंत्रशास्त्रे॥ देवस्य मुखमारभ्य दिशं प्राचीं प्रकल्पयेत्॥ तदादि परिवाराणामंगाद्यावरणस्थितिः॥ अत्र क्रमः॥ पाद्मे॥ रविर्विनायकश्चंडी ईशो विष्णुस्तु पंचमः॥ अनुक्रमेण पूज्यंते व्युत्क्रमे तु महद्भयं तथाऽक्षज्यस्रजकयोर्मध्ये प्राची प्रोक्ता विचक्षणैः॥ अथ केशवादिमूर्तयः बोपदेवपदार्थादर्शे॥ केशिगोवासापुन्दुयेप्रजाद्युत्क्रममात्रिनाः॥ वाश्रीनृहसानिश्रीपशाच्चग विगपेचपे॥ अत्र केशिरित्यादिः केशवविष्ण्वादिचतुर्विंशतिमूर्तयोऽभिधीयंते॥ शाद्यं खाद्यक्रगदेत्येरित्यर्थः॥ शिरश्चोधुजे पद्मेत्यर्थतः सिद्धं॥ अत्र दक्षिणाधःकरक्रमेण ज्ञेयं॥ दक्षिणाधःकरक्रमादिति हेमाद्रिवचनात्॥ तेन हेमाद्रिणा संवादः॥ विशब्देन विपरीतगचेरित्यर्थः॥ अत्रापि शादिरनुवृत्तिः॥ शंखाब्जचक्रैरित्यर्थः॥ गपेरित्यत्रापि शादिरनुवृत्तिः॥ शंखाब्जगदापद्मैरित्यर्थः॥ विपरीते पद्मगदे अत्रापि शंखाद्ये पेचपे शंखाब्जचक्रपद्मैरित्यर्थः॥ विरित्यत्रापि पद्मचक्रेत्यर्थः॥ तेन गपेरित्यष्टौ मूर्तयः चपेरित्यत्र च॥ अत्र मूलं हेमाद्रौ ज्ञेयम्॥ अथ बौधायनसूत्रोक्तेशिक्रमींचानुसृत्य लिंगार्चाप्रतिष्ठोच्यते॥ यजमानः स्वोक्तकाले द्वादशाहाद्वा षोडशान्यतरदहः॥ मंडपे कृत्वाग्नेये ह

स्तमात्रं चतुरस्रं कुंडं स्थंडिलं वा कुर्वीत ॥ हस्तमात्रां वेदीं नैर्ऋते वास्तुमंडलमध्ये वेदीं तदुपरि सर्वतोभ-
द्रं च कृत्वा प्राणानायम्यास्यां मूर्तौ देवस्य सान्निध्यसिद्ध्यर्थं दीर्घायुर्लक्ष्मीसर्वकामसमृद्ध्यक्षयस्व-
स्वकामोऽमुकमूर्तिप्रतिष्ठां करिष्य इति ॥ संकल्प्य गणेशपूजनपुण्याहवाचनमातृकापूजननांदी-
श्राद्धानि कृत्वाचार्यं चतुरो वा त्विजश्च वृत्वा वस्त्रादिभिः पूजयेत् ॥ अथाचार्यो यदत्र संस्थितमिति सर्ष-
पान् विकीर्यापोहिष्ठेति कुशोदकेन भूमिं प्रोक्ष्य देवा आयांतु यातुधाना अपयांतु विष्णो देवयजनं
रक्षस्वेति भूमौ प्रादेशं कृत्वा स्फ्येन तत्तुल्यायद्रुनिमार्गेण मंडपप्रतिष्ठां कृत्वा श्वभ्रं कृत्वा पूर्वरात्रौ हिर-
ण्योपधानं देवं पंचगव्यहिरण्ययवदूर्वासत्यपलाशपर्णैरापो हिष्ठेति तिसृभिर्हिरण्यवर्णा इति च-
तसृभिः पवमानः सुवर्जन इत्यनुवाकेनाभिषिच्य व्याहृतिभिश्चेदं विष्णुरिति पुष्पफलयवदूर्वाः
समर्प्य नमस्ते रुद्र मन्यव इति रक्षोहणमिति हस्ते कंकणं बध्वा वाससाच्छाद्य अव ते हेड उदुत्त-
ममिति जले धिवासयेत् ॥ रुद्रं वो ध्यायतोऽत्र ॥ ततश्च लिंगेऽर्चायां वाग्निं प्रतिष्ठाप्य गोक्षीरे नी-
वारचरुं कृत्वा आज्यभागांते पलाशोदुंबराश्वत्थशम्यपामार्गसमिद्भिराज्येन चरुणा तिलैर्वा
प्रत्येकमष्टाविंशतिमष्टौ वाहुतीर्लोकपालमूर्तिमूर्तिपतिभ्यो हुत्वा स्थाप्यदेवमंत्रेणाष्टोत्त-
समित्तिलैर्वा स्ववीर्ये स्वसहस्रमष्टशतमष्टाविंशतिं वा हुत्वा अग्निर्यजुर्भिरित्यनुवाकेन द्वादशाहु-
तीर्जुहुयात् ॥ मन्त्रास्तु होमांते देवपादनाभिशिरः स्पृशेत् ॥ अग्नेर्होमे चोत्तरतः सजलकुंभे संपातान्नये-
त् ॥ तेषां मंत्राः ॥ इंद्रायेंद्रो इति इंद्रस्य ॥ स्योनेति पृथिवीमूर्तेः ॥ अघोरेभ्य इति तत्पतेः शर्वस्य ॥ अग्न
आयाहीत्यग्नेः ॥ अग्निं दूतमित्यग्निमूर्तेः ॥ नमः शर्वाय च पशुपतये चेति पशुपतेः ॥ यमाय सोमं
यमस्य ॥ असि हि वीरेति यजमानमूर्तेः ॥ त्वहि क्षुतं तत्पतेरुग्रस्य ॥ असुन्वंतमिति नैर्ऋतेः ॥ आकृष्णे-
न सूर्यमूर्तेः ॥ यो रुद्रो अग्नाविति तत्पते रुद्रस्य ॥ इमं मे वरुण ॥ शन्नो देवीः जलमूर्तेः ॥ नमो भवायेति
भवस्य ॥ आ नो नियुद्भिः ॥ वायोः ॥ वात आवातु ॥ वायुमूर्तेः ॥ तमीशानं तत्पतेरीशानस्य ॥ आप्याय-
स्व ॥ कुबेरस्य ॥ वयं सोम व्रते सोममूर्तेः तत्पुरुषायेति महादेवस्य ॥ अभि त्वा ईशानस्य च निष-
त्स्येत्याकाशस्य ॥ नमः उग्राय चेति तत्पतेर्भीमस्य ॥ ततो देवस्य पादौ स्पृशेत् ॥ एवं द्वितीये हुत्वा
नाभिं ॥ तृतीये मध्यं ॥ चतुर्थे उरः ॥ पंचमे शिरः स्पृशेत् ॥ प्रतिपर्व [illegible] ततो जले नद्येत मभिषिंचेत्
[illegible] दिशं समाप्य [illegible] ॥ [illegible] नामदि स्नापनहोमा-
दिनापि ॥ [illegible] देवं नत्वा ॥ [illegible] ॥ [illegible] धूपादिकं मं-
[illegible] पुनराचम्य
[illegible] समष्टशतमयं
[illegible] कृत्वा पंच
पृथिव्यामावीरजानमिति च संस्नाप्य ॥ आप्यायस्व दधिक्राव्णस्तेजोसि मधुवाता [illegible] आपो गौरिति
चाष्टैः संस्नाप्य ॥ लिंगं चेन्नमस्ते रुद्र मन्यव इत्यष्टाभिः संस्नाप्य घृतेनाभ्यज्योद्वर्तनैः [illegible]
न प्रक्षाल्य गंधं दत्वा संपातोदकेनाभिषिंच्य सपल्लवैश्चतुर्भिः कुंभैरापो हिष्ठेति त्रिभिः [illegible]
प्रत्येकं समुद्रज्येष्ठेति चतुर्भिः कलशैः [illegible] प्रत्येकं समुद्रज्येष्ठेति चतुर्भिः कलशैः [illegible]

प्यऔदुंबरादिपीठेऽर्चामुपवेश्यपरितोऽष्टदिक्षुसजलकुंभान्संस्थाप्यगंधपुष्पदूर्वाःक्षिप्त्वा
द्येसप्तमृदः।द्वितीयेपुष्करपर्णशमीविकंकताश्वत्थकत्वचःपल्लवांश्च।तृतीयादिषुसप्तधान्यपं
चरत्नफलपुष्पाणिकुशदूर्वागोरोचनाःसंपातोदकसर्वौषधीःक्षिप्त्वाक्रमेणापोहिष्ठेतित्रिभि
र्हिरण्यवर्णाइतिचतुर्भिःपवमानानुवाकेनवाऽभिषिंच्यैककुंभेशमीपलाशवटखदिरबिल्वाश्वत्थ
विकंकतपनसाम्रशिरीषोदुंबराणांपल्लवान्कषायांश्चक्षिप्त्वाऽप्स्वंतश्चरत्यभिषिंच्यपंचरत्नो
दकेनहिरण्यवर्णाइतिसंस्थाप्यवाससीदत्त्वोपवीतादिदीपांतंकृत्वा।।हिरण्यगर्भः।।यआत्म
दायःप्राणतःयस्येमे।येनद्यौः।।यंक्रंदसी।।आपोहयत्।।यश्चिदापोइत्यष्टौपिष्टहीयान्दत्वा
सुवर्णशलाकयातेजस्यांनेत्रेमधुघृतेचगृहीत्वा।।चित्रंदेवानांतेजोसीतिमंत्राभ्यां।।ॐन
मोभगवतेतुभ्यंशिवायहरयेनमः।।हिरण्यरेतसेविष्णोविश्वरूपायतेनमइतिचदक्षिणसव्येदे
वनेत्रेमंत्राद्वयाल्लिखेत्।अंजंतित्वामंजनेनमधुनावांत्वादेवस्येतिमध्वाज्यशर्कराभिरुत्वाते
नैवांजनेनपुनरंजयेत्।अत्रानत्मीतिशेषः।।स्थिरलिंगेतुस्वर्णसूच्यागंधेनॐनमोभगवते
रुद्रायहिरण्यरेतसेपरायपरमात्मनेविश्वरूपायोमाप्रियायनमइत्यंजनादिनांजयेत्।त
तआदर्शभक्ष्यादिदर्शयेत्।।ततःकर्त्राचार्यायगामृत्विग्भ्यश्चदक्षिणांदद्यात्।।अथाचार्यः
प्रत्यङ्मारोप्यायावंवदन्पुरुषसूक्तेनस्तुत्वावंशपात्रेपंचवर्णोदनेनदेवस्यनीराजनंकारयि
त्वारुद्रायचतुर्थ्यादीन्दद्यात्।।मंत्रस्तु।। ॐनमोरुद्रायसर्वभूताधिपतयेदीप्तशूलध
रायोमादयितायविश्वाधिपतयेरुद्रायवैनमोनमः।।शिवमगर्हितंकर्मास्तुस्वाहेति।।अश्वत्थप
र्णेभूतेभ्योनमइति।।केचिदेतद्वाक्योस्थिरप्रतिष्ठायामिच्छंति।।अथाचार्यःसर्वतोभद्रेदेवानावा
हयेत्।।मध्येब्रह्माणंपूर्वादिदिक्षुरुद्रादिलोकपालान्।।ईशानेंद्राद्यंतरालेषुवसून्रुद्रान्आदि
त्यान्अश्विनौविश्वान्देवान्।।पितॄन्नागान्स्कंदवृषौ।।ब्रह्मेशानाद्यंतरालेषुदक्षविष्णु
दुर्गास्वधाकारंमृत्युरोगान्समुद्रान्सरितःमरुतःगणपतिंचेति।।मध्येपृथिवींमेरुंसंस्था
प्यदेवंचावाह्य।।प्रागादि।।वज्रंशक्तिंदंडंखड्गंपाशंअंकुशंगदांशूलं।।तद्बाह्ये गौतमभरद्वाज
विश्वामित्रकश्यपंजमदग्निंवसिष्ठमत्रिमरुंधतींच।।तद्बाह्येनवग्रहाः।।तद्बाह्यऐन्द्रीकौमारी
ब्राह्मीवाराहीचामुंडा।।वैष्णवीमाहेश्वरीवैनायकीति।।एतान्नामभिरावाह्यसंस्त्रज्माह्लीवारु
णीयान्देवंतेमंत्रेणावाह्यमंडलमध्येचायांसुप्रतिष्ठोभवेतिनिवेश्य।।संपूज्यवह्नौमंडलदे
वतानांनामभिस्तिलाज्येनदशदशाहुतीर्हुत्वाशय्यायांदेवमारोप्यपुरुषसूक्तेननारायणा
भ्यांस्तुत्वादेवेन्यासंकुर्यात्।।यथा।।पुरुषात्मनेनमः।।प्राणात्मने० प्रकृतितत्त्वाय० बुद्धित
त्त्वाय० अहंकारतत्त्वाय० मनस्त० इतिसर्वांगे।।प्रकृतित० बुद्धित० हृदि।शब्दत० शिरसि।।स्प
र्शत० त्वचि।।रूपत० दृशि।।एवंरसगंधश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूप
स्थपृथिव्यप्तेजोवाय्वाकाशसत्वरजस्तमोदेहतत्त्वानिविन्यसेत्।।ततःपुरुषसूक्ताद्यमृचं
हृदयंकरयोः।।तदुत्तरंजानुनोः।।तदुत्तरंकट्योः।।तंयज्ञमितितिस्रःनाभिहृत्कंठेषु।।तस्माद
श्वेतिद्वयंबाह्वोः।।ब्राह्मणोस्येतिद्वयंनासयोः।।नाभ्याइतिद्वयमक्ष्णोः।।अंत्यंशिरसि।।केचित्त्व

न्यासमन्यथाहुः॥ पुरुषप्रकृतिमहदहंकारतत्वानि॥ शब्दस्पर्शरूपरसगंधतन्मात्राणि॥ आ
काशवायुतेजोपृथिवीश्रोत्रत्वक्चक्षूरसनघ्राणवाक्पाणिपादपायूपस्थमनस्तत्वानी
ति॥ केचिदेतानि स्थिरलिंगादावेवेच्छंति॥ ततः सुखशायी भवेति शय्यायां देवं स्थापयित्वा मंडल
शय्ययोरंतरालेन गंतव्यमिति प्रैषं दत्वा मंडलदेवताभ्यो नामभिः पायसेन चरुणा वा बलीन्दद्यात्
॥ नीवारचरुशेषेण शिवलिंगे नेदं स्थिरप्रतिष्ठायां स्थिरलिंगादौ त्वयं विशेषः॥ अधिस्थापनहोम
वर्जं सर्वं पूर्ववत्कृत्वा इदानीमधिस्थापनं कृत्वा सर्वौघहोमं कुर्यात्॥ नात्र नीवारचरुः॥ वि
ष्णुश्चेत् सर्वौघहोमं कृत्वा॥ पुरुषसूक्तेन प्रत्यृचमाज्यं हुत्वेदं विष्णुरिति॥ पादौ स्पृष्ट्वा पुनस्तावद्धु
त्वा विष्णोर्नुकमिति नाभिं स्पृशेत्॥ पुनस्तावद्धुत्वा तो देवेति शिरः स्पृष्ट्वा पुनस्तावद्धुत्वा पुरुष
सूक्तेन सर्वांगं स्पृशेत्॥ स्थिरलिंगं चेदधिस्थापनादि सर्वौघसमिदाज्यतिलाहुतीर्हुत्वा यानरु
षुरित्यनुवाकांते द्रापे सहस्राणीत्यनुवाकाभ्यां प्रत्यृचमाज्यं हुत्वा सर्वो वै रुद्र इति मूलं स्पृशेत्॥ पु
नस्तावद्धुत्वा सर्वै रुद्रेण सर्वांगं स्पृशेत्॥ ततो धाम तदिति स्वर्णाहुतिं जुहुयान्न वा॥ एवमधिवा
सनं कृत्वा परेद्युः सद्यो वा पीठिकां स्थापयित्वा महीमूषु मिमा वा सा दितिर्योरिति जुत्वा॥ हीनमशति
संख्यत्वेनैव स्वर्णाहुतिं हुत्वो त्रिषु ब्राह्मणस्पते इति देवमुत्थाप्य पुष्पांजलिं दत्वा॥ पुरुषसूक्तेन सु
संपूज्य तेनैव स्वर्णाहुतिं हुत्वो त्रिष्ठ ब्रह्मणस्पत इति देवमुत्थाप्य पुष्पांजलिं दत्वा॥ पुरुषसूक्तेन सु
वोदुत्यमित्युत्थाप्य॥ कनिक्रदिति सूक्तेन विष्णुं सद्योजातमिति पंचानुवाकैर्लिंगं गृहं प्रवेश्य पी
ठिकायां॥ इंद्रादिनामभिरष्टरत्नानि क्षिप्त्वा सप्त धान्यरूप्य॥ वामनः शिलाः क्षिप्त्वा पायसेन सं
लिप्य प्रणवेनागमासंस्कृत्वा सुवर्णशलाकामंतरितां कृत्वा ॐ सुलग्ने प्रतितिष्ठ परमेश्वरेति सु
त्वा ऽतो देवेति विष्णुं रुद्रेण च लिंगं स्थापयेत्॥ ततः प्राणप्रतिष्ठा॥ चलार्चादीन्यधिवासनांते प
रेयुरुत्तिष्ठ ब्रह्मणस्पत इति देवमुत्थाप्य॥ पुरुषसूक्तेन नारायणाभ्यां स्तुत्वा घृतेन स्त्रीहि चरु
कृत्वा तद्देवतामंत्रेणादशाहुतीर्हुत्वा नामभिर्जुहुयात् अग्नये स्वाहा॰ सोमाय॰ धन्वंतरये॰ कु
ह्वै॰ अनुमत्यै॰ प्रजापतये॰ परमेष्ठिने॰ ब्रह्मणे॰ अग्नये॰ सोमाय॰ अग्नीषोमाभ्याम्॰ इंद्राय॰ अग्नये
त्वष्ट्रे॰ प्रजापतये॰ विश्वेभ्यो देवेभ्यः सर्वेभ्यो देवेभ्यः॥ भूर्भुवः स्वः अग्नये स्विष्टकृत इति॥ त
तः सप्रतिपुनस्त्रिस्त्राभ्यां पूर्णाहुतिः॥ ततः आचार्यो या ओषधीरिति सर्वौषधीः समर्प्य संपा
तोदकं देवमंत्रेण शतवारमभिमंत्र्य तेनैवाभिषिंचेत्॥ ततउत्तिष्ठेति देवमुत्थाप्य विष्णुश्चेत्यु
रित्युपस्थाय देवं ध्यात्वा जयेत्॥ ब्रह्मणे नमः॥ एवं विष्णवे रुद्राय इंद्रादीनष्टौ॥ वसुभ्यो रुद्रे
भ्य आदित्येभ्यो ऽश्विभ्यां मरुद्भ्यः कुबेराय गंगादिमहानदीभ्यो भीमोमाभ्यामिंद्राग्निभ्यां धात्रे
पृथिवीभ्यां धन्वंतरये सर्वौषधाय विश्वेभ्यो देवेभ्यो ब्रह्मणे इति॥ ततः संपातोदकेन यजमानम
भिषिंच्य देवं ध्यात्वा॥ प्रतितिष्ठ परमेश्वरेति पुष्पांजलिं निवेद्य सच्चिदानंदब्रह्मैव भक्तानुग्र
हाय गृहीतविग्रहं कारणचरणपदं यदिनं शंखचक्राद्यायुधवंतं निजवाहनायुधं निजहृत्क
मले स्थितं सर्वलोकसाक्षिणमरणीयां सपरमेश्वरस्यापरमां श्रियं गमयेति॥ मंत्रेण पुष्पांज
लावागतं विभाव्यार्चायां विन्यस्य प्राणप्रतिष्ठां कुर्यात्॥ यथा॥ प्राणप्रतिष्ठामंत्रस्य ब्रह्मवि
ष्णुरुद्रा ऋषयः ऋग्यजुःसामानि छंदांसि॥ क्रियामयवपुः प्राणाख्या देवता आं बीजं क्रों

शक्तिःप्राणप्रतिष्ठायांविनियोगः॥ततोऽकारादीन्क्रमेणशिरोमुखहृदयगुह्यपादेषुविन्यस्यओं
कंखंगंघंङंअंपृथिव्यप्तेजोवाय्वाकाशात्मनेआंहृदयायनमः॥ॐचंछंजंझंञंइंशब्दस्पर्शरूप
रसगंधात्मनेईंशिरसेस्वाहा॥ॐटंठंडंढंणंउंश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मनेऊंशिखायैवाष
ट्॥ॐतंथंदंधंनंएंवाक्पाणिपाद　　यापूपस्थात्मनेऐंकवचायहुं॥ॐपंफंबंभंमंओंवचना
दानविहरणोत्सर्गानंदात्मनेऔंनेत्रत्रयायवौषट्॥ॐयंरंलंवंशंषंसंहंळंक्षंअंमनोबुद्ध्यहंकार
चित्तात्मनेअःअस्त्रायफट्॥एवंआत्मनिदेवेचकृत्वादेवंस्पृष्ट्वायजेत्॥ॐआंह्रींक्रोंयंरंलंवंश
षंसंहंसःदेवस्यप्राणाइहप्राणाःॐहंसःदेवस्यजीवइहस्थितः॥ॐआंह्रींक्रींयंरंलंवंशंषंसंहंस
देवस्यसर्वेंद्रियाणि॥ॐआंह्रींक्रोंयंरंलंवंशंषंसंहंसदेवस्यवाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणाइ
हागत्यस्वस्तयेसुखेनसुचिरंतिष्ठंतुस्वाहेति॥ततोगीहृदयंस्पृष्ट्वाजपेत्॥अस्यैप्राणाःप्रति
ष्ठंतुअस्यैप्राणाःक्षरंतुच॥अस्यैदेवत्वमर्चायैमामहेतिचकश्चनेति॥ततःप्रणवेनसंरुध्यस
जीवध्यात्वाध्यावाघोरितिमंत्रंचजप्त्वाकर्णेगायत्रींदेवमंत्रंचजप्त्वापुरुषसूक्तेनोपस्थायपाद
नाभिशिरस्सुस्पृष्ट्वाइहैवैधीतित्रिर्जपेत्॥ततःकर्तास्वागतंदेवदेवेशमद्भाग्यात्त्वमिहागतःप्राकृतं
त्वमदृष्ट्वामांबालवत्परिपालय॥धर्मार्थकामसिध्यर्थंस्थिरोभवशुभायनः॥सान्निध्यंतुसदादेव
स्वार्चायांपरिकल्पय॥यावच्चंद्रावनीसूर्यास्तिष्ठंत्यप्रतिघातिनः॥तावत्त्वयात्रदेवेशस्थेयंभक्तानु
कंपया॥भगवन्देवदेवेशत्वंपितासर्वदेहिनां॥येनरूपेणभगवंस्त्वयाव्याप्तंचराचरं॥तेनरू
पेणदेवेशस्वार्चायांसंनिधोभवेतिनमेत्॥एतदंतंसर्वदेवानांसमानं॥देवमंत्रस्यमूलमंत्रोवैदि
कोवाग्राह्यः॥अथाचार्यःकर्तावालिंगमर्चांवा॥ॐभूःपुरुषमावाहयामि॥ॐभुवःॐस्वःॐ
भूर्भुवःस्वःपुरुषमावाहयामीत्यावाह्यप्रणवेनासनंदत्वातेनैवदूर्वाश्यामाकविष्णुक्रांतापद्ममि
श्रंपाद्यं॥इमाआपःशिवतमाःइताःइततमामेध्यामेध्यतमाअमृताअमृतरसाःपाद्यास्ताजु
षंतप्रतिगृह्यंतांप्रतिगृह्णातुभगवान्महाविष्णुर्विष्णवेनमइतिपाद्यं॥भगवान्महादेवोरुद्राय
नमःइतिलिंगे॥इमाआपः०आचमनीया॥स्ताजुषतामितिएलालवंगकंकोलकर्पूरमिश्र
माचमनीयं॥आपःक्षीरकुशाग्रैश्चाक्षतैर्यवतंडुलैः॥यवैःसिद्धार्थकैश्चैव॥अर्घ्यइत्यर्घ्यं॥
ततोवेदमंत्रैःप्रणवेनचरत्नांबुकलशेनसंस्नाप्यइदंविष्णुरितिविष्णौनमोअस्तुनीलग्रीवायेत्
तिलिंगेप्रतिसरंविस्तस्यदेवंनत्वा॥इमेगंधाःशुभादिव्याःसर्वगंधैरलंकृताः॥इतात्रह्मयवि
त्रेणाःपूताःसूर्यस्यरश्मिभिः॥इताइमाइत्येवंवत्॥इतिगंधं॥इमेमाल्याःशुभादिव्याःसर्वमा
लैरलंकृताः॥इताः०माल्यंइमेपुष्पाइतिपुष्पं॥वनस्पतिरसोधूपोगंधाढ्योधूपउत्तमः॥आ
घ्रेयःसर्वदेवानांधूपोयंप्रतिगृह्यतां॥प्रतिगृह्यतांप्रतिगृह्णात्वित्यादि॥धूपं॥ज्योतिःशुक्रंचते
जश्चदेवानांसततंप्रियः॥प्रभाकरःसर्वभूतानांदीपोयंप्रतिगृह्यतांइतिदीपंदत्वाविष्णौ॥संक
र्षणवासुदेवप्रद्युम्नानिरुद्धपुरुषोत्तमाधोक्षजनृसिंहाच्युतजनार्दनोपेंद्रहरिकृष्णेतिद्वादश
नामभिःकेशवादिद्वादशनामभिर्वापुष्पाणिसमर्थ्यतैरेवतर्पणंकृत्वापायसघृतान्नंपुनःशरा
शर्करावपुनःगुडौदनहविर्द्रोदनानियथिवित्तेनविततमितिनिवेद्यकलशरमाज्यमिश्रंजुहुयात्॥वा

सुदेवाय स्वाहा॥संकर्षणाय॰प्रद्युम्नाय॰अनिरुद्धाय॰शांत्यै॰श्रियै॰सरस्वत्यै॰पुष्ट्यै॰विष्णवे इति
हुत्वा विष्णोर्नुकम्॥तदस्य प्रियं॥प्रतद्विष्णुः॥परोमात्रया॥विचक्रमे॥त्रिर्देव इति द्वादशनामभिश्च
अमुष्मै स्वाहेति जुहुयात्। लिंगे तु दीपानेकं त्वा भवाय देवाय शर्वाय ईशाय॥पशुपतये॰रुद्रा
य॰उग्राय॰भीमाय॰महते देवाय॰नम इति पुष्पाणि दत्वा नैवेद्यं तर्पणं कृत्वा पवित्रेणोऽनिया
य संगुडौदनं च निवेद्य पूर्वोक्तनामभिः कृशरं हुत्वा भवस्य देवस्य पत्न्यै स्वाहा इत्याद्यष्टभिः गु
डौदनं हुत्वा भवस्य देवस्य सुताय स्वाहेत्याद्यैः हरिद्रौदनं हुत्वा त्र्यंबकं मा नो महांतं मा नस्तोके आ
रात्ते गोघ्नं विकिरिद विलोहित सहस्राणि सहस्रशः इति पंचभिर्हुत्वा शिवाय शंकराय सहमा
नाय शितिकंठाय कपर्दिने॥ताम्राय॰अरुणाय॰अपगुर्माणाय॰हिरण्यबाहवे॰सस्पिं
जराय॰बभ्लुशाय॰हिरण्याय इति च जुहुयात्॥ततः स्विष्टकृदादि शेषं समाप्य पूर्वोक्तसर्व
हविर्भिर्विष्णवे लिंगाय वा बलिं दद्यात्॥मंत्रस्तु त्वामेकमाद्यं पुरुषं पुरातनं नारायणं विश्व
सृजं यजामहे॥त्वमेव यज्ञो विहितो विधेयस्त्वमात्मनात्मन् प्रतिगृह्णीष्व हव्यमिति। लिंगे तु
नारायणपदे रुद्रं शिवमिति वदेत्॥ततो न्यग्रोधपर्णेषु भूर्भुवः स्वरोमिति त्रिस्त्रिर्जुह्वत् शे
षं निधाय अग्निना सह प्रदक्षिणीकृत्य विश्वभुजे सर्वभुजे आत्मने परमात्मने नम इति न
त्वा अंगुलीयं कुंडलद्वयं वस्त्रयुग्मं चाचार्याय दत्वा॥आचार्याय शतं तदर्द्धं तदर्द्धं वा दश
तिस्र एकां वा गां दत्वा ऋत्विग्भ्योपि दक्षिणां दत्वा शतं द्वादश वा विप्रान् भोजयेदिति संक्षे
पः॥प्रासादमात्रे तु तत्तन्मात्स्योक्तजलाशयप्रतिष्ठाविधिमेव कुर्यात्॥गोरुत्सारणपा
त्रीप्रक्षेपादि तु न भवति द्वारलोपात्॥वारुणहोमस्थाने वास्तुहोमः॥अन्यत्तद्वत्॥०

इतिकमलाकरभट्टकृते लिंगा
र्चाप्रतिष्ठाविधिः॥ अथ पुनः
प्रतिष्ठा॥०

नामधिकृत्य हयशीर्षपंचरात्रे चांडालमद्यसंस्पर्शदूषिता वह्निना यथा॥अपुण्यजनसं
स्पृष्टा विप्रक्षत्रजदूषिता॥संस्कार्येति शेषः॥पदार्थादर्शे ब्राह्मे॥खंडिते स्फुटिते दग्धे भ्र
ष्टे मानविवर्जिते॥यागहीने पशुस्पृष्टे पतिते दुष्टभूमिषु॥अन्यमंत्रार्चिते चैव पतितस्प
र्शदूषिते॥यागहीने पशुस्पृष्टे पतिते दुष्टभूमिषु॥अन्यमंत्रार्चिते चैव पतितस्पर्शदूषिते
दशस्वेतेषु नो चक्रुः सन्निधानं दिवौकसः॥यागः पूजा॥पशुर्गर्दभादिः॥पंचरात्रे॥खंडि
तास्फुटिता दग्धा यस्माद्वा भयावहा॥तस्मात्समुद्धरेत्तां तु पूर्वोक्तविधिना नरः॥अर्चा
भंगादावुपवासः कार्यः॥नरात्रोविश्वेश्वीयात्सुरार्चाविलये तथेति॥विष्णुधर्मोत्तरे॥सि
द्धांतशेखरे॥चौरचांडालपतितश्वोदक्याः स्पर्शने सति॥शिवाद्युपहतौ चैव प्रतिष्ठां पुनरा
चरेत्॥पंचरात्रे॥अंगादंगादिसंधाने प्रतिष्ठां पुनराचरेत्॥जलाधिवासविहिते नेत्रोन्मी
लनवर्जितम्॥शुद्धिविवेके विष्णुः॥द्रव्यवत्कृतशौचानां देवतार्चानां भूयः प्रतिष्ठापनेन शु
द्धिरिति॥अर्चाः प्रतिमाः॥तद्द्रव्यस्य ताम्रादेरुक्तवत्॥शौचं कृत्वा पुनः प्रतिष्ठां कुर्यादित्य

त्यर्थः ॥ स्मृत्यर्थसारेप्येवम् ॥ तद्विधिर्बौधायनसूत्रे ॥ देवप्रतिष्ठितस्याबुद्धिपूर्वमेकरात्रं द्विरात्रमे
कमासं द्विमासं वार्चनादिविच्छेदे शूद्ररजस्वलाद्युपस्पर्शने पूर्वोक्तकाले पुण्याहं वाचयित्वायु
ग्मान् ब्राह्मणान् भोजयित्वा निशायां जलाधिवासं कृत्वा श्वोभूते कलशपूर्णेन पंचगव्येन तत्
तन्मंत्रैः स्नापयित्वा ऽष्टषष्टिकलशं शुद्धोदकेनापूर्य तस्मिन् रत्नानि प्रक्षिप्य तं कलशं तत्तद्गा
यत्र्या अष्टसहस्रमष्टशतमष्टाविंशतिवारं वाभिमंत्र्य तेनोदकेन देवं स्नापयेत् ॥ ततः शुद्धोदकेन
स्नपयेदष्टसहस्रं गोदलाद्यथासंभवमर्चयित्वा गुडोदनं निवेदयेदिति ॥ बुद्धिपूर्वं तु विच्छेदे पूर्वोक्तां प्रति
ष्ठां पुनः कुर्यात् ॥ पूर्वोक्तविष्णुवचनात् ॥ इदं मलमास शुक्रास्तादावपि कार्यमिति मदनरत्ने हेमाद्रौ
च ॥ देवार्चाप्रासादभेदने तु शूलपाणौ काश्यपः ॥ वापीकूपारामसेतुसभातडागदेवतायतनभे
दने प्रायश्चित्तं च तस्य आहुतीर्जुहुयादिदं विष्णुर्मानस्तोके विष्णोः कर्माणीत्यादिभिरिति ॥ यादेवत्या
यै ब्राह्मणान्भोजयेदिति ॥ शंखलिखितौ ॥ प्रतिमारामकूपसंक्रमध्वजसेतुनिपातभंगेषु तत्समुत्था
नं प्रतिसंस्कारोऽष्टशतं च निपातितानामिति ॥ समुत्थानं प्रतिक्रिया ॥ प्रतिसंस्कारः पुनः प्रतिष्ठा ॥
अष्टशतं पणाः दंड इत्यर्थः ॥

अथ जीर्णोद्धारः

सचलिंगादौ दग्धे भ
ग्ने चलिते वा कार्य्यः ॥ अयं चानादिसिद्धप्रतिष्ठितलिंगादौ भंगादिदुष्टेपि न कार्य्यः ॥ तत्र तु महाभिषे
कं कुर्यादिति त्रिविक्रमः ॥ कर्त्तामुकदेवस्य जीर्णोद्धारं करिष्य इत्युक्त्वा पुण्याहं वाचयित्वाचार्यं ऋत्विज
श्च वृत्वा लिंगे ॥ ॐ व्यापकेश्वर हृदयाय नमः ॥ ॐ व्यापकेश्वर शिरसे स्वाहेति ॥ एवं षडंगं कृत्वा ऽघोर
मंत्रं शतं जप्त्वाग्निं प्रतिष्ठाप्याघोरेण घृतसर्षपैः सहस्रं हुत्वेंद्रादिभ्यो नाम्ना बलिं दत्वा जीर्णं देवं प्रण
वेन संपूज्य ब्रह्मादिमंडलदेवानां होमं पूर्वोक्तं कृत्वा देवं प्रार्थयेत् ॥ जीर्णभग्नमिदं चैव सर्वदोषावहं
नृणां ॥ अस्योद्धारे कृते शांतिः शास्त्रेस्मिन्कथिता त्वया ॥ जीर्णोद्धारविधानं च तृपराद्गृहितावहम्
॥ तदधितिष्ठतां देवप्रहरामि तवाज्ञयेति ॥ ततः क्षीराज्यमधुदूर्वाभिः समिद्भिश्चाष्टोत्तरसहस्रं शतं वा
देवमंत्रेण हुत्वा ॥ ॐ व्यापकेश्वर शांते न लिंगचालनार्थं सहस्रं शतं वा पायसेन हुत्वा लिंगं प्रार्थयेत् ॥
लिंगरूपं समागत्य येनेदं समधिष्ठितं ॥ यायात्त्वं संश्रितं स्थानं संत्यज्य वशिवाज्ञया ॥ अत्र स्थाने च
या विद्या सर्वविद्येश्वरैर्युता ॥ शिवेन सह संतिष्ठेत निमंत्रितजलेनाभिषिच्य विसर्जयेत् ॥ ततो खनमंत्रि
तेन खनित्रेणाखात्वा लिंगमादाय नद्यादौ वामदेवेन लिंगं प्रणवेन मूर्त्तिं क्षिपेत् ॥ दारुजं तु मधुना
भ्यज्याघोरेणादहेत् ॥ हेमरत्नादिमयं तु दग्धं चलितं वायौ न्यसेत् ॥ पुनस्तत्रैव स्थापयेत् ॥ ततः शां
त्यै अघोरेण तिलैः सहस्रं हुत्वा प्रार्थयेत् ॥ भगवन्भूतभव्येश लोकनाथ जगत्पते ॥ जीर्णलिंगस
मुद्धारः कृतस्तवाज्ञया मया ॥ अग्निना दारुजं दग्धं क्षिप्तं शैलादिकं जले ॥ प्रायश्चित्ताय देवेश
अघोरास्त्रेण तर्पितम् ॥ ज्ञानतोऽज्ञानतो वापि यथोक्तं न कृतं यदि ॥ तत्सर्वं पूर्णमेवास्तु त्वत्प्रसा
दान्महेश्वरेति ॥ ततो यजमानः प्रार्थयेत् ॥ गोविप्रशिल्पिभूपानामाचार्यस्य च यज्वनः ॥ शांतिर्भव
तु देवेश अच्छिद्रं जायतामिदम् ॥ मूर्तौ तु विशेषः ॥ त्वत्प्रसादेन निर्विघ्नं देहं निर्मापयत्यसौ ॥ वासं कु
रु सुरश्रेष्ठ तावत्त्वं चास्मके गृहे ॥ वसन्नत्रांशसहितो नेह मूर्त्तिर्भवेन्नव इव वत् ॥ यावत्कारयते भक्ता कु
रु तस्य च वांछितमिति ॥ ततो नवां मूर्त्तिं लिंगं वा उक्तविधिना स्थापयेत् ॥ मूलं त्वत्रिपुराणे स्पष्टं

इतिनीरोगोद्गारः॥ अथतुलसीग्रहणम्॥ देवयाज्ञिकधृतेस्मृतिसा रे॥ नच्छिंद्यात्तुलसींविप्राद्वादश्यांवैष्णवःक्वचित्॥ ...

इतिनीर्णोद्धारः॥ अथतुलसीग्रहणम्॥ देवयाज्ञिकधृतेस्मृतिसा रे॥ विधृतौचव्यतीपातेभौमभार्गवभानुषु॥ पर्वद्वयेचसंक्रांतौद्वादश्यांसूतकद्वये॥ तुलसींयेवि चिन्वंतितेनरोहि ं दतिहरेःशिरः॥ विष्णुधर्मोत्तरे॥ रविवारंविनादूर्वांतुलसीं द्वा दशींविना॥ जीवितस्याविनाशायनप्रचिन्वीतधर्मवित्‌तथा॥ संक्रांतावर्कपक्षांतेद्वादश्यांनि शिसंध्ययोः॥ येच्छिन्दंतितुलसीपत्रंतेच्छिन्दंतिहरिमस्तकं॥ पाद्मे॥ द्वादश्यांतुलसीपत्रंधात्रीपत्रंच कार्त्तिके॥ लूनातिसनरोगच्छेन्निरयानतिगर्हितान्॥ रुद्रयामले॥ द्वादश्यांच दिवास्वापंतुलस्यवचयस्तथा॥ विष्णोश्चैवदिवास्नानंवर्जनीयंसदाबुधैः॥ विष्णुधर्मे॥ नच्छिंद्या त्तुलसींविप्रोद्वादश्यांवैष्णवःक्वचित्॥ देवार्थेतुलसीच्छेदोहोमार्थेसमिधांतथा॥ इंदुक्षयेनदुष्येत गवार्थेतुतृणस्यच॥ ग्रहणमंत्रस्तुपाद्मे॥ तुलस्यमृतनामासिसदात्वंकेशवप्रिया॥ केशवार्थंविचिन्वामिवरदाभवशोभने॥ इति॥ पारिजातेदक्षः समित्पु ष्पकुशादीनांद्वितीयःप्रहरोमतः॥ अथपुष्पादेःपर्युषितत्वम्॥ भार्गवा र्चनेभविष्ये॥ प्रहरंतिष्ठतेजातीकरवीरमहर्निशं॥ तुलस्यांबिल्वपत्रेषुसर्वेषुजलजेषुच॥ नपर्यु षितदोषोस्तिमालाकारगृहेषुच॥ स्कंदनारदीये॥ वर्ज्यंपर्युषितंपुष्पंवर्ज्यंपर्युषि तंजलं॥ नवर्ज्यंतुलसीपत्रंनवर्ज्यंजान्हवीजलं॥ तत्रैवपाद्मे॥ तुलसीपर्युषिता नैवबिल्वंत्रिदिनावधि॥ पद्मंपंचदिनान्यामंशोभंपर्युषितंविदुः॥ स्कांदे॥ प लाशंदिनमेकंतुपंकजंचदिनत्रयं॥ पंचाहंबिल्वपत्रंचदशाहंतुलसीदलम्॥ पदार्थादर्शे राघवभट्टस्त्वन्यथाह॥ बिल्वापामार्गजातीतुलसिसमिशताकेतकीभृंगदूर्वा मंदाभोजाद्रिदर्भा मुनितिलतगरब्रह्मकल्हारमल्ली॥ वंशप्यारातिकुंभीदमनमरुवकाबिल्वतोह्यनिशस्यान्निशान्
३० श्रे ३ का १ यं ६ रीशो ११ दधि ४ निधि ९ वसु ८ भू १ भू १ यमा २
भूपरावम्॥ अस्यार्थः॥ शताशमाजुरीमंदःमंदारः अहिर्नागकेशरः॥ मुनिरगस्त्यः॥ अश्वाराति करवीरः॥ कुंभीपाटलेतिवैदिकनिघंटुः॥ अरयःषट्॥ ईशाएकादश॥ उदधयश्चत्वारः॥ निध योनव॥ वसवोष्टौ॥ भूरेकः यमौद्वौ बिल्वमारभ्याहियर्थंतगणयित्वा॥ दर्भमारभ्यपुनस्त्रिंशद्व दिगणयेदित्यर्थः॥ एतद्दिनोत्तरंपर्युषितानीत्यर्थः॥ टोडरानंदेस्कांदेदमनमुपक्रम्य॥ तस्यमालां भगवतःपरमप्रीतिकारिणीं॥ शुष्कापर्युषितावापिनदुष्टाभवतिक्वचित्‌निषिद्धत्वेमान्ते॥ बि ल्वपत्रंचमाध्यंचतमालामलकीदले॥ कल्हारंतुलसीचैवपद्मंचमुनिपुष्पकं॥ एतत्पर्युषितंन स्याद्यच्चशाश्वकलिकास्तथा॥ स्मृतिसारावल्याम्॥ जलजानांचसर्वेषांपत्राणांमहतस्यचा॥ शु द्धपुष्पस्यरजतसुवर्णकृतयोरपि॥ नपर्युषितदोषोस्तितीर्थतोयस्यचैवहि॥ मुकुलैर्नार्चयेदे वंचंपकैर्जलजैर्विना॥ अथशिवनिर्माल्यनिर्णयः॥ सिद्धांतशेखरे॥ भव हिरणपागोरत्नताम्रैरीप्याश्मकादिकान्॥ विहायशेषंनिर्माल्यंचंडेशायनिवेदयेत्॥ अन्यत्र न्नादियानीयंतांबूलंगंधपुष्पकं॥ दद्याच्चंडायनिर्माल्यंशिवभुक्तंतुसर्वशः॥ आचार्यशिवरं डनामाराभंगेतुलक्षकं॥ धनस्वभक्षणेतेषांपादीनलक्ष्यमीरितंनिर्माल्यभक्षितेलक्ष्यपादत

गृहे रोहिता॥ दानं च भक्षणं सम्यं नर्हं तदुपेक्षणं॥ अकामाद्भक्षणे यद्वा निर्माल्यस्य जपे तु संयमः॥ व
ह्यं पंचकसाहस्रमर्हं नसहितं ततः॥ कामतो भक्षणे दोषाभावश्चित्तेन वान्यतः॥ निर्माल्यलंघनेध
स्त्रजपे तु ततः॥ स्पर्शश्च लंघनसमो विक्रयो भक्षणेन च॥ स्मृत्यर्थसारे तु॥ शै
वसौरनिर्माल्यनैवेद्यभक्षणे चांद्रं॥ अभ्यासे द्विगुणं॥ अन्याभ्यासे पतनम्॥ अन्यनिर्माल्ये पित्रनाप
द्येवमिति॥ इदं चाज्योतिर्लिंगाद्यतिरिक्तविषयम्॥ तथा च पुरुषार्थप्रबोधे भविष्ये॥ ज्योतिर्लिंगं वि
ना लिंगं यः पूजयति सत्तमः॥ तस्य नैवेद्यनिर्माल्यभक्षणात्तप्तकृच्छ्रकं॥ शालग्रामोद्भवे लिंगे बाण
लिंगे स्वयंभुवि॥ रसलिंगे तथार्षे च सुरसिद्धप्रतिष्ठिते॥ हृदये चंद्रकांते च स्वर्णरूप्यादिनिर्मिते॥ शि
वदीक्षावता भक्तेनेदं भक्ष्यमितीर्यते॥ तथा॥ बाणलिंगे स्वयंभूते चंद्रकांते हृदि स्थिते॥ चांद्रायण
समं ज्ञेयं शंभोर्नैवेद्यभक्षणम्॥ लिंगे स्वयंभुवे बाणे रत्नजे रसनिर्मिते॥ सिद्धप्रतिष्ठिते चैव न चंडाधि
कृतिर्भवेत्॥ यत्र चंडाधिकारोस्ति तद्भोक्तव्यं न मानवैः॥ चंडाधिकारो नो यत्र भोक्तव्यं तत्र भक्तितः॥
त्रैविक्रम्याम्॥ बाणलिंगे च लौहे च सिद्धलिंगे स्वयंभुवि॥ प्रतिमासु च सर्वासु न चंडोधि
कृतो भवेत्॥ अत्राब्रह्महापि शुचिर्भूत्वा निर्माल्यं परिधारयेत्॥ तस्य पापं महच्छीघ्रं नाशयिष्ये म
हाव्रतेति स्कांदात् शुचिना न त्याज्यं शिवनिर्माल्यं किं तु स्नात्वेति स्मार्ताः॥ अनुपनीतेन न त्याज्यमिति
श्रीदत्तः॥ शिवदीक्षाहीनैर्न त्याज्यमिति शैवाः॥ तिथितत्त्वे हेमाद्रौ च वाराहे॥ अग्राह्यं शिवनैवेद्यं प
त्रं पुष्पं जलं फलं॥ शालग्रामशिलासंगात्सर्वं याति पवित्रताम्॥ पंचायतनपूजायां तत्रैतन्निवेदित
मित्यर्थः॥ शिवपुराणे॥ ये वीरभद्रशयिताः शिवभक्तिपराङ्मुखाः॥ शं
भोरन्यत्र देवेषु ये भक्ता येन दीक्षिताः॥ तेषामनर्हमीशस्य तत्प्रसादचतुष्टयम्॥ काशीखंडे
जलस्य धारणं मूर्ध्नि विशेषस्नानजन्मनः॥ एष जालंधरो बंधः समस्तसुरवल्लभः॥ तथा॥ स्ना
पयित्वा विधानेन यो लिंगस्नपनोदकं॥ त्रिः पिबेत् त्रिविधं पापं तस्येहाशु विनश्यति॥ लिंगस्नपनवा
र्भिर्यः कुर्यान्मूर्ध्न्यभिषेचनं॥ गंगास्नानफलं तस्य जायते त्र विपाप्मनः॥ इदं सर्ववाक्यं बाणाद्विश्वे
श्वरविषयमिति केचित्॥ काशीस्थपुराणप्रसिद्धसर्वलिंगविषयं॥ काशीखंडे रत्ने
श्वराख्याने तथैव दर्शनादित्यन्ये॥ अथ कृषिः॥ राजमार्तंडः॥ ऋक्षेषूत्त
रयोः स्वेव श्रवणमघामूलानुराधाश्विनी॥ प्राजापत्यकरद्विदैवतगुरुप्रासिषपादेषु च॥ निर्दोषे ह
समे हलेश्च सुमनोमालाभिरभ्यर्चितैर्दत्वाक्षेत्रयनेर्वलिं हलधरः क्षेत्रं ततः कर्षयेत्॥ प्राजेशाश्व
वणोत्तरादिति मघा मार्तंडतिष्याश्विनी॥ पौष्णानुत्तमरीचयः शतभिषक्स्वाती विशाखा तथा॥
॥ जीवार्केंदुसितेंदुनंदनदिने लग्ने च सौम्योदये॥ सस्यानां वपने तथैव लवने शस्तास्तथारोपणे
॥ चंडेश्वरः॥ हस्तचित्रादितिस्वातीरेवत्यांश्रवणात्रये॥ स्थिरलग्ने गुरोर्वारे वी
जं धार्यं तत्तु भुक्तयोः॥ ॐ धनदाय सर्वलोकहिताय देहि मे धान्यं स्वाहा॥ लेखयित्वा इमं मंत्रं धान्या
गारे निधापयेत्॥ सस्यवृद्धिं परां कुर्यादपूजितं प्रतिपूजयेत्॥ दक्षिणदिङ्मुखगमनगमनमभिनव
सुनारीषु॥ व्ययमपि सस्यधनानां न बुधावुधवासरे कुर्युः॥ शनिवारे च नो कार्यो धनधान्यव्ययो
बुधैः॥ अथ वस्त्रम्॥ श्रीपतिः॥ रोहिणीषु करपंचकेऽश्विभेषूत्तरासु च पुन

वसुदस्ये॥रेवतीपुष्यवसुदेवते च भेनव्यवस्त्रपरिधानमिष्यते॥जीर्णरवौ सततमंबुभिरार्द्रमिंदौ भौमे शुचे बुधदिने तु भवेद्धनाय॥ज्ञानाय मंत्रिणि भृगौ प्रियसंगमाय मंदे मलाय न नवांबरधारणं स्यात्॥रोहिणीगुरुपुनर्वसूत्तरेया विभर्त्ति नववस्त्रभूषणं॥सा न योषिदवलंबते पतिं स्नानमाचरति वारिणोपिया॥०

अथालंकारवलयादि॥दैवज्ञवल्लभः॥ नासत्यपुष्यवसुभिःकरयंचकेन मार्त्तंडभौमगुरुदानवमंत्रिवारे॥मुक्तासुवर्णमणिविद्रुमशंखदंतरक्तांबराणि विधि [illegible] ज्योतिर्निबंधे॥ [illegible] [illegible] [illegible] शुभं हेममणिविद्रुममुक्ताचशंखाः॥ नापीश्वराः॥ श्रुतसुखार्थकरा भवति त्रासोनराचितिगुरुखसुखाय भर्तुः॥तत्रैव॥शंखादिवस्त्रलानि पुष्यादिषूत्तरासु च॥रोहिण्यां चैव गृह्णीत न भर्त्तुर्जीवितं क्वचित्॥

अथसूचीकर्म॥ वासवादितिभत्वाष्ट्रमैत्रचंद्राश्विनीषु च॥सूचीकर्म तनुत्राणमेभिःऋक्षैः प्रशस्यते॥

अथशय्या॥ हस्तादितिब्रह्मगुरूत्तराणि पौष्णाश्विमूलेंदुभचित्रभानि॥वारेषु जीवेंदुसितेंदुजानां शय्यासमारंभणमुत्तमं स्यात्॥

अथशस्त्रधारणम्॥ पुष्येवादितिचित्रपमैत्रपैशाक्योत्तरारेवती॥स्वातीवाजिविशाखमित्रसहिते भानौ गुरौ भार्गवे॥कुंभे कीटगृहे वृषे मृगपतौ चंद्रे शुभैर्वीक्षिते सन्नाहः शरखड्गकुंतछुरिकाधार्या नृपाणां हिताः॥

अथ स्वामिसेवा चंडेश्वरः॥ रोहिण्युत्तरयोः पुष्यवसुवारुणयोरपि॥सेवेत स्वामिनं भृत्यः शुभवारोदये तथा॥ ज्योतिर्निबंधे॥ दासीदासादिभृत्यानां कुर्यात्संग्रहणं बुधैः॥स्थिरलग्ने शुभैर्दृष्टे मंदवारे विशेषतः॥

अथगजाश्वदोला॥ सत्ववापीष्णप्रजेशादितिमह्यानिहस्तादिपंचश्रवणोत्तराणि॥दोलादिमातंगतुरंगमाणामारोहणे भीष्टफलप्रदानि॥

अथनृत्यम्॥ हस्तः पुष्यो वासवो रोहिणी च ज्येष्ठा पौष्णं वारुणं चोत्तरा च॥सर्वाचार्यैः कीर्त्तितं ऋक्षवर्गैर्नृत्यारंभे शोभनोयं भवर्गः॥

अथ राजदर्शनम्॥श्रीपतिः॥ मृगाश्वितिष्यश्रवणश्रविष्ठाहस्तध्रुवत्वाष्ट्रभरेवभानि [illegible] निर्दिष्टानि [illegible]

[illegible]

॥श्रीपतिः॥ चित्रोत्तरावसुवरोहिणीपुष्य [illegible] गमनं विदध्यात्॥शुमांत्यपूर्वानकदापि देवा॥ चंडेश्वरः॥ हस्तमूलविशाखासु रेवत्यां श्रवणे तथा॥मैत्रे च वारुणे श्रेष्ठ्यं प्रयाणं चोच्यते॥सर्वांत्रयामृतमयं यदुनाश

नेषु रुद्राग्निवाजिवसुवारणांशकरेषु॥ ऐंद्रेषु गोमहिषदंतितुरंगमादिनानाप्रकारपशुजा-
तिगतिः प्रशस्ता॥ अथ गजदंतच्छेदः॥ ज्योतिर्निबंधे॥ त्वाष्ट्रे वैष्णवे श्वि-
सामादित्ये वसुदैवते। दंतिनां शुभदं कर्म पुष्ये हस्ते च कीर्तितं॥ अथ निक्षेपः॥
भरणीत्रीणि पूर्वाणि आर्द्राश्लेषामघा तथा॥ चित्रा ज्येष्ठा विशाखा च मूलं मृगपुनर्वसु॥ एभिर्द-
त्तं प्रयुक्तं च यद्धनं निक्षिप्यते धनं॥ हृतं नष्टं च भावेन मानस्य धनिनो नोपपद्यते॥ अथ ऋण-
मोक्षः॥ श्रीधरः॥ वागीशामंदद्दिवसेशकालप्रयुक्ते रिक्तासु मंददिवसे कुलिकोद-
ये च॥ मैत्रद्वितीयपदमैत्रमुहूर्त्तयुक्ते ग्राह्यं हि मे च ऋणमोक्षमुशंति संतः॥ अथ रा-
जमुद्रा॥ मृदुध्रुवक्षिप्रचरेषु भेषु योगे प्रशस्ते शनिचंद्रवर्ज्जे॥ वारे तिथौ पूर्णज-
याह्वये च मुद्राप्रतिष्ठा शुभदा हि राज्ञां॥ अथ नौः चंडेश्वरः॥ पौष्णाश्विनीतु-
रगवारुणमित्रचित्राशीतांशुरस्विवसवानलवंत्यमूनि॥ वारे च जीवभृगुनंदनके प्रशस्तं नौ-
कादिसंघटनवाहनमेव कुर्यात्॥ अथ भोगः॥ गुरुभार्गवमानुराधाविधाना-
पौष्णाश्विरोहिणीषु स्यात्॥ स्वात्युत्तरासु कुर्यात् शयनाशनभोगभोगादीन्॥ अथ श्म-
श्रुकर्म॥ श्रीपतिः॥ पुष्ये पौष्णे चाश्विनीश्रवणे वे च शाक्रे हस्ते धे चित्रिके भेष्यदित्याः॥ क्षौरं का-
र्यं वैष्णवादित्रये च मुक्त्वा भौमादित्यपातंगिवारान्॥ न स्नातभुक्तोत्कटभूषितानामभ्यंगयात्रा-
समरोत्सुकानां॥ क्षौरं विदध्यान्निशि संध्ययोर्वा जिजीविषूणां नवमेन चाह्नि॥ त्रिस्थलीसेतौ
वृद्धगार्ग्यः॥ ॥ रव्यारसौरिवारेषु राज्ञो याते
त्रिनाहनि॥ श्राद्धाह प्रतिपद्रिक्ताभद्रासु क्षौरेषु वर्जयेत्॥ गार्ग्यः॥ वस्त्रमाहर्णिमायांत चतुर्दश्य-
ष्टमी तथा॥ श्राद्धसन्निहितं पार्यं त्रिषु तैलभगोष्णुरे॥ राजमार्त्तंडः॥ देव-
कार्ये पितुः श्राद्धे रवेरंशपरिक्षये॥ क्षौरकर्म न कुर्वीत जन्ममासे च जन्मभे॥ बृहस्पतिः॥
राजकार्यनियुक्तानां नराणां भूपजीविनां॥ श्मश्रुलोमनखच्छेदे नास्ति कालविशोधनं॥
तथा॥ क्षौरं नैमित्तिकं कार्यं निषेधे सत्यपि ध्रुवं॥ पित्रादिमृतिदीक्षासु प्रायश्चित्ते च तीर्थके॥
केचिन्नृपराहमन्यथा पठंति॥ मुंडनस्य निषेधेपि कर्त्तनं तु विधीयत इति॥ नारदः
नृपविप्राज्ञया यज्ञे मरणे बंधमोक्षणे॥ उद्वाहे खिलवारर्क्षतिथिषु क्षौरमिष्यते॥ भारते
प्राङ्मुखः श्मश्रुकर्माणि कारयीत समाहितः॥ उदङ्मुखो वाथ भूत्वा तथा पुर्विदते महत्॥
अपरार्के॥ उदङ्मुखः प्राङ्मुखो वा वपनं कारयेत्सुधीः॥ केशश्मश्रुलोमनखान्युदक्-
संस्थानि वापयेत्॥ दक्षिणं कर्णमारभ्य धर्मार्थं पापसंक्षये॥ शिखाधं नवसंस्कारे शिखा-
धं तु शिरो वपयेत्॥ यतीनां तु विशेषो निगमे॥ कक्षोपस्थशिखावर्ज्जमृतुसंधिषु वापयेदि-
ति॥ अन्येपि विधिप्रतिषेधाः प्रागुक्ताः॥ अथ धनसंग्रहः॥ ब्रह्मानिला-
र्कमघमूलत्रिपूर्वरौद्रे पौष्णानुराधगुरुविष्णुविशाखयुक्ते॥ वारे कुजार्कभृगुनंदनसोमजा-
नां भेष्वि धनस्य करणं भवति प्रशस्तम्॥ अथ नवान्नम्॥ श्रीपतिः॥ रेवती-
श्रुतिपुनर्वसुहस्तब्रह्मतः श्वयुगपिहितयेपि॥ उत्तरासु कथितं शयुकानां प्राशनं च सनवान्न-

विधानं॥ अथ नवभोजनपात्रम्॥ ज्योतिर्निबंधे॥ भोज्यपात्रं सुधासिद्धोघटये
द्धास्समाहरेत्॥ नवान्नप्राशने प्रोक्ते काले भोजनमाचरेत्॥ अथ नवपर्णफलादिभ
क्षणम्॥ चंडेश्वरः॥ मूलाश्विनीतिष्यहरींद्रभेषु पौष्णेंदवपुनर्वसुवासवेषु॥ वा
रेषु भूमितनयार्कजवारवर्ज्जं तांबूलनूतनफलाशनं हितार्थी॥ अथ होमे आहुतिपा
तः॥ ज्योतिषे॥ नरशिखिभृगुभास्करिचंद्रमाकुजसुरेड्यविधुंतुदकेतवः॥ रवि
भतो दिनभं गणयेत्क्रमात्त्रिखगे त्रितयं त्रितयं न्यसेत्॥ दिनकरार्किनमःकुजकेतवो हुतभु
जः शुभनाशकराः स्मृताः॥ दहनचक्रमिदं प्रविलोकितं दहनकर्मणि सर्वसमृद्धये॥ अ
थ शांतिरुक्ता विष्णुधर्मे॥ क्रूरग्रहमुखे चैव संजाते हवने शुभे॥ शांतिं विधाय गां द
द्याद्ब्राह्मणाय कुटुंबिने॥ आयसीं प्रतिमां कृत्वा निक्षिपेत्तामधोमुखीं॥ गोमूत्रमधुगंधाद्यैर
र्चितां प्रतिमां ततः॥ स्वस्थं निधाय संपूज्य तत्र होमो विधीयते॥ अत्रापवादः क्रियासारे॥ नित्ये
नैमित्तिके दुर्गाहोमादौ न विचारयेत्॥ अथ ज्वरादौ फलं॥ श्रीपतिः॥ स्वा
त्याश्लेषारौद्रपूर्वासु शाक्रे रोगोत्पत्तिर्बाधते यस्य पुंसः॥ मध्ये यजंत्याप्नोतीतिः प्रयत्नः स्याद्दुग्धा
ध्वेले ध्वेजन्मापि वैद्यः॥ याम्यान्वित्रिर्यस्य मैत्रे सयोसि प्राणत्राणं जायते तस्य कृच्छ्रात्॥ वैश्वे
सौम्ये रोगमुक्तिः सुमासाद्धि शत्यास्याद्धा सराणां मघासु॥ पक्षाद्धस्ते वासवे सद्विदैवे मूलाश्विन्यो
रग्निधिष्ण्ये नवाह्नात्॥ याम्ये त्वाप्ये वैष्णवे वारुणे वै नैरुज्यं स्याच्छून मेकादशाहात्॥ आहि
र्बुध्न्यतिष्यसंज्ञे यमास्ये प्राजापत्यादित्ययोः सप्तरात्रात्॥ ज्योतिषे॥ एका
हो निधनं दशाहमनिलावारुणवियत्पर्व्वताः सप्ताकाविलपक्षमासयुगलं मासोश्वतिःपक्ष
कः॥ द्वौ मासावथ विंशतिर्दश निशाः पक्षांतपक्षानखाः॥ मासो पक्षदशांत पक्षककुभः पी
डादिनान्यश्विभात्॥ दैवज्ञः॥ उरगवरुणरौद्रावायुभेंद्र त्रिपूर्वायमदहनविशा
खापाय वारिण्युक्ताः॥ तिथिषु नवमिषष्ठीद्वादशीवाचतुर्थी भवति मरणयोगी रोगिणां
कालहेतुः॥ अनंकुभेद्वेमीं नक्षत्रप्रतिमां पूज्य द्वादशदलेषु संकर्षणादिद्वादशमूर्तीर्द्वाद
शादित्यान्वा संपूज्य दूर्वाशमितिलक्षीराज्यगोयत्नानद्वतायेत्यष्टोत्तरशतं हुत्वा देवोदनं
वलिं दत्त्वाचार्याय गां प्रतिमां च दत्त्वा विप्रान्भोजयेदिति संक्षेपः॥ विशेषस्तु तत्रतद्धेमाद्रौ य
दार्थादर्शे च ज्ञेयः॥ अथ भेषजम्॥ चंडेश्वरः॥ मूलानुराधामृग
तिष्यपुनर्वसौ च पौष्णाश्विनीश्रवणशक्रकरत्रयेच॥ वारेषु वाक्पतिसितेंदुदिने प्रश
स्तं भेषजभक्षणमभीषु हितं नराणाम्॥ अथारोग्यस्नानम्॥ श्रीपतिः
रुद्रोवीरिभार्गवेच ध्रुवेषु सार्पादित्यस्वातिपुक्तैषुभेषु॥ येभेचांतेवापि कुर्यात्कदाचिन्नैव स्ना
नं रोगनिर्मुक्तजंतुः॥ चरविलग्ने रविभौमवासरे रिक्तेतिथौ स्यादुडुलेचपक्षे॥ स्थिरेषु चैरे
रोगनिर्याउतानां स्नानं नराणां निरुजत्वकारि॥ अथ दंतधावनम्॥ पृथ्वीचं
द्रोदये विष्णुः॥ प्रतिपद्दर्शषष्ठीषु चतुर्दश्यष्टमीषु च॥ नवम्यां भानुवारे च दंतका
ष्ठं विवर्जयेत्॥ नारदः॥ चतुर्दश्यष्टमीपौर्णमासीसंक्रमणेषु च॥ नंदासु च नवम्यां च दंत

काष्ठं विवर्जयेत्॥ श्राद्धे यज्ञे च नियमे तथा प्रोषितभर्तृका॥ व्यतीपाते च संक्रांत्यां नंदाभूताष्टपर्व
सु तैलक्षौररतिमांसं दंतकाष्ठं च वर्जयेत्॥ वसिष्ठः॥ शन्यर्कशुक्रवारेषु कुजाहे प्रतिवासरे॥
जन्माहे श्राद्धदिवसे दंतकाष्ठं विवर्जयेत्॥ हेमाद्रौ स्कांदे॥ अभ्यंगे जलधि
स्नाने दंतधावनमैथुने॥ जाते च निधने चैव तत्कालव्यापिनी तिथिः॥ संवर्तः॥ रवौ
विवाहे चाशौचे वर्जयेद्दंतधावनं॥ व्यासः॥ अलाभे दंतकाष्ठानां निषिद्धायां तथा
तिथौ॥ अपां द्वादशगंडूषैर्विदध्याद्दंतधावनम्॥ अथामलकस्नानं व्यासः॥
श्रीकामः सर्वदा स्नानं कुर्वीतामलकैर्नरः। सप्तमीं नवमीं चैव पर्वकालं विवर्जयेत्॥ चंद्र
सूर्योपरागे च स्नानमामलकैस्त्यजेत्॥ क्रतुः॥ षष्ठी च सप्तमी चैव नवमी च त्रयोदशी॥ संक्रां
तौ रविवारे च स्नानमामलकैस्त्यजेत्॥ मनुः॥ नवमी दशमी चैव तृतीया च त्रयोदशी॥ प्रतिप
द्द्वादशी कस्मात्स्नानं तासु विवर्जयेत्॥ यच्च॥ दर्शे स्नानं न कुर्वीत मातापित्रोस्तु जीवतोः॥ उत्र:
कुर्वन्निराचष्टे पित्रोरुत्पत्तिजीवितेद्भिकरणव्ययमाधिः॥ स्नानमात्रं निषिद्धं॥ तद्भोगार्थस्नान
परं तन्निराचष्टे पित्रोरुत्पत्त्यनैमित्तिकपरमिति॥ हेमाद्रिः॥ अथ तैलनिषेधः॥
कात्यायनः॥ पक्षादौ च रवौ षष्ठ्यां रिक्तायां च तथा तिथौ॥ तैलेनाभ्यज्यमानस्तु
चतुर्भिः परिहीयते॥ गर्गः॥ पंचदश्यां चतुर्दश्यामष्टम्यां रविसंक्रमे॥ द्वादश्यां सप्त
मीषष्ठ्योस्तैलस्पर्शं विवर्जयेत्॥ न च कुर्यात्तृतीयायां त्रयोदश्यां तिथौ तथा॥ शास्त्रतो गति
मन्विच्छन्दशम्यामपि पंडितः॥ तत्रैवायुर्वेदे॥ षष्ठ्यां दिनक्षयेष्टम्यां मे
कादश्यां च पर्वसु॥ द्वादश्यां च चतुर्दश्यां पंचम्यां प्रतिपत्तिथौ॥ व्रते श्राद्धदिने जन्मत्रितये श्र
वणार्द्रयोः॥ ज्येष्ठोत्तराफाल्गुनेषु व्यतीपाते च वैधृतौ॥ विष्टियोगे च संक्रांतौ मन्वादिषु यु
गादिषु॥ नाभ्यंगं तत्र बालानां वृद्धानां तु न दोषकृदिति॥ व्यवहारतत्त्वे॥ संक्रांतिभद्राव्यति
पातवैधृतीषष्ठ्यष्टमीपर्वसु नार्कभूसुते॥ स्नाने द्वितीयादशमी च गर्हिताः षष्ठ्यादि माधा
रदखावनेधमाः॥ अस्यापवादमाह तत्रैव प्रचेताः॥ सर्षपं गंधतैलं च यत्तैलं पुष्पवासितं॥
अन्यद्रव्ययुतं तैलं न दुष्यति कदाचन॥ आयुर्वेदे॥ निषिद्धतिथिवारर्क्षग्रह
रोगेष्वपि रात्रिषु॥ किंचिद्दोषघ्नयुक्तं वा विप्रपादरजोन्वितम्॥ भानौ दूर्वान्वितं भौमे भूयुक्तं।
पुष्पयुग्गुरौ॥ सर्वेषां सर्वदा तैलमभ्यंगेषु न दुष्यति॥ मंगलेष्वप्यदोषः॥ मांगल्ये विहिते
स्नाने वृद्धिः सर्वोत्सवेषु च॥ स्नेहपात्रसमायुक्तं मध्यान्हात्प्राकृतं दिष्यते॥ इति
मदनपारिजाते कात्यायनोक्तेः॥ हेमाद्रौ बृहन्मनुः॥ तैलाभ्यंगो नार्कवारे न भौमे
नो संक्रांतौ वैधृतौ विष्टिषष्ठ्योः पर्वस्वष्टम्यां न चेष्टः स दुष्टः प्रोक्तान्मुक्त्वा वासरे सूर्यसूनोः।
तिलस्नाननिषेधस्तु षट्त्रिंशन्मते॥ तथा सप्तम्यमावास्यासंक्रांतिग्रहजन्मसु॥ धनपुत्र
कलत्रार्थी तिलपिष्टं न संस्पृशेत्॥ अथ गृहारंभः॥ ज्योतिर्निबंधे वा
दरायणः॥ वैशाखे फाल्गुने पौषे श्रावणे मार्गशीर्षके॥ सूत्रारंभः शिलान्यासः संभारंभः
प्रशस्यते॥ नारदः॥ सौम्याः फाल्गुनवैशाखमाघश्रावणकार्त्तिकाः॥ मासास्तु

गृहनिर्माणेपुत्रारोग्यधनप्रदाः॥अत्रवृषसिंहवृश्चिकाःवैशाखश्रावणकार्त्तिकाःसौरज्ञे
याः॥ इतिकालादर्शः॥ तंत्रैवकारणांतरे॥स्थिरमासेस्थिरेराशौस्थिरें
शेनववेश्मनां॥कुर्वीतस्थापनंशंकोःशंभुस्थापनमेववा॥कार्त्तिकनिषेधस्तुलापरः॥कुं
भेमाघेपिसर्वेषांमंदिराणामुपक्रमं॥महर्षयःप्रशंसंतिधाम्नागारंविहायच॥निषेधोधाम
हपरः॥पाकभोजनशालादौमार्गशीर्षश्चफाल्गुनः॥रथ्यागृहमठादौचसहस्यःशुचिरेव
च॥पौषाषाढनिषेधस्तुप्रधानगृहपरः॥नप्रधानगृहारंभंकुर्यात्पौषेशुचावपीतितत्रैवो
क्तेः॥ ज्योतिस्तत्वे॥पूर्वापरा स्यंतुनभोनभस्यपौषेयाम्योत्तरास्यसहसिष्विति
ये॥कार्यंगृहंजीवबुधर्क्षगार्कनीचास्तगोजीवसितौचहित्वा॥ रत्नमालायां॥
कर्कनक्रहरिकुंभगतेर्केपूर्वपश्चिममुखानिगृहाणि॥तौलिमेषवृषवृश्चिकयातेदक्षिणो
त्तरमुखानिवदंति॥दैवज्ञवल्लभः॥शीर्षोधाम्यंपंचतानिःपृष्ठलब्धात्रिभैःस्वसगरभृत्तु
नाशाम्॥रत्नधात्र्यमितिकालादर्शपाठः॥स्वश्रीपातिवन्हिभीतिंचलक्ष्मीकुर्युश्चैत्राद्यागृ
हारंभकाले॥गर्गः॥उत्तरामृगरोहिणीपुष्यमैत्रकरत्रये॥धनिष्ठाद्वितयेपौष्णेगृहारंभःप्र
शस्यते॥रोहिण्यांश्रवणात्रयेदितिपुगेहस्तत्रयेमूलकेरेवत्युत्तरफाल्गुनीषुरगभेमैत्रोत्त
राषाढयोः॥शस्तंवास्तुकुजार्कवर्जितदिनेगोकुंभसिंहेषुरवौ॥कन्यायांमिथुनेनभःशुचि
सहोराधोर्ज्जेकेफाल्गुने॥ कालादर्शेसनत्कुमारः॥ आदित्यभौमवर्जंतु
सर्वेवाराःशुभप्रदाः॥ वास्तुशास्त्रे॥ मार्गशीर्षेतथापौषेवैशाखश्रावणेत
था॥फाल्गुनेचकृतंवेश्मसर्वसंपत्प्रदंभवेत्॥कार्त्तिकेमाघमासेचचैत्रेज्येष्ठेतथाश्विने
॥मास्याषाढेभाद्रपदेनकुर्यात्सर्वथागृहं॥द्वितीयाचतृतीयाचपंचमीसप्तमीतथा॥त्र
योदशीचदशमीपूर्णाचैकादशीतथा॥वेश्मारंभेषुभायस्युर्विशेषात्शुक्लपक्षगाः॥
व्यवहारसारे॥शिलान्यासःप्रकर्तव्योगृहाणांश्रवणेमृगे॥पौष्णेहस्तेचरोहिण्यांपुष्या
श्वियुत्तरात्रये॥ वास्तुप्रदीपे॥ अधोमुखेभैर्विदधीतखातंशिलास्तथैवो
र्ध्वमुखेश्चपट्टं॥तिर्यङ्मुखैर्द्वारकपाटयानंगृहप्रवेशोमृदुभिर्ध्रुवैश्च॥लल्लः॥स्नानंच
पाकशयनंचभोज्यंगजालयवाजिगृहधनस्यदेवस्यपूर्वादिदिशिक्रमेणमध्येसभाभू
पनिवेशनाय॥ शिल्पशास्त्रे॥ कन्यासिंहेतुलायांभुजगपतिमुखं
शंभुकोणेत्रिखातंवायव्येस्यात्तदास्यंत्वलिधरमकरेईशखातंवदंति॥कुंभेमीनेचमेषे
निर्ऋतिशिमुखंखातवायव्यकोणेचाग्नेकोणेमुखंवैवृषमिथुनगतेकर्कटेरक्षखातं॥
तत्वचिंतामणौ॥यत्रदैर्घ्यंगृहादीनांद्वात्रिंशद्धस्ततोधिकं॥नतत्रचिंतयेद्धीमानयुगाना
यव्ययादिकान्॥ राजमार्त्तंडः॥ आयव्ययौमासशुद्धिंतृणागारेनचिंत
येत्॥शिलान्यासादिनोकुर्यात्तथागारेपुराणके॥ व्यवहारतत्वे॥ निषिद्धेष्व
पिकालेषुस्वानुकूलेषुभेदिनेतृणकाष्ठगृहारंभेमासदोषोनविद्यते॥चंडेश्वरः॥कृत्तिकादि
सप्तमीयावत्पूर्वास्यंवर्ज्जयेद्गृहं॥उत्तरास्यंनकुर्वीतनवम्यादिचतुर्दशी॥अमावास्याष्टमी

यावत्पश्चिमास्यं विवर्जयेत् ॥ नवम्यादौ तथायाम्यां यावत्कृष्णा चतुर्दशी ॥ ध्रुवं दृष्ट्वा यवास्तृत्वा कर्त्र
ग्रं वास्तुरोपणं ॥ सायाह्नवर्जे दिवसे रात्रौ त्यक्त्वा महानिशाम् ॥ वराहः ॥ दक्षिणपूर्वे कोणे कृत्वा
पूजां शिलां न्यसेत् ॥ प्रथमाम् ॥ शेषाः प्रदक्षिणेन स्तंभाश्चैवं समुत्थाप्याः ॥ कालादर्शे वा
स्तुशास्त्रे तु ॥ खाते चैव शिलान्यासे वृषचक्रं प्रशस्यते ॥ तच्चोक्तं शांतिरत्ने ॥ च
तुर्हस्तप्रमाणं तु खात्वा गर्त्तं समंततः ॥ कुंभोदकैः सेचयेत्तु शांतिपाठः पुरःसरं ॥ ततईशानदिग्भा
गे सास्तृतरत्नपंचकं सास्रकुंभं स्थिरं मुक्त्वा वास्तुपूजनपूर्वकं ॥ कुंभोपरि शिलान्यासः कर्तव्यस्त
दनंतरं ॥ अथ गृहप्रवेशः ॥ बृहस्पतिः ॥ नंदायां दक्षिणद्वारं भद्रायां पश्चि
मेन तु ॥ जयायामुत्तरं द्वारं पूर्णायां पूर्वतो विशेत् ॥ वसिष्ठः ॥ कृत्वा शुक्रं पृष्ठतो वामतो
र्कं विप्रानग्रे आनयन्तः पूर्णकुंभं ॥ हर्म्यं रम्यं तोरणस्रग्वितानैः स्त्रीभिः स्रग्वीगीतवाद्यैर्विशेच्च
॥ व्यवहारतत्त्वे ॥ सौम्यायने श्रावणमार्गयोर्वा जन्मर्क्षलग्नोपचयोदयांशे ॥ वामं गते
र्के गृहवास्तुपूजां कृत्वा विशेद्देशभकूटशुद्धं ॥ वास्तुशास्त्रे ॥ लग्नान्मार्गादितो दिक्षु द्वौ द्वौ राशी
नियोजयेत् ॥ एकमेकं न्यसेत्कोणे सूर्यं वामं विचिंतयेत् ॥ वसिष्ठः ॥ चंद्रजार्यसितवा
सरेषु तु श्रीकरं सुतमहार्थलाभदम् ॥ सूर्यभूसुतदिवसे स्थिरं भवेत् किंतु चौरभयमत्र निर्दिशेत् ॥
रत्नकोशे ॥ पुष्येथ नित्यामृदुवारुणेषु स्वाये ध्रुवर्क्षे त्रिषु चोत्तरासु ॥ अक्षीणचंद्रे शुभदो
बृहस्पतियावरिक्ते च गृहप्रवेशः ॥ नारदः ॥ प्रवेशो मध्यमो ज्ञेयः सौम्यकार्त्तिक
मासयोः ॥ माघफाल्गुनवैशाखज्येष्ठमासेषु शोभनः ॥ अकपाटमनाच्छन्नमदत्तबलिभोजनं
गृहं न प्रविशेद्धीमानापदामाकरो हि तत् ॥ ज्येष्ठः सुतगृहपरः ॥ वृद्धगार्ग्यः ॥ भानोश्च भौम
स्य विहाय वारौ मूलादियोगान शुभांश्च वापि ॥ रिक्तातिथींश्चापि मृदुध्रुवर्क्षे सौम्यायने च प्रवि
शेद्गृहाणि ॥ रत्नमालायां ॥ त्वाष्ट्रमित्रशशिपुष्यदेवतास्वाममनंतिमुनयो
मृदून्यथ ॥ मैत्रगेहरतिभूषणांबरोद्गीतमंगलविधानमेषु च ॥ रोहिणीपुत्ररात्रयं च धक्र वानि ॥
प्रवेशश्च वास्तुपूजां कृत्वा कार्य्यः ॥ जीर्णोद्धारे तथोद्यानेन तथा गृहनिवेशने ॥ नवप्रासादभव
ने प्रासादपरिवर्तने ॥ द्वाराभिवर्तने तद्वत्प्रासादेषु गृहेषु च ॥ वास्तुप्रशमनं कुर्यात्पूर्वमेव वि
चक्षणः ॥ इति मात्स्योक्तेः ॥ तत्रैव ॥ कृत्वाग्रतो द्विजवरानथ पूर्णकुंभं
दध्यक्षताम्रदलपुष्पफलोपशोभनम् ॥ दत्वा हिरण्यवसनानि तथा द्विजेभ्यो मंगल्यशांति
निलयं स्वगृहं विशेच्च ॥ गृह्योक्तहोमविधिना बलिकर्म कुर्यात्प्रासादवास्तुशमने च विधिर्य
उक्तः ॥ संतर्पयेद्द्विजवरानथ भक्ष्यभोज्यैः शुक्लांबरः स्वभवनं प्रविशेत्सधूपम् ॥ अथ
कलिवर्ज्यानि ॥ बृहन्नारदीये ॥ समुद्रयातुः स्वीकारः कमंडलुविधारणम् ॥
द्विजानामसवर्णासु कन्यासूपयमस्तथा ॥ देवराच्च सुतोत्पत्तिर्मधुपर्के पशोर्वधः ॥ मांसदानं
तथा श्राद्धे वानप्रस्थाश्रमस्तथा ॥ दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य च ॥ दीर्घकालं ब्रह्म
चर्यं नरमेधाश्वमेधकौ ॥ महाप्रस्थानगमनं गोमेधश्च तथा मखः ॥ इमान्धर्मान्कलियुगे वर
ज्यानाहुर्मनीषिणः ॥ कमंडलुः सोदकं च कमंडलुमित्युक्तं ॥ मृण्मयो वा ॥ दत्ता ऊढा ॥ ऊढायाः

पुनरुद्वाहंज्येष्ठांशंगोवधस्तथा।।कलौपंचनकुर्वीतभ्रातृजायांकमंडलुमितिहेमाद्रौवचना
त्।।ऊढायाःपुनःपुरुषसंयोगात्प्राग्देयेतिवचनेनादिभिर्विवाहस्योक्ता।। हेमाद्रौब्राह्मे।।
गोत्रान्मातुःसपिंडाच्चविवाहोगोवधस्तथा।।नराश्वमेधौमद्यंचकलौवर्ज्यंद्विजातिभिः।।गोत्रा
त्गोत्रजायाःपितृष्वसुःमातुःसपिंडान्मातुलात्तत्कन्यायाविवाहःकलौनकार्यः।।तेनमा
तिद्विधायकानितानियुगांतरविषयाणि।। तथाचव्यासः।। तृतीयांमातृ
तःकन्यांतृतीयांपितृतस्तथा।।शुल्केनचोद्वहिष्यंतिविप्राःपापविमोहिताः।। इतिक
लौतन्निंदामाह।। मातृतस्तृतीयांमातुलकन्यामित्यर्थः।।उक्तंचैतत्प्राक्।।मद्यं
स्त्रीभ्यश्चसुरामाचामेमित्यादिनाविहितमपिवर्ज्यम्।। हेमाद्रौआदित्यपुराणे।।
विधवायांप्रजोत्पत्तौदेवरस्यनियोजनं।।बालायाःक्षतयोन्यास्तुवरेणान्येनसंस्कृतिः।।कन्या
नामसवर्णानांविवाहश्चद्विजन्मभिः।।आततायिद्विजाग्र्याणांधर्मयुद्धेनहिंसनं।।द्विजस्याब्धौ
तुनौयातुःशोधितस्यापिसंग्रहः।।सत्रदीक्षाचसर्वेषांकमंडलुविधारणम्।।महाप्रस्थानग
मनंगोसंज्ञप्तिश्चगोसवे।।सौत्रामण्यामपिसुराग्रहणस्यचसंग्रहः।।अग्निहोत्रहवण्याश्च
लेहोलीढापरिग्रहः।।वृत्तस्वाध्यायसापेक्षमघसंकोचनंतथा।।प्रायश्चित्तविधानंचविप्राणां
मरणांतिकं।।संसर्गदोषस्तेयान्यमहापातकनिष्कृतिः।।संसर्गदोषस्तत्संसर्गित्वंपंचमस्यु
क्तः।।स्तेयंचतदन्यानिमहापातकानिब्रह्महसुरापानगुरुतल्पानित्रीणि।।तेषांकामकृता
नांमरणांतिकंप्रायश्चित्तंविप्राणांकलौनेत्यर्थः।।मरणांतिकेहिजातिवधनिमित्तंद्वादशा
ब्दंद्विगुणंब्रह्मवधनिमित्तंचद्विगुणंभवति।।तच्चतुर्थेनास्तिनिष्कृतिरितिनिषिद्धं।।नचाम
हत्याविधिनाबाधः।।तेनब्रह्महत्यानिमित्तस्यैवबाधोनजातिवधनिमित्तस्य।।भिन्नविष
यत्वात्।।संसर्गिणस्तुकामतोपिव्रतस्यैवोक्तेर्नमरणांतिकम्।। नापिलोपे तेनपक्षेवधानु
क्तत्वात्।।तेनतयोर्मरणांतिकाभावात्तयोरेवनिष्कृतिर्नान्येषांत्रयाणाम्।।युगांतरेतुकलौ
निषेधबलादेवप्रवृत्तिः।।एतद्विप्रपरंनक्षत्रियादेः।।तदुक्तंविप्राणांमरणांतिकमिति।।वि
शेषस्त्वस्मत्कृतेप्रायश्चित्तरत्नेज्ञेयः।।वराऽतिथिपितृभ्यश्चपशूपाकरणक्रिया।।दत्तौरसे
तरेषांतुपुत्रत्वेनपरिग्रहः।।सवर्णान्यांगनादुष्टैःसंसर्गःशोधितैरपि।।अयोनौसंग्रहेवृत्तेप
रित्यागोगुरुस्त्रियाः।।परोद्देशात्मसंत्यागःउच्छिष्टस्यापिवर्जनं।।प्रतिमाभ्यर्चनार्थायसंकल्प
श्चसधर्मकः।।अस्थिसंचयनादूर्ध्वमंगस्पर्शनमेवच।।शामित्रंचैवविप्राणांसोमविक्रयणं
तथा।।षड्भक्तानशनेचान्नहरणंहीनकर्मणः।। माधवीयेपृथ्वीचंद्रोदयेच।।
शूद्रेषुदासगोपालकुलमित्रार्धसीरिणाम्।।भोज्यान्नतागृहस्थस्यतीर्थसेवातिदूरतः।।
शिष्यस्यगुरुदारेषुगुरुवद्वृत्तिशीलता।।आपद्वृत्तिर्द्विजाग्र्याणामश्वस्तनिकतातथा।।प्र
जार्थंतुद्विजाग्र्याणांप्रजारणिपरिग्रहः।।ब्राह्मणानांप्रवासित्वंमुखाग्निधमनक्रिया।।बला
त्कारादिदुष्टस्त्रीसंग्रहोविधिचोदितः।।यतेस्तुसर्ववर्णेषुभिक्षाचर्याविधानतः।।नवोद
केदशाहंचदक्षिणागुरुचोदिता।।ब्राह्मणादिषुशूद्रस्यपचनादिक्रियापिच।।भृग्वग्निप

तनश्चैववृद्धादिमरणंतथा॥ गोतृप्तिशिष्टेपयसिशिष्टैराचमनक्रिया॥ पितापुत्रविरोधेषुसा
क्षिणांदंडकल्पनं॥ यतेःसायंगृहत्वंचसूरिभिस्तत्त्वदर्शिभिः॥ एतानिलोकगुप्त्यर्थंकलेरादौम
हात्मभिः॥ निवर्तितानिविद्वद्भिर्व्यवस्थापूर्वकंबुधैः॥ सुराग्रहणस्यतत्कर्तुःसंग्रहोव्यवहार
कः॥ नचमद्यंचेतिसामान्येननिषिद्धस्यानेनोपसंहार इतिवाच्यम्॥ निषेध
स्यनिवृत्तिमात्रफलत्वेनविशेषानपेक्षत्वात्॥ नहिंस्यादित्यस्यनब्राह्मणंहन्यादित्यनेनोपसं
हारेहिंसांतरस्यादोषत्वापत्तेश्च॥ निरूपितंचैतद्धेमाद्रिणाप्यत्रतूपरम्यते॥ सुराग्रहस्योद्दे
शस्यसौत्रामणिविशेषणाविवक्षयावाजपेयेपिनिषेधः॥ सौत्रामण्यांतुपयोग्रहावासुरि
तायसंवोक्तैर्वैकल्पिकपयोग्रहेप्यधिकारः॥ वाजपेयेतुतस्मिन्सोमानाभावात्सोमसुरयोः
सहत्यागेनांशेसुराद्रव्यत्वात्तत्रस्वतंत्रयागनामत्वेनतांविनासंस्थायोगात्कलौनाधिका
रइतियुक्तंप्रतीमः॥ त्रिकांडमंडनादिलिखनंतुनिर्मूलमनाकरंच॥ वृत्तेति॥ एकाहाद्ब्राह्मणः
शुध्येद्योग्निवेदसमन्वितइत्युक्तेः॥ आघस्याशौचस्यसंकोचः॥ ननस्यनिष्कृतिर्दृष्टाभृग्वग्निप
तनादिनेत्युक्तस्यप्रायश्चित्तस्यविधानमुपदेशःकलौकर्तानैवलिप्यतइतिव्यासोक्तेः॥ पतित
संसर्गदोषस्त्वेपिपातित्यंनेत्यर्थः॥ केचिदाहुः तेमूर्खाःमानाभावात्॥ तेनायमर्थः
तत्संसर्गात्तुपंचमः॥ स्तेयेच॥ तदन्यानिमहापातकानि॥ ब्रह्मवधसुरापानगुरुतल्पानित्री
णितेषांकामाकृतानांप्रायश्चित्तंकलौनतेषुकामतोमरणांतस्यैवोक्तेः॥ नतृप्तानेद्वादश
वर्षेगुरपिआत्मनोब्रह्मवधनिमित्तेचचतुर्विंशत्यब्दमितिचतुर्गुणद्वादशाब्दप्रत्यस्यचतु
र्थेनास्तिनिष्कृतिरितिनिषेधात्॥ सर्पिरोणात्रतस्यैवोक्तेः॥ स्तेयेचराज्ञोवधकर्तृत्वात्तात्मवधा
पत्तेः॥ अतोवैगुरण्येपुत्रोधिकारः॥ नचविधिनानिषेधबाधात्॥ आत्मवधदोषापवादेपित्र
स्यवधाभावात्॥ युगांतरदोषसाम्येपिकलौदोषाधिक्यात्॥ एतद्धिप्रयरम्॥ सवर्णास्वत्र
सवर्णाःक्षत्रियादिः॥ तथाहुस्ते॥ अयोनौशिष्यादौ॥ चतत्स्तुपरित्यागः॥ शिष्यगणगुरुणा
चयेत्युक्तास्यागः॥ परोद्देशेनब्राह्मणार्थंआत्मत्यागः॥ यद्वापरोद्देशात्मत्यागोदानंमनसा
पात्रमुद्दिश्यपरित्युक्तं॥ उद्दिष्टस्यपात्रस्यवर्जनंप्रतिग्रहसमर्थायोत्युक्तं॥ वेतनग्रहणेनप्रतिमा
पूजा॥ स्वाशौचकालाद्विज्ञेयं॥ स्पर्शनंतुत्रिभागतःइत्युक्तःस्पर्शःषडितितृतीयादिनस्त्र्यहंस्थि
त्याधान्यमब्राह्मणाद्धरेदित्युक्तमन्नचौर्यं॥ आपदिस्नात्रादिवृत्तिः॥ मुखेनैवधमेदग्निमित्यु
क्तंधमनं॥ दशाहेनैवशुध्येतभूमिस्थंचनवोदकमित्युक्तोदशाहः॥ गुरवेतुवरंदत्त्वेत्युक्ताद
क्षिणा॥ शूद्रेषुदासगोपालेति॥ कंदुपक्वंस्नेहपक्वंपायसंदध्निनपाचितं॥ एतान्यशूद्रान्नभुजो
भोज्यानिमनुरब्रवीदित्यपरार्केसुमंतूक्ताशूद्रस्यपाकक्रिया॥ पितापुत्रविवादेतुसाक्षिणां
त्रिपणोदमइत्युक्तः॥ सायंगृहत्वम्॥ निवृत्तेमुसलेइत्युक्तं॥ पृथ्वीचंद्रेणातु॥ अटंतिव
सुधांविप्राः पृथिवीदर्शनायतु॥ अनिकेताग्नयनाहारायत्रसायंगृहास्तु
ते॥ इतिविष्णुपुराणोक्तोनिषिद्धः॥ तेनाज्ञातशीलपथ्यादेःश्राद्धादौविनियोगोनकार्यःकृत्वा
वित्यर्थउक्तः॥ ज्येष्ठांशंगोवधस्तथेतिवापाठः॥ दिवराच्चसुतोत्पत्तिःकलौपंचविवर्जयेत्॥ अत्र

ग्निहोत्रंतदर्थमाधानम्॥एतच्चसर्वाधानपरं।अर्द्धाधानेस्मार्तश्रौतस्मार्त्तयोस्तुपृथक्कृ
तिः॥सर्वाधानंतयोरेकक्कृतिःपूर्वयुगाश्रितेतिलौगाक्षिवचनादितिस्मृतिचंद्रिकायाम्
॥एतेनचत्वार्यब्दसहस्राणिचत्वार्यब्दशतानिच॥कलेर्यदागमिष्यंतितदात्रेतापरिग्रहः
संन्यासश्चनकर्तव्योब्राह्मणेनविजानतेतिमात्स्यवचनंव्याख्यातं॥सर्वाधानेपिविशेष
माहदेवलः॥यावद्वर्णविभागोस्तियावद्वेदःप्रवर्तते॥संन्यासंचाग्निहोत्रंचतावत्कुर्या
त्कलौयुगेइति॥अत्रपूर्वयुगाश्रितेतिलौगाक्षिवाक्येपूर्वयुगानिकृतादीनीत्येकोर्थः॥
अन्येतुयुगस्यपूर्वेकलौ॥पूर्वोभागःसचत्वार्यब्दसहस्राणीति॥पूर्वोक्तवाक्याच्चतुश्चत्वारिं
शच्छतवर्षावच्छिन्नःतस्मिन्भागेसर्वाधानंकार्यं॥तदुत्तरंतुयावद्वर्णविभागोस्तीतिवा
क्याद्वर्णविभागपर्यंतमर्द्धाधानमित्याहुः॥समासस्त्विदं॥ ॥ ॥ ॥ ॥ ॥ ॥

इतिश्रीमन्नारायणभट्टसूरिसूनुरामकृष्णभट्टात्म
जदिनकरभट्टानुजकमलाकरकृतेनिर्णय
सिंधौतृतीयपरिच्छेदेकलिवर्ज्यानि।
तृतीयपरिच्छेदःसमाप्तः४॥०
इतउत्तरश्राद्धनिर्णयः॥

ॐलंबोदरायनमः॥नानानिबंधवैमत्यभ्रांतचित्तोद्दिधीर्षया॥कमलाकरसंज्ञेनक्रि
यतेश्राद्धनिर्णयः॥तत्स्वरूपमाहपृथ्वीचंद्रोदयेमरीचिः॥प्रेतंपितॄंश्चनिर्दिश्यभोज्यंयत्प्रि
यमात्मनः॥श्रद्धयादीयतेयत्रतच्छ्राद्धंपरिकीर्तितं॥ब्राह्मणस्वीकारांतश्चतुर्थ्यंतपदोप
नीतपित्राद्युद्देश्यकस्त्यागःश्राद्धमित्यर्थः॥तत्रयद्यपिहोमपिंडभोजनानिप्रधानमितिहे
माद्रिः॥होमश्चपिंडदानंचतथाब्राह्मणभोजनं॥श्राद्धशब्दाभिधेयंस्यादेकस्मिन्नौपचारि
कइति॥श्रीधरस्तुतथापिकचिद्विशेषंवक्ष्यामः॥निमित्तभेदेभोजनस्यपिंडानांवानिषे
धेनप्राधान्यविरोधात्॥अत्रसोमयाजिनोरधिपयोयागवत्॥यच्चशूलपाणिः॥नित्यं
श्राद्धमदैवंस्यादर्घ्यपिंडविवर्जितमितिहारीतीयेनित्यश्राद्धमघादौपिंडनिषेधोस्तिनच
प्राप्तिंविनाशः॥नचातिदेशंविनाप्राप्तिः॥नचांगत्वेनविनातिदेशः॥प्रधानस्यानतिदेश्या
यत्तु॥नांदीमुखानांप्रत्यब्दंकन्याराशिगतेरवौ॥पौर्णमास्यांप्रकर्तव्यंवराहवचनंयथेति
॥पौर्णमास्यांश्राद्धंविहितंतत्रनांदीमुखाःकेइत्याकांक्षायां॥ब्राह्मे॥पितापितामहश्चैव
तथैवप्रपितामहः॥त्रयोह्यश्रुमुखाह्येतेपितरःसंप्रकीर्तिताः॥तेभ्यःपूर्वतरायेचप्रजाव
न्तःसुखेधिताः॥तेतुनांदीमुखानांदीसमृद्धिरितिकथ्यतेइतिवचनोक्ताः॥एवंचतस्मिन्
श्राद्धेपित्रादित्रयोर्ध्वानांप्रसन्नमुखत्वरूपंविश्वेदेववत्सहजंनांदीमुखत्वंपारिभाषिकं॥त
दुक्तं॥प्रसन्नमुखसंज्ञास्तुमंगलीयायतःस्मृतेरिति॥अतएवात्रननांदीश्राद्धधर्मातिदेशः॥नां

दीमुखशब्दस्य देवतापरस्य कर्मनामत्वाभावात्। नापि नांदीमुखत्वं पितृविशेषणं॥ पारिभाषिक
त्वात्॥ तथा चैतस्य श्राद्धस्य कन्याराशिगते रवौ विधानात्तन्निमित्तत्वपि कन्यागते सूर्ये कान्ये च धुरि
लोचनाविति वाक्याद्धुरिलोचनौ विश्वेदेवौ। वृद्धिश्राद्धे तु॥ मातृश्राद्धं तु पूर्वं स्यात्पितॄणां तदनंतरम्।
ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतमिति माध्ववाक्यानुरोधेन मात्रादित्रय मातामहादित्रयाणां।
देवतात्वे सिद्धे तेषामेव विश्वेदेवसाधारणं ऊर्ध्ववक्त्रादिरूपं नांदीमुखत्वं॥ अत एवात्र वचनं॥
ऊर्ध्ववक्त्रास्तु ये तत्र ते नांदीमुखसंज्ञिता इति॥ तच्च॥ नांदीमुखेभ्यो देवेभ्यः प्रदक्षिणाकुशासनं।
पितृभ्यस्तन्मुखेभ्यश्च प्रदक्षिणमिति स्थितिरिति पराशरवचनाद्विश्वेषां देवानां पितॄणां च विशे
षणं। तथा च नांदीश्राद्धमिति कर्मनामधेयं॥ अत एवात्र नांदीमुखे सत्यवसुसंकीर्त्यौ वैश्वदेवि
के इति वचनात्सत्यवसू विश्वेदेवौ॥ अत्र पितृशब्दस्य सपिंडीकरणांतश्राद्धजन्यपितृभावापन्नप
रत्वेन मातृपितृमातामहादिसाधारण्यात्सर्वत्र नांदीमुखत्वविशेषणाभावः। एवं प्रदक्षिणाद्युपचारो वृ
द्धौ नांदीमुखान् पितॄन्॥ यजेत दधिकर्कंधुमिश्रान्पिंडान्यवैः क्रियेति याज्ञवल्क्योक्तो रिति
ग्रंथांतरे॥ कलौ श्राद्धे मधु नैव देयम्॥ अक्षतागोपशुश्चैव श्राद्धे मांसं तथा मधु। देवराच्च सुतोत्प
त्तिः कलौ पंच विवर्जयेत्॥ इति श्राद्धदीपकलिकामदनपारिजातयोर्निगमोक्तेः
॥ पंचेति न परिसंख्या॥ दोषत्रयापत्तेः॥ कलावन्यनिषेधवाक्यान
र्थक्यापत्तेश्च॥ अतः प्रदर्शनमात्रार्थमेतत्॥ एतद्वाक्योपात्तोपाधिना च पंचत्वोपपत्तिः॥ य
त्तु यच्छ्राद्धं मधुना हीनं तद्रसैः सकलैरपि॥ मिष्टान्नैरपि संयुक्तं पितॄणां नैव तृप्तये॥ अणुमात्र
मपि श्राद्धे यदि स्याच्च माक्षिकं नाम। पिकीर्तनीयं स्यात्पितॄणां प्रीतये तत॥ इति हेमा
द्रौ ब्राह्मवचनं॥ यच्च॥ कथंचिदपि विप्रेभ्यो नदत्तं भोजने मधु॥ पिंडास्तु नैव दातव्याः कदा
चिन्मधुना विनेति॥ श्राद्धदीपकलिकायां नागरखंडवचनम्॥ यच्च॥ सुन
त्ते ब्राह्मणस्योक्तं मांसं क्षत्रियवैश्ययोः॥ मधु प्रधानं शूद्रस्य सर्वेषां चाविरोधि यदिति हेमा
द्रौ पुलस्त्यवचनं तत्कलियुगातिरिक्तपरं। न च यथाचारं प्रदेयं तु मधुमांसादिकं तथा॥ दे
शाचाराः परिग्राह्याः तत्तद्देशीयजैर्नरैः॥ अन्यथा पतितो ज्ञेयः सर्वधर्मबहिष्कृत इति श्राद्धमह
त्तरहन्नारदीयवचनाद्देशाचारतो व्यवस्थेति वाच्यम्॥ कलिनिषेधवैयर्थ्यापत्तेः॥ तस्मात्क
लौ श्राद्धे मधु नैव देयमिति सिद्धम्। केचित्तु॥ कथंचिदपि विप्रेभ्यो नदत्तं भोजने मधु॥ पिंडास्तु
नैव दातव्याः कदाचिन्मधुना विनेति॥ नागरखंडवचने कालेदाप्रत्ययस्मरणे न निषिद्धस्य क
लिकालादेः सर्वस्यापवादाद्भोजने मधुनिषेधेपि पिंडे मधु कलौ देयमेव॥ कलौ मधुनिषेध
वाक्यानां भोजनपरत्वात्॥ तेन सर्वकालं तिला ग्राह्याः पितॄणां तु विशेषतः॥ भोज्यपात्रे तिला
न्दृष्ट्वा निराशाः पितरो गता इति॥ यथा भोजने तिलनिषेधेपि न पिंडे तन्निषेधस्तथात्रापि पिंडेन
मधुनिषेध इत्याहुः॥ तन्न मे उपकारकत्वेनातिदेशोक्तेः॥ तेन भोजनं प्रधानं पिंडोंगं। पिंडदान
मात्रविधिस्त्वंगभूतात्कर्मांतरमेव प्रकरणांतरन्यायादिति॥ तन्न। जातश्राद्धे न दद्यात्तु पक्वान्नं
ब्राह्मणेष्वपि॥ न पक्वं भोजयेद्विप्रान् सच्छूद्रोपि कदाचनेत्यादेर्जातश्राद्धे शूद्रश्राद्धादौ भोजन

स्यनिषेधेनांगत्वापत्तेः॥ नतीयशोकरोतीतिवदुपजीव्यविरोधेनविकल्पापत्तेश्च॥ तेनश्राद्धशब्दा
भिधेयत्वेनोभयप्राप्तौनिषेधः पर्युदासोवाऽऽक्षिप्तोनददातिनजुहोतिनासोमपाजीसंनयेदिति
वदितितत्त्वं॥ धर्मप्रदीपेपि॥ यजुषांपिंडदानंतुबह्वृचानांद्विजार्चनं॥ श्राद्धशब्दाभिधेयंस्यादुभयं
सामवेदिनां॥ तन्न॥ पितृन्यजेतपितृभ्योदद्यादित्युभयप्रयोगदर्शनाद्यागदानोभयात्मकाप्र
तरोदेवताइतिपित्रुद्देश्यकत्वाद्यागत्वेविप्रापेक्षयाचदानत्वमित्यविरुद्धं॥ एतेननायंयागः॥
देवतोद्देशेनत्यागोयागः॥ यागोद्देश्याचदेवतेत्यन्योन्याश्रयादितिगौडमतमपास्तं॥ वेधशब्दविशे
षोद्देश्यकत्वस्यतस्येदमितिस्वत्यागरूपप्रतियोगित्वस्यवादेवतात्वात्॥ तत्रैवसुमंतुः॥ श्राद्धात्प
तरंनान्यच्छ्रेयस्करमुदाहृतं॥ आदित्यपुराणे॥ नसंतिपितरश्चेतिकृत्वाम
नसियोनरः श्राद्धंनकुरुतेतत्रतस्यरक्तंपिबंतिते॥ तन्मेदानाहविश्वामित्रः॥ नित्यंनैमित्तिकंका
म्यंवृद्धिश्राद्धंसपिंडनं॥ पार्वणंचेतिविज्ञेयंगोष्ठ्यांशुद्ध्यर्थमष्टमं॥ कर्मांगंनवमंप्रोक्तंदैविकंद
शमंस्मृतं॥ यात्रास्वेकादशंप्रोक्तंपुष्ट्यर्थेद्वादशंस्मृतमिति॥ एषांलक्षणानिभविष्ये॥ अहन्य
हनियच्छ्राद्धंतन्नित्यमितिकीर्त्तितम्॥ वैश्वदेवविहीनंतदशक्तावुदकेनतु॥ एकोद्दिष्टंतुयच्
छ्राद्धंतन्नैमित्तिकमुच्यते॥ तदप्यदैवंकर्त्तव्यमयुग्मान्भोजयेद्द्विजान्॥ कामायविहितंकाम्य
मभिप्रेतार्थसिद्धये॥ वृद्धौयत्क्रियतेश्राद्धंवृद्धिश्राद्धंतदुच्यते॥ गंधोदकतिलैर्युक्तंकुर्यात्पात्रच
तुष्टयं॥ अर्घार्थंपितृपात्रेषुप्रेतपात्रंप्रसेचयेत्॥ येसमानाइतिद्वाभ्यामेतज्ज्ञेयंसपिंडन
म्॥ नित्येनतुल्यंशेषंस्यादेकोद्दिष्टंस्त्रियाअपि॥ एतदुभयमेवस्त्रियाः॥ तेनस्त्रीकर्तृकंस्त्रीसं
प्रदानकंचेत्युभयनियमः॥ इतिकल्पतरुः॥ अमायांचैवयत्क्रि
यतेतत्पार्वणमितिस्मृतम्॥ क्रियतेपर्वणियद्दानंपार्वणमितिस्थितिः॥ अत्रपर्व॥ चतुर्दश्य
ष्टमीचैवअमावास्याचपौर्णिमा॥ पर्वाण्येतानिराजेंद्ररविसंक्रमणंतथेति विष्णुपुराणोक्तं
संक्रांत्यादि॥ गोष्ठ्यांयत्क्रियतेश्राद्धंगोष्ठीश्राद्धंतदुच्यते॥ बहूनांविदुषांसम्यक्सुखार्थंपितृ
तृप्तये॥ क्रियतेशुद्धयेयत्तुब्राह्मणानांतुभोजनम्॥ शुद्ध्यर्थमितितत्प्रोक्तंवैनतेयमनीषिभिः
॥ निषेककालेसोमेचसीमंतोन्नयनेतथा॥ ज्ञेयंपुंसवनेचैवश्राद्धंकर्मांगमुच्यते॥ देवानु
द्दिश्ययच्छ्राद्धंतत्तुदैविकमुच्यते॥ गच्छन्देशांतरंयस्तुश्राद्धंकुर्यात्तुसर्पिषा॥ यात्रार्थमिति
तत्प्रोक्तंप्रवेशेचनसंशयः॥ शरीरोपचयेश्राद्धमर्थोपचयएवच॥ पुष्ट्यर्थमेतद्विज्ञेयमौ
पचयिकमुच्यते॥ गोष्ठ्यांश्राद्धकर्तृसमुदायेसंभूयसामग्रीसंपादनेनयुगपत्तीर्थादिप्राप्तौ
विदुषांश्राद्धंसंपदासुखार्थंभिन्नपाकाशक्तौबहुपितृकःश्राद्धमेकःकुर्यादितिकल्पतरुः
शुद्धिश्राद्धंप्रायश्चित्तांगमितिमैथिलाः॥ अत्रपार्वणैकोद्दिष्टवृ
षांखधरश्च॥ अथश्राद्धदे
द्धिसपिंडीकरणात्मकंचतुर्विधमेवमुख्यं॥ तस्यैवायंप्रपंचः॥
शुचिंदेशंविविक्तंतुगोमयेनोपलिप्यच॥ दक्षिणाप्रवणंचै
शाः॥० मनुः॥
पृथ्वीचंद्रोदयेविष्णुधर्मे॥ दक्षिणाप्र
वप्रयत्नेनोपपादयेत्॥
वणेदेशेतीर्थादौचगृहेपिवा॥ भूसंस्कारादिसंयुक्तेश्राद्धंकुर्यात्प्रयत्नतः॥ तत्रैवप्रभास

नामपि पिंडोक्तेः॥ येबांधवाबांधवावेत्यादितर्पणबाधापत्तेश्च नामगोत्रस्वधश्राद्धनिषेधो नाम
त्रेति गौडाः॥ विप्रासुतस्य शूद्रापुत्रश्राद्धनिषेधो नामत्र॥ अग्रदानं चान्नत्यागात्मकं कार्यमिति
मैथिलाः॥ तन्न॥ अग्रभागस्य श्राद्धपरत्वे मानाभावात्॥ अन्नदाने च
निषेधात्॥ त्यागात्मकं करणेऽनंगेन व्यवधानापत्तेः कृत्वे च मानाभावात्॥ इदं च स्वाम्यनु
ज्ञाभावे॥ तदुक्तं तत्रैव ब्राह्मे॥ स्वेनु लिंगेषु गेहेषु स्वाम्यनुज्ञापिते
षु च॥ श्राद्धमेतेषु दातव्यं वर्ज्यमेतेषु नोच्यते॥ किरातेषु कलिंगेषु कोंकणेषु कृतेषु च॥ सिं
धोरुत्तरकूलेषु नर्मदायाश्च दक्षिणे॥ पूर्वेण करतोयाया नदेयं श्राद्धमुच्यते॥ इदं काम्यविष
यं॥ अन्यथा तत्रत्यानां सर्वश्राद्धाकरणापत्तेः॥ नर्मदादक्षिणेऽपवादः॥ स्कांदे॥
सह्यस्य चोत्तरे भागे यत्र गोदावरी नदी॥ पृथिव्यामपि कृत्स्नायां स प्रदेशोऽतिपावनः॥ पर
कीयत्वापवादस्त्वादित्यपुराणे॥ अटवीपर्वताः पुण्या नदीतीराणि यानि च॥ सर्वाण्यस्वामि
कान्याहुर्नहि तेषु परिग्रहः॥ वनानि गिरयो नद्यस्तीर्थान्यायतनानि च॥ देवखाताश्च गर्ताश्च
न स्वामी तेषु विद्यते॥ स्मृतिसारे॥ नैकवासा न च द्वीपे नांतरिक्षे
कदाचन॥ श्रुतिस्मृत्युदितं कर्म न कुर्यादशुचिः क्वचित्॥ दिवोदासीये॥ म्लेच्छदेशे तथा
रात्रौ संध्यायां निवर्जितः॥ न श्राद्धमाचरेद्विद्वान्नन्याकाशे कदाचन॥ अथ
श्राद्धकालः॥ ते च संक्रांतियुगादिमहालयादयः प्रायेणाद्यपरिच्छेदद्वये उक्ता
एव॥ केचिदुच्यंते॥ पृथ्वीचंद्रोदये वृद्धपराशरः॥ श्राद्धं ग्रहाव
चंद्रभच्छायाग्रहणसंक्रमे॥ नवोदके नवान्ने च नवच्छन्ने तथा गृहे॥ नवेष्वेषु चेहंते पित
रो हि मघास्वपि॥ पितरः स्पृहयंत्यन्नमष्टकासु मघासु चेति॥ शातातपपाठः॥
नवोदके नवकूपादाविति केचित् नवर्षापक्रमे चार्द्राप्रवेशे॥ इति गौडाः॥
नवान्नश्राद्धविशेषो ज्योतिषे॥ ज्येष्ठाशेषार्द्रगे सूर्ये मृगनेत्रानिशात्मके॥ नवान्ने भोज
न श्राद्ध ॥ जन्मचंद्रतिथौ न च॥ अश्लेषाकृत्तिकाज्येष्ठामूलाजपदेकेषु च॥
भृगुभौमदिने रिक्ते तिथौ नाद्यान्नवोदनं॥ तत्रैव वृश्चिके शुक्लपक्षे तु नवान्नं शस्यते बुधैः
अतः कृष्णपक्षे नेति गौडाः॥ मैथिलास्तु अन्नतोयपणं चैव धान्यजातं नरोत्तमेति वारा
होक्तेः प्रतिधान्यं श्राद्धमाहुः॥ तन्न जातपदस्य श्राद्धयोग्यसमूहपरत्वात्॥ हेमा
द्रौ जातूकर्ण्यः॥ शंखप्रादुरमावास्या क्षीणचंद्रा द्विजोत्तमाः॥ अष्टकानु भवेत्यस्मै तत्र दत्तं
तथाक्षयं॥ तत्रैव शंखः॥ यदा विष्टिर्व्यतीपातो भानुवारस्तथैव च॥ पद्मकं नाम तत्प्रोक्तम
यनाच्च चतुर्गुणं॥ याज्ञवल्क्यः॥ अमावास्याष्टका वृद्धिः कृष्णपक्षोऽयनद्वयं॥ द्रव्यं ब्राह्मण
संपत्तिर्विषुवत्सूर्यसंक्रमः॥ व्यतीपातो गजच्छाया ग्रहणं चंद्रसूर्ययोः॥ श्राद्धं प्रति रुचि
श्चैव श्राद्धकालाः प्रकीर्तिताः॥ कृष्णपक्षः सर्वोऽपि॥ शौकेनाप्यपरपक्षं नातिक्रमेन्मासि
मासि वाशनमिति स्मृतेः॥ ऊर्ध्वं वा चतुर्थ्या यदहः संपद्येत तदहः चतुर्दशीमिति कात्यायनो
क्तेः॥ मासि मासि कार्यमपरपक्षस्यापराह्णः श्रेयानित्यापस्तंबोक्तेश्च॥ बीशयां सर्वकृष्णप

सेषु नित्यं॥ तेनोपसंहारान्महालयपरत्वपरास्त॥ अत्र प्रत्यहं पंचम्यादियदहः संपत्तिर्वेति
त्रयः पक्षाः॥ यदेकदिने श्राद्धं तदा दार्शश्थ्य गेव॥ याज्ञवल्क्येनामावास्यायाः
श्थकृन्निर्देशात्॥ एतेन कृष्णपक्षे यदहः संपद्यते॥ अमावास्यायां तु विशेषेणेति निगमो
क्तेश्च॥ गुणोऽपरपक्षश्राद्धस्यामावास्येति शूलपाणिमतमप्यपास्तं अशक्तौ दर्शेनापि
मासि श्राद्धसिद्धिरिति नारायणवृत्तिः॥ निरग्नीनां कस्मिंश्चिद्दिने॥ आहिताग्नेस्तु दर्शए
व॥ न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मन इति मनूक्तेः॥ सर्वकृष्णपक्षाशक्तौ मात्स्ये॥ अ
नेन विधिना श्राद्धं त्रिरब्दस्येह निर्वपेत्॥ कन्याकुंभवृषस्थेर्के कृष्णपक्षे च सर्वदा॥ क
र्कोपि॥ आहिताग्नेः संवत्सरे त्रिः श्राद्धनियम इति॥ देवलः॥ अ
नेन विधिना श्राद्धं कुर्यात्संवत्सरं सकृत्॥ द्विश्चतुर्वा यथा श्राद्धं मासे मासे दिने दिने॥ कृष्ण
पक्षेष्वपि महालयस्य श्रेष्ठत्वं तच्चोक्तं प्राक्॥ व्यतीपाते विशेषमाह॥ हेमाद्रौ ग
रुडः॥ फलं लक्षगुणं प्रोक्तं भ्रमणे कोटिरुच्यते॥ पतने शतकोट्यस्तु पाते वै दत्त
मक्षयं॥ ज्योतिःशास्त्रे॥ द्वाविंशतिस्तथोत्पत्तौ भ्रमणे चैकविंशतिः॥ प
तने दशनाड्यस्तु पतिते सप्तनाडिकाः॥ अमी च ह्यो व्यतीपाते प्रागुक्तो॥ हेमाद्रौ
मार्कंडेयः॥ यदा च श्रोत्रियोभ्येति गृहं वेदविदग्निचित्॥ तेनैकेनापि कर्तव्यं श्राद्धं च विधि
वत्कुभ॥ उद्दर्चापिंडकार्यमिति हेमाद्रिः॥ एतज्जीवत्पितृकोपि कुर्यात्॥ उद्वाहे पुत्रजनने
पित्र्येष्ट्यां सौमिके मखे॥ तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुरिति मैत्रायणीयपरिशि
ष्टोक्तेः॥ तिथिविशेषे फलविशेषः याज्ञवल्क्येनोक्तः॥ कन्यां कन्यावेदिनश्च पशून्वै स
त्सुतानपि॥ द्यूतं कृषिं च वाणिज्यं द्विशफैकशफांस्तथा॥ ब्रह्मवर्चस्विनः पुत्रान्स्वर्णरौ
प्ये सकुप्यके॥ ज्ञातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदः सदा॥ प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा
चतुर्दशीं॥ एताः कृष्णपक्षस्याएव॥ महालये तु फलभूमेति पृथ्वीचंद्रः॥ पौर्णमास्यां हेमा
द्रौ पितामहः अमावास्या व्यतीपातः पौर्णमास्यष्टकासु च॥ विद्वान्श्राद्धमकुर्वाणो नरकं
प्रतिपद्यते॥ एतन्माघ्यादिपरम्॥ व्रीहिपाके च कर्तव्यं यवपाके च पार्थिव॥ पौर्णमासीतु
या माघी श्रावणी चैत्रयोत्तम॥ प्रोष्ठपद्यामतीतायां तथा कृष्णात्रयोदशी॥ एतांस्तु श्राद्ध
कालान्वै नित्यानाह प्रजापतिरिति विष्णुधर्मोक्तेः॥ विष्णुः॥ माघी प्रोष्ठपद्यू
र्ध्वं कृष्णात्रयोदशीति॥ अत्र माघीपौर्णमेति कल्पतरुः॥ श्रावण्यूर्ध्वमपि मघायोगसंभ
वात् त्रयोदशी विशेषणमिति गौडाः॥ नक्षत्रेष्वपि याज्ञवल्क्यः॥ स्वर्गं ह्यपत्यमोजश्च शौ
र्यं क्षेत्रं बलं तथा॥ पुत्रान् श्रैष्ठ्यं च सौभाग्यं समृद्धिं मुख्यतां शुभम्॥ प्रवृत्तचक्रतां वापि
वाणिज्यप्रभृतीनपि॥ अरोगित्वं यशो वीतशोकतां परमां गतिं॥ धनं वेदान्भिषक्सि
द्धिं कुप्यं गामप्यजाविकाम्॥ अश्वानायुश्च विधिवद्यः श्राद्धं संप्रयच्छति॥ कृत्तिकादिभ
रण्यंतं स कामानाप्नुयादिमान्॥ फलान्यत्राण्यपि भारतकौर्मादेर्ज्ञेयानि माधवीये म
रीचिः॥ कृत्तिकादिषु ऋक्षेषु श्राद्धे यत्फलमीरितम्॥ विष्कुंभादिषु योगेषु तदेव फल

मिष्यते॥ बृहस्पतिः॥ आरोग्यं चैव सौभाग्यं शत्रूणां च पराजयं। सर्वान्का
मान् श्रियं विद्यां धनमायुर्यथाक्रमं॥ सूर्यादिदिवसेष्वेतच्छ्राद्धकृल्लभते फलम्॥ अमावि
चक्षणानवति श्राद्धादीनि प्रायुक्तानि॥ मार्कंडेयपुराणे॥ श्राद्धार्हद्रव्यसं
पत्तौ तथा दुःस्वप्नदर्शने॥ जन्मर्क्षे ग्रहपीडासु श्राद्धं कुर्वीत चेच्छया॥ अथ श्राद्धा
धिकारिणः। चंद्रिकायां सुमंतुः॥ मातुः पितुः प्रकुर्वीत संस्थितस्यौरसः सुतः। पि
तृमेधं तु संस्कारं मंत्रवच्चैकमाहतः॥ तत्रैव हेमाद्रौ शंखः॥ पितुः पु
त्रेण कर्तव्या पिंडदानोदकक्रिया॥ पुत्राभावे तु पत्नी स्यात्तदभावे तु सोदरः॥ अत्र यद्यपि
पुत्रपदं क्षेत्रजादिद्वादशविधपुत्रपरं। ते च द्वादश पुत्रा॥ याज्ञवल्क्येनोक्ताः
औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः। क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा॥ गृ
हे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः। कानीनः कन्यकाजातो मातामहसुतः स्मृतः॥ अ
क्षतायां क्षतायां वा जातः पौनर्भवः सुतः। दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत्॥ क्री
तश्च ताभ्यां विक्रीतः कृत्रिमः स्यात्स्वयं कृतः। दत्तात्मा तु स्वयं दत्तो गर्भे विन्नः सहोढजः॥
उत्सृष्टो गृह्यते यस्तु सोपविद्धो भवेत्सुतः॥ पिंडदोंशहरश्चैषां पूर्वाभावे परः इति॥ तथा
पि दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रह इति हेमाद्रावादित्यपुराणोक्तत्वात्तेषां पुत्रत्वनि
षेधाद्दत्तौरसदत्तकापरमेव॥ यद्यपि पिंडदोंशहरश्चैषां पूर्वाभावे परः पर॥ इति याज्ञवल्क्यो
क्तेरौरसाभावे दत्तकप्राप्तिस्तथाप्यौरसाभावे पौत्रस्तदभावे प्रपौत्रस्तदभावे दत्तक इति ज्ञेयम्॥
पुत्रेण लोकाञ्जयति पौत्रेणानंत्यमश्नुते इति॥ अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति
विष्टपमिति गौतमवचनः॥ वृद्धवसिष्ठहारीतशंखलिखितोक्तेः॥
लोकानंत्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः। इति याज्ञवल्क्योक्तेश्च॥ पुत्रः पौत्रश्च तत्पुत्रः पुत्रिकापुत्र
एव च॥ पत्नी भ्राता च तज्जश्च पिता माता स्नुषा तथा॥ भगिनी भागिनेयश्च सपिंडः सोदकस्तथा।
असन्निधाने पूर्वेषामुत्तरे पिंडदाः स्मृता इति स्मृतिसंग्रहे प्रपौत्रानंतरं पुत्रिकापुत्रोक्तेस्तत्समत्वाच्च
दत्तकस्य॥ यच्च बृहस्पतिना॥ पौत्रश्च पुत्रिकापुत्रः स्वर्गप्राप्तिकरावुभौ॥ रिक्थे च पिंडदाने च समौ
तौ परिकीर्तिताविति पौत्रसाम्यमुक्तं॥ याज्ञवल्क्येन चौरसो धर्मपत्नीजस्तत्सम
पुत्रिकासुत इत्यौरससाम्यं। तथापि लोके राजसमो मंत्रीत्यादौ किंचिन्न्यूनेन समशब्दप्रयोगाद्गौ
णमुख्ययोः साम्यायोगाच्च स्तुत्यर्थं न तु समविकल्प इति भ्रमितव्यम्॥ पुत्रः पौत्रः प्रपौत्रो वा भ्रा
ता वा भ्रातृसंततिः। सपिंडसंततिर्वापि क्रियार्हा नृप जायते। तेषामभावे सर्वेषां समानोदकसं
ततिः॥ मातृपक्षसपिंडेन संबद्धा ये जलेन वा॥ कुलद्वयेपि चोच्छिन्ने स्त्रीभिः कार्याः क्रिया नृप॥
तत्संघातगतैर्वापि तद्रिक्थात्कारयेन्नृप इति॥ विष्णुपुराणाच्च॥
प्रपौत्रानंतरं दत्तकादय इति पृथ्वीचंद्रमदनरत्नकालादर्शादयः॥ मदनपारिजातेप्येवं॥
वोपदेवरुद्रधरादयस्तु पुत्रे विद्यमाने गुणाभावे कारयेत्तदभावे निमंत्रकैः॥ पितामहे पितः
पश्चात्पंचत्वमागच्छति॥ पौत्रेणैव दशाहादिकर्म व्याहयोऽशम॥ तेन पौत्रेण कर्तव्यं पु

त्र्यंशश्चेति तामहरतिच्छंदोगपरिशिष्टे च पुत्रशब्दस्य द्वादशविधसुतपरत्वात्॥ सर्वाभावे परः परइ
त्यस्यानन्यपरत्वाच्च॥ दत्तकाद्यभावे पौत्रादीनामधिकार इत्याहुः॥ तन्नौरसक्षेत्रजयोः साम्यायोगाद्दत्तके
सति पौत्रस्यांशहरत्वस्याप्यभावापत्तेः॥ पुत्रपदस्यौरसमात्रपरत्वाच्चिंत्यं॥ अत एव निषेधाद्यपत्नी
तयोः त्रसत्त्वेप्यनुपनीतपुत्रस्यैवाधिकारः॥ औरसश्चानुपनीतोपि कुर्यादित्याह पृथ्वीचंद्रो
दये सुमंतुः॥ श्राद्धं कुर्यादवश्यं तु प्रमीतपितृको द्विजः॥ व्रतस्थो वाव्रतस्थो वा एक एव भ
वेद्यदि॥ वृद्धमनुः॥ कुर्यादनुपनीतोपि श्राद्धमेको हि यः सुतः॥ पितृयज्ञाहुतिं पाणौ जुहुयाद्ब्राह्म
णास्य सः॥ एको मुख्यः॥ औरस इत्यर्थः॥ मनुः॥ न ह्यस्मिन् युज्यते कर्म किंचिदामौंजिबंधनात्
॥ नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते॥ ब्रह्मवेदः॥ सुमंतुरपि॥ नाभिव्या
हारयेद्ब्रह्म यावन्मौंजी निबध्यते॥ मंत्रानप्युपनीतोपि पठेदेवैक औरसः॥ अयं मंत्रपाठस्त्रिव
र्षकृतचूडस्यैव॥ अनुपेतोपि कुर्वीत मंत्रवत्पितृमेधिकं॥ यद्यसौ कृतचूडः स्याद्यदि स्याच्च त्रिव
त्सरः॥ इति सुमंतूक्तेः॥ यत्तु व्याघ्रः॥ कृतचूडस्तु कुर्वीत उदकं पिंडमेव च॥
स्वधाकारं प्रयुंजीत वेदोच्चारं न कारयेदिति॥ यच्च स्मृतिसंग्रहे॥ कृतचूडो
ऽनुपेतश्च पित्रोः श्राद्धं समाचरेत्॥ उदाहरेत्स्वधाकारं न तु वेदाक्षराण्यसाविति॥ तत्प्रथमवर्षे
चूडाविषयमिति माधवमदनरत्नपृथ्वीचंद्राः॥ त्रिवर्षोर्ध्वं मंत्रवत्त्वस्य विकल्प इति चंद्रि
कावोपदेवश्च॥ दत्तकादिपरो निषेध इति वयम्॥ मदनरत्ने स्कांदे
यत्तेषु मंत्रवत्कर्म्म पत्नी कुर्याद्यथा नृप॥ तयोर्ध्वदैहिकं कर्म्म कुर्यात्साधर्म्मसंस्कृतानाश्च श
नौतु कात्यायनः॥ असंस्कृतेन पत्न्या वह्निदानं समंत्रकम्॥ कर्तव्यमितरत्सर्वं कारयेद
न्यमेव हि॥ पुत्रश्च न जन्मतोऽधिकारी किंतु वर्षोत्तरमित्याह कालादर्शः॥ चौलाद्यधाद्विका
दर्वाक् न कुर्यात्पैत्रमेधिकं॥ मदनरत्ने सुमंतुरपि॥ पुत्रश्ची
यन्निमात्रेणासंस्कुर्यादृणमोचनात्॥ पितरं नाद्विकाच्चौलात्प्रेतमेधेन कर्मणा॥ एतच्चौर
सस्यैव॥ दत्तकादीनां तूपनीतानामेवाधिकारः॥ इति कालादर्शः॥ पृथ्वीचंद्रोद
ये स्कांदे॥ पित्रोरनुपनीतोपि विदध्यादौरसः सुतः॥ और्ध्वदैहिकमन्ये तु संस्कृताः श्राद्धका
रिण इति॥ अन्यत्रापि दर्शमहालयादावनुपनीतस्याधिकारोऽस्माभिः सर्वमुक्तः॥ प्रपौत्रा
भावे दत्तकाद्य एकादश पुत्राः तदभावे भर्तुः पत्नी तस्याश्च सः॥ अपुत्रा शयनं भर्तुः पालयंती
व्रते स्थिता॥ पत्न्येव दद्यात्तत्पिंडं कृत्स्नमंशं लभेत च इति वृद्धमनूक्तेः॥ भार्यापिंडं पतिर्दद्याद्भर्त्रे
भार्या तथैव च॥ श्वश्र्वादेश्च स्नुषा चैव तदभावे सपिंडका इति॥ पुत्राभावे तु पत्नी स्यात्पत्न्यभा
वे तु सोदर इति च हेमाद्रौ शंखोक्तेः॥ पृथ्वीचंद्रे तु॥ कानीनगूढ
सहजपुनर्भूतनयाश्च ये॥ पत्न्यभावे धिकुर्युस्ते अप्रशस्तास्तु ना हि ते इति स्मृतिसंग्रहात्पत्न्य
भावे कानीनादयः॥ इत्याह॥ पत्नुरपि सपत्नीपुत्रे सति नाधिकारः॥ पितृप
त्न्यः सर्वा मातर इति सुमंतूक्तेः॥ विदध्यादौरसः पुत्रो जनन्या और्ध्वदैहिकं॥ तदभावे सपत्नीज
क्षेत्रजाद्यास्तथाहृताः॥ तेषामभावे तु पतिस्तदभावे सपिंडका इति मदनरत्ने कात्यायनोक्तेश्च

बह्वीनामेकपत्नीनामेष एव विधिः स्मृतः॥ एका चेत्तु त्रिगोत्रा तासां सर्वासां पिंडदः सुत इति बृहस्पति
वचनाच्च॥ अपरार्केप्येवम्॥ तेन यच्छुद्धिविवेक उक्तम्॥ सत्यपि सपत्नीपुत्रे प
त्युरेवाधिकार इति॥ तन्निरस्तम्॥ यच्च तत्रैव कात्यायनः॥ न भार्यायाः पतिर्दद्या
दपुत्रायाः अपि क्वचित्॥ यच्च विष्णुपुराणम्॥ कुलद्वयेपि चोच्छिन्ने स्त्रीभिः
कार्याः क्रिया नृपेति॥ यच्च मार्कंडेयपुराणे॥ सर्वाभावे स्त्रियः कुर्युः स्वभर्तॄ
णाममंत्रकमिति॥ तदासुरादिविवाहोढाविषयं॥ धर्म्ये विवाहे रूढा या सा पत्नी परिकीर्तिता॥
क्रयक्रीता तु या नारी न सा पत्न्यभिधीयते॥ न सा दैवे न सा पित्र्ये दासीं तां मुनयो विदुरिति माध
वीये शातातपोक्तेः॥ यत्तु शुद्धिरत्नाकरः शूलपाणिश्च॥ अपुत्रस्य च या पत्नी सा पिं
डप्रदा भवेत्॥ तस्य पिंडान्दर्शकं वा एकाहे नैव निक्षिपेदिति जाबालोक्तेः॥ भर्तुर्धनहरा पत्नी
तां विना दुहिता स्मृता॥ अंगादंगात्संभवति पुत्रवद्दुहिता नृणामिति बृहस्पतिना दुहितुर्धन
हारित्वोक्तेश्च॥ पुत्राभावे क्रमात्तदभावे सपत्नीपुत्र इत्याहतुः॥ तन्मूलविरोधात्॥ मातुर्दुहि
तरः शेषमृणात्ताभ्य ऋतेन्वय इति॥ दुहितुर्मातृधनस्वामित्वेन पुत्रस्य तच्छ्राद्धानधिकारप्र
तेश्चापेक्ष्यं॥ वचनं तु भ्रातृपुत्राद्यभावविषयं॥ पत्न्यभावे च विभक्तस्य सोदरः
पूर्वोक्तशंखवचनात्॥ विभक्तस्य दुहिता॥ धनहारित्वात्पूर्वोक्तजाबालिवच
नाच्च॥ तत्राप्यूढानूढासमवाये ऊढैव॥ दुहिता पुत्रवत्कुर्यान्मातापित्रोस्तु संस्कृता॥
आशौचमुदकपिंडमेकोद्दिष्टं सदा तयोरिति॥ भरद्वाजोक्तेः॥ तदभा
वे दौहित्रः धनहारित्वात्॥ मातापित्रोरुपाध्यायाचार्ययोरौर्ध्वदेहिकं॥ कुर्वन्मातामहस्या
पि व्रती न भ्रंश्यते व्रतादिति चंद्रिकायां हेमाद्रौ मनूक्तेः॥ यथाव्रतस्थोपि सुतः पितुः कुर्यात्क्रि
यां नृप॥ उदकाद्यां महाबाहो दौहित्रोपि तथार्हति॥ इत्यपरार्के भविष्योक्तेश्च॥ एतद्धनहारि
णा चावश्यकमित्यप्याह॥ तत्रैव स्कांदः॥ आहुर्मातामहानां तु अवश्यं धनहारिणा॥ दौ
हित्रेणार्थनिष्कृत्यै कर्तव्यं सर्वमुत्तममिति॥ तेन दौहित्रीपुत्रीकृत इति देवयाज्ञिकोक्तिः प
रास्ता॥ अत्र पत्नीदौहित्रसमवाये शाहरत्वात्पत्न्येव कुर्यात्॥ दौहित्रीभ्रातृपुत्रसत्त्वे विभ
क्तस्य दौहित्रः अविभागे भ्रातृपुत्रः भ्रातृतत्पुत्रसत्त्वे कनिष्ठश्चेद्भ्रातैव॥ ज्येष्ठश्चेत्तत्पुत्रः कु
र्यादिति दाक्षिणात्यग्रंथाः॥ हारलतादौ तु॥ भ्रातुर्भ्राता स्वयं चैत
यस्य नास्ति सहोदरः॥ इति शातातपोक्तेः
द्भार्या चेन्न विद्यते॥ तस्य भ्रातृसुतश्चैव इति कौर्म्याच्च॥ ज्येष्ठभ्रातैव कुर्यान्न तत्पुत्रः॥ यत्तु ना
पत्नी कुर्यात्सुताभावे तदभावे सहोदर इति कौर्म्याच्च॥ तत्कनिष्ठभ्रातृसत्त्वविषयं॥ यच्च मनुः॥ सर्वेषा
मनुजस्य तथाग्रज इति॥ तत्तु कनिष्ठभ्रातृसत्त्वविषयं॥ सर्वास्तास्तेन पुत्रेण पुत्रिणो मनुरब्रवीत्॥ इ
मेकजातानामेकश्चेत्पुत्रवान्भवेत्॥ सर्वास्तास्तेन पुत्रेण पुत्रिणो मनुरब्रवीत्॥ अतस्तस्मिन्सत्येकादश
तितत्सोदराभावविषयमित्युक्तम्॥ एतेन पुत्रत्वातिदेशोयम्॥ अतस्तस्मिन्सत्येकादश
पुत्राः प्रतिनिधयो न कार्याः॥ स एव पिंडदो शाहरश्चेति अत्रापि इति वाचस्पतिमनुटीकाक
सेतुरत्नाकरादयः परास्तः द्वादशपुत्राभावे पत्नीदुहितर इति याज्ञवल्क्योक्तेश्च॥ तस्मा

दत्तकपुत्रप्रशंसेयमितिविज्ञानेश्वरः ॥ अविभक्तविषयं वा ॥ मदनरत्ने स्मृतिसंग्रहे ॥ पुत्रः कुर्यात्पितुः श्राद्धं पत्नी च तदसन्निधौ ॥ धनहार्यथ दौहित्रस्ततो भ्राता च तत्सुतः ॥ भ्रातेः सहोदरो भ्राता कुर्याद्दाहादि तत्सुतः ॥ ततस्त्वसोदरो भ्राता तदभावे च तत्सुत इति ॥ भ्रातृपुत्राभावे क्रमेणापि तृमातृस्नुषास्वसृतत्पुत्रादयः धनहारित्वात् ॥ भगिनीतत्सुतयोर्विशेषमाह ॥ मदनरत्ने कात्यायनः ॥ अनुजा वाग्रजा वापि भ्रातुः कुर्वीत सत्क्रियां ॥ ततस्त्वसोदरा तद्वत् क्रमेण तत्तनयस्तयोः ॥ अपरार्के कार्ष्णाजिनिः ॥ पुत्रः शिष्योथवा पौत्रः पिता भ्राता स्नुषा गुरुः ॥ स्त्रीहारी धनहारी च कुर्यात्पिंडोदकक्रियां ॥ मार्कंडेयपुराणे ॥ पुत्रो भ्राता च तत्पुत्रः पत्नी माता तथा पिता ॥ वित्ताभावेपि शिष्याश्च कुर्युरौर्ध्वदैहिकं ॥ तेन धनहारी एतद्भिन्न इति कालादर्शः ॥ अत्र पाठक्रमो न विवक्षितः इति वाक्यैकवाक्यतः शब्दादिभिः श्रौतक्रमोक्तेः ॥ अथ जिह्वायाः अथवक्ष्यसङ्गेिव तु ॥ पृथ्वीचंद्रोदये बृहन्मनुः ॥ स्नुषा स्वस्रीय तत्पुत्रज्ञातिसंबंधिबांधवाः ॥ पुत्राभावे तु कुर्वीरन्सपिंडा नयथाविधि ॥ मार्कंडेयपुराणे ॥ पुत्राः पुत्रस्त्वबंधोश्च स्वस्रापि श्वशुरस्य च ॥ जामाता स्निहवत्कुर्याद्दखिलं पैतृमेधिकम् ॥ चंद्रिकायां बृहच्छातातपः ॥ मातुलो भागिनेयस्य स्वस्रीयो मातुलस्य च ॥ श्वशुरस्य गुरोश्चैव सख्युर्मातामहस्य च ॥ एतेषां चैव भार्याणां स्वसुर्मातुः पितुस्तथा ॥ श्राद्धमेषां तु कर्तव्यमिति वेदविदो विदुः ॥ शुद्धिविवेके पृथ्वीचंद्रोदये च ब्राह्मे ॥ दत्तानीबाप्यदत्तानां कन्यानां कुरुते पिता ॥ चतुर्थेहनि तास्तेषां कुर्वीरन्सुसमाहिताः दत्ता वा दत्ताः ॥ मातामहानां दौहित्राः कुर्वंत्यहनि चापरे ॥ तेपि तेषां प्रकुर्वंति द्वितीयेहनि सर्वदा ॥ जामातुः श्वशुरश्च कुले षांतेपि च संयुताः मित्राणां तदयत्या नाश्री त्रियाणां गुरौ स्तथा ॥ भागिनेयसुता नां च सर्वेषां त्वपरेहनि ॥ राज्ञो सति सपिंडे तु निरयन्त्रे पुरोहितः ॥ मंत्री वा तदशौचं तु पुराची लीकारोति सः अत्र द्वितीयाहादौ श्राद्धविधानमस्थिसंचयपरं ॥ कालादर्शे ॥ दाहादिमत्रवत्पित्रोर्विदध्यादौरसः सुतः तदभावे तु यौत्रः अत्र यौत्रः पुत्रिकसुतः ॥ दौहित्रो धनहारी च भ्राता तत्पुत्र एव च ॥ पिता माता स्नुषा चैव स्वसा तत्पुत्र एव च ॥ सपिंडस्त्वेदकौ मातुः सपिंडश्च सहोदकः ॥ स्त्री च शिष्यस्त्विंगाचार्यौ जामाता च सखापि च ॥ उक्तस्त्वभौ रिक्थेन कारयेदवनीपतिः ॥ गौतमः ॥ पुत्राभावे सपिंडा मातृसपिंडाः शिष्याश्च दद्युस्तदभावे ऋत्विगाचार्यौ ॥ मनुचंद्रिकायां [illegible] श्रीमां श्राद्धं प्रकर्तव्यं सर्वेषां वर्णालिंगिनामिति ॥ नत्वन [illegible] नानकुर्यात्कमेकिंचन ॥ कामाद्वो भामयामोहा [illegible] नब्राह्मणेन कर्तव्यं शूद्रस्यापि ह्यौर्ध्वदैहिकं ॥ [illegible] द्वितियारस्करोति श्च ॥ पारस्व उद्ध [illegible] यस्मादेरधिकार उक्तः ॥ तत्राभावे [illegible] पि

नेऽष्टवर्षेयामित्युक्तम्॥तत्रासन्निधौ पत्न्यादेः सर्वत्राधिकारे प्राप्ते प्रोषितेनावसिते पुत्रः कालादतिचिरादपि॥एकादशाद्याः क्रमशो ज्येष्ठस्य विधिवत्क्रिया॥ज्येष्ठेनैव तु यत्कृतमित्यादेर्देशांतरेऽपवादात्॥पुत्रनाशे एव पत्न्यादेः सपिंडनादावधिकारः असन्निधौ तु तत्सर्वमेव नोर्ध्वं॥अतो नधिकारिणा भ्रात्रादिना कृतमप्यकृतमेवेति पुनरावर्तनीयम्॥मासिकापकर्षोप्यावर्तनीयः॥एकादशाहमासिकानि नावर्तंते॥तद्व्याय साग्निकर्तव्यं सपिंडीकरणं पुनरिति वदाहिताग्निविधानाभावादिति केचित्॥तन्न॥अस्य निर्मूलत्वात्॥अतस्तदपि कनिष्ठकृतमावर्तते॥वृद्धिश्राद्धं तु पिंडपितृयज्ञार्थं तु कृतं तन्नावर्तते॥नासपिंड्याग्निमान्पुत्रः पितृयज्ञं समाचरेत्॥न पार्वणेनाभ्युदयं कुर्वन्नलभते फलमिति वृद्धन्नरनिषेदनादिति॥भ्राता वा भ्रातृपुत्रो वा इत्यादिहारीतादिवचोभ्यः कनिष्ठादेरप्यधिकारात् यथात्र ज्येष्ठकर्तृकत्वबाधस्तथा पुत्रकर्तृत्वस्यापि बाधः सपिंडने तु बहु वक्तव्यं तन्निर्णये वक्ष्यामः॥अधिकारिविशेषेण क्रियाभेदस्योक्तो विष्णुपुराणे॥पूर्वाः क्रिया मध्यमाश्च तथा चैवोत्तराः क्रियाः॥त्रिप्रकाराः क्रिया ह्येतास्तासां भेदान्शृणुष्व मे॥आद्याहाद्द्वादशाहाञ्च मध्येयाः स्युः क्रिया नृप॥ताः पूर्वा मध्यमा मासि मासि त्वेकोद्दिष्टसंज्ञिताः॥प्रेते पितृत्वमापन्ने सपिंडीकरणादनु॥क्रियंते याः स्नगतैश्चैव राज्ञा वा धनहारिणा॥पूर्वा मध्याश्च कर्तव्याः पुत्राद्यैरेव चोत्तराः॥दौहित्रैर्वा नरश्रेष्ठ कार्यास्तत्तनयैस्तथा॥मृताहनि तु कर्तव्याः स्त्रीणामप्युत्तराः क्रियाः दौहित्रतत्सुतयोर्धनहारिणोरिदं॥एवमनन्यधनहर्तुः॥यश्चार्थहरः सपिंडादापौनापस्तंबोक्तेः॥त्रिनस्य प्रेतकार्याणि अकृत्वा धनहारकः॥वर्णानां यद्वधे प्रोक्तं तद्व्रतं प्रयतश्चरेदिति पृथ्वीचंद्रोदये व्याघ्रपादोक्तेः॥ मदनरत्ने स्कांदेपि॥ मलमेतन्मनुष्याणां द्रविणं तत्प्रकीर्तितमित्युक्त्वा॥ऋषिभिस्तस्य निर्दिष्टा निष्कृतिः पावनी परा॥आदेहपतनात्तस्य कुर्यात्पिंडोदकक्रियामित्युक्तम्॥क्रियानिबंधे कात्यायनः॥न च माता न च पिता कुर्यात्पुत्रस्य पैतृकं॥ज्यायानश्च तथा भ्राता भ्रातृणां तु कनीयसां॥ पृथ्वीचंद्रोदये गोभायनः॥ पित्रा श्राद्धं न कर्तव्यं पुत्राणां तु कथंचन॥भ्रात्रा चैव न कर्तव्यं भ्रातृणां च कनीयसाम्॥यदि स्नेहेन कुर्यात्तु सपिंडीकरणं विना॥गयायां तु विशेषेण ज्यायानपि समाचरेत्॥असाभावे पित्रादिरपि कुर्यात्॥उत्सन्नबांधवं प्रेतं पिता भ्राताथवाग्रजः जननी वापि संस्कुर्यान्महदेनोन्यथा भवेदिति मनूक्तेः॥ब्रह्मचारिणस्तु शुद्धिविवेके पृथ्वीचंद्रोदये च ब्राह्मे॥असमाप्तव्रतस्यापि कर्तव्यं ब्रह्मचारिणः॥श्राद्धं तु मातापितृभिर्न तु तेषां करोति सः॥श्राद्धं मासिकाब्दिकादि सर्वं कार्यमित्यर्थः॥नत्विति निषेधोऽन्यसत्त्वे॥यत्तु छंदोगपरिशिष्टे॥नत्यजेत्सूतके कर्म ब्रह्मचारी स्वकं क्वचित्॥न दीक्षणात्परं यज्ञे न कृच्छ्रादितपश्चरन्॥पितर्यपि मृते नैषां दोषो भवति कर्हिचित्॥आशौचं कर्मणोन्ते स्यात्त्र्यहं वा ब्रह्मचारिणां यच्च याज्ञवल्क्यः॥न ब्रह्मचारिणः कुर्युरुदकं पतितास्तथेति॥तदप्यन्यसत्त्वे॥असाभावे तु ब्रह्मचारिणापि कार्यम्॥पूर्वोक्तवृद्धमनुवचनात्॥आचार्यपित्रुपाध्यायान्निर्हृत्यापि व्रत

तीव्रती॥सकृदान्नेचनाश्नीयान्नचैतेस्सहसंवसेदितितेनैवोक्तेः ब्रह्मचारिणःशवकर्मणि
व्रतान्निवृत्तिरन्यत्रमातापित्रोरितिवसिष्ठोक्तेः॥अत्राशौचमेकाहंवक्ष्यामःप्रागुपनयनान्मृ
तस्यपंचवर्षोत्तरंसपिंडीकरणवर्ज्जंषोडशश्राद्धादिसर्वंकार्यमित्युक्तंदेवजानीये॥असंस्कृ
तानांभूमौपिंडंदद्यात्॥संस्कृतानांकुशेष्वितिप्रचेतोवचनाच्च॥एतच्चाग्रेवक्ष्यामः॥अविभ
क्तानांविशेषमाह पृथ्वीचंद्रोदयेमरीचिः॥ बहवःस्युर्यदापुत्राःपितुरेकत्रवा
सिनः॥सर्वेषांतुमतंकृत्वाज्येष्ठेनैवतुयत्कृतं॥द्रव्येणचाविभक्तेनसर्वैरेवकृतंभवेत्॥ज्ये
ष्ठस्यकर्तृत्वेपिसर्वेफलभागिनइत्यर्थः॥तेनयेब्रह्मचर्यपराल्लवर्ज्जनादयःफलिसंस्का
रास्तेसर्वेषांभवंतीतिसिद्धम्॥संसृष्टिनामप्येवं॥तुल्यत्वात्॥विभक्तानांविशेषमाहोश
नाः॥नवश्राद्धंसपिंडत्वंश्राद्धान्यपिचषोडश ॥एकेनैवतुकार्याणिसंविभक्तधनेष्वपि॥ल
घुहारीतः॥सपिंडीकरणांतानियानिश्राद्धानिषोडश॥पृथङ्नैवसुताःकुर्युःपृथग्द्रव्याअ
पिक्वचित्॥ऊर्ध्वंसपिंडीकरणात्सर्वैःकुर्युःपृथक्पृथक्॥ मदनरत्ने॥ वि
भक्तास्तुपृथक्कुर्युःप्रतिसंवत्सरादिकम्॥एकेनैवाविभक्तेषुकृतेसर्वैस्तुतत्कृतम्॥एते
नाह्निकादिष्वविभक्तानामनियमइतिवदन्शूलपाणिःपरास्तः॥दत्तकस्तुजनकस्यपु
त्राद्यभावेदद्यान्नतत्सत्वे॥गोत्ररिक्थेजनपितुर्नभजेद्दत्रिमःसुतःगोत्ररिक्थानुगःपिंडो
व्यपैतिददतःस्वधेतिमनूक्तेः॥इदंजनकस्यपुत्रसत्वविषयम्॥एतच्चप्रवरमंजर्यांका
त्यायनलौगाक्षिभ्यांस्पष्टमुक्तम्॥ अथयेदत्तकक्रीतकृत्रिमपुत्रिकापुत्राःपरपरिग्रहे
णानार्षेयाजातास्तेद्व्यामुष्यायणाभवंति॥यथाशौंगशैशिरीणांयानिचान्यान्येवंसमुत्प
न्नानिकुलानिभवंतीत्यादिनाद्वयोःपित्रोःप्रवरानुक्त्वोक्तं॥अथयद्येषांस्वासुभार्यास्वप
त्यंनस्यात्रिक्थंहरेयुःपिंडंचैभ्यस्त्रिपुरुषंदद्युर्यद्युभयोर्नस्यादुभाभ्यामेवदद्युरेकस्मिं
च्छ्राद्धेपृथगुद्दिश्यैकपिंडेद्वावनुकीर्त्तयेत्॥परिगृहीतारंचोत्पादपितारंचातृतीयात्पुरु
षादिति॥ हेमाद्रौकार्ष्णाजिनिः॥ यावंतःपितृवर्ग्याःस्युस्ताव
द्भिर्दत्तकादयः॥भेतानांयोजनंकुर्युःस्वकीयैःपितृभिःसह॥ह्याभ्यांसहाथतत्पुत्राःपौत्रा
स्त्वेकेनतत्समं॥चतुर्थपुरुषेछेदस्तस्मादेषांत्रिपूरुषीसाधारणेषुकालेषुविशेषोना
स्तिवर्गिणाम्॥ अस्यार्थमाहहेमाद्रिः॥ दत्तकादयःजनक
पालकयोःकुलेप्रेतानांस्ववर्गीयैस्सपिंडनंकुर्युः॥दत्तकानांपुत्रास्तुपितुर्दत्तकस्यपि
तृभ्यांजनकपालकाभ्यांस्वपितामहाभ्यांसपिंडनंकुर्युः॥तेषांपौत्राःस्वपितरंदत्तकेन
पितामहेनतज्जनकेनचसपिंडयेयुः॥चतुर्थोपितत्कुलस्यैव॥तेषांप्रपौत्रस्तुदत्तकस्य
प्रपितामहस्यपालककुलस्यचतुर्थंयोजयेन्नवा॥छंदउक्त्वा।दर्शमहालयादौतुद्वयोः
पित्रोःपितामहयोःप्रपितामहयोर्वाश्राद्धंदेयं॥तत्रद्वयोःपित्राद्योःपृथक्पिंडदानेद्व
योरुद्देशेनैकोवेतिअत्रकेचित्॥आवयोरयमितिपरिभाष्ययोदत्तस्तस्यैवद्वयोःपि
त्रोः॥श्राद्धम्॥यस्त्वपरिभाष्यदत्तस्तस्यगृहीतुरेव॥सपालकस्यैवदद्यादित्याहुःअत्रमूलं

नएवप्रशस्ताः॥वस्तुतस्तुजनकस्यपुत्रपत्न्याद्यभावेदत्तकोद्वयोर्द्वयोरन्यथापालकस्यैव॥ प्रा
गुक्तकात्यायनवचनात्॥ मानवीयमप्येतद्विषयमेव॥गोत्रंतुश्राद्धंपालकस्यैव॥वि
वाहादीन्नृसंयोरित्यादिमत्कृतप्रवरदर्पणेज्ञेयं॥यस्तुमूल्यक्रीतायांपरभार्यायांदास्यांचोत्पन्न
स्तस्यबीजिनएवश्राद्धंमूल्यंविनास्वयमुपनयतायांतुक्षेत्रिणएव॥तदुक्तंपृथ्वीचंद्रोदयेकौ
र्मे॥अनियोगात्सुतोयस्तुशुल्कतोजायतेत्विह॥श्राद्धादौबीजिनेपिंडंक्षेत्रिणस्तुततोन्यथेति
क्षेत्रजादेर्विशेषस्तुकलौतदभावान्नोच्यतइतिदिक्॥जारजानांविशेषमाह॥ अ
परार्केनारदः॥ जायतेत्वतिपुत्रायामेकेनबहुभिस्तथा॥अरिक्थभाजस्तेसर्वेबी
जिनामेवतेसुताः॥दद्युस्तेबीजिनेपिंडंमाताचेच्छुल्कतोहृता॥अशुल्कोपहृतायांतुपिंडदा
वोढुरेवते॥धर्मार्थश्राद्धकरणेफलमाह॥ चंद्रिकायांशातातपः॥
प्रीत्याश्राद्धंतुकर्तव्यंसर्वेषांवर्णलिंगिनां॥एवंकुर्वन्नरःसम्यङ्महतींश्रियमाप्नुयात्॥ग
यायामपितत्रैव॥ब्रह्मवैवर्ते॥आमजोवाथवामोपिगयाशीर्षेयदानदा॥यन्नाम्नापातये
त्पिंडंतन्नयेद्ब्रह्मशाश्वतं॥एतच्चपदाफलभूमार्थिनाद्विस्त्रिर्वाक्रियतेतदाप्रेतशिलाश्राद्धव
र्जंकुर्यात्तस्यप्रेतत्वविमोक्षार्थत्वात्तस्यजातत्वादितिकेचित्॥वस्तुतस्तुसत्यासिश्राद्धवर
त्रापिसर्वंकार्यम्॥सांगेधिकारादितियुक्तंप्रतीमः॥सन्यस्तपित्रादिस्तुपितुःपित्रादिभ्यः
सर्वश्राद्धेषुदद्यादित्युक्तंप्राक्वक्ष्यतेचजीवत्पितृकश्राद्धे॥अत्रस्त्रीशूद्राणांश्राद्धंमंत्रव
र्जंतूष्णींभवति॥स्त्रीणाममंत्रकंश्राद्धंतथाशूद्रस्यतस्यच॥प्राग्द्विजाश्चव्रतादेशास्तेच।
कुर्युस्तथैवतदितिहेमाद्रिधृतमरीचिवचनात्॥अयमेवविधिःप्रोक्तःशूद्राणांमंत्रवर्जि
तःअमंत्रस्यतुशूद्रस्यविप्रोमंत्रेणगृह्यते॥ इतिब्राह्मोक्तेश्च॥ गृह
तेसंवध्यते॥अस्यश्राद्धप्रकरणपाठेपिपरिभाषात्वान्नप्रकरणेनसंकोचोयुक्तः॥तेन
शूद्रस्यस्नानदानादावपिविप्रेणमंत्रपाठःकार्यः॥अमंत्रस्येतिविशेषणात्स्त्रियाअ
पीतिशूलपाणिः॥यत्तुतेनैवोक्तम्॥मंत्रजन्यनियमादृष्टसिद्धिस्तुनमस्कारेण॥अनु
मतोस्यनमस्कारोमंत्रइतिगौतमोक्तेरितितन्न॥इष्टद्वारैवतन्मात्रेनस्वातंत्र्येण॥अम
घानस्यावेष्टत्वेप्यवघातजन्यादृष्टार्थंसोपिक्रियतेतियत्किंचिदेतत्॥तेनपितृणांना
मगोत्रतइत्यादौयत्रद्विजानामपिनाममंत्रउक्तस्तत्रप्रतिप्रसवमात्रार्थंयुक्तंतिलाव
पनादावपि॥अत्रकेचित्॥वैदिकमंत्रोविप्रस्यपौराणस्तुशूद्रस्यपठनीयः॥नहिवेदे
ष्वधिकारःकश्चिच्छूद्रस्यविद्यतेपुराणेष्वधिकारोमेदर्शितोब्राह्मणैरिहेतितत्रैव॥पा
द्मोक्तेरित्याहुः॥गौडाअप्येवम्॥ तन्न॥ नाध्येतव्यमिदंशास्त्रंवृ
षलस्यतुसन्निधावितिकौर्मपुराणनिषेधेनवेदसदृशपाठत्वात्॥अध्येतव्यंब्राह्मणे
नवैश्येनक्षत्रियेणचश्रोतव्यमेवशूद्रेणनाध्येतव्यंकदाचन॥श्रौतेस्मार्तेचवैधर्मेप्रो
क्तमस्मिन्नृपोत्तमः॥तस्माच्छूद्रैर्विनाविप्रंनश्रोतव्यंकदाचनेति॥तत्रैवपुराणाधिकारे
भविष्योक्तेश्च॥एतेननाध्येतव्यमितिनिषेधोमंत्रेतरपुराणपरइति॥श्रीदत्तादिमतम

पार्स्करतेनपौराणमंत्राणामेवविप्रेणपाठोनवैदिकानामितिसिद्धं॥द्विजस्त्रियस्तुसंक
ल्पमात्रंस्वयंकृत्वावैदिकमंत्रमुक्तं॥सर्वंब्राह्मणद्वाराकारयेयुरितिप्रयोगपारिजातः॥अ
तएवस्त्रीशूद्राणामित्यत्रतविवाहस्त्रीपरमिति॥ हेमाद्रिराह॥ अनुपनी
तस्तुवैदिकमंत्रमुक्तं॥सर्वंस्वयमेवकुर्यादित्युक्तंप्राक्॥यत्तुप्राग्द्विजाश्च्युतादेशादितित
दृशांतविषयमचूडविषयंवेतिदिक्॥शूद्रस्यतुसदामश्राद्धमेव॥सदाचैवतुशूद्राणामाम
श्राद्धंविधीयतइतिसुमंतूक्तेः॥ पृथ्वीचंद्रोदयेमात्स्येपि॥ एवं
शूद्रोपिसामान्यंवृद्धिश्राद्धंचसर्वदा॥नमस्कारेणमंत्रेणकुर्यादामान्नवत्सदा॥तत्रैववृ
द्धपराशरः॥आमान्नेनतुशूद्रस्यतृप्तीतुद्विजसत्तमम्॥दत्वाश्राद्धंतुनिर्वाप्यसजातीना
शयेदथ॥सएव॥आमंशूद्रस्यपक्वान्नंपक्वमुच्छिष्टमुच्यते॥ हेमाद्रौभविष्ये।
धर्मेप्सवस्तद्धर्मज्ञायदिशूद्राःप्रकुर्वते॥अयोकारणमंत्रश्चनमस्कारोविधीयते॥आ
वाहनादिकंतेषांयथाशूद्रेणतत्कृणु॥देवानांदेवनाम्नातुपितृणांनामगोत्रतः॥पिंडा
दीन्निर्वपेद्वीरनामतोगोत्रतस्तथा॥शूद्राणांगोत्राभावेपिकाश्यपगोत्रंज्ञेयं॥तस्मादाहुः
सर्वाःप्रजाःकाश्यप्यइतिश्रुतेः॥गोत्रनाशेतुकाश्यपइत्यापस्तंबोक्तेश्चेतिहेमाद्रिः॥एव
मन्यत्रगोत्राज्ञाने॥एवंतर्पणादिषुज्ञेयं॥ तत्रैवभविष्ये॥ शूद्रस्तुग्र
हपाकेनतपिंडान्निर्वपेत्तथा॥सक्तुमूलफलंतस्यपापसंवाभवेन्स्मृतम्॥ गौतमः
अनुमतोस्यनमस्कारमंत्रइति॥देवताभ्यःपितृभ्यश्चेत्ययंनमस्कारमंत्रइतिकेचित्॥वि
ज्ञानेश्वरोप्येवमाह॥ हेमाद्रि॥ स्तुशूद्रोप्यमंत्रवत्कुर्यादनेनविधिनाबुधइति
मात्स्येमंत्रनिषेधान्नाममंत्रेणेत्याह॥ पृथ्वीचंद्रोदयेस्कांदे॥ राज
कार्येनियुक्तास्यबंधनिग्रहवर्त्तिनः॥व्यसनेषुचसर्वेषुश्राद्धंविप्रेणकारयेत्॥यत्तुभा
रतेराजधर्मेषु॥यवनाःकिराताःगांधाराश्चीनाःशबरबर्बराः॥शकास्तुषाराःकंकाश्च
पल्हवाश्चांध्रमद्रकाः॥उत्ताःब्रह्मक्षत्रप्रसूताश्चवैश्याःशूद्राश्चमानवाः॥कथंधर्मांश्च
रिष्यंतिसर्वेविषयवासिनइतिचोक्त्वा॥वेदधर्मक्रियाश्चैवतेषांधर्मोविधीयते॥पि
तृयज्ञास्तथाकूपाःप्रपाश्चशयनानिच॥दानानिचयथाकालंद्विजेभ्योविसृजन्सदा॥
तथा॥दक्षिणासर्वयज्ञानांदातव्याभूतिमिच्छता॥पाकयज्ञमहार्हाश्चकर्तव्याःसर्वद
स्युभिरितितैलिकादीनांश्राद्धविधानंतदपिसजातीयभोजनद्रव्यदानादिपरंनतुश्राद्ध
परमिति॥ इतिकमलाकरभट्टकृतेनिर्णयसिंधौअधिकारिनिर्णयः
॥ अथपितरः॥हेमाद्रौमात्स्यदेवलौ॥ नामगोत्रंपितृणां
तुप्रापकंहव्यकव्ययोः॥अग्निष्वात्तादयस्तेषामाधिपत्येव्यवस्थिताः॥नाममंत्रास्त
दादेशाभवांतरगतामपि॥प्राणिनःप्रीणयंत्येवतदाहारत्वमागतान्॥देवोयदिपिता
जातःशुभकर्मानुयोगतः॥तस्यान्नममृतंभूत्वादेवत्वेप्यनुगच्छति॥गांधर्वेभोग्यरू
पेणपशुत्वेचतृणंभवेत्॥श्राद्धान्नंवायुरूपेणनागत्वेप्युपतिष्ठति॥पानंभवतिपक्ष

त्वेराक्षसत्वेतथामिषं॥दनुजत्वेतथामध्यंप्रेतत्वेरुधिरोदकं॥मनुष्यत्वेन्नपानादिनाना
भोगकरंभवेत्॥अत्रपित्रादिशब्दैर्जनकादीनामेवदेवतात्वमुच्यतेनवस्वादीनां॥असावे
तत्तइतियजमानस्यपित्रेइतिशतपथश्रुतेःयस्यपिताप्रेतस्यात्सपित्रेपिंडंनिधायेतिविष्णा
दिस्मृतेश्च॥यत्तुमनुर्देवलौ॥वसवःपितरोज्ञेयारुद्राज्ञेयाःपितामहाः॥प्रपितामहास्तथा
दित्याःश्रुतिरेषासनातनी॥ यच्चयाज्ञवल्क्यः॥ वसुरुद्रादिति
सुताःपितरःश्राद्धदेवताइति॥तदभेदध्यानार्थं॥ यानितुहेमाद्रौनंदिपुराणे।
विष्णुःपितास्यजगतोदिव्योयज्ञःसएवच।ब्रह्मापितामहोज्ञेयोह्यहंचप्रपितामहइति॥
यच्चभविष्ये॥ अनिरुद्धःस्वयंज्ञेयःप्रद्युम्नश्चपितास्मृतः॥संकर्षणस्तज्जनको
वासुदेवस्तुतत्पिता॥ स्वयंकर्त्ता॥ यत्तुतत्रैवप्रथमोवरुणोज्ञेयःप्राजा
पत्यस्तथापरः॥तृतीयोग्निःस्मृतःपिंडेह्येषपिंडविधिःस्मृतः॥ यच्चआदित्य
पुराणे॥ मासाश्चपितरोज्ञेयाऋतवश्चपितामहाः॥संवत्सरःप्रजानांचवसुम
प्रपितामह॥ यच्चनंदिपुराणे॥ अग्निष्वात्ताब्राह्मणानांपितरःपरि
कीर्त्तिताः॥राज्ञांवर्हिषदोनाम॥विशांकाव्याःप्रकीर्त्तिताः॥सुकालिनस्तुशूद्राणांव्यामाम्ले
च्छांत्यजातिषु॥ इति॥ अत्रावाहनादिषुपित्रादयःसमुच्चयेनविकल्पेनवा
यथाचारंतत्तद्देवतारूपेणवाच्याइतिहेमाद्र्यादयः॥ हेमाद्रौब्राह्मे॥ या
र्वंसांकुरुतेयस्तुकेवलंपितृहेतुकं॥मातामहंनकुरुतेपितृहासप्रजायते धौम्यः॥
पितरोयत्रपूज्यंतेतत्रमातामहाध्रुवं॥अविशेषेणकर्त्तव्यंविशेषान्नरकंव्रजेत्॥अस्या
पवादमाह॥ कात्यायनः॥ कर्षूसमन्वितंमुक्त्वातथाद्यश्राद्धषोड
शं॥प्रत्याब्दिकंचशेषेषुपिंडाःस्युःषडितिस्थितिः॥दर्शादौसपत्नीकानामेवदेवतात्वं॥स्वे
नभर्त्रासमंश्राद्धंमाताभुंक्तेसुधासमं॥पितामहीचस्वेनैवतथैवप्रपितामहीतितत्रैवो
क्तेः॥ चंद्रिकायांचतुर्विंशतिमते॥ सपाहंवर्जयित्वैकंस्त्रीणां
नास्तिपृथक्क्रिया॥केचिदिच्छंतिनारीणांपृथक्श्राद्धंमहर्षयः॥अन्वष्टकासुवृद्धौच
गयायांचक्षयेहनि॥अत्रमातुःपृथक्श्राद्धमन्यत्रपतिनासहेति॥ कात्या
यनोक्तेश्च॥ अस्यनिर्मूलतांवदंतोगौडास्त्वज्ञाएव॥अत्रभागद्वयाध्याहारः
अन्यथासपत्निकायैमात्रेइतिप्रयोगापत्तेः॥अत्रमातृशब्दोजनन्यामेवमुख्यः॥तेनसप
त्नमातृभ्योनदद्यात्॥एवंपितामह्यादिशब्दैःपितृजनन्यादयएवोच्यंतइतितत्सपत्नीभ्यो
नदेयमितिहेमाद्रिः॥कारुण्येनतुमहालयादौदेयमितिसएव॥ अथवि
श्वेदेवाः॥हेमाद्रौशंखवृहस्पती॥ इष्टिश्राद्धेक्रतुर्दक्षौसत्योनांदीमुखेवसू
॥नैमित्तिकेकामकालौकाम्येचधुरिलोचनौ॥पुरूरवआर्द्रवश्चपार्वणेसमुदाहृतौ
।तत्रैव॥उत्पत्तिनामचैतेषांनविदुर्येद्विजातयः॥अयमुच्चारणायस्तैः श्लोकः
श्रद्धासमन्वितैः॥आगच्छंतुमहाभागाविश्वेदेवामहाबलाः॥येपत्रविहिताःश्राद्धेसाव

धानाभवंत्वित्ति॥इष्टिश्राद्धप्रतिरूपविरित्युक्तमितिकल्पतरुः॥आधानादिकर्मांगमित्यन्ये।
नैमित्तिकमेकोद्दिष्टम्॥एकोद्दिष्टंतुयच्छ्राद्धंतन्नैमित्तिकमुच्यतइतिभविष्योक्तेः॥यद्यपिए
कोद्दिष्टंदैवहीनमिति॥तत्रविश्वेदेवनिषेधस्तथापि॥नवश्राद्धेद्वादशमासिकेचकामकालौ
ज्ञेयौ॥नवश्राद्धंदशाहानित्यंमिश्रंतुषड्ऋतून्॥अतःपरंपुराणंवैत्रिविधंश्राद्धमुच्यते॥
अस्मिन्नवेपुराणेवाविश्वेदेवान्नलेभिरे॥आसुरंतद्भवेच्छ्राद्धंयत्फलंमंत्रवर्जितमितिवृद्ध
चपरिशिष्टात्॥एतच्चबह्वृचानामेव॥तेषामेवोक्तेः॥अन्येषांतुनात्रविश्वेदेवाइतिकात्या
यनोक्तेस्तन्निषेधएवेतिपृथ्वीचंद्रोदयः॥अन्येतुनैमित्तिकंसपिंडीकरणमाहुः॥ भ
विष्ये॥यद्यप्येकोद्दिष्टंतच्छ्रेष्ठेनोक्तं॥ तथापितद्यद्दैवंकर्तव्यमयुग्मान्भोजयेद्द्विजा
नितितत्रैवविश्वेदेवनिषेधात्॥यद्यपिसपिंडीकरणेशतएकोद्दिष्टत्वंतथापिसपिंडीकर
णश्राद्धंदैवपूर्वंनियोजयेदितिवचनात्तत्परत्वम्॥हेमाद्रावादित्यपुराणे॥ विश्वेदेवौक्र
तुर्दक्षःसर्वोष्टि युक्तौस्मृतौ॥नित्यंनांदीमुखश्राद्धेवसुसत्यौचपैतृके॥नवान्नलंभनेदेवौ
कालकामौसदैवहि॥अपिकन्यागतेसूर्येकाम्येचधुरिलोचनौ॥पुरूरवार्द्रवौचैवविश्वेदे
वौतुपार्वणे॥कचिद्विश्वेदेवापवादमाह॥ हेमाद्रौशातातपः॥ नित्य
श्राद्धमदैवंस्यादेकोद्दिष्टंतथैवच॥मातृश्राद्धंचयुग्मैःस्याद्दैवंप्राङ्मुखैःपृथक्॥योजयेद्दै
वपूर्वाणिश्राद्धान्यन्यानियत्नतः॥नांदीश्राद्धभिन्नप्रयोगपक्षेमातृश्राद्धमदैवमितिहेमा
द्रिः॥ अथविप्राः॥ तेचोत्तममध्यमाधमभेदेनत्रिविधाः॥तत्रम
दीयाः श्लोकाः॥ त्रिणाचिकेतस्त्रिमधुश्चबह्वृचोप्याथर्वणोयाजुषसामगौच॥
षडंगवित्त्रिसुपर्णीवेत्ताप्यथर्वशीर्षाध्ययनेरतश्च॥शतापुवेदार्थविदोप्रवक्तास्याद्ब्र
ह्मचारीचतथाग्निचित्सीदद्गुत्रिःसत्यवाक्॥स्वरूपैःस्वकर्मातापित्रोःपंचभिःस्याद्वंशः॥य
तीपुत्रीज्येष्ठसामापुराणवेत्तापुत्रीचेतिहासेष्वभिज्ञः॥योगीभिक्षुःसामगोब्रह्मवेत्तापंचा
ग्निश्चश्रोत्रियस्तत्सुतोवा॥शंभुध्यायीश्रीशपादाब्जसेवीपांथश्चैतेनूत्तमाःसंप्रदिष्टाः॥भि
क्षुर्योगीपांथएतेत्वलभ्याभाग्याल्लभ्याश्चेत्तदाभोजनीयाः॥श्राद्धेविप्रेषूपविष्टेषुपश्चात्
प्राप्ताश्चेत्तद्विप्रयत्नेनतुभोज्याः॥अत्रमूलंहेमाद्रौज्ञेयम्॥ तत्रैवनारदः॥ यो
वैयतीननादृत्यभोजयेदितरान्द्विजान्॥विजानन्वसतोग्रामेकव्यंतद्यातिराक्षसान्॥
दीपकलिकायांदक्षः॥ विनामांसेनमधुनाविनादक्षिणयाशिषा॥परिहर्त्री
भवेच्छ्राद्धंयतिषुश्राद्धभोजिषु॥एतच्चज्ञानिविषयं॥त्रिणाचिकेतस्त्रिसुपर्णोयजुर्वेदै
कदेशौतद्व्रतेनतदध्यायिनौयस्यसत्रस्थैवेसोमपाःसत्रिसुपर्णइतिवोपदेवः॥त्रिमधुऋ
ग्वेदैकदेशतदध्यायी॥केचित्त्रिणाचिकेतंचयनंत्रिःकृतवानित्यर्थमाहुस्तद्धेमाद्रिविरुद्धं॥
हेमाद्रौगौतमः॥ युवभ्योदानंप्रथमंपितृवयसइत्येके॥मात्स्येमनुः॥यश्चमाकुरु
तेवाचंयश्चमीमांसतेध्वरं॥सामस्वरविधिज्ञश्चपंक्तिपावनपावनाः॥कौर्मेअसमानप्रव
रकोह्यसगोत्रस्तथैवच॥असंबंधीचविज्ञेयाब्राह्मणाःश्राद्धसिद्धये॥ गारुडे॥

त्विरक्षस्त्वेन तथामिषं॥ दनुजत्वे तथा मद्यं प्रेतत्वे रुधिरोदकं॥ मनुष्यत्वेन्नपानादिनाना
भोगकरं भवेत्॥ अत्र पित्रादिशब्दैर्जनकादीनामेव देवतात्वमुच्यते न वस्वादीनां॥ अस्मावे
तत्त्वइतियजमानस्य पित्रेइति शातपथश्रुतेः यस्य पिता प्रेतः स्यात् स पित्रे पिंडं निधायेति विष्ण्वा
दिस्मृतेश्च॥ यत्तु मनुदेवलौ॥ वसवः पितरो ज्ञेया रुद्रा ज्ञेयाः पितामहाः॥ प्रपितामहास्तथा
दित्याः श्रुतिरेषा सनातनी॥ यच्च याज्ञवल्क्यः॥ वसुरुद्रादिति
सुताः पितरः श्राद्धदेवता इति॥ तदभेदध्यानार्थं॥ यानि तु हेमाद्रौ नंदिपुराणे॥
विष्णुः पितास्य जगतो दिव्यो यज्ञः स एव च॥ ब्रह्मा पितामहो ज्ञेयो ह्यहं च प्रपितामह इति॥
यच्च भविष्ये॥ अनिरुद्धः स्वयं ज्ञेयः प्रद्युम्नश्च पिता स्मृतः॥ संकर्षणस्तु जनको
वासुदेवस्ततः पिता॥ स्वयं कर्ता॥ यत्तु तत्रैव प्रथमो वरुणो ज्ञेयः प्राजा
पत्यस्तथापरः॥ तृतीयोग्निः स्मृतः पिंडे ह्येष पिंडविधिः स्मृतः॥ यच्चादित्य
पुराणे॥ मासाश्च पितरो ज्ञेया ऋतवश्च पितामहाः॥ संवत्सरः प्रजानां च वसुम
प्रपितामह॥ यच्च नंदिपुराणे॥ अग्निष्वात्ता ब्राह्मणानां पितरः परि
कीर्तिताः॥ राज्ञां वर्हिषदो नाम॥ विशां काव्याः प्रकीर्तिताः॥ सुकालिनस्तु शूद्राणां व्यामाश्चे
च्छांत्यजातिषु॥ इति॥ अत्रावाहनादिषु पित्रादयः समुच्चयेन विकल्पेन वा
यथाचारं तत्तद्देवतारूपेण वाच्या इति हेमाद्र्यादयः॥ हेमाद्रौ ब्राह्मे॥ या
र्वंशाकुरुतेयस्तु केवलं पितृहेतुकं॥ मातामहस्तं कुरुते पितृहा स प्रजायते॥ धौम्यः॥
पितरो यत्र पूज्यंते तत्र मातामहा ध्रुवं॥ अविशेषेण कर्तव्यं विशेषान्नरकं व्रजेत्॥ अस्या
पवादमाह॥ कात्यायनः॥ कर्षूसमन्वितं मुक्त्वा तथाद्यं श्राद्धषोड
शं॥ प्रत्याब्दिकं च शेषेषु पिंडाः स्युः षडिति स्थितिः॥ दर्शादौ सपत्नीकानामेव देवतात्वं॥ स्वे
न भर्त्रा समं श्राद्धं माता भुंक्ते सुधासमं॥ पितामही च स्वेनैव तथैव प्रपितामहीति तत्रैवो
क्तेः॥ चंद्रिकायां चतुर्विंशतिमते॥ सपाहवर्ज्जेपित्वेकं स्त्रीणां
नास्ति पृथक्क्रिया॥ केचिदिच्छंति नारीणां पृथक् श्राद्धं महर्षयः॥ अन्वष्टकासु वृद्धौ च
गयायां च क्षयेहनि॥ अत्र मातुः पृथक् श्राद्धमन्यत्र पतिना सहेति॥ कात्या
यनोक्तेश्च॥ अस्य निर्मूलतां वदंतो गौडास्त्वज्ञा एव॥ अत्र भागइत्यध्याहारः
अन्यथा सपत्निकायै मात्रे इति प्रयोगापत्तेः॥ अत्र मातृशब्दो जनन्यामेव मुख्यः॥ तेन सप
त्नमातृभ्यो न दद्यात्॥ एवं पितामह्यादिशब्दैः पितृजनन्यादय एवोच्यंत इति तत्सपत्नीभ्यो
न देयमिति हेमाद्रिः॥ वाहरायेन तु महालयादौ देयमिति स एव॥ अथ वि
श्वेदेवाः॥ हेमाद्रौ शंखबृहस्पती॥ इष्टिश्राद्धे क्रतुर्दक्षौ सत्यो नांदीमुखे वसु
॥ नैमित्तिके कामकालौ काम्ये च धुरिलोचनौ॥ पुरूरवश्चार्द्रवश्च पार्वणे समुदाहृतौ
॥ तत्रैव॥ उत्पत्तिं नाम चैतेषां न विदुर्ये द्विजातयः॥ अयमुच्चारणाय स्तैः श्लोकः
॥ आगच्छंतु महाभागा विश्वेदेवा महाबलाः॥ ये पत्र विहिताः श्राद्धे सावधाना
श्रद्धासमन्वितैः॥

यीचकुंडाश्यथकूटकारी॥बालांश्चयोध्यापयतेसपुत्रादत्वाप्रविद्धस्तथकुंडगोलौ॥अन्ये
दिधिषूःपतिस्तद्वत्तोसोमक्रयीतैलिकेकवासी॥पुरोहितार्थंपक्षिणांपोषकश्चस्वो
तोभेत्तारथसंरोपकश्चमेषाणांवामहिषाणांचपुष्टासीयस्त्रीयुग्महितैर्यश्चजारैःजी
वत्यधीतश्चदत्तानुयोगाद्रव्यमाप्यैवेदमुद्दादयंतःग्रामयाजियश्चकेशविक्रयिस्तेनशिल्पि
पिनवादकारान्॥अर्थकामरतश्चद्रयाजकश्मश्रुहीनजटिमुंडनिर्घृणान्॥यस्यचैववृ
हिणीरजस्वलास्वार्थपाकरतशापदायकान्॥जीवकुस्मतिविलोहितेक्षणान्कुनखा
मनमृषाभिशापिनः॥पुत्रहीनमथकूटसाक्षिणंप्रातिहारिकमयाज्ययाजकं॥स्नात्मदान
परिवेतृयाजकस्तेनहिंसकमुखान्विवर्जयेत्॥ अत्रमूलंहेमाद्रौदृष्ट्वाचं
द्रोदयेचज्ञेयं॥ भारतेदानधर्मेषुश्राद्धवर्ज्याविप्राधिकारे॥कितवोभ्रूणहाय
क्ष्मीपशुपालोनिराकृतिः॥ग्रामप्रेष्योवार्धुषिकोगायकःसर्वविक्रयी॥सामुद्रिकोराज
भृत्यस्तैलिकःकूटकारकः॥पित्राविवदमानश्चयस्यचोपपतिर्गृहे॥अभिशस्तस्तथास्ते
नःशिल्पंयश्चोपजीवति॥पर्वकारश्चसूचीचमित्रध्रुक्पारदारिकः॥अव्रतानामुपाध्या
यःकांडस्पृष्टस्तथैवच॥श्वभिश्चयःपरिक्रामेद्यःशुनादष्टएवच॥परिवित्तिस्तथास्तेनो
दुश्चर्मागुरुतल्पगः॥कुशीलवोदेवलकोनक्षत्रैर्यश्चजीवति॥ईदृशाब्राह्मणाज्ञेयाअप
पांक्तेयाःयुधिष्ठिरतथा॥ऋणकर्ताचयोराजन्यश्चवार्धुषिकोनरः॥कांडस्पृष्टस्वशाखा
स्त्यक्तापरशाखयोपनीतः॥तदध्यायीच॥क्षत्रियवैश्यवृत्तौनारदस्तु॥तस्यामेवतुयो
वर्त्तौब्राह्मणोवसतेरसान्॥कांडस्पृष्टःश्रुतोमार्गात्सोऽपांक्तेयःप्रकीर्त्तितइत्याहहारी
तः॥शूद्रपुत्राःस्वयंदत्तायेचैतेक्रीतकाःसुताः॥तेसर्वेमनुनाप्रोक्ताःकांडस्पृष्टानसंशयः
॥ अन्येपिहेमाद्रौमात्स्ये॥ त्रिशंकून्बर्बरानंध्रान्चीनद्रविडकोकणा
न्॥कर्णाटकांस्तथाभीरान्कलिंगांश्चविवर्जयेत्॥ तत्रैवसौरपुराणे॥
अंगवंगकलिंगांश्चसौराष्ट्रान्गुर्जरांस्तथा॥आभीरान्कौंकणांश्चैवद्राविडान्दाक्षि
णापथान्॥आवंत्यान्मागधांश्चैवब्राह्मणांस्तुविवर्जयेत्॥ चंद्रिकायांयमः॥
काणाःकुब्जाश्चषंढाश्चदत्तघ्नागुरुतल्पगाः।मानकूटास्तुलाकूटाशिल्पिनोग्रामयाज
काः॥राजभृत्यांधबधिरमूकखल्वाटपंगवः॥वणिजोमधुहर्त्तारोगरदावनदाहकाः
समयानांचभेत्तारःप्रदानेयेनिवारकाः॥प्रतिज्ञायनिवृत्ताश्चवृथाप्रव्रजिताश्चये॥य
श्चप्रव्रजिताज्जातःप्रव्रज्यावसितश्चयःअवकीर्णीचवीरघ्नोगुरुघ्नोपितृदूषकः॥श्रा
द्धकाशिकायांकात्यायनः॥ द्विर्नग्नःक्लीबदुश्चर्माकुष्ठीतिकपिलस्तथा
छिन्नोष्ठच्छिन्नलिंगश्चनैवकेतनमर्हति॥द्विर्नग्नःपित्रोर्वंशेत्रिपुरुषंविच्छिन्नवेदा
ग्निः॥ हेमाद्रौमरीचिः॥ अविद्धकर्णःकृष्णश्चलंबकर्णस्तथै
वच॥वर्ज्जनीयाःप्रयत्नेनब्राह्मणाःश्राद्धकर्मणि॥ब्राह्मे॥मूकश्चहतनासश्चच्छि
न्नांगश्चाधिकांगुलिः॥गलरोगीगंडमालीस्फुटितांगश्चसज्वरः॥षंडनूवरमंदाश्च

श्राद्धेषु विनियोज्यास्ते ब्राह्मणा ब्रह्मवित्तमाः ॥ ये योनिगोत्रमंत्रांतेवासिसंबंधवर्जिताः ॥ मनुः ॥ नामित्रं भोजयेच्छ्राद्धे धनैः कार्योस्य संग्रहः ॥ नारिं न मित्रं यं विद्यात्तं श्राद्धे निमंत्रयेत् ॥ द्वयो भ्रात्रोः श्राद्धे भोजनं निषिद्धं ॥ पितृपुत्रौ भ्रातरौ न नियुंज्याद्विशांपते ॥ सगोत्रप्रवरं चैव श्राद्धेषु परिवर्जयेत् ॥ इति श्राद्धदीपकलिकायां जातूकर्ण्योक्तेः ॥ अथ मध्यमाः हेमाद्रौ कौर्म गार्ग्यौ ॥ नैकगोत्रे हविर्दद्याद्यथाकामं तथा हविः ॥ अभावे ह्यन्यगोत्राणामेकगोत्रांस्तु भोजयेत् ॥ अत्र केचित्स्वशाखीयान्मुख्यानाहुः पठंति च ॥ निमंत्रयीत पूर्वेद्युः स्वशाखीयान्द्विजोत्तमान् ॥ स्वशाखीयद्विजाभावे द्विजानन्यान्निमंत्रये दिति ॥ इदं तु निर्मूलत्वाद्धेमाद्रिणा दूषितत्वाच्चोपेक्ष्यं मनुरपि ॥ यत्नेन भोजयेच्छ्राद्धे बह्वृचं वेदपारगं ॥ शाखांतगमथाध्वर्युं छंदोगं वा समाप्तिगम् ॥ एषामन्यतमो यस्य भुंजीत श्राद्धमर्चितः ॥ पितॄणां तस्य तृप्तिः स्याच्छाश्वती साप्तपौरुषी ॥ अत्र मासकश्लोकः ॥ मातामहो मातुलभागिनेयदौहित्रजामातृगुरुस्वशिष्याः ॥ ऋत्विक्चयाज्यस्वसुरौ स्वबंधुश्यालाः गुणाढ्या स्वनुकल्पभूताः ॥ बांधवो मातृष्वसृपितृष्वसृमातुलपुत्रा इति वोपदेवः ॥ अत्र मूलं हेमाद्रौ ज्ञेयं ॥ सगुणास्तु स्त्रीयापत्तिक्रमे दोष एव ॥ स न क्वचिन्सप्त परान् पुरुषानात्मना सह ॥ अतिक्रम्य द्विजानेतान्नरके पातयेत्खग ॥ संबंधिनस्तथा सर्वान्दौहित्रं विट्पतिं तथा ॥ भागिनेयं विशेषेण तथा बंधुं खगाधिपेति ॥ मदनरत्ने भविष्योक्तेः ॥ अत एव याज्ञवल्क्ये ब्राह्मणमातिवैश्यानामेतदेवा निमंत्रणे इति गुणपतिक्रमे दशयणं दंड माह आसन्नमात्रपरमिदं ॥ मूर्खे तु न दोषः ॥ ब्राह्मणातिक्रमो नास्ति मूर्खे चैव विवर्जिते ॥ ज्वलंतमपि मुत्सृज्य न हि भस्मनि हूयत इति कात्यायनोक्तेः ॥ विप्रस्यापि दोषः अविद्वान्प्रतिगृह्णानो भस्मीभवति दारुवदिति मनूक्तेः ॥ अपरार्के अत्रिः ॥ षड्भ्यस्तु पुरुषेभ्यो वा गश्राद्धेयास्तु गोत्रिणः षड्भ्यस्तु परतो भोज्याः श्राद्धेषु गोत्रजा अपि ॥ एतच्च ब्राह्मणालाभे ॥ अपिशब्दात् ॥ असंभवे हेमाद्रौ गौतमः ॥ शिष्यांश्चैके सगोत्रांश्च भोजयेदूर्ध्वं त्रिभ्यो गुणवतः ॥ आपस्तंबः ॥ ब्राह्मणान्भोजयेद्यो निगोत्रमंत्रांतेवास्यसंबंधान्गुणहान्यां तु परेषां समुदितः ॥ सोदर्योपि भोजयितव्य एतेनांतेवासिनो व्याख्याता इति ॥ अत्र विशेषमाहात्रिः ॥ पिता पितामहो भ्राता पुत्रो वाथ सपिंडकः ॥ न परस्परमर्घ्यास्तु न श्राद्धे ऋत्विजस्तथा ॥ ऋत्विक्पुत्रादयो ह्येते सकुल्या ब्राह्मणाः स्मृताः ॥ वैश्वदेवे नियोक्तव्या यद्येते गुणवत्तराः ॥ सगोत्रान नियोक्तव्याः स्त्रियश्चैव विशेषतः ॥ अथ वर्ज्याः ॥ अत्र मासकाः श्लोकाः वर्ज्यान्प्रवक्ष्ये त्वथ रोगिवैरिहीनाधिकांगान्कितवान्कृतघ्नान् ॥ नक्षत्रगाणिचजीवमानान्भिषज्यवृत्त्यापि च राजभृत्यान् ॥ संगीतकापत्यकुसीदवृत्त्या वेदक्रयेणापिकवित्ववृत्त्या ॥ देवार्चनेनापि च जीवमानान्स्वाध्यायदारत्रिसुतोद्यकाणान् ॥ दुर्वालखल्वाटकुनख्यधर्मिनढांश्चयोनर्भवकुंडगोलान् ॥ आगारदाहीगरदःसमुद्रया ।

यीचकुंडाश्यथकूटकारी॥बालांश्चयोध्यापयतेस्वपुत्रान्दत्वाप्रविघ्नस्त्वथकुंडगोलौ॥अये
दिधिषूपतिस्स्ववान्तीसोमक्रयीतैलिकचक्रकारी॥पुष्टाचार्यःपक्षिणांपोषकश्चस्तो
तोभेत्राद्दसंरोपकश्चमेषाणांवामहिषाणांचपुष्टास्त्रीयस्त्रीषुप्रहितैर्यश्चजारैः।जी
वत्यध्येतृश्चदत्तानुयोगाद्द्रव्यप्राप्त्यैवेदमुद्घाटयंतः।यामप्याजिपशुकेशविक्रयिस्तेनशिल्पि
पित्रवादकारान्॥अर्थकामस्तनश्चद्रयाजकाश्पप्रहीनजटिमुंडनिर्घृणान्॥यस्यचैववृ
हिणीरजस्वलास्वार्थपाकरतशापदायकान्॥नीवकुस्पतिविलोहितेक्षणान्कुब्जवा
मनशूषाभिशापिनः॥पुत्रहीनमथकूटसाक्षिणांप्राणिहारिकमयाज्ययाजकं॥स्वान्मदान
परिवेतृयाजकस्तेनहिंसकमुखान्विवर्जयेत्॥ अत्रमूलंहेमाद्रौश्राद्धचं-
द्रोदयेचज्ञेयं॥ भारतेदानधर्मेषुश्राद्धवर्ज्याविप्रधिकारे॥कितवोभ्रूणहाय
क्ष्मीपशुपालोनिराकृतिः॥ग्रामप्रेष्योवार्धुषिकोगायकःसर्वविक्रयी॥सामुद्रिकोराज
भृत्यस्तैलिकःकूटकारकः॥पित्राविवदमानश्चयस्यचोपपतिर्गृहे॥अभिशस्तस्तथास्ते
नःशिल्पंयश्चोपजीवति॥पर्वकारश्चसूचीचमित्रध्रुक्पारदारिकः॥अव्रतानामुपाध्या
यःकांडपृष्ठस्तथैवच॥श्वभिश्चयःपरिक्रामेद्यःशुनादष्टएवच॥परिवित्तिस्तथास्तेनो
दुश्चर्मागुरुतल्पगः॥कुशीलवोदेवलकोनक्षत्रैर्यश्चजीवति॥ईदृशाब्राह्मणाज्ञेयाअ
पांक्तेयाःयुधिष्ठिरतथा॥रक्षाकर्त्ताचयोराज्ञःयश्चवार्धुषिकोनरः॥कांडपृष्ठःस्वशाखां
त्यक्त्वापरशाखयोपनीतः॥तदध्यायीच॥क्षत्रियवैश्यवृत्तीनारदस्तु॥तस्यामेवतुयो
वृत्तौब्राह्मणोवसतेरतात्॥कांडपृष्ठंश्च्युतोमार्गात्सोऽपांक्तेयःप्रकीर्तितइत्याहहारी
तः॥शूद्रपुत्राःस्वयंदत्तायेचैतेक्रीतकाःसुताः॥तेसर्वेमनुनाप्रोक्ताःकांडपृष्ठानसंशयः
॥ अन्येपिहेमाद्रौमात्स्ये॥ त्रिशंकून्बर्बरानंध्रान्चीनद्रविडकोकणा
न्॥कर्णाटकांस्तथाभीरान्कलिंगांश्चविवर्जयेत्॥ तत्रैवसौरपुराणे॥
अंगवंगकलिंगांश्चसौराष्ट्रान्गुर्जरांस्तथा॥आभीरान्कोंकणांश्चैवद्राविडान्दाक्षि
णापथान्॥आवंत्यान्मागधांश्चैवब्राह्मणांस्तुविवर्जयेत्॥ चंद्रिकायांयमः॥
काणाःकुब्जाश्चषंढाश्चस्तनघ्नागुरुतल्पगाः॥मानकूटास्तुलाकूटाशिल्पिनोग्रामयाज-
काः॥राजभृत्यांधबधिरमूकखल्वाटपंगवः॥वणिजोमधुहर्त्तारोगरदावनदाहकाः
समयानांचभेत्तारःप्रदानेयेनिवारकाः॥सहज्योपनिरस्ताश्चस्थाप्रव्रजिताश्चये॥य
श्चप्रव्रजिताज्जातःप्रव्रज्यावसितश्चयः॥अवकीर्णीचवीरघ्नोगुरुघ्नोपितृदूषकः॥श्रा
द्धकाशिकायांकात्यायनः॥ हीनांगःक्लीबदुश्चर्मामुक्तोनिकपिलस्तथा॥
छिन्नोष्ठछिन्नलिंगश्चनैवकेतनमर्हति॥हीनांगःपित्रोर्वंशेत्रिपुरुषंविच्छिन्नवेदा
ग्निः॥ हेमाद्रौमरीचिः॥ अविद्धकर्णःकासश्चलंबकर्णस्तथै
वच॥वर्जनीयाःप्रयत्नेनब्राह्मणाःश्राद्धकर्मणिब्राह्मे॥मूकाश्चप्रतिनाशश्चछि-
न्नांगश्चाधिकांगुलिः॥गलरोगीगंडमालीस्फुटितांगश्चसज्वरः॥षंडतूबरमंदाश्च-

श्राद्धेष्वेतान्विवर्जयेत्॥ लंबकर्णोप्याह॥ तत्रैव गोभिलः॥ हनुमूलादध
कर्णौ लंबौ तु परिकीर्तितौ॥ द्व्यंगुलातीतकर्णस्य भुंजते पितरो न तु॥ षंडश्चात्र चंद्रिकोक्तः
सप्तविधो ग्राह्यः॥ यथा॥ षंडको वातजः षंडः षंढः क्लीबो नपुंसकः॥ कीलकश्चेति सप्तैवं
क्लीबभेदाः प्रकीर्तिताः॥ पराशरमाधवीये तु चतुर्दशविध उक्ताः
तेषां स्वरूपाणि तत्रैव ज्ञेयानि॥ चंद्रिकायां शातातपः॥ अग्निष्टोमादि
भिर्यज्ञैर्ये यजंत्यल्पदक्षिणैः॥ तेषामन्नं न भोक्तव्यमपांक्त्यास्ते प्रकीर्तिताः॥ एतच्च श
क्तौ सत्यां॥ अपरार्के भारते॥ अव्रती कितवः स्तेनः प्राणिविक्रयको
पि वा॥ पश्चाच्चेत्पीतवान्सोमं सोपि केतनमर्हति॥ श्राद्धदीपकलिकायां यमः॥ अप
त्नीकश्च वर्ज्यः स्यात्सपत्नीकोप्यनग्निकः॥ तत्रैवाश्वलायनः॥
प्रतिमाविक्रयं यो वै करोति पतितस्तु सः॥ जीवनार्थं परास्थीनि धृत्वा तीर्थं प्रयाति यः॥
मातापित्रोर्विना सोपि पतितः परिकीर्तितः॥ तत्रैव जातूकर्ण्यः॥
यत्र मातुलजो दाही यत्र वा वृषलीपतिः॥ श्राद्धं न गच्छेत्तद्विप्राः कृतं यच्च निरामिषं॥
पितृपुत्रौ भ्रातरौ द्वौ निरग्निर्गुर्विणीपतिः॥ सगोत्रप्रवरं चैव श्राद्धेषु परिवर्जयेत्॥
बृहन्नारदीये॥ शंखचक्रं मृदा यस्तु कुर्यान्न प्रायसेन वा॥ स शूद्रवद्बहिष्का
र्यः सर्वस्माद्द्विजकर्मणः॥ शंखचक्राद्यंकनं च गीतनृत्यादिकं तथा॥ एकजातेरयं ध
र्मो न जातु स्याद्द्विजन्मनः॥ तेन ये तप्तमुद्रादिविधयस्ते शूद्रविषया इति पृथ्वीचंद्रोद
यः॥ शिवकेशवयोरंकान्शूलचक्रादिकान्द्विजः॥ न धारयेन्मतिमान्
वैदिके वर्त्मनि स्थितः इत्याश्वलायनोक्तेश्च॥ नृत्यं चोदराद्यर्थं निषिद्धमिति श्रीधरस्वा
मी॥ अन्येपि निषिद्धा निबंधे युक्तेयाः॥ इति दिक्॥ अत्र विप्राणां
ग्राह्यत्वोक्त्यैव तद्वर्ज्यानां निषेधसिद्धेः पुनर्वर्ज्यपरिगणनं निषिद्धवर्ज्यनिर्गुणप्राप्त्य
र्थमिति विज्ञानेश्वरः॥ कुशिकाणादेरपवादो हेमाद्रौ वसिष्ठः॥ अपि चेन्मंत्रविद्युक्तः
शारीरैः पंक्तिदूषणैः॥ अदूष्यं तं यमः प्राह पंक्तिपावन एव सः॥ क्वचिद्विप्राणां जाति
मात्रेण ग्राह्यत्वमुक्तं॥ चंद्रिकायामाग्नेये॥ यद्विपुत्रो गयां गच्छे
त्कदाचित्कालपर्ययात्॥ तानेव भोजयेद्विप्रान्ब्रह्मणा ये प्रकल्पिताः॥ ब्रह्मणाकृत
अमानुषा गयाविप्रा ब्रह्मण
संस्थाना विप्रा ब्रह्मसमास्तृताः॥
ये प्रकल्पिताः तेषु तुष्टेषु संतुष्टाः पितृभिः सह देवताः॥ तत्रैव॥ न विचार्यं कुलं शीलं वि
द्यां च तप एव च॥ पूजितैस्तैस्तु संतुष्टा देवाः सपितृगुह्यकाः॥ गयायां निर्गुणा अपि तस्य
अक्षयवटश्राद्धे एवं तन्नियमो नान्यत्रेति
व भोज्याः॥ इति हेमाद्रिः॥ पृथ्वीचंद्रोदयेपि पाद्मे॥ तीर्थे
त्रिस्थलीसेतौ पितामहचरणाः॥
षु ब्राह्मणं नैव परीक्षेत कदाचन॥ अन्नार्थिनमनुप्राप्तं भोज्यं तं मनुरब्रवीत्॥ स्कांदे
पि॥ ब्राह्मणान्न परीक्षेत तीर्थक्षेत्रनिवासिनः॥ मनुः॥ न ब्राह्मणं परीक्षेत दैवे क

र्म्मणि धर्मवित्॥ पित्र्ये कर्म्मणि तु प्राप्ते परीक्षेत प्रयत्नतः॥ असंभवपरमेतदिति मेधातिथिः
हेमाद्रौ व्यासः॥ गायत्रीसारमात्रोपि वरं विप्रः सुयंत्रितः॥ नायंत्रितश्चतुर्वेदी सर्वाशी सर्वविक्रयी॥
काणाः कुटाश्च कुब्जाश्च दरिद्रा व्याधितास्तथा॥ सर्वे श्राद्धे नियोक्तव्या मिश्रिता वेदपारगैः॥ अ
थ विप्रनिमंत्रणम्॥ चंद्रिकायां वाराहे॥ वस्त्रशौचादिकं कृत्वा श्वः कर्त्तास्मीति जानता॥ स्थानो
पलेपनं कृत्वा ततो विप्रान्निमंत्रयेत्॥ दंतकाष्ठं च विसृजेद्ब्रह्मचारी शुचिर्भवेत्॥ तत्रैव
प्रचेताः॥ दक्षिणं चरणं विप्रः सव्यं वै क्षत्रियस्तथा॥ पादौ वा दापयेद्वैश्यो द्वौ शूद्रः प्र
णतिपूर्वकं॥ बृहस्पतिः॥ उपवीती ततो भूत्वा देवार्थं तु द्विजोत्तमान्॥ अ
पसव्येन पित्र्येथ स्वयं शिष्योथवा सुतः॥ प्रचेताः॥ सवर्णं प्रेषयेदाप्तं द्विजानां
तु निमंत्रणे॥ पृथ्वीचंद्रोदये स्कांदे॥ राजकार्ये नियुक्तस्य बंधनिग्रहव
र्त्तिनः॥ व्यसनेषु च सर्वेषु श्राद्धं विप्रेण कारयेत्॥ चंद्रिकायां यमः॥ अभो
ज्यब्राह्मणस्यान्नं वृषलेन निमंत्रितं॥ तथैव वृषलस्यान्नं ब्राह्मणेन निमंत्रितं॥ त
त्रैव पैठीनसिः सप्त पंच द्वौ वा श्रोत्रियान्निमंत्रयेत्॥ आश्वलायनसूत्रे॥
एकैकमेकैकस्य द्वौ द्वौ वा त्रीस्त्रीन्वा वृद्धौ फलभूयस्त्वं॥ द्वावितिवृद्धिश्राद्धे गौतमः॥ नवावा
रान्भोजयेदयुजो वा यथोत्साहं॥ याज्ञवल्क्यः॥ द्वौ दैवे प्रागुत्रयः
पित्र्य उदगेकैकमेव वा॥ मातामहानामप्येवं तंत्रं वा वैश्वदेविकम्॥ दीपक
लिकायां पराशरः॥ सपत्नावर्थपात्राणामेकैकस्य त्रयस्त्रयः॥ पित्रादौ ब्राह्म
णाः प्रोक्ता श्चत्वारो वैश्वदेविके॥ वृद्धयाज्ञवल्क्यः॥ दशैकं पंच
वा विप्रान्पार्वणे विनियोजयेत्॥ अत्र वैश्वदेवे द्वौ चतुरो वोपवेश्य पित्रादीनामेकैकस्य
स्थाने एकं त्रीन्पंच सप्त नव वोपवेशयेदिति निष्कृष्टोर्थः॥ मनुः॥ द्वौ दैवे पितृ
कृत्ये त्रीनेकैकमुभयत्र वा॥ भोजयेत्सुसमृद्धोपि न प्रसज्जेत विस्तरे॥ सत्क्रियां देशकालौ च शौ
चं ब्राह्मणसंपदं॥ पंचैतान्विस्तरो हंति तस्मान्नेहेत विस्तरं॥ पृथ्वीचंद्रोदये शा
तातपः॥ द्वौ दैवेथर्वणौ विप्रौ प्राङ्मुखावुपवेशयेत्॥ पित्र्ये तूदङ्मुखांस्त्रीश्च बह्वृ
चाध्वर्युसामगान्॥ अन्यशक्तौ हेमाद्रौ देवलः॥ एकेनापि हि वि
प्रेण षट्पिंडं श्राद्धमाचरेत्॥ षडर्घ्यान्दापयेत्तत्र षड्भ्यो दद्यात्तथा हविः॥ गोभिलः
यद्येकं भोजयेच्छ्राद्धे छंदोगं तत्र भोजयेत्॥ ऋचो यजूंषि सामानि त्रितयं तत्र विद्यते॥ अत्र
वैश्वदेवेति विशेषमाह॥ तत्रैव वसिष्ठः॥ यद्येकं भोजयेच्छ्राद्धे दै
वं तत्र कथं भवेत्॥ अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य च॥ देवतायतने कृत्वा ततः श्राद्धं
समाचरेत्॥ प्रास्येदग्नौ तदन्नं तु दद्याद्वा ब्रह्मचारिणे॥ एतच्च सपिंडीकरणवर्ज्ज्यं ज्ञेयं॥ नत्वे
वैकं सर्वेषां काममनाद्यैरन्याश्वलायनोक्तेः अस्यार्थ उक्तो नारायणवृत्तौ॥ आद्यं सपिंडी
करणं तद्वर्ज्जेषु सर्वश्राद्धेषु कामं त्रयाणामेकं भोजयेत्॥ सपिंडीकरणे तु नियतं त्रिभिर्भवि
तव्यमिति॥ अनाद्यपार्वणवर्ज्जितेवा॥ अभोजने आमहेमश्राद्धादौ वा॥ अन्नाभावे वेत्या

स्थांतरं तत्रैव ज्ञेयम्॥ कारिकापि॥ दैवेप्येवं यथैकैकं सपिंडीकरणं विनेति॥
अत्रैकविप्रे साग्नेर्विशेषमाह॥ पृथ्वीचंद्रोदये प्रचेताः॥ एकस्मिन्ब्राह्मणे
दैवे साग्नेरग्निर्भवेत्सदा॥ अनग्नेः कुशमुष्टिः स्यात्श्राद्धकर्मणि सर्वतः॥ सर्वथा विप्रालाभे
तत्रैव हेमाद्रौ सत्यव्रतः॥ निधाय दर्भान्विधिवदासनेषु समाहितः॥ प्रैषानुप्रैषसंयुक्तं सर्वं श्रा
द्धं प्रकल्पयेत्॥ अत्रानन्यभावात्तत्रैकाग्निकार्थे यजमानविधौ न दक्षिणेति केचित्॥ त
न्न॥ अदृष्टार्थायाः प्राप्तेः॥ सर्वं तत्रिजटेभ्यं यच्छ्राद्धमदक्षिणमिति याप्रात्॥ विद्धाद्दे
त्रमन्यश्चेद्दक्षिणार्द्धं हरो भवेत्॥ स्वयं चेदुभयं कुर्यादन्यस्मै प्रतिपादयेदिति छंदोगपरिशि
ष्टाच्च॥ एवं यतिश्राद्धेपि॥ कात्यायनः॥ यज्ञवास्तु निमुष्टौ च स्तंबे द
र्भवटौ तथा॥ दर्भसंख्या न विहिता विष्टरास्तरणेषु च॥ मातृश्राद्धे तु विप्रालाभे सुवासिन्यो पि
भोजनीयाः स्माहा शार्के वृद्धवसिष्ठः॥ मातृश्राद्धे तु विप्राणामलाभे पूजयेदपि॥ पतिपुत्रा
न्विता भव्या या विनीताः कुलोद्भवा इति॥ अत्राविनिवृद्धिश्राद्धविषयम्॥ पाद्मेउ
त्तरखंडे॥ सकृदभ्यर्चितलिंगशालग्रामशिलार्चया॥ पीठं संस्थाप्य पित्राद्यं श्राद्धं च कुरुते नरः॥ पि
तरस्तस्य तिष्ठंति कल्पकोटिशतं दिवि॥ चंद्रिकायां मात्स्ये॥ एवं निमंत्र्य निय
माञ्छ्रावयेत्पैतृकान्बुधः॥ अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः॥ भवितव्यं भवद्भिश्च मया
च श्राद्धकारिणा॥ यत्तु मनुः॥ सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः॥ भविते
व्यं भवद्भिर्नः श्वोभूते श्राद्धकर्मणि॥ इति तत्पूर्वेद्युर्निमंत्रणपरं न तदहः॥ तत्रैव देवलः॥ असंभवे
परेद्युर्वा ब्राह्मणांस्तान्निमंत्रयेत्॥ प्रतातीन समानार्षानयुग्मानात्मशक्तितः॥ कात्यायनः॥
अनिंद्यौ मंत्रितौ न ततः केतनं गृह्य शान्तितः॥ अथ श्राद्धकर्तृभोक्तृनियमाः॥
तत्र निमंत्रितविप्रत्यागे परार्के यमः॥ केतनं कारयित्वा तु यो निरस्यति तं द्विजं॥ ब्रह्महत्यामवा
प्नोति शूद्रयोनौ च जायते॥ आमंत्र्य ब्राह्मणं यस्तु यथान्यायं न पूजयेत्॥ अतिकृच्छ्रासु घोरासु ति
र्यग्योनिषु जायते॥ प्रमादत्यागे तु हारीतः॥ प्रमादाद्विस्मृतं ज्ञात्वा प्रसाद्यैनं प्रयत्नतः॥ तर्पयि
त्वा यथान्यायं सर्वं तत्फलमश्नुते॥ प्रमादाभावे तु नारायणः॥ एतस्मिन्नेव समये ब्राह्मणो
नियतः शुचिः॥ यतिश्चांद्रायणं कृत्वा तस्मात्पापात्प्रमुच्यते॥ यमः॥ आमंत्रित
स्तु यो विप्रो भोक्तुमन्यत्र गच्छति॥ नरकाणां शतं गत्वा चांडालेष्वभिजायते॥ तत्रै
व देवलः॥ ऊर्ध्वं निमंत्रितो नैव कुर्यादन्यप्रतिग्रहं॥ भुक्ताहारोऽथवा भुंक्ते सुकृतं तस्य
नश्यति॥ यदि विप्रो विलंबते तदोक्तमादित्यपुराणे॥ आमंत्रितश्चिरं नैव कुर्याद्विप्रः कदा
चन॥ देवतानां पितॄणां च दातुरन्नस्य चैव हि॥ चिरकारी भवेद्द्रोही पच्यते नरकाग्निना॥
पृथ्वीचंद्रोदये यमः॥ निमंत्रितस्तु यो विप्रो ह्यध्वानं याति दुर्मतिः॥ भवंति पितर
स्तस्य तं मासं पांसुभोजनाः॥ निमंत्रितः प्रकुर्याद्यः कलहं चेद्द्विजः क्वचित्॥ भवंति पितरस्त
स्य तं मासं मलभोजनाः॥ आमंत्रितस्तु यः श्राद्धे भारमुद्वहते द्विजः॥ पितरस्तस्य तं मासं भवंति
स्वेदभोजनाः॥ आमंत्रितस्तु यः श्राद्धे हिंसां वै कुरुते द्विजः॥ तं मासं पितरस्तस्य भवंति रुधि

णशनाः॥शंखः॥निमंत्रितस्तुयःश्राद्धेमैथुनंसेवतेद्विजः॥श्राद्धंदत्वाचभुक्त्वाचयुज्यतेमह
तैनसा॥मैथुनंऋतावपिनिषिद्धम्॥ऋतुकालंनियुक्तोवानैवगच्छेत्स्त्रियंक्वचित्॥तत्रग
च्छन्नवाप्नोतिह्यनिष्टानिफलानिचेति॥तत्रैवमाधवीयेबृहन्मनुः॥श्राद्धंकरिष्यन्कृत्वा
वाभुक्त्वावापिनिमंत्रितः॥उपोष्यचयथाभुक्त्वानोपेयाच्चऋतावपि॥भोक्ष्यन्करिष्यन्श्च
श्राद्धंसर्वथास्त्रीप्रयत्नतः॥व्यवायंभोजनंचापिऋतावपिविवर्जयेदितितत्रैवाश्वलायनोक्ते
श्च॥विज्ञानेश्वरेणतुश्राद्धेऋतौगच्छतोपिनदोषइत्युक्तं॥तत्त्वगतिकत्वेज्ञेयं॥बृहस्पतिः
द्विनिशंब्रह्मचारीस्याच्छ्राद्धकृद्ब्राह्मणैःसह॥अन्यथावर्तमानौतुस्यातांनिरयगामिनौ॥
पुनर्भोजनमध्वानंभारमायासमैथुने॥श्राद्धकृच्छ्राद्धभुक्चैवसर्वमेतद्विवर्जयेत्॥स्वाध्यां
यंकलहंचैवदिवास्वापंतथैवच॥यत्तुश्राद्धकाशिकायांपुराणसमुच्चये॥कृत्वातुरुधिरस्रा
वंनविद्वान्श्राद्धमाचरेत्॥एकंद्वेत्रीणिवाविद्वान्दिनानिपरिवर्जयेदिति॥तन्निर्मूलं॥पृ
थ्वीचंद्रोदयेयमः॥पुनर्भोजनमध्वानंभाराध्ययनमैथुनं॥संध्यांप्रतिग्रहंहोमंश्राद्धभोक्ता
ष्टवर्जयेत्॥तत्रसंध्यानिषेधःप्रायश्चित्तात्सर्वज्ञेयः॥यथाहोशनाः॥दशकृत्वःपिबेदापो
गायत्र्याश्राद्धभुग्द्विजः॥ततःसंध्यामुपासीतजपेच्चजुहुयादपि॥गौडास्तु॥सायंसंध्यांपरा
न्नंचच्छेदनंचवनस्पतेः॥अमावास्यांनकुर्वीतरात्रिभोजनमेवच॥द्यूतंचकलहंचैवसायं
संध्यांदिवाशयं॥श्राद्धकर्त्ताचभोक्ताचपुनर्भुक्तिंचवर्जयेदितिकामधेनौवराहपुराणोक्तेः॥क
र्तुरपिसायंसंध्यानिषेधमाहुः॥होमनिषेधस्तुस्वविषयः॥सूतकेचप्रवासेचअशक्तौश्रा
द्धभोजने॥एवमादिनिमित्तेषुहावयेन्नतुहापयेदितिछंदोगपरिशिष्टात्॥ तत्रैवा
दित्यपुराणे॥निमंत्रितस्तुनश्राद्धेकुर्याद्भार्यादिताडनं॥चंद्रिकायांप्रचेताः॥श्राद्धभुक्
प्रातरुत्थायप्रकुर्याद्दंतधावनं॥श्राद्धकर्त्तानकुर्वीतदंतानांधावनंबुधः॥हेमाद्रौजाबा
लिः॥दंतधावनतांबूलेतैलाभ्यंगमभोजने॥रत्यौषधंपरान्नंचश्राद्धकृत्सप्तवर्जयेत्॥
विष्णुरहस्ये॥श्राद्धोपवासदिवसेखादित्वादंतधावनं॥गायत्र्याशतसंपूतमंबुप्राश्यवि
शुध्यति॥पुनर्भोजनमध्वानंयानमायासमैथुनं॥दानंप्रतिग्रहंहोमंश्राद्धभुक्त्वष्टव
र्जयेत्॥सोमोन्यत्रे॥वनस्पतिगतेसोमेयस्तुहिंस्याद्वनस्पतिं॥घोरायांभ्रूणहत्यायांयुज्यते
नात्रसंशयः॥एतद्विहितेध्मादिव्यतिरेकेण॥वनस्पतिगतेसोमेनदुहोयस्तुवाहयेत्॥ना
श्नंतिपितरस्तस्यदशवर्षाणिपंचच॥वनस्पतिगतेसोमेमैथुनंयस्तुकारयेत्॥गावस्त
स्यविनश्यंतिचिरकालमुपस्थिताः॥वनस्पतिगतत्वरूपमाहपृथ्वीचंद्रोदयेव्यासः॥
त्रिमुहूर्त्तंवसेदर्केत्रिमुहूर्त्तंजलेवसेत्॥त्रिमुहूर्त्तंवसेद्गोषुत्रिमुहूर्त्तंवनस्पतौ॥कालिकायां
बृहन्मनुः॥निमंत्र्यविप्रांस्तदहर्वर्जयेन्मैथुनंक्षुरं॥प्रमत्ततांचस्वाध्यायंक्रोधाशौचेतथा
नृतं॥केचिन्निमंत्रणात्पूर्वंशुद्ध्यर्थंपूर्वेद्युःक्षौरंकुर्वंति॥तन्मूलंमृग्यं॥मरीचिः॥षष्ठ्यां
पर्वसुपक्षादौरिक्ताभद्रातिथिष्वपि॥यातेश्राद्धेव्रताहेचक्षौरंवर्ज्यंनिशासुच॥यदाकर्तुरश
क्त्यातत्पुत्रशिष्यादिःश्राद्धंकरोतितदाकर्त्ताप्रतिनिधिनाचप्रागुक्तानियमाःकार्याः॥नश

क्षौतिस्वयंकर्तुंयदाह्यनवकाशतः॥श्राद्धंशिष्येणपुत्रेणतदान्येनापिकारयेत्॥नियमा
नाचरेत्सोपिनियतांश्चवसुंधरे॥यजमानोपितान्सर्वानाचरेत्तुसमाहितः॥इतिहेमाद्रौ
वाराहोक्तेः॥स्त्रियास्तुयामे॥मुक्तकच्छातुयानारीमुक्तकेशीतथैवच॥हसतेवदतेचैव
निराशाःपितरोगताः॥आश्वलायनः॥श्राद्धेऽह्निभोजयेद्यस्तोनवालानपियत्नतः॥प्रा
क्पिंडदानाद्भार्यांनालंकुर्यात्सविग्रहं॥वासोगृहे॥अथश्राद्धवस्तूनि॥तत्रादौकुशाः
पृथ्वीचंद्रोदयेदक्षः॥शमित्सुम्नकुशादीनांद्वितीयःपरिकीर्तितः॥अष्टधाभक्तेदिनेद्वितीयो
भागइत्यर्थः॥तत्रैवयमः॥समूलस्तुभवेद्दर्भःपितॄणांश्राद्धकर्मणि॥मूलेनलोकान्जयति
शक्रस्यसुमहात्मनः॥व्यासः॥तर्पणादीनिकार्याणिपितॄणांयानिकानिचित्॥तानिस्युर्द्वि
गुणैर्दर्भैःसपवित्रैर्विशेषतः॥शालंकायनः॥सपिंडीकरणंयावदृजुदर्भैःपितृक्रियाः॥स
पिंडीकरणादूर्ध्वंद्विगुणैर्विधिवद्भवेत्॥शंखः॥अनंतर्गर्भिणंसाग्रंकौशंद्विदलमेवच॥प्रा
देशमात्रंविज्ञेयंपवित्रंयत्रकुत्रचित्॥हारीतः॥पवित्रंब्राह्मणस्यैवचतुर्भिर्दर्भपिंजुलैः॥
एकैकन्यूनमुद्दिष्टंवर्णेवर्णेयथाक्रमं॥स्मृत्यर्थसारे॥सर्वेषांवाभवेद्द्वाभ्यांपवित्रंग्रथितं
नवम्॥रत्नावल्याम्॥द्वयोस्तुपर्वणोर्मध्येपवित्रंधारयेद्बुधः॥हेमाद्रौस्कांदे॥अनामिका
धृतादर्भाद्येकानामिकयापिवा॥द्वाभ्यामनामिकाभ्यांतुधार्येदर्भपवित्रके॥पवित्राभावे
तत्रैवसुमंतुः॥समूलाग्रौविगर्भौतुकुशौद्वौदक्षिणेकरे॥सव्येचैवतथात्रीन्वैबिभृयात्स
र्वकर्मसु॥बौधायनः॥हस्तयोरुभयोर्द्वौद्वौआसनेपितथैवच॥दर्भग्रहणेमंत्रमाह॥शं
खः॥विरिंचिनासहोत्पन्नपरमेष्ठिनिसर्गज॥नुदसर्वाणिपापानिदर्भस्वस्तिकरोभवस्मृ
त्यर्थसारे॥हुंफट्कारेणमंत्रेणसकृच्छित्त्वासमुद्धरेत्॥भरद्वाजः॥प्रेतक्रियार्थंपित्रर्थ
मभिचारार्थमेवच॥दक्षिणाभिमुखश्छिंद्यात्प्राचीनावीतिकोद्विजः॥कुशाभावेपराशं
सुमंतुः॥कुशाःकाशाःशरागुंद्रायवाःदूर्वाचबल्वजाः॥गोकेशामुंजकुंदाश्चपूर्वाभावेपरः
परः॥काशादौविशेषमाह॥शंखः॥काशहस्तस्तुनाचामेत्कदाचिद्विधिशंकया॥प्रा
यश्चित्तेनशुद्ध्येतदूर्वाहस्तस्तथैवच॥पृथ्वीचंद्रोदयेयमः॥मासिमासुहृताद्दर्भामासिमासे
चचोदिताः॥षट्त्रिंशन्मते॥मासेनस्यादमावास्यादर्भाग्राह्योनवःस्मृतः॥गृह्यपरिशिष्टेये
चपिंडाश्रितादर्भायैःकृतंपितृतर्पणं॥अमेध्याशुचिलिप्तायेतेषांत्यागोविधीयते॥ल
घुहारीतः॥पथिदर्भाश्चितादर्भाःयेदर्भायज्ञभूमिषु॥स्तरणासनपिंडेषुषट्कुशान्परि
वर्जयेत्॥ब्रह्मयज्ञेचयेदर्भायेदर्भाःपितृतर्पणे॥हतामूत्रपुरीषाभ्यांतेषांत्यागोविधीय
ते॥हेमाद्रौ॥अमानिचपवित्राणिकुशदूर्वात्मकानिच॥हेमात्मकपवित्रस्यषोडशींनार्ह
तिवैकलाम्॥अथहविः॥हेमाद्रौप्रचेताःकृष्णमाषास्तिलाश्चैवश्रेष्ठाःस्युर्यवशालयः॥
महायवाव्रीहियवास्तथैवचमधूलिकाः॥कृष्णाःश्वेताश्चलोहाश्चग्राह्याःस्युःश्राद्धकर्मणि
॥महायवोवेणुवीजं॥मधूलिकायावनालाइतिहेमाद्रिः॥कल्पतरुस्तु॥भारते॥वर्द्धमान
तिलंश्राद्धमक्षय्यंमनुरब्रवीत्॥सर्वकामैःसयजतेयस्तिलैर्यजतेपितॄन्॥चंद्रिकायांदे

वत्सः॥ रक्षार्थैर्मृताहे च दर्शे ह्यष्टकासु च॥ पात्रेभ्यस्तेषु कालेषु देयं नैव कुभोजनं॥ सा
यणीये॥ अगोधूमं च यच्छ्राद्धं माषमुद्गविवर्जितं तैलपक्वेन रहितं कृतमप्यकृतं भवेत्॥
हेमाद्रावत्रिः॥ अगोधूमं च यच्छ्राद्धं कृतमप्यकृतं भवेत्॥ तत्रैव ब्राह्मे॥ यवैर्व्रीहितिलैर्मा
षैर्गोधूमैश्चणकैस्तथा॥ संतर्पयेत्पितॄन्मुद्गैः श्यामाकैः सर्षपद्रवैः॥ नीवारैर्हस्तिश्यामा
कैः प्रियंगुभिरथार्चयेत्॥ हेमाद्रौ कार्ष्णाजिनिः॥ यदिच्छेज्जीवितं श्राद्धी न दद्यान्नस्थपल्लत-
सतृणोदूखलं मार्गं ततो याति न संशयः॥ कलिकायामाश्वलायनः॥ कदल्यादिफलैः शा
कैर्मूलैरार्द्रादिकैरपि॥ गोरसैर्मधुना दध्ना श्राद्धे संतर्पयेत्पितॄन्॥ कदल्याम्रफलादीनि
श्राद्धे संपादयेत्सुधीः॥ हेमाद्रौ पृथ्वीचंद्रोदये च मार्कंडेयः॥ गोधूमैरिक्षुभिर्मुद्गैः सतीनैश्च
णकैरपि॥ श्राद्धेषु दत्तैः प्रीयंते मासमेकं पितामहाः॥ विदार्या च भरुंडैश्च तिलैः शृंगाटकै
स्तथा॥ केचुकैश्च तथा कंदैः कर्कंधुबदरैरपि॥ पालेवतैरारुकैश्चाप्यक्षोटैः पनसैस्तथा॥
काकोल्याक्षीरकाकोल्या तथा पिंडालकैः शुभैः॥ लाजाभिश्च सधानाभिस्त्रपुसैर्वारुचिर्भ
टैः॥ सर्षपाराजशाकाभ्यामिंगुदैराजजंबुभिः॥ प्रियालामलकैर्मुख्यैः फल्गुभिश्च तिलंटकैः
वेत्रांकुरैस्तालकंदैश्चक्रिकाक्षीरकावचैः॥ लोचैः समोचैर्लकुचैस्तथा वै बीजपूरकैः॥ मुं
जातकैः पद्मफलैर्भक्ष्यभोज्यैश्च संस्कृतैः॥ रागखांडवचोष्यैश्च त्रिजातकसमन्वितैः॥ दत्तै
स्तु मासं प्रीयंते श्राद्धेषु पितरो नृणाम्॥ एषां कोशहेमाद्र्यादिव्याख्या वैद्यकाद्यनुसारेण म
ध्यदेशभाषया नामान्युच्यंते॥ सतीनैः कलायैः कलायस्तु सतीनक इत्यमरः वटुरी इति प्र
सिद्धः॥ विदार्या तत्कंदेन भरुंडः कल्लजम्मखाराग इति प्रसिद्धं श्राद्धमंजर्यां॥ भूकूष्मांड इत्य
न्ये॥ शृंगाटकं सिंघाडा॥ केचुकः कचनारः॥ कंदः सूरणः॥ अर्शोघ्नः सूरणः कंद इत्यमरः
॥ कर्कंधुर्वन्यसूक्ष्मबदरम्॥ पालेवतं कोशातकी॥ आरुकं आरूई॥ अक्षोटं अखरोट॥ का
कोलीक्षीरकाकोल्यौ गौडेषु प्रसिद्धे॥ पिंडालकं सुथनी॥ महाराष्ट्राणां मोहलकंद इति प्र
सिद्धं॥ त्रपुसादयस्त्रयः कर्कटीभेदाः॥ चिर्भटं खर्बूजम्॥ सर्षपेति दीर्घश्छांदसः॥ प्रिया
लं चिरौंजी॥ फल्गु उदुंबरं॥ तिलंटकं पटोलम्॥ तालकंदः कंदविशेषः॥ चक्रिका तिंति
णी चिंचा वा॥ क्षीरिका खिरणी॥ मोचं कदलीफलं॥ लकुचं बडहरम्॥ मुंजातकं गौडदेशे
॥ पद्मफलं गट्टा॥ रागखांडवः पानादिविशेषः॥ पिप्पलीशुंठियुक्तास्तु मुद्गयूषस्तु खांडवः॥
रागखांडवतां याति शर्करासंयुतं तु तत्॥ इत्युक्तः पानविशेषः॥ त्रिजातं लवंगैलापत्रका
णि॥ मदनरत्ने कौर्मे॥ कालशाकं च नालूकं मूलकं कंदनालिका॥ प्रशस्तानीति शेषः॥
हेमाद्रौ पृथ्वीचंद्रोदये च॥ वायुपुराणे॥ कालशाकं महाशाकं द्रोणशाकं तथार्द्रकं॥ बि
ल्वामलकमृद्वीकापनसाम्रातदाडिमं॥ चव्यं पालेवताक्षोटखर्जूरं च कसेरुकम्॥ कोवि
दारश्च कंदश्च पटोलं बृहतीफलं॥ पिप्पली मरिचं चैव एला शुंठी च सैंधवं॥ शर्करा गुडक
र्पूरं बदरी द्रोणपत्रकं॥ तथा॥ मधुकं रामठं चैव कर्पूरं गुडमेव च॥ श्राद्धकर्मणि शस्तानि
सैंधवं त्रपुसं तथा॥ रामठं हिंगु॥ कसेरुः कोविदारश्च तालकंदस्तथा बिसम्॥ तमालं शत

कंदश्च मध्वालुः शीतकंदकं ॥ कालेयं कालशाकं च सुनिषण्णं सुवर्चला ॥ मांसं शाकं दधि क्षीरं स्वा
दुवेत्राकुरस्तथा कट्फलं कौंकणी द्राक्षा लकुचं मोचमेव च ॥ तिंदुकं वा रकर्कंधु मधुसाह्व
कद्यं ॥ वैकंकतं नालिकेलं शृंगाटकपरूषकं ॥ पिप्पली मरिचं चैव पटोलं बृहतीफलं एव
मादीनि चान्यानि स्वादूनि मधुराणि च ॥ नागरं चात्र कंदेयं दीर्घमूलकमेव च ॥ तथा ॥
शर्कराक्षीरसंयुक्ताः पृथुका नित्यमक्षयाः ॥ द्रोणशाकं कुवार इति प्रसिद्धम् ॥ मृद्वीका द्राक्षा ॥ १
आम्रातकं आम्बाडा वृक्षस्तत्फलम् ॥ पालेवतं जंबीरम् ॥ पालिआलमिति गौडप्रसिद्धं वा
खर्जूरं खजूर इति प्रसिद्धं ॥ कसेरु जलजकंदः ॥ कोविदारः कंचनारः ॥ नालकंदः नालमूली
विसम्भसीरउम् ॥ शतकंदः शतावरी ॥ शीतकंदः सेरुकीति प्रसिद्धम् ॥ कालेयं करालसंज्ञः
शाकः ॥ दारुहरिद्रा चेति पृथ्वीचंद्रः ॥ सुनिषण्णं कर्कटीसदृशं सुलठीयार इति गौडप्रसिद्धम् ॥
सुवर्चलं शाकविशेषः ॥ सुनिसुमीति गौडख्यातम् ॥ कट्फलं श्रीपर्णीवृक्षफलम् ॥ कौंक
णी अम्लरसा द्राक्षा ॥ तिंदुकं डिएडसमिति केदेवः ॥ तिंदुफलं वा ॥ शीवकं फलविशेषः वारं
सुद्रनालं ॥ मधुसाह्वयं ॥ मधूकपुष्पफलं वा ॥ वैकंकतं चोंचीति ॥ गौडेऽख्यातम् ॥ परुषं
कं फुरुषमिति प्रसिद्धं ॥ नागरं सुंठी ॥ पृथ्वीचंद्रोदये त्वाह ॥ आम्रमाम्रातकं बिल्वं दाडिमं बी
जपूरकं ॥ प्राचीनामलकं क्षीरं नालिकेरं परूषकं नारंगकं च खर्जूरं द्राक्षा नीलकपित्थकं ॥
एतानि फलजातानि श्राद्धे देयानि यत्नतः ॥ मात्स्ये ॥ अन्नं तु सदधि क्षीरं गोघृतं शर्करान्वितं ॥
मासं प्रीणाति सर्वान्वै पितॄनित्याह केशवः ॥ याज्ञवल्क्यः ॥ हविष्यान्नेन वै मासं पायसेन तु व १
त्सरं ॥ मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः ॥ ऐणरौरववाराहशाशैर्मांसैर्यथाक
मम् ॥ मासवृद्ध्याभितृप्यंति दत्तैरिह पितामहाः ॥ खड्गामिषं महाशल्कं मधु मुन्यन्नमेव च ॥
लोहामिषं कालशाकं मांसं वाध्रीणसस्य च ॥ निगमः ॥ त्रिःपिबं त्विंद्रियक्षीणं श्वेतं वृद्धमजा
पतिं ॥ वाध्रीणसं तु तं प्राहुर्याज्ञिकाः श्राद्धकर्मणि ॥ वाध्रीणसो जरच्छाग इति मेधातिथिः
कामायनः ॥ छागोस्रमेषानालभ्य शेषाणि क्रीत्वा लब्ध्वा वा स्वयंमृतानाहृत्य पचेत् ॥
कौर्मे ॥ क्रीत्वा लब्ध्वा स्वयं वाथ मृतानाहृत्य वा द्विजः ॥ दद्याच्छ्राद्धे प्रयत्नेन तदस्याक्षयमुच्य
ते ॥ श्राद्धे दत्तस्य मांसस्याभक्षणे दोषमाह मनुः ॥ नियुक्तस्तु यथान्यायं यो मांसं नात्ति मान
वः ॥ स प्रेत्य पशुतां याति संभवानेकविंशतिं ॥ अत्र बहुषु वचनेषु श्राद्धे मांसमधुनोः प्राश १
स्त्योक्तेः ॥ विना मांसेन यच्छ्राद्धं कृतमप्यकृतं भवेदिति हेमाद्रौ देवलोक्तेः ॥ यच्छ्राद्धं मधुना
हीनं तद्रसैः सकलैरपि ॥ मिष्टान्नैरपि संयुक्तं पितॄणां नैव तृप्तये ॥ अणुमात्रमपि श्राद्धे यदि
न स्यात्तु माक्षिकं ॥ नाम्नापि कीर्तनीयं स्यात् पितॄणां प्रीणयेत्तत इति हेमाद्रौ प्राचेतसोक्तेश्च मां
समधुनोः श्राद्धनियतत्वं गम्यते गौडनिबंधे मत्स्यसुमंतूक्तेः ॥ मध्वभावे गुडो देयः क्षीरं स्व
च तथा दधि न लभ्यते घृतं तत्र कुर्यात् घृतवतीजपं ॥ श्राद्धकलिकायां नागरखंडे ॥ कथं
चिद्यदि विप्रेभ्यो न दत्तं भोजने मधु ॥ पिंडास्तु नैव दातव्याः कदाचिन्मधुना विना ॥ वृहत्परा
शरस्तु मांसं निषेधति ॥ यस्तु प्राणिवधं कृत्वा मांसेन तर्पयेत्पितॄन् ॥ सविद्वांश्चंदनं दग्ध्वा

कुर्यादंगारविक्रयं॥सिप्राकृयेयथा किंचहालश्चादातुमिच्छति॥एतदज्ञाननतःसोऽपिमां
सेनश्राद्धकृत्तथा॥सएव॥सर्वथान्नेपदानस्यान्नदैवामिषमाश्रयेत्॥ब्राह्मणश्चस्वयंना
यान्नचमांसादिहतंयदि॥भागवतेपि॥नदद्यादामिषंश्राद्धेनचाद्याद्धर्मतत्त्ववित्॥मुन्यन्नैः
स्यात्पराप्रीतिर्यथानपशुहिंसया॥नयेतिशेषः॥अत्रकेचित्॥मुन्यन्नंब्राह्मणस्योक्तंमांसं
क्षत्रियवैश्ययोः॥मधुप्रधानंशूद्रस्यसर्वेषांचाविरोधियदितिहेमाद्रौपुलस्त्योक्तव्यव
स्थामाहुः॥पृथ्वीचंद्रोदयस्तु॥अक्षतागोपशुश्चैवश्राद्धेमांसंतथामधु॥देवराच्चसुतोत्प
त्तिःकलौपंचविवर्जयेत्॥इतिनिगमोक्तेः॥वरातिथिपितृभ्यश्चपशूपकरणक्रियेतिक
लिवर्ज्येषुहेमाद्रावादित्यपुराणात्॥मांसदानंतथाश्राद्धेवानप्रस्थाश्रमस्तथेत्युक्तोइमा
न्धर्मान्कलियुगेवर्ज्यानाहुर्मनीषिणइतिबृहन्नारदीयेभिधानाच्चमांसविधिःकलिव्य
तिरिक्तविषयः॥कलौमांसनिषेधानांचदेशाचाराद्व्यवस्था॥तथाचबृहन्नारदीयेश्राद्धप्रसं
गेयथाचारंप्रदेयंतुमधुमांसादिकंतथा॥देशाचाराःपरिग्राह्यास्तत्तद्देशीयजैनरैः॥अन्य
थापतितोज्ञेयःसर्वधर्मबहिष्कृतइति॥यस्मिन्देशेपुरेग्रामेत्रैविद्येनगरेपिवा॥योय
त्रविहितोधर्मस्तंधर्मंनविचारयेदितिभृगूक्तेश्चेत्याहुस्तन्न॥होलोकाधिकरणन्यायेनदे
शविशेषव्यवस्थापकपदकल्पनायोगात्॥निरूपितंचैतत्पित्रा महचरणैर्मांसमीमांसाया
मितिदिक्॥मनुः॥संवत्सरंतुगव्येनपयसापायसेनच॥वाध्रीणसस्यमांसेनतृप्तिर्द्वादश
वार्षिकी॥त्रिपिबंत्विंद्रियक्षीणंश्वेतंवृद्धमजापतिम्॥वाध्रीणसंतुतंप्राहुर्याज्ञिकाःश्राद्ध
कर्मणि॥क्षीराद्रौविशेषमाहहेमाद्रौमनुः॥पयोदधिघृतंचैवगवांश्राद्धेषुपावनं॥महि
षीणांघृतंप्राहुःश्रेष्ठंनतुपयःक्वचित्॥याज्ञवल्क्यः॥संधिन्यनिर्दशाऽवत्सागोपयःपरिवर्ज
येत्॥औष्ट्रमेकशफंस्त्रैणमारण्यकमथाविकं॥हेमाद्रौहारीतः॥नवसूतायाःसप्तरात्रा
दित्येकेदशरात्रादित्यपरे॥मासेनापेयुषंभवतीतिधर्मविदः॥एतद्गोभावपरं॥देवलः॥
अजाविमहिषीणांतुपयःश्राद्धेषुवर्जयेत्॥विकारान्पयसश्चैवमाहिषंतुघृतंहितं॥तत्रै
वब्राह्मे॥माहिषंचामरंमार्गमाविकैकशफोद्भवं॥स्त्रैणमौष्ट्रमयाविनंदधिक्षीरंघृतंत्य
जेत्॥सगुडंमरिचाक्तंतुतथापर्युषितंदधि॥दीर्णंतक्रमपेतंचनस्रावस्वादंचफेनवत्॥म
हिषायवादोपरार्किब्राह्मे॥दियंतक्रंतुहिनंचैवदद्यान्नदमृतंपयः॥सद्यस्कंनवनीतादद्युद्धृत
म्॥आरण्यमहिषीक्षीरंशर्करास्तुतिसंयुतं॥मध्वक्तंतुहिनंचैवदद्यान्नदमृतंपयः॥स्मृ
तिःक्षीरसारः॥श्राद्धकौमुद्यांचैवम्॥यद्यपियाज्ञवल्क्येन॥अन्नंपर्युषितंभोज्यंस्नेहा
क्तंचिरसंस्थितम्॥अस्नेहाअपिगोधूमयवगोरसविक्रियाइति॥पर्युषितंदध्यादिभोज्य
मुक्तंतथापिगुडमरिचाक्तस्यपर्युषितदोषोवोच्यतेइतिहेमाद्रिः॥तत्रैवब्राह्मे॥कालशा
कंतंडुलीयंवास्तुकंमूलकंतथा॥शाकमारण्यकंचैवदद्याच्छ्राद्धेषुनित्यशः॥तंडुलीयं
स्वल्पपत्रमितिहेमाद्रिः॥महाराष्ट्राणांमाटइतिप्रसिद्धं॥आरण्यकंफांजीचूचादि॥तत्रै
व॥दाडिमंमागधीचैवनागरार्द्रकतिंतिणी॥आम्रातकंजीरकंचकुंवरंचैवयोजयेत्॥मा

कंदश्च मध्वालुः शीतकंदकं॥ कालेयं कालशाकं च सुनिषण्णं सुवर्चलं॥ मांसं शाकं दधिक्षीरं च
तुवेत्रांकुरस्तथा कट्फलं कोकणी द्राक्षा लकुचं मोचमेव च॥ तिंदुकं चारकर्कंधु मधुसा
ह्वयं॥ वैकंकतं नालिकेलं शृंगाटकपरूषकं॥ पिप्पलीमरिचं चैव पटोलं बृहतीफलं॥ ए
मादीनि चान्यानि  स्वादूनि मधुराणि च॥ नागरं चार्द्रकं देयं दीर्घमूलकमेव च॥ तथा॥
शर्कराक्षीरसंयुक्ताः पृथुका नित्यमक्षयाः॥ द्रोणशाकं कुवार इति प्रसिद्धम्॥ मृद्वीका द्राक्षा॥
आम्रातकं आम्बाडा वृक्षस्तत्फलम्॥ पालिवतं जंबीरम्॥ पालिमालमिति गौडप्रसिद्धं वा
खर्जूरं खर्जूर इति प्रसिद्धं॥ कसेरुः जलजः कंदः॥ कोविदारः कचनारः॥ नालकंदः नालमूली
विसम्भसीण्डम्॥ शतकंदः शतावरी॥ शीतकंदः सेरुकीति प्रसिद्धम्॥ कालेयं करालसंज्ञः
शाकः॥ दारुहरिद्रा चेति पृथ्वीचंद्रः॥ सुनिषण्णा कर्कटीसदृशं मुलठीया इति गौडप्रसिद्धम्॥
सुवर्चलं शाकविशेषः॥ सुनिसुमीति गौडख्यातम्॥ कट्फलं श्रीपर्णीवृक्षफलम्॥ कोक
णी अम्लरसा द्राक्षा॥ तिंदुकं डिण्डिसमिति केचित्॥ तिंदुफलं वा॥ श्रीवकफलविशेषः चारं
सुद्रतालं॥ मधुसाह्वयं॥ मधूकपुष्पफलं वा॥ वैकंकतं चौंचीति॥ गौडाख्यातम्॥ परूषं
कपुरुषमिति प्रसिद्धं॥ नागरं सुंठी॥ पृथ्वीचंद्रोदये त्वाहे॥ आम्रमाम्रातकं बिल्वं दाडिमं बी
जपूरकं॥ प्राचीनामलकं क्षीरं नालिकेरं परूषकं॥ नारंगकं च खर्जूरं द्राक्षानीलकपित्थकं॥
एतानि फलजातानि श्राद्धे देयानि यत्नतः॥ मात्स्ये॥ अन्नं तु सदधिक्षीरं गोघृतं शर्करान्वितं॥
मासं प्रीणाति सर्वान्वै पितॄनित्याह केशवः॥ याज्ञवल्क्यः॥ हविष्यान्नेन वै मासं पायसेन तु व
त्सरं॥ मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः॥ ऐणरौरववाराहशाशैर्मांसैर्यथाक
मम्॥ मासवृद्ध्याभितृप्यंति दत्तैरिह पितामहाः॥ खड्गामिषं महाशल्कं मधु मुन्यन्नमेव च॥
लोहामिषं कालशाकं मांसं वाध्रीणसस्य च॥ निगमः॥ त्रिःपिबं त्विंद्रियक्षीणं श्वेतं वृद्धमजा
पतिं॥ वाध्रीणसं तु तं प्राहुर्याज्ञिकाः श्राद्धकर्मणि॥ वाध्रीणसो जरच्छाग इति मेधातिथिः॥
कात्यायनः॥ छागोस्रमेषानालभ्य शेषाणि क्रीत्वा लब्ध्वा वा स्वयं मृतानाहृत्य पचेत्॥
कौर्मे॥ क्रीत्वा लब्ध्वा स्वयं वाथ मृतानाहृत्य वा द्विजः॥ दद्याच्छ्राद्धे प्रयत्नेन तदस्याक्षयमश्नु
ते॥ श्राद्धे दत्तस्य मांसस्याभक्षणे दोषमाह मनुः॥ नियुक्तस्तु यथान्यायं यो मांसं नात्ति मान
वः॥ स प्रेत्य पशुतां याति संभवानेकविंशतिं॥ अत्र बहुवचनेषु श्राद्धे मांसमधुनोः प्राश
स्त्योक्तेः॥ विना मांसेन यच्छ्राद्धं कृतमप्यकृतं भवेदिति हेमाद्रौ देवलोक्तेः॥ यच्छ्राद्धं मधुना
हीनं तदन्नैः सकलैरपि॥ मिष्टान्नैरपि संयुक्तं पितॄणां नैव तृप्तये अणुमात्रमपि श्राद्धे यदि
न स्याच्च माक्षिकं॥ नामापि कीर्तनीयं स्यात्पितॄणां प्रीतये ततः इति हेमाद्रौ ब्राह्मोक्तेश्च मां
समधुनोः श्राद्धे नियतत्वं गम्यते गौडनिबंधे मत्स्यसूक्तोक्तेः॥ मध्वभावे गुडो देयः क्षीरस्य
च तथा दधि॥ न लभ्यते घृतं यत्र कुर्यात्तद्घृतवर्जितं॥ श्राद्धकलिकायां नागरखंडे॥ कथं
चिद्यदि विप्रेभ्यो नरस्त्वभोजने मधु॥ पिंडांस्तु नैव दातव्याः कदाचिन्मधुना विना॥ इह त्वपरा
र्कस्तु मांसं निषेधति॥ यस्तु प्राणिवधं कृत्वा मांसेन तर्पयते पितॄन्॥ सविद्वांश्चंदनं दग्ध्वा

वतद्दत्तमभक्ष्यमिति ब्रुवंति। एतन्निषिद्धेतरविषयं॥ चंद्रिकायां॥ शङ्खस्मृ९
निसर्गाणि वर्ज्जयेच्छ्राद्धकर्म्मणि। नवर्ज्जयेत्तिलांश्चैव मुद्गमाषांस्तथैव च॥ मात्स्ये॥ म
सूरशणनिष्पावराजमाषकुसुंभिकाः॥ पद्मबिल्वार्कधत्तूरपारिभद्राटरूषकाः॥ नदेया
पितृकार्येषु पयश्चाजाविकं तथा॥ कोद्रवोद्दारवरकरकपित्थमधुकातसी॥ एतान्यपि
नदेयानि पितृभ्यः श्राद्धमिच्छता॥ निष्पावा वल्लाः॥ यत्तु मार्कंडेयः॥ प्रियंगवः कोविदा
रा निष्पावाश्चात्र शोभनाः॥ इति॥ तत्र निष्पावाः श्वेतशिंबीति दानसागरे श्राद्धप्रकाशे चो
क्तं। बिल्वं च रक्तं निषिद्धं॥ जंबीरं रक्तबिल्वं च शालस्यापि फलं त्यजेदिति॥ ब्राह्मोक्तेः। पा
रिभद्रे निंबतरुरित्यमरः। रक्तमंदार इति हेमाद्रिः॥ आटरूषो वासा तत्पुष्पं॥ उद्दारः कांचना
रः॥ मधुकं ज्येष्ठीमध्विति चंद्रिका। चणकावनमुद्गाः॥ हेमाद्रौ ब्रह्मांडे॥ आसनारूढमन्ना
द्यं पादोपहतमेव च॥ अमेध्यैर्जंगमैः स्पृष्टं शुष्कं पर्युषितं च यत्॥ द्विःस्विन्नं परिदग्धं च त
थैवाग्रावलेहितं॥ शर्कराकीटपाषाणैः केशैर्यच्चाप्युपद्रुतम्॥ पिण्याकं मथितं चैव त
थातिलवणं च यत्॥ सिद्धाः कृताश्च ये भक्ष्याः प्रत्यक्षलवणीकृताः॥ वाससा चावधूता
नि वर्ज्ज्यानि श्राद्धकर्म्मणि॥ द्विःस्विन्नं यत्सकृत्पाकेन भक्ष्यमपि हिंगुजीरकादिसंस्कारा
र्थं पुनः पच्यते न तद्दुष्टम्॥ यत्तु तिक्तशाकान्नविकारादि द्विःपाकेनैव भक्षणार्हं न तन्निषिद्धं
अग्रावलेहितमास्वादितम्। सर्वं पर्युषितस्य सर्वदा निषेधेपि पुनर्वचनं॥ अपूपाश्च करंभा
श्च धानावटकसक्तवः॥ शाकं मांसमपूपं च सूपं कृशरमेव च॥ यवागूः पायसं चैव यच्चान्य
त्स्नेहसंयुतं॥ सर्वं पर्युषितं भोज्यं शुक्तं चेत्परिवर्ज्जयेदिति माधवीयेऽपमोक्तावटकादेः पर्य
र्युषितस्य निषेधार्थमिति चंद्रिकादयः॥ वर्ज्ज्येषु विश्वामित्रः॥ कपित्थं कुलकं चैव नालिकेरं
च ये निकम्॥ जंबूफलादि पक्वं च पिण्याकं तंदुलीयकम्॥ हेमाद्रौ षट्त्रिंशन्मते॥ वर्ज्ज्या म
र्कटकाः श्राद्धे राजमाषास्तथैव च॥ मर्कटा लांका इति प्रसिद्धः॥ पैठीनसिः॥ कृतांकनालि
कापोतकुसुंभाश्मंतकानि च॥ शाकानामभक्ष्या इति॥ पोतं पोई इति प्रसिद्धम्॥ कुसुंभं
करडई इति महाराष्ट्रप्रसिद्धं॥ मार्कंडेयः॥ वर्ज्ज्याश्चाभिषवन्नित्यं शतपुष्पागवेधुकाः॥ जं
बीरकं फलं वर्ज्ज्यं कोविदाराश्च नित्यशः॥ अभिषवः शुक्तमिति चंद्रिका॥ संधानकमिति पृ९
थ्वीचंद्रः॥ शतपुष्पा सोवा इति प्रसिद्धं॥ कात्यायनः॥ मारिषं नालिका चैव कृष्णकाया च कलं
बिका॥ असुरान्नमिदं सर्वं पितॄणां नोपतिष्ठते॥ मारिषं मध्यदेशे मरुसा इति महाराष्ट्रे रा
जगिरा इति प्रसिद्धम्॥ कालंबिका वेरवाल इति पत्रम्॥ तत्रैव॥ गांधारिका पटोला निश्राद्ध
कर्म्मणि वर्ज्जयेत्॥ गांधारिका तंदुलीयमिति चंद्रिका॥ जवासा स्याद्दरालभेति वेदेवः॥
भारते॥ हिंगुद्रव्येषु शाकेषु अलांबुं लसुनं तथा॥ कुकुंडकान्यलाबूनि कृष्णं लवणमेव
च॥ पुनरलाबुग्रहणमुभयालाबुनिषेधार्थमिति पृथ्वीचंद्रः कुकुंडकं वर्तुलछत्राकं॥ त
त्रैव॥ कुसुंबुरं कलिंगोत्थं वर्ज्जयेदम्लवेतसं॥ हेमाद्रौ ब्राह्मे॥ वार्त्ताकं पंचशिंबं च लोमशा
निःफलानि च॥ कालिंगं रक्तचारं च वीणाकं घटचारकं॥ कपालं काचकाचीचकरंजपिंड

गधीपिप्पली॥ नागरंसुंठी॥ कुस्तुंबरुं धनिया इति प्रसिद्धं॥ वायवीये॥ अगस्त्यस्य शि-
खास्ताग्राः कदल्याः सर्व एव च॥ शिखा नवपल्लवाः॥ प्रभासखंडे॥ आरामस्य तु सीमंताः क-
लायाः सर्व एव च सीमंताः नवपल्लवाः॥ कौर्मे॥ तमालं शतकंदं च माध्वालु शीतकंदली॥
मध्वालु मोहालुकंदः शीतकंदली रतालू इति प्रसिद्धं॥ अथ वर्ज्यं॥ मार्कंडेयपुराणे॥ यच्चो-
त्कोचादिना प्राप्तं पतिताद्यदुपार्जितं॥ अन्यायकन्याशुल्कार्थं द्रव्यं चात्र विगर्हितं॥ पित्रर्थं
येमयच्छुस्वेनुत्कायच्चाप्युपाहृतं॥ चंद्रोदये शंखः॥ भूस्तृणं सुरसा शिग्रु पालंकी मत्तुकं
तथा॥ कूष्मांडालाबुवार्त्ताककोविदारांश्च वर्जयेत्॥ पिप्पलीं मरिचं चैव तथा वै पिंडमूलकं
कृतं च लवणं सर्वं वंशाग्रं च विवर्जयेत्॥ राजमाषान्मसूरांश्च कोद्रवान्कोरदूषकान्॥
लोहितान्वृक्षनिर्यासान् श्राद्धकर्मणि वर्जयेत्॥ भूस्तृणं काश्मीरदेशे प्रसिद्धं॥ सुरसा नि-
र्गुंडीति माधवः॥ तुलसीति पृथ्वीचंद्रः॥ सा च भक्ष्यत्वेन निषिद्धा न पुष्पत्वेनेति गौडाः॥ पालं-
की पालक इति प्रसिद्धा॥ मत्तुकं जलजः शाकः मत्तुकमिति पाठे खदिरशाकमिति हेमाद्रिः॥ म-
रिचारण्यार्द्रिणीति हेमाद्रिः॥ कृतलवणं सांभरभिन्नं॥ सैंधवं ल वणं चैव तथा मानससंभव
यच्च सामुद्रिकं भवेदिति शूलपाणौ पाठः॥ पवित्रे परमे ह्येते प्रत्यक्षे अपि नित्यश इति वायवी-
योक्तेः मानसं सांभरं॥ यत्तु भविष्ये॥ तज्जं स्यादंतकाष्टं च प्रत्यक्षलवणं तथेति॥ तत्र प्रत्यक्ष-
लवणं क्षारलवणं खारीति प्रसिद्धं॥ भुक्त्वा तु क्षारलवणं त्रिरात्रं तु वने वसेदिति ब्राह्मोक्ते-
रिति शूलपाणिः॥ क्षीरलवणमिति पाठे तु क्षीरमिश्रलवणम्॥ निषिद्धमिति वाचस्पतिः
मरीचारण्यार्द्रिणीति हेमाद्रिः॥ राजमाषा रवल्या इति प्रसिद्धः कोरदूषकः वनकोद्रवः॥ चं-
द्रिकायां शंखः॥ पिंडालकं चतुंडीरं करमर्दं च नालिकं॥ कूष्मांडं बहुबीजानि श्रा-
द्धे दत्वा व्रजत्यधः॥ पिंडालकं महाराष्ट्रे सुपेंडरमिति प्रसिद्धं॥ तुंडीरी बिंबीफलमिति गौडे-
वः॥ करमर्दं करवंदमिति प्रसिद्धम्॥ तत्रैव॥ विडालोच्छिष्टमाघ्रातं श्राद्धे यत्नेन वर्जयेत्
॥ कूष्मांडं महिषीक्षीरमाढक्यो राजसर्षपाः॥ चणका राजमाषाश्च घ्नंति श्राद्धं न संशयः॥
वृहत्पराशरः॥ करीरफलपुष्पाणि विडंगमरिचानि च॥ जंभारिकाः सजंबीरा
सुपक्वं बीजपूरकं॥ जम्बलाबूनि पिप्पल्यः पटोलं पिंडमूलकम्॥ मसूरां जनकं पुष्पं च श्राद्धे
दत्वा पतत्यधः॥ जंतु सूक्ष्मं॥ माधवीये चतुर्विंशतिमते॥ यावनालान्कुलत्थांश्च वर्जयं-
ति विपश्चितः॥ यावनाला जोन्धला इति॥ अत्र यानि चणकादी-
नि विहितनिषिद्धानि तेषां विकल्पः॥ अन्यथा श्यामाकैश्चणकैः शाकैर्नीवारैश्च प्रियंगु-
भिः॥ गोधूमैश्च तिलैर्मुद्गैर्मासं प्रीणयते पितॄन्॥ इति॥ गोधूमैरिक्षुभिर्मुद्गैः सतीनैश्चणकै-
र्यो इति च हेमाद्रौ कौर्म विष्णुधर्मादि विरोधः स्यात्॥ पिप्पलीमरिचादेस्तु प्रत्यक्षस्य निषे-
धो न तु कृतद्रव्यमिश्रस्य॥ सौवीरं तिक्तैर्लवणादिभिस्तु पाकस्य सिद्धिर्महती हयैस्तु॥ त-
द्बीजपूरामरिचादियोगात्सिद्धिं प्रदेयं न तु दुष्यतीह इति पृथ्वीचंद्रोदये वृहत्पराशरोक्तेः॥ त-
त्रैव॥ दातुर्यस्मिन्मनसोऽभिलाषः श्रद्धा भवेद्यत्र च दीयमाने॥ श्राद्धे तु देयं विधिवत्तदे-

त्सस्पृग्धमित्यर्थः॥शिवनिर्माल्यं गंगोदकं॥वांतं मधु॥मृतकर्पटं नखरोपहतम्॥तिलेषु
आपस्तंबः॥अटव्यां ये समुत्पन्ना अकृष्टफलिनास्तथा॥ते वै श्राद्धे पवित्राः स्युस्तिलास्ते
न तिलाः स्मृताः॥ अभावे ग्राम्याः॥ गौराः कृष्णास्तथारण्यास्तथैव त्रिविधास्तिला इति ब्रा
ह्मोक्तेः॥ अथ वर्ज्यानि॥ चंद्रिकायां यमः॥ कुक्कुटो विड्वराहश्च का
कश्वाथ विडालकः॥ वृषलीपतिश्च वृषलः षंडोऽवीरा रजस्वला॥ एते तु श्राद्धकाले वै
वर्जनीयाः प्रयत्नतः॥ खंजः काणः कुणिः श्वित्री दातुः प्रेष्यकरस्तथा॥ न्यूनांगोऽप्यतिरि
क्तांगस्तमप्यपनयेत्ततः॥ वायवीये॥ अन्नं पश्येयुरेते तु यदि
वै हव्यकव्ययोः॥ उत्सृष्टं प्रधानार्थं संस्कारस्त्वापदि स्मृतः॥ सुमंतुः
चंडालादिवीक्षितमन्नमभोज्यमन्यत्र भूः स्वाहा हिरण्योदकस्पर्शात्॥ तत्रैव जमदग्निः
॥ शुद्धवतीभिः कूष्मांड्यः पावमान्यस्तरत्समाः॥ एतेन वारिणा दर्भैरन्नदोषमपानुदत्॥
चंद्रोदये॥ पादुकोपानहौ छत्रं चित्ररक्ताम्बरं तथा॥ रक्तपुष्पं च मार्जारं
श्राद्धभूमौ विवर्जयेत्॥ निर्णयदीपे॥ घंटानिनादो हयसन्नि
धानं शंबूकशंखौ कदलीदलं च॥ अन्यत्र जात्यर्कहयारिजानि श्राद्धस्य वैगुण्यकराण्य
मूनि॥ हयारिजं महिषीक्षीरादि॥ अथ श्राद्धदिनकृत्यं॥ चंद्रोदये उशनाः॥
॥ गोमयोदकैर्भूमिभाजनशोधनं कुर्यात्॥ पराशरः॥ कांजिकं दधित
क्रं च सक्तं चामृतमेव च॥ सर्वमेव न दातव्यमेकोद्दिष्टे च पार्वणे॥ हेमाद्रौ पराशरः
गृहाग्निशिशुदेवानां ब्रह्मचारितपस्विनां॥ तावन्न दीयते किंचिद्यावत्पिंडान्न निर्वपेत्॥
कौर्मे॥ तिलानवकिरेत्तत्र सर्वतो बंधयेदजान्॥ तत्रैव देवलः॥ तथैवं यंत्रितो
दाता प्रातः स्नात्वा सहांबरः॥ आरभेत नवैः पात्रैरन्नारंभं च बांधवैः॥ अत्रात्मनेपदा
त्स्वयमेव पाकः कार्यः॥ अशक्तौ पत्न्यादिभिर्बांधवैः॥ ततस्तानि पपाचाशु सीता ज
नकनंदिनी इति पद्मलिंगादिष्विति हेमाद्रिः॥ श्राद्धदीपकलिकायामाश्वलायनः॥ समा
नप्रवरैर्मित्रैः सपिंडैश्च गुणान्वितैः॥ कृतोपकारिभिश्चैव पाकः कार्यः प्रशस्यते॥ व्या
सः॥ गृहिणी च वसुस्नाता पाकं कुर्यात्प्रयत्नतः॥ निष्पन्नेषु च पाकेषु पुनः स्ना
नं समाचरेत्॥ पृथ्वीचंद्रोदये ब्राह्मे॥ रजस्वलां च षंडं च पुंश्च
लीं पतितां तथा॥ त्यजेच्छूद्रां तथा वंध्यां विधवां चान्यगोत्रजाम्॥ व्यंगकर्णी चतुर्था
हः स्नातामपि रजस्वलां॥ वर्जयेच्छ्राद्धपाकार्थं ममातृपितृवंशजां॥ मातृपितृवंश
जभिन्नां त्यजेदित्यर्थः॥ स्मृतिसारे॥ न पाकं कारयेत्पत्नीमस्तां वाप्यन्यगोत्रजां॥ मृत
वंध्यां च गर्भघ्नीं गर्भिणीं चैव दुर्मुखीं॥ पाकभांडानि तु हेमाद्रौ नागरखंडे॥ सौवर्णान्य
थ रौप्याणि कांस्यताम्रोद्भवानि च॥ मार्त्तिकान्यपि भव्यानि नूतनानि दृढानि च॥
तत्रैवादित्यपुराणे॥ पचेदन्नानि सुस्नातः पात्रेषु शुचिषु स्वयं॥ स्वर्णादिधातुजातेषु
मृण्मयेष्वपि वा द्विजः॥ अच्छिद्रेष्वविलिप्तेषु तथानुपहतेषु च॥ नायसेषु न भिन्ने

मूलकं॥गृंजनं चुलिकां चैव गाजरं जीवकं तथा॥ वृंताकं श्वेतम्॥ केचित्तु श्वेतवृंताकं कुं
भांडं च विवर्जयेदिति॥ देवलोक्तेः॥ तेन रक्तस्यानिषेध इति चंद्रिका माधवौ॥ वस्तुतस्तु स
दाश्वेत निषेधात्पुनः श्राद्धे निषेधोऽयमर्थः तेन भक्ष्यस्य रक्तवृंताकस्यापि निषेधार्थमिति
वयं॥ कंडुरा कपिकच्छुः॥ कुंभांडं वृत्तालाबु पंचशिंबं वल्लमसूरराजमाषमकुलत्थाः लोमशानि
कपित्थादीनि॥ रक्तचारे लोहितं चारफलं॥ चीणाकं दीर्घलघुककर्कटी भूतचारकं चिरस्थितचार
फलं॥ चारोलीति प्रसिद्धम्॥ कपालं नारिकेलं॥ कांचकं तुच्छफलं॥ मारीचं श्राद्धमरीचानि
गृंजनं पलांडुभेदः पश्चिमदिशि प्रसिद्धः नतु गाजरं॥ तस्य पृथगुक्तेः॥ हेमाद्रिस्तु गृंजनं गाजर
भेदो नेः गौडश्राद्धकौमुद्यामप्येवं॥ तच्चिंत्यं॥ चुक्रिका चिरकालशुक्तं स्थानकं॥ चं
द्रिकायां हारीतः॥ नवटप्लक्षोदुंबरशेलुदधित्थनीपमातुलिंगानि भक्षयेत्॥ शे
लुश्लेष्मांतकः भोकरसंज्ञः॥ दधित्थं कपित्थं॥ स्मृतिसारे॥ क्षीरं तु ल
वणं दत्वा उच्छिष्टेपि च पद्धृतं॥ स्नानं रजकतीर्थे तु ताम्रे गव्यं सुरासमं॥ गौडनिबंधे स्मृत्य
गतरे स्मृतिः॥ नालिकेलोदकं कांस्ये ताम्रपात्रे स्थितं मधु॥ गव्यं च ताम्रपात्रस्थं मद्यतुल्यं घृ
तं विना॥ ताम्रपात्रे घृतं मांसं पक्वं गव्यं घृतेतरत्॥ आमिषं तु गवां मांसं दधि मद्यपयोरजः स्याद्
रपुतं मांसं पयसा संपुतं दधि॥ पयोद्भुतसारं तु ताम्रपात्रे न दुष्यति॥ अथ जलं॥
याज्ञवल्क्यः॥ शुचिगोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतं॥ वर्ज्यं जलमुक्तं॥
हेमाद्रौ ब्रह्मांडे॥ दुर्गंधि फेनिलं क्षारं पंकिलं पल्वलोदकम्॥ न भवेद्यत्र गोतृप्ति
र्नक्तं यच्चाप्युपाहृतं॥ यत्सर्वार्थमुत्सृष्टं यच्चाभोज्यनिपानजं॥ तद्वर्ज्यं सलिलं तात सदैव श्रा
द्धकर्मणि॥ निपानो जलाशयः शुद्धितत्वे शंखः॥ स्नानमाचमनं दानं देवतापितृतर्पणं॥ शू
द्रोदकैर्न कुर्वीत तथा मेघाद्विनिःसृतैः॥ हेमाद्रावादित्यपुराणे॥ चि
रपर्युषितं वापि शूद्रस्पृष्टमथापि वा॥ जान्हव्याः स्नानदानादौ पुनात्येव सदा पयः॥ का
त्यायनः॥ आपो निशि न गृह्णीयात्पानार्थे च कदाचन॥ उद्धृत्याग्निमुपर्येते धौ
तौ धामं दृढ़ीरयेत्॥ रजोदोषं तु प्रागुक्तं॥ नारदीये॥ त्यजेत्पर्युषितं पुष्पं त्यजेत्पर्युषितं ज
लं॥ न त्यजेज्जान्हवीतोयं तुलसी पद्मबिल्वकं॥ अस्मात्पिठथ्वी चंद्रोदये मात्स्ये॥ मध्याह्न
:खड्गपात्रं च तथा नेपालकंबलः॥ रौप्यं दर्भास्तिला गावो दौहित्रश्चाष्टमः स्मृतः॥ पापं कु
त्सितमित्याहुस्तस्य संतापकारिणः॥ अष्टावेते यतस्तस्मात्कुतपा इति विश्रुताः॥ श्रा
द्धे॥ यतिस्त्रिदंडः कांचनं राजतं पात्रमेव च॥ दौहित्रं कुतपः कालश्छागः कृष्णा
जिनं तथा॥ शस्तानीति शेषः॥ दौहित्रं खड्गपात्रमिति कल्पतरुः॥ अपरार्के
स्मृत्यंतरे॥ अपत्यं दुहितुश्चैव खड्गपात्रं तथैव च॥ घृतं च कपिलाया गोर्दौहित्र
मिति कीर्त्तितं॥ ब्रह्मांडे॥ अमावास्यागते सोमे यात्तु खादति गोस्तृणम्
तस्या गोर्यद्भवेत्क्षीरं तद्दौहित्रमुदाहृतं॥ स्मृतिसंग्रहे॥ उच्छिष्टं शि
वनिर्माल्यं वांतं च मृतकर्पटं॥ श्राद्धे सप्त पवित्राणि दौहित्रः कुतपस्तिलाः॥ उच्छिष्टं व

त्सस्यदुग्धमित्यर्थः॥शिवनिर्माल्यंगंगोदकं॥वांतमधु॥मृतकर्पटंतसरीपट्टम्॥तिलेषु
आपस्तंबः॥अटव्यांयेसमुत्पन्नाअकृष्टफलितास्तथा॥तेवैश्राद्धेपवित्राःस्युस्तिलास्ति
नतिलाःस्मृताः॥अभावेग्राम्याः॥गौराःकृष्णास्तथारण्यास्तथैवत्रिविधास्तिलाइतिब्रा
ह्मोक्तेः॥ अथवर्ज्यानि॥चंद्रिकायांयमः॥ कुक्कुटोविड्वराहश्चका
कश्चाथविडालकः॥वृषलीपतिश्चवृषलःषंडोऽवीरारजस्वला॥एतेतुश्राद्धकालेवै
वर्जनीयाःप्रयत्नतः॥खंजःकाणःकुणिःश्वित्रीदातुःप्रेष्यकरस्तथा॥न्यूनांगोऽप्यतिरि
क्तांगस्तमप्यपनयेत्ततः॥ वायवीये॥ अन्नंपश्येयुरेतेतुयदि
वैहव्यकव्ययोः॥उत्सृष्टव्यंप्रधानार्थंसंस्कारस्त्वापदिस्मृतः॥ सुमंतुः
चंडालादिवीक्षितमन्नमभोज्यमन्यत्रभूम्यस्महिरण्योदकस्पर्शात्॥तत्रैवजमदग्निः
॥शुद्धवतीथकूष्मांड्यःपावमान्यस्तरत्समाः॥एतेनवारिणादर्भैरन्नदोषमपानुदत्॥
चंद्रोदये॥ पादुकोपानहौछत्रंचित्ररक्तांबरंतथा॥रक्तपुष्पंचमार्जारं
श्राद्धभूमौविवर्जयेत्॥ निर्णयदीपे॥ घंटानिनादोहयसन्नि
धानंशंबूकशंखोकदलीदलंच॥उन्मत्तजात्यर्कहयारिजानिश्राद्धस्यवैगुण्यकराण्य
मूनि॥हयारिजंमहिषीक्षीरादि॥ अथश्राद्धदिनकृत्यं॥चंद्रोदयेउशनाः॥
।गोमयोदकैर्भूमिभाजनशौचंकुर्यात्॥ पराशरः॥ कांजिकंदधित
क्रंचसक्तंचास्नुतमेवच॥सर्वमेवनदातव्यमेकोद्दिष्टेथपार्वणे॥ हेमाद्रौपराशरः
गृहाग्निशिशुदेवानांब्रह्मचारितपस्विनां॥तावन्नदीयतेकिंचिद्यावत्पिंडान्ननिर्वपेत्॥
कौर्मे॥ तिलान्नवकिरेत्तत्रसर्वतोबंधयेदजान्॥तत्रैवदेवलः॥तथैवयंत्रितो
दाताप्रातःस्नात्वासहांबरः॥आरभेतनवैःपात्रैरन्नारंभंचबांधवैः॥अत्रात्मनेपदा
त्स्वयमेवपाकःकार्यः॥अशक्तौपत्न्यादिभावेबांधवैः॥ततस्तानिपपाचाशुसीताज
नकनंदिनीतिपद्मलिंगादितिहेमाद्रिः॥श्राद्धदीपकलिकायामाश्वलायनः॥समा
नप्रवरैर्मित्रैःसपिंडैश्चगुणान्वितैः॥कृतोपकारिभिश्चैवपाककार्यंप्रशस्यते॥ व्या
सः॥ गृहिणीचैवसुस्नातापाकंकुर्यात्प्रयत्नतः।निष्पन्नेषुचपाकेषुपुनःस्ना
नंसमाचरेत्॥ पृथ्वीचंद्रोदयेब्राह्मे॥ रजस्वलांचषंडंचप
लीपतितांतथा॥त्यजेच्छूद्रांतथावंध्यांविधवांचान्यगोत्रजाम्॥व्यंगकर्णींचतुर्था
हःस्नातामपिरजस्वलां॥वर्जयेच्छ्राद्धपाकार्थंममातृपितृवंशजां॥मातृपितृवंश
जभिन्नांत्यजेदित्यर्थः॥स्मृतिसारे॥नपाकंकारयेत्पुत्रीमस्नांवाप्यन्यगोत्रजां॥मृत
वंध्यांचगर्भघ्नींगर्भिणींचैवदुर्मुखीं॥पाकभांडानितुहेमाद्रौनागरखंडे॥सौवर्णान्य
थरौप्याणिकांस्यताम्रोद्भवानिच॥मार्त्तिकान्यपिभव्यानिनूतनानिदृढानिच॥
तत्रैवादित्यपुराणे॥पचेदन्नानिसुस्नातःपात्रेषुशुचिषुस्वयं॥स्वर्णादिधातुजातेषु
मृण्मयेष्वपिवाद्विज॥अच्छिद्रेष्वविलिप्तेषुतथानुपहतेषुच॥नायसेषुनभिन्ने

शुद्धयितेष्वपिकर्हिचित्॥ एवंकृतोपयोगेषुमृण्मयेषुनतुक्वचित्॥ वायुपुरा
णे॥ नकदाचित्पचेदन्नमयस्थालीषुपैतृकं॥ अयसोदर्शनादेवपितरोविद्रवंति
हि॥ कालायसंविशेषेणनिंदंतिपितृकर्मणि॥ फलानांचैवशाकानांछेदनार्थानिया
नितु॥ महानसेपिशस्त्राणितेषामेवहिसन्निधिः॥ इष्यतेनेतरस्यात्रशस्त्रमात्रस्यद
र्शनम्॥ श्राद्धदेशेतुविदुषापितॄणांतृप्तिमिच्छता॥ महानसेपिशस्त्राणामपिकार्यं
नदर्शनं॥ तत्रैव॥ पच्यमानस्तुभांडेषुभक्ताताम्रमयेषुच॥ सस्तुहरतिवै
घोरान्पितॄन्दुःखमहार्णवात्॥ तैजसानामभावेतुपिठरेमृण्मयेपिच॥ नवेषुवो
प्रकुर्वीतपाकंपित्रर्थमादरात्॥ तत्रैवादित्यपुराणे॥ पक्वा
न्नस्थापनार्थंतुशस्यंतेदारुजान्यपि॥ दर्व्यादीन्यपिकार्याणियज्ञियैरपिदारुभिः॥
यमः॥ विवाहेष्वेनकार्येचमातापित्रोःक्षयेहनि॥ नवभांडानिकुर्वीतयस्तुका
लेविशेषतः॥ अथपाकाग्निः॥ हेमाद्रौप्रजापतिः॥ औपा
सनेनात्रसिद्धिःस्यात्पाकरणमेवच॥ पृथ्वीचंद्रोदयेगिरा॥ शा
लाग्नौतुपचेदन्नंलौकिकेवापिनित्यशः॥ यस्मिन्नग्नौपचेदन्नंतस्मिन्होमोविधीय
ते॥ मनुः॥ वैवाहिकेग्नौकुर्वीतगृह्यंकर्मयथाविधि॥ पंचयज्ञविधानं
चपंक्तिंचान्वाहिकींद्विजः॥ श्राद्धस्यगृह्यत्वंचोक्तमपरार्केण॥ अत्रविशेषःकर्मप्र
दीपे॥ प्रातर्होमंतुनिर्वर्त्यसमुद्धृत्यहुताशनात्॥ शेषंमहानसेकृत्वातत्रपाकंसमा
चरेत्॥ पाकांतेग्निंसमाहृत्यगृह्याग्नौतुपुनःक्षिपेत्॥ ततोस्मिन्वैश्वदेवादिकर्मकुर्या
दतंद्रितः॥ तदभावेलौकिके॥ ततःपरेषुरत्नानिनिर्वापानंतरंशनैः॥ वैवाहिकोपा
वन्यत्रलौकिकेवापिसंस्कृतइतिकालिकायांसंग्रहोक्तेः॥ पित्रर्थनिर्वापकृत्वित्यर्थः॥
अतएव॥ हेमाद्रौवायुपुराणे॥ पित्रर्थंनिर्वपेद्भूमौवै
वादर्भसंस्कृतेइति॥ तत्रैवपाद्ममात्स्ययोः॥ अग्निमान्निर्वपत्पैत्र्यंचरुंवासममुष्टि
भिः॥ पितृभ्योनिर्वपामीतिसर्वंदक्षिणतोन्यसेत्॥ चरुग्रहणान्नशाकादावितिहे
माद्रिः॥ पिंडपितृयज्ञार्थपाकविषयोयन्निर्वापइतियुक्तं॥ अयंचेतरे
यामग्निः॥ आश्वलायनानांतु॥ गुरुणाभिमतोन्यतोवाप
सीयमाणाअमावास्यायांशांतिकर्मकुर्वीरन्नित्यादिसूत्रेणपचनाग्नेस्त्यागमुक्त्वा
इहैवायमितरोजातवेदाइत्यर्धर्चेनशमीमयीभ्यामरणीभ्यामग्निमथित्वापचनाग्नि
र्भवतीतिसूत्रेष्टौचोक्तेः॥ पचनाग्नावेवपाकः॥ बौधायनेनाप्युक्तः॥ आहृत्यपचना
ग्निंमौपासनंवाभिप्रव्रजतीति॥ स्मार्त्तोग्नौपाकस्त्वन्यशाखाविषयइतिकेचित्॥ व
स्तुतस्तुपूर्वोक्तस्यसर्वाधानविषयत्वमुक्तं शिष्टाचारेपिनपचनोदृश्यते॥ अतएववि
लायामपिसर्वाधानपक्षेवैश्वदेवंश्राद्धंचपचनेग्नौकुर्यादन्यथौपासनेइत्युक्तम्॥
अग्नौकरणंतुप्रयोगपारिजातादिभिराह्निकादिसर्वश्राद्धेषुपिंडपितृयज्ञेप्यतिदिष्टमो

क्तेर्लौकिके पचने वा पाके कृते पितृश्राद्धोपक्रमः चरुरेव कार्यमिति प्रतिभाति॥ मदनरत्नेप्ये
वं॥ विधुरोच्छिन्नाग्न्यादेस्तु गृह्योक्तविधानेनाग्निसंपादनमित्युक्तं हरिहरभाष्ये॥ इति
पाकाग्निः॥ चंद्रिकायां मार्कंडेयः॥ अन्हः षट्सु मुहूर्तेषु गतेषु
प्रयतान्द्विजान्॥ प्रत्येकं प्रेषयेत्प्रेष्यान्प्रदायामलकोदकं॥ देवलः॥ ततो
निवृत्ते मध्यान्हे क्लृप्तरोमनखान्द्विजान्॥ अभिगम्य यथामार्गं प्रयच्छेद्दंतधावनं॥ तैल
मभ्यंजनं स्नानं स्नानीयं च पृथग्विधं॥ पात्रैरौदुंबरैर्दद्याद्वैश्वदेविकपूर्वकं॥ औदुंबरैस्ता
म्रमयैः॥ अत्र क्षौरामलकस्नानादि निषिद्धतिथ्यादिव्यतिरिक्तविषयमिति हेमाद्रिमाध
वौ॥ यत्तु चंद्रिकायां प्रचेताः॥ तैलमुद्वर्तनं स्नानं दद्यात्पूर्वान्ह एव
तु॥ श्राद्धभुग्भ्यो न स्वयं तु क्षौरं तु न कारयेदिति॥ तन्निषिद्धतिथ्यादिविषयं॥ निषि
द्धतिथ्यादि तु प्रागुक्तं॥ अभ्यंगे तु कलिकायां कात्यायनः॥ तैलमुद्वर्तनं देयं ब्राह्मणेभ्यः
प्रयत्नतः। तैरभ्यंगश्च कर्तव्यो वर्ज्यकालेन चिंतयेत्॥ अपरार्के प्रचेताः॥ स्नातोधिकारी भ
वति दैवे पित्र्ये च कर्मणि॥ श्राद्धे शुक्लांबरो वासाः स्यान्मौनी च विजितेंद्रियः॥ हे
माद्रौ जाबालः॥ तांबूलं दंतकाष्ठं च स्नेहस्नानमभोजनं॥ रत्यौषधपरान्ना
नि श्राद्धकर्ता विवर्जयेत्॥ वस्त्रे विशेषमाह॥ तत्रैव भृगुः॥ नग्नः स्या
न्मलवद्वासा नग्नः कौपीनकेवलः॥ द्विकच्छोनुत्तरीयश्चा
कच्छोवस्त्र एव च॥ नग्नः काषायवासाः स्यान्नग्नश्चार्धपटः स्मृतः॥ नग्नो द्विगुणवस्त्रः स्या
न्नग्नो रक्तपटः स्मृतः॥ नग्नस्तु स्विन्नवस्त्रः स्यान्नग्नः स्यूतपटस्तथा॥ ततः कर्ता ऊर्ध्व
पुंड्रं कुर्यात्॥ जपे होमे तथा दाने स्वाध्याये पितृकर्मणि॥ तत्सर्वं नश्यति क्षिप्रमूर्ध्वपुंड्रं वि
नाकृतमिति॥ हेमाद्रावुक्तेः॥ यज्ञो दानं जपो होमः स्वाध्यायः पि
तृकर्म च॥ वृथा भवति विप्रेंद्रा ऊर्ध्वपुंड्रं विनाकृतमिति बृहन्नारदीयात्॥ ऊर्ध्वं च तिलकं
कुर्याद्दैवे पित्र्ये च कर्मणीति वृद्धपराशरोक्तेश्च॥ अन्ये तु॥ ऊर्ध्वपुंड्रं द्विजातीनामग्निहो
त्रसमो विधिः॥ श्राद्धकाले तु संप्राप्ते कर्ता भोक्ता च वर्जयेत्॥ वामहस्ते च दर्भास्तु गृहे रंग
वलिं तथा॥ ललाटे तिलकं दृष्ट्वा निराशाः पितरो गता इति संग्रहोक्तेः॥ ऊर्ध्वपुंड्रं त्रिपुंड्रं वा
चंद्राकारमथापि वा॥ श्राद्धकर्ता न कुर्वीत यावत्पिंडान्न निर्वपेत्॥ इति विश्वप्रकाशव
चनाच्च न कार्यमित्याहुः॥ अत्राचाराद्व्यवस्था॥ अत एव बृहन्नारदीये॥ ऊर्ध्वपुंड्रं च तुल
सीं च श्राद्धे नेच्छंति केचनेति॥ ऊर्ध्वपुंड्रविधिर्विप्रविषयः निषेधः क्षत्रपर इति पृथ्वीचंद्रः
यत्तु॥ हेमाद्रौ देवलः॥ ललाटे पुंड्रकं दृष्ट्वा स्कंधे माल्यं तथैव च॥ नि
राशाः पितरो यांति दृष्ट्वा च वृषलीपतिमिति तद्भिन्नत्रिपुंड्रविषयं॥ प्राक्पिंडदानाद्भाले
तिलं कुर्यात्तु विग्रहमित्याश्वलायनोक्तेः॥ पुंड्रं वर्तुलमित्यपरार्के मदनरत्ने च॥ पृथ्वी
चंद्रस्तु त्रिपुंड्रम्॥ ऊर्ध्वं च तिलकं कुर्यान्न कुर्याद्वै त्रिपुंड्रकं॥ निराशाः पितरो यांति दृष्ट्वैव
त्रिपुंड्रकमिति वृद्धपराशरोक्तेः॥ भोक्तुस्तिर्यक्त्रिपुंड्रं भवत्येव॥ वर्जयेत्तिलकं भाले श्राद्ध

कालेचसर्वदा॥तिर्यगप्यूर्ध्वपुंड्रंवाधारयेत्तुप्रयत्नतइतिव्यासोक्तेरित्याह॥ २
ग्धौचंद्रोदयेब्राह्मे॥ स्वदर्भेणतुहस्तेनयःकुर्यात्तिलकंबुधः॥आचम्यसविशु
ध्येतदर्भत्यागेनचैवहि॥ततःश्राद्धारंभकालमाहऽपरार्केगौतमः॥ आरभ्यकुतपेश्राद्धकु
र्यादारौहिणंबुधः॥विधिज्ञोविधिमास्थायरौहिणंतुनलंघयेत्॥ एतद्देवोदि
ष्टे॥पार्वणेतूक्तंमात्स्ये॥ऊर्ध्वंमुहूर्तात्कुतपाद्यन्मुहूर्तचतुष्टयं॥मुहूर्तपंचकंह्येतत्स्वधा
भवनमिष्यते॥ तथा॥ मध्याह्नेसर्वदायस्मान्मंदीभवतिभास्करः॥तस्मादनं
तफलदस्तत्रारंभोविशिष्यते॥ ॥अथश्राद्धपरिभाषा॥
चंद्रिकायांकात्यायनः॥ दक्षिणपातंकृत्वाजानुदेवान्परिचरन्सदा॥पातये
दितरंजानुपितॄन्परिचरन्सदा॥ बौधायनः॥ प्रदक्षिणंतु
देवानांपितॄणामप्रदक्षिणं॥देवानामृजवोदर्भाःपितॄणांद्विगुणास्तथा॥ पृथ्वी
चंद्रोदयेशंखः॥ आवाहनार्घ्यसंकल्पेपिंडदानान्नदानयोः॥ पिंडाभ्यं
जनकालेतुतथैवाजनकर्म्मणि॥ अक्षय्यासनयोः पाद्येगोत्रंनाम
प्रकाशनं॥ तत्रैवपरिशिष्टे॥ क्षणेचपिंडदानेचगंधधूपाक्षयेत
था॥संकल्पेचासनेदीपेअंजनाभ्यंजनेतथा॥अन्नार्घ्यदानयोरेतेषुगोत्रंनामचकीर्तयेत्।
कलिकायांसंग्रहे॥ आसनावाहनेपाद्येअन्नदानेतथैवच॥अक्षय्येपिंडदा
नेचषट्सुनामानिकीर्तयेत्॥ मत्स्य॥ संबंधंप्रथमंब्रूयाद्गोत्रनामतथै
वच॥पश्चाद्रूपंविजानीयात्क्रमएषसनातनः॥ तत्रैव॥ सकारेणतुव
क्तव्यंगोत्रंसर्वत्रधीमता॥सकारःकुतपोज्ञेयस्तस्माद्यत्नेनतंवदेत्॥यथाकाश्यपसगो
त्रेति॥पराशरसगोत्रस्यवृद्धस्यतुमहात्मनः॥भिक्षोःपंचशिखस्याहंशिष्यःपरमधार्मिक
इतिमोक्षधर्मप्रयोगाच्च॥तेनगोत्रसगोत्रयोःपर्यायत्वात्॥शाखाभेदाद्व्यवस्थेति॥
शूलपाणिः॥ हेमाद्रौ॥वृद्धमनुः॥ एतदेवामायानंतेषामेव॥
गोत्रस्वरांतंसर्वत्रगोत्रस्याक्षय्यकर्मणि॥गोत्रस्तुतर्पणेप्रोक्तःएवंदातानमुह्यतिसर्वत्रैव
पितुःप्रोक्तःपितातर्पणकर्मणि॥पितुरक्षय्यकालेतुपित्रेसंकल्पनेतथा॥शर्मन्नर्घ्यादि
केकार्येशर्मातर्पणकर्मणि॥ शर्मणोक्षय्यकालेतुपितॄणांदत्तमक्षयं॥स्वरांतेसंबुद्धि
तमिति॥ हेमाद्रिः॥तत्रैवचंद्रिकायांस्मृत्यंतरे॥ गोत्रस्यत्वपरिज्ञाने
काश्यपंगोत्रमुच्यते॥तस्मादाहश्रुतिःसर्वाःप्रजाःकश्यपसंभवाः॥यत्तुसंग्रहकारः॥
अथनाशानवधौःपुरोहितगोत्रेणाचार्यगोत्रेणवेति॥तद्विवाहपरंनामोच्चारणेविधि
यमाह॥ हेमाद्रौबौधायनः॥ शर्मांतंब्राह्मणस्योक्तंवर्मांतं
क्षत्रियस्यतु॥गुप्तांतंचैववैश्यस्यदासांतंशूद्रजन्मनः॥पित्रादिनामाज्ञानेतत्रैवटपि
बीयतपितावाच्यस्तातिताततरिक्षसत्॥अभिधानापरिज्ञानेदिवियत्रपितामहः॥ आ
पित्रादीनांनामयदापुत्रैर्नज्ञायतेतदा॥आपस्तंबसूत्रेप्येवं॥एतदन्यशाखापरं॥

श्वलायनानां तूक्तं सूत्रे॥ यदि नामान्न विद्यात्ततः पितामहप्रपिताम
हेति ब्रूयात्॥ तत्कारिकापि॥ नामानि चेन्न जानीयात्तत्तत्ता
दिवदेत्क्रमात्॥ ततेति संबंधमात्रपरं तत्पितृव्यादावपि तथेति॥ गौडाः॥
स्त्रीणां दांतेनामज्ञेयं॥ दात्तनामस्त्रीणामिति॥ पृथ्वीचंद्रोदये गोभिलोक्तेः
केचिद्देवीशब्दांतमाहुः॥ अन्ये तु देवीदारांतद्वयोः समुच्चयमाहुः॥ हेमाद्रौ
नारायणः॥ विभक्तिभिस्तु यत्किंचिद्दीयते पितृदेवते॥ तत्सर्वं सफलं ज्ञे
यं विपरीतं निरर्थकं॥ चंद्रिकास्मृत्यर्थसारयोः॥ नारदीये च॥ अ
क्षय्यासनयोः षष्ठी द्वितीयावाहने तथा॥ अन्नदाने चतुर्थी च शेषाः संबुद्धयः स्मृताः
पत्न्यासः॥ चतुर्थी चासने नित्यं संकल्पे च विधीयते॥ प्रथमा तर्पणे प्रोक्ता
संबुद्धिमपरे जगुरिति॥ अत्र शाखाभेदाद्व्यवस्थेति हेमाद्रिः॥ हेमाद्रौ भृगुः
अर्घ्यावनेजनं पिंडमन्नं प्रत्यवनेजनं॥ संबुद्धिं तत्र कुर्वीत शेषेषु षष्ठी विधीयते॥ हे
माद्रौ प्रभासखंडे॥ यज्ञोपवीतिना कार्यं दैवं कर्म प्रदक्षिणं॥ प्राचीनावी
तिना कार्यं पितृकर्माप्रदक्षिणं॥ अनुपनीतस्त्रीशूद्रादेस्तूत्तरीयेणैव सव्यापसव्ये स्ते
ये॥ तस्योपवीतस्थानीयत्वात्॥ अपसव्यमत्र माहरत्नकृत्वा कश्चित्स्वगोत्रजरतिनाद्द्या
चेति वाचस्पतिः॥ यत्तु केचित्॥ सव्योपवीतिना भाव्यमित्यस्य पुरुषार्थत्वा
त्प्राचीनावीतकालेप्युपवीतांतरेण तत्कार्यमेवेति॥ तन्न॥ विशेषेणाबाध
त॥ जमदग्निः॥ सूत्रस्तोत्रजपं त्यक्त्वा पिंडप्राणं च दक्षिणं आह्वानं स्वागतं चार्घ्यं वि
ना च परिवेषणं॥ विसर्जनं सौमनस्यमाशिषं प्रार्थनं तथा॥ विप्रप्रदक्षिणं चैव स्व
स्तिवाचनकं विना॥ पित्र्यमुद्दिश्य कर्तव्यं प्राचीनावीतिना सदा॥ हेमाद्रौ संग्र
हे॥ आदौ विप्रांघ्रिशौचांतेऽभ्यर्चने विकिरे कृते॥ पिंडानभ्यर्च्य पित्वा च विस
ज्य ब्राह्मणांस्तथा॥ आचामेच्छ्राद्धकर्ता च स्थानेष्वेतेषु सप्तसु॥ आद्यंतयोर्द्विराचामे
च्छेषेषु सकृत्सकृत्॥ तत्रैव॥ श्राद्धारंभेऽवसाने च पादशौचार्चनांतयोः॥ विकिरे
पिंडदाने च षट्स्वाचमनमिष्यते॥ आश्वलायनः॥ दानाध्ययन
देवार्चाजपहोमव्रतादिकान्॥ न कुर्याच्छ्राद्धदिवसे प्राग्द्विजानां विसर्जनात्॥ एतन्नि
त्यवर्जमिति वोपदेवः॥ इदं विष्णुभिन्नदेवपरं॥ विष्णोर्निवेदितान्नेन यष्टव्यं देवतांत
रं॥ पितृभ्यश्चापि तद्देयं तदानंत्याय कल्प्यते॥ पितृशेषं तु यो दद्याद्धरये परमात्मने॥
रेतोधाः पितरस्तस्य भवंति क्लेशभागिनः इति स्कांदात्॥ पितरः सर्वमनुष्या विष्णुनाशितम
श्नंतीति श्रुतेः॥ यः श्राद्धकाले हरिभुक्तशेषं ददाति भक्त्या पितृदेवतानां॥ तेनैव पिंडा
स्तुलसीविमिश्रानाकल्पकोटिं पितरस्तु तृप्ताः इति ब्राह्मोक्तेश्चेति श्रीधरस्वामिनृसिंहपरि
चर्यादयः॥ एतत्सर्वं निबंधविरोधान्निर्मूलं॥ अत्र विशेषो हेमाद्रौ विष्णु
धर्मे॥ श्राद्धान्हि तु समभ्यर्च्य नृवराहं जनार्दनं॥ शिवपुराणे॥ पूज

पित्वाशिवंभक्त्यापितृश्राद्धंप्रकल्पयेत्॥ एवंनिषेधस्तुविहिताभिन्नपरः॥ तथा
हेमाद्रौ॥ दैव्यर्घ्यादक्षिणांगादिःपादजान्वंसमूर्द्धसुशिरोंसजानुपादेषुवा
मांगादिर्चयेत्पैतृके॥ कालिकायांस्मृत्यंतरे॥ श्राद्धारंभेचयेदर्भाः
पादशौचेविसर्जयेत्॥ अर्चनादौतुयेदर्भाउच्छिष्टांतेविसर्जयेत्॥ मार्जनादौतुयेदर्भाः
पिंडोत्थानेविसर्जयेत्॥ उल्मुकादौतुयेदर्भादक्षिणांतेविसर्जयेत्॥ प्रार्थनादौतुयेद
र्भानमस्कारेविसर्जयेत्॥ ऊहमाहविष्णुः॥ मातामहानामप्येवंश्राद्धंकुर्याद्विचक्षणः
मंत्रोहेनयथान्याय्यंशेषाणांमंत्रवर्जितं॥ यथान्याय्यमितियत्रबहुवचनात्॥ पितृश
ब्दस्तत्रसर्वपितृवाचित्वान्नोहः तत्रापिशुंधंतांपितरइत्यत्रोहएव॥ सर्वपितृवाचित्वेउ
त्तरमंत्रद्वयवैयर्थ्यात्॥ बहुवचनेततोघृतेप्रकृतावसमर्थत्वात्पाषाणितिवत्॥ अष्ट
नेचनोहः॥ तस्मादत्रनोहेदितिनिषेधात्॥ एकोद्दिष्टेप्येवम्॥ प्रेतैकोद्दिष्टेत्वेकवन्मंत्रा
नूहेनैकोद्दिष्टे॥ इतिविष्णूक्तेरूहः॥ अत्रबहुवचनस्याप्यू
होवचनात्॥ वृद्ध्यादौतुविशेषंवक्ष्यामः॥ शेषाणामितिपितृव्यादेकोद्दिष्टेआवाहना
दिमंत्रवर्जंकार्यमितिकल्पतरुः॥ ऊहयोग्यपितृपदवान्मंत्रएवतत्रनप्रयोज्यः॥ नतूहः
नापिपितृपदरहितः॥ प्रयोगपारिजातेशूलपाणिः अर्थांतरे
चोक्तंप्राक्॥ वह्वृचकारिकापि॥ अर्घ्यप्रदानमात्रेतुमात्रादिपदमाचरेत्॥ शुंधंतामिति
पित्रादौमात्रादिपदमाचरेत्॥ मातृश्राद्धेपिंडदानेयेचत्वामत्रान्वित्यत्रनोहइतिहरिहर
त्॥ तथामातुःश्राद्धेप्यनूहेनकुर्यात्पिंडानुमंत्रणं॥ दशादानमुपस्थानंतद्वत्कार्यमिति
स्थितिः॥ प्रवाहणमनूहेनतद्वत्प्राशनमिष्यते॥ तथा॥ आयंतुनःपितरः
सोम्यासइतिउशंतस्त्वेतियानितु॥ अनूह्यःपितृशब्दोत्रपितृसामान्यवाचकः॥ आपस्तंबानांतु
वक्ष्यते॥ हेमाद्रौमार्कंडेयः॥ स्नातःस्नातान्समाहूतान्स्वा
गतेनार्चयेत्पृथक्॥ कालिकायांनारदीये॥ प्रायश्चित्तविशु
द्धात्मातेभ्योनुज्ञांप्रगृह्यच॥ दद्याद्देवाद्यर्थहिरण्यंकुशमेवच॥ तेनैवसंग्र
हे॥ तिथिवारादिकंज्ञात्वासंकल्प्यचयथाविधिः॥ प्राचीनावीतिनाकार्यं
सर्वसंकल्पनादिकं॥ संबंधंप्रथमंब्रूयात्तन्नामगोत्रेतथैवच॥ वसादिरूपतांचापिस्व
पितृणामनुक्रमात्॥ चंद्रोदयेनारदीये॥ श्राद्धार्थंसमनुप्रा
प्तान्विप्रान्भूयोनिमंत्रयेत्॥ आपस्तंबस्तु॥ सर्वेषुनिमंत्रणांपरे
द्युर्द्वितीयंतृतीयमामंत्रणमित्याह॥ यूयंमयानिमंत्रिताइतिनिवेदनरूपमाद्यं॥ तद्वि
धिमाहशौनकः॥ गृहीत्वामुकसंज्ञस्यामुकगोत्रस्यचामुके॥ श्राद्धेतुविश्व
देवार्थंकरणीयः क्षणस्त्वया॥ इत्येवंश्राद्धकृद्ब्रूयात्तथेति
वदेत्तुसः॥ श्राद्धस्यकर्तासंब्रूयात्प्राप्नोतुभवानिति॥ स्वदेत्प्राप्नवानीतिइतरस्तुप्रति
द्विजः॥ विश्वोयावसुपुरूरवार्द्रवोवाचौ॥ पित्रादेरप्यनेनैववरणीतद्विधिनाद्विजान्॥

ततःकर्त्ताबद्धचीनाहिताग्निःपिंडपितृयज्ञेपरिस्तरणादीध्माधानांतंकुर्यात्॥ अर्द्धाधा
नितोप्येवमितिप्रयोगपारिजातेपरिशिष्टेच॥भाष्यकारमतेआह्निकेप्येवं॥वृत्तिकारम
तेनेदं॥ हेमाद्रौशंभुः॥ संमार्जितोपलिप्तेतुद्वारिकुर्वीतमंडले
॥उदक्प्लवमुदीच्यंस्याद्दक्षिणंदक्षिणाप्लवं॥ व्याघ्रः॥ उत्तरेक्षतसंयुक्ता
न्पूर्वाग्रान्विन्यसेत्कुशान्॥दक्षिणेदक्षिणाग्रांस्तुसतिलान्विन्यसेत्कुशान्॥ त
त्रैवबौधायनः॥ चतुरस्रंत्रिकोणंचवर्तुलंचार्द्धचंद्रकं॥कर्त्तव्यमानुपूर्व्ये
णब्राह्मणादिषुमंडलं॥ तत्रैवलौगाक्षिः॥ हस्तद्वयमितंका
र्यंवैश्वदेविकमंडलं॥तद्दक्षिणेचतुर्हस्तंपितॄणामग्निशोधने॥ कालिकायांसं
ग्रहे॥ प्रादेशमात्रंदेवानांचतुरस्रंतुमंडलं॥त्र्यस्रंवाषडंगुलंतस्माद्दक्षिणेवर्तु
लंतथैवतुक्रमम्॥ यत्तुस्मृत्यंतरे॥ गर्त्तःपंचांगुलोविप्रेजानुमात्रे
महीभुजि॥प्रादेशमात्रोवैश्येचसाधिकःस्तुशूद्रकेतिर्यगूर्ध्वप्रमाणेनव्याख्यातोदैव
पित्र्ययोः॥चतुरस्रंवर्तुलंचकथितंगर्त्तलक्षणं॥पादप्रक्षालनंप्रोक्तमुपवेश्यासनेद्विजा
न्॥तिष्ठत्स्वेतुक्षालनंकुर्यात्तन्निराशाःपितरोगताइति॥तत्समूलत्वेमंडलाद्येष्वथकृत्येयं॥
तच्चगोमयेहेमाद्रौभृगुःअत्यंतजीर्णदेहायावंध्यायाश्चविशेषतः॥आर्त्तायानवसूतायाः
नगोर्गोवरमाहरेत्॥ मात्स्ये॥ अक्षताभिःसपुष्पाभिस्तदभ्यर्च्यापसव्य
वत्॥विप्राणांक्षालयेत्पादानभिवंद्यपुनःपुनःप्रत्यङ्मुखःस्थितःकुर्याद्विप्रपादाभिषे
चनंतत्रैवभविष्ये॥प्रक्षालयेद्विप्रपादान्शन्नोदेवीरितित्यृचा॥ पृथ्वीचंद्रो
दयेवृद्धवसिष्ठः॥ नकुर्यात्पथिहस्तेतुपाद्यंदद्याद्विचक्षणः कालि
कायांसंग्रहे॥ ततःप्रक्षालयेत्पादौभार्यापावितवारिणा॥ तथा॥ श्राद्ध
कालेयदापत्नीवामेनीरप्रदाभवेत्॥ आसुरंतद्भवेच्छ्राद्धंपितॄणांनोपतिष्ठते॥ त
त्रैव॥ नाथःप्रक्षालयेत्पादौकर्त्तापित्रादिकर्मसु॥पाद्यानंतरमर्घ्यमपिदद्यादिति
हेमाद्रिः॥ तत्रैवलौगाक्षिः॥ मंडलादुत्तरेदेशेदद्यादाचमनीय
कं॥ तत्रैव॥ विधायक्षालनंतेषांद्विराचमनमिष्यते॥स्वयंचापि
द्विराचामेद्विधिःश्रद्धयान्वितः॥ हेमाद्रौनारदीये॥ यत्राचमनवारी
णिपादप्रक्षालनोदकैः॥संगच्छंतेबुधाःश्राद्धमासुरंतत्प्रचक्षते॥ व्यासः स
व्येनैवासनंधृत्वादक्षिणेदक्षिणंकरं॥व्याहृतीभिःसमस्ताभिरासनेषूपवेशयेत्॥स
माध्वमितिचैवोक्त्वादक्षिणंजानुसंस्पृशन्आस्यतामितिब्रूयादासनंसंस्पृशन्नपि॥
हेमाद्रौशातातपः॥ द्वौदैवेथर्वणौविप्रौप्राङ्मुखावुपवेशयेत्॥पित्र्येतूदङ्मु
खांस्त्रींश्चबह्वृचाध्वर्युसामगान्॥ याज्ञवल्क्यः॥ द्वौदैवेप्राक्
त्रयःपित्र्येउदगेकैकमेववा॥यत्तुहेमाद्रौहारीतः॥दक्षिणाग्रदर्भेषुप्राङ्मुखान्ब्राह्मणा
न्भोजयेदुदङ्मुखानित्येकेइति॥तन्नैत्रायणीयविषयं॥प्राङ्मुखान्भोजयेदुदङ्मुखा

नित्यक इतितत्परिशिष्टात्॥ विकल्प इतिहेमाद्रिः॥ माधवीये यमः॥ भि
क्षुकोब्रह्मचारीवाभोजनार्थमुपस्थितः॥ उपविष्टेष्वनुप्राप्तः कामंतमपिभोजयेत्॥
कौर्मे॥ अतिथिर्यस्यनाश्नातिनतत्श्राद्धंप्रचक्षते॥ विप्रनियमोमाधवीये
पवित्रपाणयःसर्वेतेचमौनव्रतान्विताः॥ उच्छिष्टोच्छिष्टसंस्पर्शंवर्जयेतःपरस्परम्॥
तत्रासनानि॥ पृथ्वीचंद्रोदयेयमः॥ आसनंकुजपंदद्यादितरद्वापवित्रकं॥ हेमाद्रौचम
त्कारखंडे॥ पितॄणांघटितंहैमंराजतंवापिचासनं॥ येनताम्रमयंदत्तमासनंपितृकर्म
णि॥ सवैदिव्यासनारूढोनहिप्रच्यवतेदिवः॥ हेमाद्रौनागरखंडे॥
अथशंकुमयंपीठंप्रदेयंनोपवेशने॥ कालिकायांसंग्रहे॥ क्षौमंदु
घक्रम्यप्राच्यापंक्तिर्यथाभवेत्॥ दक्षिणासंस्थितायेषांपितॄणांश्राद्धकर्मणि पु
लस्य॥ श्रीपर्णीवारुणीक्षीरीजंबुकाम्रकदंबकम्॥ सप्तमंवाकुलंपीठंपितॄणां
दत्तमक्षयंसंग्रहेशमीचकाश्मरीशेलुकदेवीवारुणास्तथा॥ पंचाशनानिशस्तानिश्राद्धेदेवा
र्चनेतथा॥ कारिका॥ द्वौदैवेप्राङ्मुखौपित्र्येत्रीन्विप्रानुदगाननान्॥
पैठीनसिः॥ कुतपःश्राद्धवेलायांश्रोत्रियोयदिदृश्यते॥ आश्वलाय
नः॥ नीवीवासोदशांतेनस्वरक्षार्थंप्रबंधयेत्॥ वृद्धयाज्ञवल्क्य
सुश्वलायनः॥ नीवीवासोदशांतेनस्वरक्षार्थंप्रबंधयेत्॥ वृद्धयाज्ञ
वल्क्यस्तु॥ दक्षिणेकटिदेशेतुतिलैःसहकुशत्रयं॥ यत्तुकात्यीय
नीवीकार्यादशायुतिर्वामकुक्षौकुशैःसहेतितद्वृद्धिश्राद्धे॥ पितॄणांदक्षिणेपार्श्वेविपरी
तानुदैविक॥ इतिस्मृत्यंतरात्॥ वामेदक्षिणेवेत्याचारात्व्यव
स्थेतिमदनपारिजाते॥ आचार्यः॥ प्राणायामत्रयंकृत्वागाय
त्रीस्मरणंतथा॥ श्राद्धकर्तासमीतिवदेत्विप्रैर्वाच्यंकुरुष्वच॥ ब्राह्मे॥
ततस्तिलान्गृहेतस्मिन्विकिरेच्चाप्रदक्षिणाम्॥ अहृयापरयायुक्तोजपेदपहतामित्य
चाप्रोक्षेत्॥ पराशरः॥ नहिष्मारितिमंत्रेणगायत्र्याच
प्रयत्नतः॥ प्रोक्षयेदन्नजातंतुशूद्रदृष्ट्यादिशुद्धये॥ हेमाद्रौब्रह्मांडे॥
श्राद्धभूमौगयांध्यात्वाध्यात्वादेवंगदाधरं॥ ताभ्यांचैवनमस्कारंततःश्राद्धंप्रवर्त्तते॥ देव
ताभ्यःपितृभ्यश्चमहायोगिभ्यएवच॥ नमःस्वधायैस्वाहायैनित्यमेवनमोनमः॥ आदि
मध्यावसानेषुत्रिरावृत्त्यंजपेद्बुधः॥ पितरःक्षिप्रमायांतिराक्षसाःप्रद्रवंतिच॥ त
त्रैवस्कांदे॥ तिलारक्षंतसुरान्दर्भारक्षंतिराक्षसान्॥ पंक्तिंवैश्रोत्रि
योरक्षेदतिथिःसर्वरक्षकः॥ वसिष्ठः॥ शुद्धवतीभिःकूष्मांडीभिः
पावमानीभिश्चपाकादिप्रोक्षयेत्॥ अथदेवार्चा॥ तत्रप्रत्युप्त्वा
रमाद्यंतयोरापोदद्यादिसुक्तंचन्द्रिकास्मृत्यर्थसारेच॥ हेमाद्रौब्राह्मे॥
आसनेष्वासनंदद्याद्वामेवादक्षिणेपिवा॥ पितृकर्मणिवामेचदैवेदद्यात्तुदक्षिणे॥ प्र

चेतः॥ आसनेष्वासनं दद्यात्तु पाणौ काञ्चनम्॥ धर्मोसीत्यथ मंत्रेण गृह्णी
युस्तिलतान्कुशान्॥ धर्मोसि विशिराजा प्रतिष्ठित इति मंत्रतः॥ गालवः॥ द
र्भानादाय हस्ताभ्यां गृहीत्वा दक्षिणे करे॥ दैवे क्षणः क्रियतां तु निर्गुष्टकरं ततः॥ ॐ तथे
ति द्विजा ब्रूयुस्ते प्राप्नोतु भवानिति॥ कर्ता ब्रूयात्ततो विप्रः प्राप्नवानीति वै वदेत्॥ पृ
थ्वीचंद्रोदये बृहन्नारदीये॥ पृथ्वीचंद्रोदये बृहन्नारदीये॥
यवैर्दर्भैश्च विश्वेषां देवानामिदमासनम्॥ दत्त्वेति भूयो दद्याद्दैवे क्षण इति क्षणम्॥ तच्चप
क्षाचतुर्थ्या वा कार्यमिति स एव॥ ततोर्घ्यं कल्पयेदिति मन्वादयः॥ शौनकजयंताभ्यामर्घ्य
रहितस्य देवार्चनस्योक्तेराश्वलायनानां दैवेर्घ्यदानं नेति वोपदेवः॥ तन्न॥
परिशिष्टप्रयोगपारिजातविरोधात्॥ वृद्धिश्राद्धे तु दैवेप्यर्घ्यं दद्यात्॥ देवेभ्योपि पृथग्दद्या
त्॥ देवेभ्योपि पृथग्दद्यादिहार्घ्यं श्रुतिचोदनादिति॥ शौनकोक्तेः॥ अर्घ्य
पात्रं॥ पृथ्वीचंद्रोदये मात्स्यपाद्मयोः॥ पात्रं वनस्पतिमयं तथा पर्णमयं पुनः॥ जलजं
वापि कुर्वीत तथा सागरसंभवम्॥ ब्राह्मे॥ सौवर्णताम्ररौप्याश्मस्फाटिकं
शंखशुक्तयः॥ भिन्नान्यपि हि योज्यानि पात्राणि पितृकर्मणि॥ हेमाद्रौ प्रजा
पतिः॥ सौवर्णं राजतं ताम्रं खड्गं मणिमयं तथा॥ यज्ञियं चमसं वापि स्व
र्घार्थं हरये बुधः॥ अत्र विप्रैकत्वद्वित्वचतुष्ट्वादावप्यर्घ्यपात्रे द्वे एव॥ मानवसूत्रे तु॥ दै
वे श्वदैविके त्रीणि पित्र्ये एकैकमुभयत्र वेत्युक्तम्॥ तदेकविप्रपरं पात्रालाभपरं वेति हेमा
द्रिः॥ मदनरत्ने तु दैवे एकं पात्रमुक्तं॥ पृथ्वीचंद्रोदयेपि
त्रीणि पैतृकपात्राणि द्वे दैवे वैश्वदेविक इति॥ बृहत्पराशरोक्तेर्द्वे एवमाह॥
बह्वृचानां तु दैवे विप्रद्वित्वेप्येकमर्घ्यपात्रमर्हशौदयादित्युक्तं परिशिष्टे प्रयोगपारिजाते
च॥ कलिकायां हारीतः॥ दत्तमक्षय्यतां याति खड्गे ना
र्घ्यं तु यत्कृतम्॥ वृद्धमनुः॥ मृण्मयं दारुजं पात्रमयः पात्रं च यद्भवेत्॥
राजते दैविके कार्ये शिलापात्रं विवर्जयेत्॥ पुराणसमुच्चये मृन्मयं भवेत्तथा कांस्यं क्षार
कं जतुसंभवम्॥ त्रपुसीसलोहभवं सदा पात्रं विवर्जयेत्॥ तत्रैव॥ अ
ष्टांगुलं भवेत्पात्रं पित्र्याणां रजतं शुभम्॥ दशांगुलं तु देवानां सौवर्णं शक्तितः कृतम्॥ स्थाप
येदर्घ्यपात्रे द्वे सुजोत्तत्र कुशोपरि॥ द्वे द्वे पवित्रे विधिवत्पात्रयोश्चोपरि क्षिपेत्॥ यज्ञपार्श्वे
पवित्रेस्थ इति मंत्रेण पवित्रे छेदयेत्तु ते॥ ओषधीमंतरेच्छात्वा अंगुष्ठांगुलिपर्वणोः॥ न
खेन काष्ठेन लोहेन मृण्मयनखादिभिः॥ वशिष्ठः॥ तूष्णीं प्रो
क्ष्य भस्मापात्रे कुर्यादूर्ध्वबिले ततः॥ स्थापयेत्पात्रयुग्मं तु दत्वोपरिपवित्रके॥ वृ
द्धपराशरः॥ पात्रद्वयमथार्घ्यार्थं तैजसं चैकवस्तुनः॥ प्राङ्मुखोमरतीर्थेन शन्नोदेव्योदकं
क्षिपेत्॥ यवोसीति यवांस्तत्र तूष्णीं पुष्पाणि चंदनम्॥ मानवसूत्रे॥
सुमनसः प्रक्षिप्यात्र यवान्प्रक्षिप्येति॥ यवोसीति मंत्रः पाद्मे॥ यवोसि धान्यराजोसि वा

रुणीमधुमिश्रितः॥ निर्णीतःसर्वपापानांपवित्रमृषिभिःस्मृतम् ग
जोवावारुणीमधुसंयुतइतिपरिशिष्टपाठः॥ गोभिलेनतु॥ य
वोसिसोमदेवत्यइतितिलमंत्रोत्रस्वाहाप्रुक्तउक्तः॥ हेमाद्रौयमः॥
यवहस्तस्ततोदेवान्विज्ञाप्यावाहनंप्रति॥ आवाहयेदनुज्ञातोविश्वेदेवा
सइत्यृचा॥ वृद्धपराशरः॥ ततःसव्यकरन्यस्यविप्रदक्षि
णजानुनि॥ देवानावाहयिष्येहमितिवाचमुदीरयेत्॥ आ
वाहयेत्यनुज्ञातोविश्वेदेवासआगत॥ विश्वेदेवाःशृणुतेममितिमंत्रद्वयं
पठेत्॥ श्राद्धविशेषेविश्वेदेवानामाज्ञानेहेमाद्रौबृहस्पतिः॥
उत्पत्तिंनामचैतेषांनविदुर्येद्विजातयः॥ अयमुच्चारणीयस्तैर्मंत्रः॥
श्रद्धासमन्वितैः॥ आगच्छंतुमहाभागाविश्वेदेवामहाबलाः॥
येपत्रविहिताःश्राद्धेसावधानाभवंतुते॥ इदंचावाहनमर्घ्यपात्रासा
दनात्॥ प्राक्हेमाद्रिणोक्तं॥ तत्रकातीये: मा
क्कार्य्यंतत्रैवतत्सत्रात्॥ अन्येस्तदुत्तरम्॥ पृथ्वीचंद्रो
दयेशंखः॥ सयवंपुष्पमादायचरणादिशिरोंतकं॥ अर्च
नेत्यर्च्चनंकुर्य्यादंतरेचोदकंतथा॥ पित्र्येतुमूर्द्धादियादापर्य्यंतपित्र्ये
कार्य्यंतुपूजनंपादप्रभृतिमूर्द्धांतंदैविकेपूजनंभवेत्॥ शिरःप्रभृति
पादांतंनमोवइतियेनृकैः॥ इतिमदनरत्नेश्लोकः॥सोक्तेः॥
कल्पिकायांसंग्रहे॥० तिष्ठन्कृतांजलिर्भूत्वापठेन्मंत्रोसमाहितः
॥ विश्वेदेवाःशृणुतेमागच्छत्त्वपरंततः॥ हेमाद्रौजा१
तूकर्ण्यः॥० ततोर्घ्यपात्रसंपत्तिंवाचयित्वाद्विजोत्तमान्॥
तदग्रेचार्घ्यपात्रंतुस्वाहार्घ्या॥ इतिविन्यसेत्४ गार्ग्यः॥
दत्वाहस्तेपवित्रंचकृत्वापूजांचपादतः॥ यादिव्याइतिमंत्रेणहस्ते
त्वर्घ्यंविनिक्षिपेत्॥ संग्रहे॥ विश्वेदेवाइदंवो
र्घ्यमितिदानंसमादिशेत्॥० तदंतेस्वाहानमः॥ इतिवा
च्यं॥ यादिव्याइतिमंत्रेणस्वाहाकारनमोंतकमितिहेमाद्रौनागरखं
डात्॥ अथवेणसूत्रेतुपाद्यमर्घ्यमाचमनीयमितिद्विजकरेनिनयेदि
त्यस्यैवत्रयमुक्तं॥ गभस्तिः॥ अर्घ्यंचपिंडप्रदा
नंचस्वस्त्यक्षय्येतथैवच॥ गंधपुष्पादिकंसर्वहस्तेनैवतुदापये
त्॥ प्रतिविप्रंयादिव्येमाद्दत्तिः॥ बह्वचानांत्वनेनदत्त्वा१
र्घ्यानुमंत्रणं॥ ततःपात्रंदक्षिणेदेवेभ्यः॥ स्थान
मसीतिन्युब्जमुत्तानंवाकार्यमितिगारुडेउक्तं॥ एतदापस्तंबानां

नियतमन्येमान॥ हेमाद्रौविष्णुधर्मे॥ गंधैःपुष्पै
श्वधूपैश्चवस्त्रैश्चाप्यथभूषणैः॥ अर्चयेद्ब्राह्मणान् शक्त्याश्रद्धानः
समाहितः॥ पृथ्वीचंद्रोदयेमार्कंडेयः॥ चंदनागरुक
र्पूरकुंकुमानिप्रदापयेत्॥ विष्णुः॥ चंदनकुंकुमकर्पूरा
गरुपद्मकान्यनुलेपनार्थेति॥ व्यासः अपवित्रकरोगंधे
गंधद्वारेतिसर्जयेत्॥ कालिकायांस्मृतिः॥ गंधद्वारेतिवेगंध
मापनेतेचपुष्पकं॥ धूरसीत्यमुनाधूपंउद्दीप्यस्वेतिदीपकं॥पुनर्वस्त्रा
णिमन्त्रेणवस्त्रंदद्यात्प्रयत्नतः॥ आसनेस्वासनंब्रूयात्अर्घ्येस्व
र्घ्यंद्विजोत्तमः॥ सुगंधश्चसुपुष्पाणिसुमाल्यानिसुधूपकं॥ सु
ज्योतिश्चेवदीयेतुस्वाच्छादनमितिक्रमः॥ विप्राणांगंधेनवर्तुलत्रि
पुंड्रदानकार्यं॥ हेमाद्रौदेवलः॥ ललाटेपुंड्र
वर्तुलमित्यपरार्के॥ मदनरत्नेच॥ पुंड्रंत्रिपुंड्रंवर्तुलम
र्द्धचंद्रंच॥ ऊर्ध्वंचतिलकंकुर्यान्नकुर्याद्दैत्रिपुंड्रकं॥ ऊ
र्ध्वंचतिलकंकुर्याद्दैवेपित्र्येचकर्मणि॥ निराशाःपितरोयांति
दृष्ट्वाचैवत्रिपुंड्रकमिति॥ वृद्धपराशरोक्तेः॥ तिर्य
ग्लेपोभवत्येवेवर्जयेत्तिलकंभालेश्राद्धकालेचसर्वदा॥ तिर्यगू
र्ध्वंत्रिपुंड्रंवाधारयेत्तुप्रयत्नतः॥ इतिव्यासोक्तेरितिपृथ्वीचंद्रः
पत्तुवृहन्नारदीयेऊर्ध्वपुंड्रंवर्तुलंश्राद्धेनेच्छंतिकेचनेति॥ तन्क
न्नृपरं॥ हेमाद्रौब्राह्मे॥ तिलकंमृगनाभिंचरोचना
रक्तचंदनं॥ कालेयकंतुग्रगंधंतुरुष्कंचापिवर्जयेत्नकस्तुर्यादिक
ल्प॥ इतिहेमाद्रिः॥ वृद्धशातातपः॥ प
वित्रंतुकरेकृत्वायःसमालभतेद्विजान्॥ राक्षसानांभवेच्छ्राद्धंनि
राशैःपितृभिर्गतैः॥ पुष्पंतुब्राह्मे जातिचंपकलोध्राश्चम
ल्लिकाबाणबर्बरी॥ चूताशोकाटरूषंचतुलसीशतपत्रकं॥
कुब्जकंतगरंचैवभृंगमारण्यकेतकी॥ यूथिकामतिमुक्तंचश्रा
द्धयोग्यानिभोद्विजाः॥ कमलंकुमुदंपद्मंपुंडरीकंचयत्नतः॥
इंदीवरंकोकनदंकल्हारंचनिवेदयेत्॥ हेमाद्रौवायुभविष्य
योः॥ सुकुमारैःकिसलयैर्यवदूर्वांकुरैरपि॥ संद्र
जनीयाःपितरःश्रेयःकामेनसर्वदा॥ स्कांदे॥ जात्यश्चस
र्वदातव्यामल्लिकाश्वेतयूथिका॥ जलोद्भवानिसर्वाणिकुसु
मानिचचंपकं॥नैवदद्यात्तुः॥ननियुक्तःशिखावर्जमाल्यंशिरसिधारयेत्॥वर्ज्या

निशथ्वीचंद्रोदयेभविष्ये॥ केतकीतुलसीपत्रंबिल्वपत्रंचवर्जयेत्॥ द्रोणंचकरवीरंचधत्तूरंकिंशुकंतथा॥ माधवीयेस्मृत्यर्थसारेचतुलसीनिषिद्धा॥ तुलसीनिषेधोनिर्मूलइतिहेमाद्रिः॥ समूलत्वेपिपिंडपरः॥ तुलसीगंधमाघ्रायपितरस्तुष्टमानसाः॥ प्रयांतिगरुडारूढास्तत्पदंचक्रपाणिनइतिप्रयोगपारिजातेयाम्योक्तेरितिबोपदेवः॥ बृहत्पराशरः॥ नजातिकुसुमैर्विद्वान्बिल्वपत्रैस्तुनार्चयेत्॥ जयादिकुसुमंभिंगीरूपिकासकुरंटिका॥ पुष्पाणिवर्ज्जनीयानिश्राद्धकर्मणिनित्यशः॥ हेमाद्रौशंखः॥ उग्रगंधीन्यगंधीनिचैत्यवृक्षोद्भवानिच॥ पुष्पाणिवर्जनीयानिरक्तावर्णानियानिच॥ जलोद्भवानिदेयानिरक्तान्यपिविशेषतः॥ चजाग्निः॥ नजातिकुसुमानिदद्यान्नकदलीपत्रमिति॥ जात्याविकल्पइतिहेमाद्रिः॥ निषेधःपिंडविषयः॥ कुंदपुष्पंभोचनोदद्यान्नोलमंगरुडध्वजे॥ पिंडेजातीचनोदद्याद्देवीमर्काणांनार्चयेत्॥ इतिद्वयात्तत्कल्पोक्तेरितिबोपदेवः॥ स्मृतिसारे॥ अगस्त्यंभृंगराजंचतुलसीशतपत्रकं॥ चंपकंतिलपुष्पंचषडेतेपितृवल्लभाः॥ केतकीकरवीरंचबकुलंकुरुंटकंतथा॥ पाटलींचैवजातींचश्राद्धेयत्नेनवर्जयेत्॥ केचित्पिंडेपितुलसीमाहुः॥ पितृपिंडार्चनंश्राद्धेयैःकृतंतुलसीदलैःप्रीणिताःपितरस्तैस्तुयावच्चंद्रार्कमेदिनीतिमार्कंडेयोक्तेः॥ धूपस्तत्रैवविष्णुधर्मे॥ धूपस्तुगुग्गुलोदेयस्तथाचंदनसारजः॥ अगरुश्चसकर्पूरस्तुरुष्कस्त्वक्तथैवच॥ विष्णुः॥ घृतमधुयुक्तंगुग्गुलुश्रीखंडदेवदारुसरलादिदद्यादिति॥ तत्रैवदेवलः॥ येहिप्राणिगजाधूपाहस्तवानाहताश्चये॥ नतेश्राद्धेनियोक्तव्यायेचकेचोग्रगंधयः॥ घृतंचकेवलंदद्याद्दुग्धंवाचरणगुग्गुलं॥ दीपमाहविष्णुः॥ घृतेनदीपोदातव्यस्तिलतैलेनवापुनः॥ वसामेदोद्भवंदीपंप्रयत्नेनविवर्जयेत्॥ वस्त्रंब्राह्मे॥ श्राद्धेष्वेतानिदेयानिकौशेयंक्षौमकार्पासंदुकूलमहतंतथा॥ हेमाद्रौत्रसलेवस्त्रे॥ यज्ञोपवीतदानस्यवस्त्राभावेविजानता॥ मानाप्नोतिचोत्तमान्॥ पितृभ्योवस्त्रदानस्यफलंतेनाप्रते खिलं॥ तत्रैवयाम्ये॥ निष्क्रयोवायथाशक्तिवस्त्राभावेप्रदीयते॥ अन्यान्यपिचदेयानितत्रैवकालिकापुराणे॥ धात्वादिनिर्मितारम्यादीपि

कोश्राद्धकर्मणि॥ पित्रनुद्दिश्ययोदद्यात्सभवेभ्राजनंश्रियः॥ यो
धूपदानपात्रंतुयात्रमभार्त्तिकस्यच॥ दद्यात्पितृभ्यःप्रयतस्तस्यस्वर्गेस्थयाग
तिः॥ विष्णुधर्मे॥ यःकंचुकंतथोष्णीषंपितृभ्यःप्रतिपादयेत्॥
ज्वरोभ्दवानिदुःखानिसकदाचिन्नपश्यति॥स्त्रीणांश्राद्धेतुसिंदूरंदद्युश्चंडातकानिच॥
निमंत्रिताभ्यःस्त्रीभ्योयेतेस्युःसौभाग्यसंयुताः हेमाद्रावादित्यपुराणे॥
नक्षत्रवर्णोदातव्यंनापिकार्पाससंभवं॥ पितृभ्योनापिमलिनंत्नोपयुक्तंक
दाचन॥ नछिद्रितंनापदशंनधौतंकारुणापिच॥ कार्पासनि
षेधोन्यसंभवे॥ तत्रैव॥ पित्रनुसत्कृत्यवासोभिर्दद्यात्यज्ञोपवी
तकं॥ यज्ञोपवीतदानेनविनाश्राद्धंतुनिष्फलं॥ एतद्यतिस्त्रीशू
द्रश्राद्धेष्वपिदेयमितिहेमाद्रिः तत्रैवनृसिंहपुराणे॥ कमंडलुं१
ताम्रमयंश्राद्धेषुप्रददातियः॥ काष्ठेननिर्मितंवापिनारिकेलमथापिवा॥
दद्यात्कमंडलुंश्राद्धेसश्रीमानभिजायते॥ योमृत्तिकाविरचितान्श्राद्धेषुच
षकान्शुभान्॥ प्रदद्यात्करकान्वापिसोक्षयंविंदतेसुखं॥ तत्रैव॥
उपानच्छत्रवस्त्राणिभुक्तिपात्रंकमंडलुं॥ शयनाशनयानादिदर्पणंव्यज
नानिच॥ अन्नंसुसंस्कृतंगंधांतांबूलंदीपचामरं॥ पितृभ्योयःप्र
यच्छेत्तुविष्णुलोकंसगच्छति॥ सौरपुराणे॥ चामरंतालवृंतंच
श्वेतछत्रंचदर्पणं॥ दत्वापितृणामेतानिभूमिपालोभवेदिह॥
तत्रैवनंदिपुराणे॥ अलंकाराःप्रदातव्यायथाशक्तिहिरण्मयाः॥
केयूरहारकटकमुद्रिकाकुंडलादयः॥ स्त्रीश्राद्धेषुप्रदेयाःस्युरलंकारास्तु
योषितां॥ मंजीरमेखलादामकर्णिकाकंकणादयः॥ तथा॥
आदर्शव्यजनंछत्रशयनाशनपादुकाः॥ मनोज्ञाःपटवासाश्चसुगंधाश्चूर्ण
मुष्टयः॥ अंगारधानिकाःशीतियोगपट्टाश्रयष्टयः॥ कटिसूत्रा
णिरौप्याणिमेखलाश्चैवकंबलाः कर्पूरादेश्चभांडानितांबूलायतनंयथा॥
भोजनाधारयंत्राणियनद्धाहास्तथैवच॥ तथांजनशलाकाश्चकेशानांचप्र
साधनम्॥ एतान्दद्यात्तुयःसम्यक्सोश्वमेधफलंलभेत्॥ स्कांदे
सौवर्णंराजतंवापिकांस्येनाप्यथनिर्मितं॥ दत्वाभोजनपात्रंतुसम्राटभ
वतिभूतले॥ वामनपुराणे॥ वंदीकृतास्तुयेकेचित्स्वयंवापद्विषा
परैः॥ येनकेनाप्युपायेनयस्तान्मोचयतेनरः पितरस्तस्यगच्छंति
शाश्वतंपदमव्ययं॥ पराशरः॥ वाचयेत्परिश्रांत्वासोदत्वावि
धानतः॥ नारदीये॥ देवेश्चसमनुज्ञातोपजेत्पितृगणांत्वय॥
तत्रपित्र्येत्वासनाद्यशेषमर्चनकांडंवैश्वदेविकंज्ञेयं॥विशेषस्तूच्यते॥तत्रासनेद्विगुणाभु

ग्राः कुशाः॥ अत्रावाहनमासनान्तं वार्घ्यस्वर्णोत्तरं वाऽग्नौकरणान्तं वेति स्मृ
तिषु पक्षा उक्ताः॥ स्वशाखाभेदेन व्यवस्था॥ द्वितीयपक्षस्तु
बहुसंमतः॥ तत्रार्घ्यमाहाश्वलायनः॥ तैजसाश्ममयमृण्मयेषु
त्रिषु पात्रेष्वेकद्रव्येषु वा दर्भान्तर्हितेष्वपः॥ शन्नोदेवीरभीष्टय इत्य
नुमंत्र्य तिलानावपति तिलोसि सोमदेवत्यो गोसवो देवनिर्मितः॥ प्रत्नवद्भिः
प्रत्तः स्वधया पितॄनिमांल्लोकान्प्रीणयाहि नः स्वधा नम इति॥ अश्म
मयं स्फाटिकादि॥ मृन्मयं हस्तघटितमेव॥ कुलालचक्रनिष्पन्न
मासुरं दैविकं ननु॥ तद्देवहस्तघटितं दैविकं केवलं तथेति छंदोगपरिशिष्टा
त्॥ अन्यान्यपि पात्राणि स्वयमुक्तानि॥ मनुः॥ अन्नाभावे
द्विजाभावे यद्येको ब्राह्मणो भवेत्॥ पात्राण्यासादयेत्त्रीणि न तु ब्राह्मणसं
ख्यया॥ दत्तकादेः कर्तुर्द्विपितृत्वादावपि वचनात्त्रीण्येव पात्राणीति हरिह
रः॥ माधवीये वैजवापः॥ अर्घ्ये पितॄणां त्रीण्येव कुर्या
त्पात्राणि धर्मवित्॥ एकस्मिन्वा बहुषु वा ब्राह्मणेषु यथाविधि॥
हेमाद्रावप्येवं॥ अत्रानुमंत्रणं सकृत्॥ तिलोसीत्यस्य प्रतिपा
त्रमावृत्तिः॥ पितृशब्दस्यानूहश्चेति वृत्तिकृत्॥ दर्भाश्च त्रिगुणाः पवि
त्रम्॥ तिस्रः तिस्रः शलाकास्तु पितृपात्रेषु पावने॥ एकोद्दि
ष्टे शलाकैकां निधायोदकमाहरेत्॥ इति हेमाद्रौ चतुर्विंशतिमतात्॥
तत्रैव विष्णुः॥ दक्षिणाग्रेषु दर्भेषु दक्षिणापवर्गं चमसेषु पवित्रान्तर्हितेष्वप आसि
च्य शन्नोदेवीरिति मंत्रेण जलासेचनं तच्च भिन्नविषयं अस्मिन्पक्षे प्रतिपात्रं मंत्रावृ
त्तिः॥ कारिकायां॥ गंधपुष्पाणि चैतेषु पात्रेषु प्रक्षिपेदथ॥
ब्राह्मे॥ जलं क्षीरं दधि घृतं तिलतंडुलसर्षपान्॥ कुशाग्रमधुपु
ष्पाणि दत्त्वा वामे ततः स्वयम्॥ जानूकार्यः॥ ततोऽर्घ्यपात्रसंपत्तिं
वाचयित्वा द्विजोत्तमान्॥ तदग्रे चार्घ्यपात्राणि स्वधार्घ्या इति विन्यसेत्॥
ततस्तिलहस्तो विप्रसव्यजानो दक्षिणावारन्यस्यावाहनमिच्छेत्॥ अत्र गो
त्रसंबंधनामानि द्वितीयांतत्वं च प्रागुक्तं॥ वैजवापगृह्ये॥ ति
ष्ठन्पितॄनावाहयिष्यामीत्यामंत्र्य॥ कौर्मे अपसव्यं ततः कृत्वा पितॄणां द
क्षिणामुखः॥ आवाहनं ततः कुर्यादुशंतस्त्वेत्यृचा बुधः॥ आ
वाह्य तदनुज्ञातो जपेदायंतु नस्ततः॥ अत्र सव्यस्यापि प्रागुक्तो विकल्पः॥ अ
त्राद्यमंत्रादस्मत्पितरममुकशर्माणममुकगोत्रं वसुरूपमावाहयामीत्याद्युक्त्वा मूर्धा
दिपादांतं तिलान्विकीर्य पुनरन्तिसर्वान्ते सकृज्जपेदिति निबंधाः॥ अत्रो
पवेशनसंदेशनयोरर्घ्याचमनीयान्यपि हेमाद्रिणोक्तानि॥ नात्यर्थं वर्णावेदिनां नियता

तितान्येषाम्॥तेषांचप्रपितामहादिपित्र्यंतंप्रातिलोम्येनसर्वःप्रयोगः॥वाराहे॥गंधपुष्पा
र्चनंकृत्वादद्याद्हस्तेतिलोदकं॥ गार्ग्यः॥ शिरसःपादतोवापि
सव्यमभ्यर्च्ययेत्ततः॥ ततःस्वधार्घ्याइतिपितृपितामहादिविप्रायेप्रत्येकंनि
वेदयेदितिकारिकायांहेमाद्रौच॥ आश्वलायनः॥ अपसव्येनत
स्पात्रंगृहीत्वायज्ञोपवीतित्वाद्दक्षिणेनवासव्योपगृहीतेनपितरिदंतेऽर्घ्यंपिताम
हेदंतेऽर्घ्यंपितामहेदंतेऽर्घ्यमित्यपःक्षर्वंतःप्रतिग्राहयिष्यन्स्वदन्स्वदत्स्वधाअर्घ्याइति
स्कुति स्वनुस्रत्रास्वनुमंत्रयीतयादिव्याआपः पृथिव्यासंब
भूवुर्याअंतरिक्षाउतपार्थिवीर्याः॥ हिरण्यवर्णाययज्ञियास्तानआपः
शंस्योनाभवंत्विति॥ अर्घ्यादिप्राग्गंधादेर्यज्ञोपवीतमेव॥ अ
र्घ्यदानमप्रागमात्रयोर्दद्यात्॥ यद्यप्यत्रसव्येनदक्षिणेनवार्घ्यंदद्यादित्यु
क्तं॥ तथापिदक्षिणेनेत्यभिमतोर्थः॥ कारिकायांहेमाद्रौचैवम्
पित्रादेस्त्रिभिःपात्रैर्दद्यात्॥ पितुःस्थाने विप्रत्रयंचेत्एकार्घ्यंवि
भज्यदद्यात्॥ त्रयाणांस्वधार्घ्याइतिसकृन्निवेदनं॥ एवंमाता
महादावपि॥ अन्यजलदानमर्घ्यमंत्राश्चप्रतिविप्रमावर्त्तते॥ तेषु
गंधादौचप्रतिविप्रंपदार्थानुसमयःकांडानुसमयोवा॥ पित्रादित्रया
णामेकविप्रपक्षेत्रिभिःपात्रैरेकस्मैवार्घ्यंदद्यादितिवृत्तिः॥ कारिकापि॥
स्वधार्घ्याइत्यपोर्घ्यास्ताउपवीतीनिवेदयेत्॥ निवेदनात्प्राक्प्राचीनावी
तमेवेत्यर्थः॥ अर्घ्यंसशेषमादायदक्षिणेनतुपाणिना॥
सव्यहस्तगृहीतेनतिनयेत्पितृतीर्थतः॥ दत्वादत्वातिनीतास्तायादि
व्याचानुमंत्रयेत्॥ यत्तु॥ यादिव्याइतिमंत्रेणहस्तेष्वर्घ्यंविनिक्षि
पेत्॥ इति॥ यच्चवाराहे॥ तिलांबुनाचापसव्यंदद्या
दर्घ्यादिकंद्विजइति॥ यच्चव्यासः गोत्रसंबंधना
मानिपि तृणामनुकीर्त्तयन्॥ एकैकस्यतुविप्रस्यअर्घ्यपात्रंविनि
क्षिपेत्॥ इति॥ तद्धस्तातिरिक्तविषयं॥ ततआचामेत्॥
एवंमातामहेष्वपि॥ आश्वलायनः॥ संस्रवान्समवनीयत
भिरद्भिःपुत्रकामोमुखमनक्तिसंस्रवः॥शेषः॥ संस्रवोहिपरिशिष्टोभवतीति
शतपथश्रुतेः॥ केचित्तुहस्तगलितांबुवदंति॥ समवनीयांत्यदे
पात्रेपितृपात्रेआसिंचेदितिवृत्तिः॥ प्रथमेपात्रेसंस्रवान्समवनीयेतिका
तीयसूत्राच्च॥ ब्राह्मेतु॥ प्रतिबिंबानुलोकनमुक्तं
स्कांदे॥ आयुःकामस्यनेत्रासेचनमुक्तं॥ पित्र्येविप्रैःप्राङ्मु
खस्यकर्त्तुरभिषेकःकार्यइतिकेचित्॥ आश्वलायनः नोद्धरेत्प्र

तिरसमन्नस्यमंडलेनविवर्जितं॥ हेमाद्रौहारीतः॥ भूमावेवनि
दध्यान्नोपरिपात्राणीति॥ तानितुहेमाद्रावत्रिराह॥ भोजनेहैम
रौप्याणिदैवेपित्र्येयथाक्रमम्॥ हारीतः॥ राजतपार्णताम्रकांस्य
पात्राणिभोजनेइति॥ अन्यान्यपिहेमाद्रावत्रिराह॥ सौवर्णानी
रौप्याणिकांस्यानितदसंभवे॥ अन्यान्यपिहिकार्याणिदारुजान्य
पिजानता॥ नायसान्यपिकार्याणियेत्रलानिनतुकचित्॥ न
चसीसमयानीहशस्यंतेत्रपुजान्यपि॥ अत्रिः॥ पंचाशत्पलिकंकां
स्यंद्व्यधिकंभोजनायवै॥ गृहस्थैस्तुसदाकार्यमभावेहेमरौप्ययोः॥
पालाशेभ्योविनानस्युःपर्णपात्राणिभोजने॥ पृथ्वीचंद्रस्तु॥ कां
स्यपात्रेहविर्दत्त्वानिराशाःपितरोगताइतिब्रह्मोक्तेः॥ कांस्यपात्रनिषेधमा
ह॥ बोपदेवस्तुस्मृतिसंग्रहमुदाजहार॥ आर्द्रपलाशपात्राणि
मधूकोदुंबराणिच॥ पारिकाकुटजप्लक्षकाकचानिकमाजगुः॥
कदलीचूतपनसजंबुपुन्नागचंपकाः॥ अलाभेमुख्यपात्राणांग्राह्याः
स्युःपितृकर्मणीति॥ हेमाद्रौतुकदलीपत्रनिषेधमाहांगिराः॥
नजातीकुसुमानिदद्यान्नकदलीपत्रमिति॥ क्रतुः॥ असुराणांकुले
जातारंभाश्चर्वपरिग्रहः॥ तस्यादर्शनमात्रेणनिराशाःपितरोगताः॥
एवंपात्राण्यासाद्यभस्ममर्यादांकृत्वाविप्रहस्तशोधनंकुर्यात्॥ तत्रपिशं
गरक्षाणेइतिमंत्रद्वयंकेचित्पठंति॥ मात्स्येअकृत्वाभस्ममर्यादांयःकुर्या
त्पाणिशोधनं॥ आसुरंतद्भवेच्छ्राद्धंपितॄणांनोपतिष्ठते॥ तत्रैवब्र
ह्मांडे॥ प्रक्षाल्यहस्तपात्रादिपश्चाद्भिर्विधानवित्॥ प्रक्षालनज
लंदर्भैस्तिलैर्मिश्रंक्षिपेच्छुचौ॥ मंडलोपरीतिहेमाद्रिः॥ अथा
ग्नौकरणम्॥ हेमाद्रौमार्कंडेयः॥ आहिताग्निस्तुजुहुयाद्दक्षि
णाग्नौसमाहितः॥ अनाहिताग्निश्चौपासनेअग्न्यभावेद्विजेप्सु वा॥ वा
यवीये॥ आहृत्यदक्षिणाग्निंतुहोमार्थंवैप्रयत्नतः॥ अग्न्यर्थेलौकि
केप्वापिजुहुयात्कर्मसिद्धये॥ आहिताग्निःसर्वाधानी॥ अर्द्धाधा
नीतुगृह्येग्नावेवेतिचंद्रिका॥ यदर्कमितात्क्षरमाधवादयः॥ तस्यापिदक्षिणा
ग्नौ॥ लौकिकोगृह्यइतिहेमाद्रिः॥ कल्पतरुश्च॥ आद्यपक्षएवतुयुक्तः
बहुसंमतश्च॥ यद्यपिस्मार्तेमग्नौकरणंश्रौतेदक्षिणाग्नौनयुक्तं॥ तथापिवच
नाद्भवतीतिहेमाद्रिचंद्रिकादयः॥ इदंदर्शश्राद्धएव॥ आद्धिकादिषुतुस
र्वाधानीयाग्नौअर्द्धाधानीगृह्येकुर्यादिति॥ हेमाद्रिमाधवश्च॥ पक्षांतकर्मनिर्वर्त्य
वैश्वदेवंचसाग्निकः॥ पिंडयज्ञंततःकुर्यात्ततोन्वाहार्यकंबुधइति॥ लौगाक्ष्यादिभिःक्ता

यमं पात्रं पितॄणामर्घ्यपातितं॥ आरनालं तु तिष्ठति पितरः शौनकोऽब्रवीत्॥ यावद्विप्रविसर्जनमिति तुर्यपादे यमीयपाठः॥ अत्रिः॥ पितृपात्रं समुन्नयन् देशान्न चालयेदाश्राद्धसमाप्तेः॥ यस्मान्नवनीयपात्रेणाश्नाश्नति॥ यद्वा प्रथमपात्रमेवन्यग्विलं कुर्यादिति॥ कामाभावे यदिदमेव शेषप्रतिपादनं॥ हेमाद्रौ कौर्मे॥ संस्रवांश्च ततः सर्वान्पात्रे कुर्यात्समाहितः॥ पितृभ्यः स्थानमसीति न्युब्जं पात्रं निधापयेत्॥ स्कन्दपुराणेऽयमस्तुः॥ येनार्कं प्रथमं पात्रं तस्मिन्ये नामहन्यसेत्॥ प्रपितामहं ततो न्यस्य नोद्धरेन्न च चालयेदिमाह॥ अथ संस्रवानानीय वृतीयेनाच्छाद्य न्युब्जीकुर्यादिति सर्वैकवाक्यतयार्थ इति केचित्॥ अत्रिः गंधादिभिस्तदभ्यर्च्य तृतीयेनापिधापयेत्॥ पितृभ्यः स्थानमसीति प्रोद्देशेऽर्चितैर्चयेत्॥ अर्चनं न्युब्जीकृते पितुरसां॥ न्युब्जमुत्तरतो न्यसेदिति प्रचेतसोक्तेः॥ सर्वविप्रोत्तरतो न्यसेदिति हेमाद्रिकल्पतरू॥ विप्रवामे इति हलायुधः॥ कर्तुर्वामे इति शूलपाणिः॥ उत्तानं क्षिप्तं वापि पितृपात्रेण तद्भवेदिति उशनसोक्तेन्युब्जनैव साधुः॥ मातामहादिसंस्रवानपि पितृपात्र एव गृहीत्वा प्रयाजवत्तत्रेण न्युब्जीकुर्यादिति शूलपाणिः॥ एकोद्दिष्टे तूहेन न्युब्जीनेति पितृभक्तौ श्रीदत्तः॥ यमोपि स्यात्स्पृष्ठान्नमन्यत्र नीतिमुह्यादितितथा॥ यावद्द्वादशाब्दं तत्पात्रं श्रुपितरस्तं शयंतिच॥ वैश्वदेवे उत्तानमिति मदनपारिजातः॥ वैजवापः॥ तस्योपरि कुशान्दत्वा प्रदद्याद्देवपूर्वकं॥ गंधपुष्पाणि धूपं च दीपं वस्त्रोपवीतके॥ अत्र गंधादेर्दैवे पित्र्ये च पदार्थानुसमयस्य याज्ञवल्क्योक्तकांडानुसमयेन विकल्पो ज्ञेयः॥ बहृचानां तु सूत्रे देवानुक्तेः कांडानुसमय एव॥ अत्र प्राचीनावीती नामगोत्रं संबुध्यायुक्तं प्राक्॥ अत्र दैववत्॥ तदंते चाचमनं च॥ हेमाद्रौ कालिकापुराणे॥ निर्वर्त्य ब्राह्मणादेशात्क्रियामेवं यथाविधि॥ भाजनानि ततो दद्याद्धस्तशौचं पुनः क्रमात्॥ आदेशात्पात्राणि दद्यादित्यन्वयः॥ तेन तत्रापि प्रश्नानुज्ञेयौ॥ तत्रैव ब्राह्मे॥ मंडलानि च कार्याणि नैवारैश्चूर्णकैः शुभैः॥ गौरमृत्तिकया वापि भस्मना गोमयेन वा॥ भृगुः॥ भस्मना वारिणा वापि कारयेन्मंडलं ततः॥ चतुःकोणं द्विजाग्र्यस्य त्रिकोणं क्षत्रियस्य तु॥ मंडलाकृतिर्वैश्यस्य शूद्रस्याभ्युक्षणं स्मृतं॥ बहृचपरिशिष्टे तु दैवे चतुरस्रं पित्र्ये वर्तुलं मंडलं कृत्वा क्रमेण सयवान्सतिलांश्च दर्भान्दद्यादित्युक्तं॥ मार्कंडेयः॥ यातुधानाः पिशाचाश्च क्रूराश्चैव राक्षसाः॥ हरं

उध्रियतामग्नौचक्रियतामित्यामंत्र्यपतेकाममुध्रीयतांकाममग्नौचक्रियतामित्यतिसृष्ट
उद्धरेज्जुहुयाच्च॥ नष्टाग्निविधुरादेर्विशेषोबृहन्नारदीये॥ नष्टाग्निर्वि
धुरभार्य्यश्चयावैरोसमुपस्थिते॥ संधायाग्निंततोहोमंकृत्वातंविसृजेत्पुनः॥
अयाश्चेतितत्कालेग्निंसंधायहुत्वात्यजेदित्यर्थः॥ एतदापस्तंबानामेव॥या
ग्निहोमस्तुछंदोगादीनां॥ विश्वप्रकाशेपि॥ साग्निरौपासनेन
ष्टेकुर्वीतलौकिके॥ यागेहोमंत्रशंसंतितत्वापस्तंबशाखिनां॥
स्नातकाविधुरावास्युर्येदिवाब्रह्मचारिणः॥ अग्नौकरणहोमंतुकुर्युस्तेलौ
किकेनले॥ अयाश्चाग्नेमनोज्योतिरुदुध्यव्याहृतीर्हुनेत्॥ ततोनु
जातोग्नौधनाधाज्यभागौतेयन्मेमातेत्याद्यैर्जुहुयात्॥ तत्रसप्तान्नाहुतयः
षडाज्यस्येतित्रयोदश॥ व्यत्ययोवा॥ यथायन्मेमाताप्रलुलो
भतन्मेरेतः पितावृंक्तांपाभिरंतीतिद्वाभ्यांअमुष्मैस्वाहेतिपितुर्नाम्नाद्वौहोमौ
॥यन्मेपितामहीप्रलुलोभतन्मेरेतःपितामहोवृंक्तांअंतर्दधेइतितन्नाम्नापितामहायद्वौ
यन्मेप्रपितामहीतन्मेरेतःप्रपितामहोवृंक्तांअंतर्दधेऽरनुभिरितितन्नाम्नाप्रपितामहाय
द्वौ॥ मातामहेतुऊहः॥ यन्मेमातामहीतन्मेमातामहोवृंक्ताम्॥
अन्यंमातामहाद्धृदमित्यादौ॥ यन्मेमातुःपितामहीप्रलु०रेतोमातुःपितामहो
वृंक्तां॥अन्यंमातुःपितामहाद्धृदं॥ यन्मेमातुःप्रपितामहीप्रलु० रेतोमातुःप्रपिता
महोवृंक्तां॥ अन्यंमातुःप्रपितामहाद्धृदं॥ सर्वत्रामुष्माइत्यत्रङे॰तंत
त्तन्नामयोज्यं॥ तद्गृह्यसंग्रहे॥ योज्यःपित्रादिशब्दानांस्थानेमाता
महादिकः॥ अन्नहोमेतथास्पर्शेजलपिंडादिदानके॥ यन्मेमाताम
हीत्यादितःश्रोदाहरणंभवेत्॥ ततोयेचेहेत्येकान्नाहुतिः॥ ततःस्वा
हापित्रेइत्यादिषडाज्यंहुत्वास्विष्टकृतंहुत्वासर्वभक्ष्यंकिंचिदादायोद्दग्धंभस्मापोह्यतद्
भूमौस्वाहाकारेणजुहोति॥ परिषेचनंतुस्थालीपाकवत्॥ अ
यमग्नौकरणहोमोमासिकश्राद्धएव॥ तच्च॥स्मार्त्ताग्न्यभावेनकार्यमितिकेचित्॥
कार्यमेवेतिबहवः॥ अतएवसर्वाधानिनोहोमवर्जंमासिश्राद्धमुक्तंसुदर्शनभा
ष्ये॥ महालयेतद्दित्येके॥ प्रकरणांतरत्वात्कर्मांतरत्वेनस्मार्त्तेपा
र्वणवत्कार्यमितित्वस्मद्गुरवः॥ आब्दिकादिषुतुस्मार्त्तेपार्वणविधिरेव॥
एवंमातृवार्षिकादिषु॥ मासिश्राद्धविकृतावष्टकायांमातृश्राद्धेवैकृतहोमेन
प्राकृतहोमबाधः॥अन्वष्टकासुमातृश्राद्धेनेतिभाष्ये॥तत्रापिश्राद्धांतरवत्क्रिया
मार्गोतुयन्मेमातेत्यादौगुणत्वेपिमातृप्राधान्यंविवक्षितं॥मासिश्राद्धेनकल्पोव्याख्या
तइतिसूत्रात्॥आग्नेय्येवमतेनाकार्येतिवचनादग्निशब्दस्यैववैकृतदेवताभिधायि
त्वम्॥तेनामुष्माइत्यत्रामुकशर्मभ्यांपितृभ्यामित्याद्यूहःकार्यः॥तच्चमासिश्राद्धंजीव

मोक्तेर्विहृतदक्षिणाग्निसत्वात्॥ अतएवात्रवचनेसाग्निकः॥ आहिताग्नि
रुक्तोहेमाद्रिणा॥ एतदापस्तंबादीनामेव॥ आश्वलायनस्याहिताग्नेःपाणा
वेवेतिवृत्तिः॥ अर्द्धाधानिनःगृह्यएवव्यतिषंगेणेतिप्रयोगपारिजातेपरिशिष्टेच॥
वोपदेवस्त्वाह॥ होमशब्दःपिंडपितृयज्ञपरः॥ पितृयज्ञेतुजुहुयाद्दक्षिणा
ग्नौसमाहितः॥ श्राद्धेत्वौपासनाग्नौतुनिरग्निर्लौकिकेनले॥ अनग्निर्दूर
भार्यश्चपार्वणेसमुपस्थिते॥ संधायाग्निंततःकुर्यात्होममग्निंसमुत्सृजेदितित्रिकांड
मंडनोक्तेः॥ दर्शश्राद्धेगृह्याग्नावेवेतिलौकिकाग्न्यादिविधानंचतैत्तिरीयादिविषयम्
बह्वृचस्यत्वनग्नेरपिपाणिहोमएव॥ अग्निपाणीविनासूत्रेविधानात्तदनु
क्तेः॥ दर्शश्राद्धेगृ॥ अग्न्यभावेतुविप्रस्यपाणावेवोपपादयेदितिमनूक्तेश्च
॥वृत्तावप्येवम्॥ कांचित्साग्नेरपिपाणिहोमउक्तोगृह्यपरिशिष्टे।
अन्वष्टक्यंचपूर्वेद्युःसाग्नीनांवन्हौहोमोविधीयते॥ पित्र्यब्राह्मणहस्तेस्याद
न्येषुचतुर्ष्वपीति॥ एकोद्दिष्टसपिंडीकरणेषुद्देतन्निषेधात्
बह्वृचभाष्यकारास्तुसर्वैकोद्दिष्टेषुपाणिहोममाहुः॥ इदंबह्वृचानामेव।
अत्रेरतत्वं॥ स्थालीपाकेनसहपिंडार्थमुद्धृत्येतिसूत्रेनात्रापूर्वः॥
स्थालीपाकश्चोद्यते॥ सर्वश्राद्धेषुप्रसंगात्॥ तेनानुवादोयमि
तिवृत्तिकारोक्तेः॥ पार्वणेआर्थिकस्यानंगस्यव्यतिषंगस्यवार्षिकादिष्व
नतिदेशादर्द्धाधानिनोपिपाणिहोमएवेतिवृत्तिस्वरसः॥ एवंमासिकाद
वपि॥ षोडशेमासिकेश्राद्धेसपिंडीकरणेतथा पाणावेवतुहोत
व्यमन्यत्राग्नौतुहूयते॥ इतिवोपदेवोदाहृतवचनाच्च॥ भाष्यका
रमतेतु॥ सूत्रेस्थालीपाकेनेतिकरणत्वान्नित्यवच्छ्र वणाच्च
पार्वणेसांगम् अतःकाम्यादिषुतदभावेकार्यस्यपिंडदानस्याप्यभावः॥
एतदेवानुसृत्यविकृतावपिवार्षिकादौव्यतिषंगउक्तः॥ प्रयोगपारिजातेपरिशि
ष्टेच॥ तेनैतन्मतेऽर्द्धाधानिनोऽग्नावेव॥ वस्तुतस्तुस्थालीपाके
नसहशाखयाप्रस्तरंप्रहरतीतिवत्सहभावमात्रश्रुतेः पत्नीवतेत्वष्टुरुपलक्ष
णमिवनांगत्वम्॥ नत्वेवानांगानुरोधेनप्रधानभूतपिंडदानत्यागोयुक्तः॥
तेनव्यतिषंगाभावेप्यग्नौहोमोभवतीतिवोपदेवः॥ अनाहिताग्नेर्गृह्याग्निमतः
स्तुसर्वमतेऽग्नावेव॥ वार्षिकादौवृत्तिमतेव्यतिषंगोनअन्यमतेत्वस्ति॥
अत्रयथाचारमनुष्ठेयं॥ आश्वलायनः॥ उद्धृत्यघृताक्तमन्नमनुज्ञापयत्य
ग्नौहोमोभवतिकरिष्येकरवैकरवाणीतिवाप्रत्यभ्यनुज्ञाक्रियतांकुरुष्वकुर्वित्यथाग्नौ
जुहोतियथोक्तंपुरस्तादिति॥ व्यतिषंगपक्षेइदमितिवृत्तिः॥
करवैकरवाणीत्यत्राग्नावित्यनुषंगः॥पुरस्तात्तुपिंडपितृयज्ञे॥तच्चैवम्॥मेक्षणेनाधा

नम इतिस्वाहाकारेणवाग्निःसर्वयज्ञोपवीतीमेक्षणमनुप्रहरत्येति॥ अवदानसंपदाउ
पस्तरणाद्युएवेत्यर्थः॥ अग्निमंगपक्षेऽप्रतिप्रणीतेयंहोमोन्यथामुख्यो॥ अ
तिप्रणीतेऽग्न्याविधाप्युपसमाधायेतिबह्वृचपरिशिष्टात्॥ केचित्तस्यरक्षोनिवर्ह
णार्थत्वान्मुख्यंवदंति॥ तदेतद्विरोधाच्चिंत्यं॥ प्रयोगपारिजातेप्येवं॥ शौ
नकः॥ स्वाहाकारेणहोमेतुभवेद्यज्ञोपवीतवान्॥ प्रयोगपारिजातेपि॥ तत्र
प्राग्रग्रयेहुत्वापश्चात्सोमायहूयते॥ अग्नौयज्ञोपवीत्येवप्रक्षिपेन्मेक्षणंततः॥
छंदोगपरिशिष्टे॥ अग्नौकरणहोमश्चकर्तव्यउपवीतिना॥ अपसव्येनवा
कार्योदक्षिणाभिमुखेनच॥ कातीयानांत्वपसव्येनैव॥ पिंडपितृयज्ञव
द्धुत्वेतिसर्वातिदेशात्॥ सव्यंतुछंदोगपरं॥ गोभिलेनैतदुत्तरमेवापसव्यो
क्तेः॥ छंदोगाजुहुयुःसव्येनापसव्येनयाजुषाइतिवृद्धयाज्ञवल्क्योक्तेश्च॥
अथपाणिहोमः आश्वलायनः॥ अभ्यनुज्ञायांपाणिष्वेवेति॥
पिंडपितृयज्ञकल्पाभावेनाग्न्यभावेकाम्यादिष्वित्यर्थः॥ तेनबह्वृचानामेको
द्दिष्टेपाणिहोमोभवत्येवनिषेधोन्यपरः॥ पाणिष्वितिवचनात्सर्वविप्रपाणि
षुहोमइतिवृत्तिः॥ एवंमातामहेपि॥ शौनकोपि॥ सर्वेषामुपवि
ष्टानांविप्राणामथपाणिषु॥ विभज्यजुहुयात्सर्वंसोमायेत्यादिमंत्रतः॥
यत्तुहेमाद्रौकात्यायनः॥ पित्र्येयःपंक्तिमूर्द्धन्यस्तस्यपाणावनग्निकः॥
हुत्वामंत्रवदन्येषांतूष्णींपात्रेषुनिक्षिपेत् इति॥ तद्बह्वृचातिरिक्तानां॥
यत्तुतत्रैवमात्स्ये॥ अग्न्यभावेतुविप्रस्यपाणौवा जलेपिवा॥ अज
कर्णेऽश्वकर्णेवागोष्ठेवाथशिवांतिके इति॥ तत्तीर्थश्राद्धविषयं॥ तथ
दायांसमीपेस्याच्छ्राद्धंज्ञेयोविधिस्तदेतितत्रैवकात्यायनोक्तेः॥ निर्जलेत्वज
कर्णादौयत्तुचंद्रोदयेयमः॥ दैवविप्रकरेऽनग्निःकृत्वाग्नौकरणंद्विजइति॥
तदभार्यपरम्॥ अपत्नीकोयदाविप्रःश्राद्धंकुर्वीतपार्वणम्॥ पित्र्य
विप्रैरनुज्ञातोविश्वेदेवेषुहूयतेइति॥ तत्रैवकात्यायनोक्तेः॥ हूयते
इतिछांदसोप्यत्ययः॥ हेमाद्रौवायवीये॥ विधुरोदैविकेकुर्यात्
शेषंपित्र्येनिवेदयेत्॥ दैवविप्रानेकत्वेतत्रैव॥ वैश्वदेवेयदेकस्मिन्
भवेयुर्बहवोद्विजाः॥ तदेकपाणौहोतव्यंसाद्विधिर्विहितस्तदा॥ सोप्या
द्यः॥ प्रथमंवानियम्यतेतिन्यायात्॥ तेनमृतभार्यस्यदैवेहोमः॥ अनु
पनीतब्रह्मचार्यादेस्तुपित्र्ये॥ अग्न्यभावःस्मृतस्तावद्यावद्भार्यांनविंदतीति॥
हेमाद्रौजातूकर्ण्योक्तेः॥ सभार्यस्तुपाग्नेरपिपित्र्यविप्रकरेइतिपृथ्वीचंद्रः
उपवीतेनदैवहोमःप्राचीनावीतेनपित्र्ये॥ यदासर्वत्रदैवपित्र्यकरयोर्विकल्पइतिहेमा
द्रौमदनपारिजातेच॥ यदातुपितृमातामहयोर्दैवपित्र्यविप्रभेदेनपाणिहोमइत्यपरा

कौचंद्रिकादयः॥ यदा तु दैवं तत्रैव तदा तंत्रेण सकृद्देवपाणिहोम इति केचित्॥ हे
माद्रिस्तु मातामहस्य भेदेपि कुर्यात्तंत्रेण साग्निक इति कात्यायनस्मृतेर्भेदमाह॥ एवं
पित्रेपि माधवीयेप्येवं॥ एवं साग्नेरपि विदेशादौ पाणिहोमो ज्ञेयः॥ य
त्तु कर्केण साग्निं विना श्राद्धमेव नास्तीत्युक्तं तत्सपिंडीकरणवार्षिकाद्यकरणपरत्वेन यत्किं
चिद्देवपरं तु बृहन्नारदीये॥ अनग्निर्दूरभार्यश्च प्रवासे समुपस्थिते॥
श्राद्धेभिः कारयेच्छ्राद्धं साग्निके विधिवद्द्विजाः॥ क्षयाहदिवसे प्राप्ते स्वस्या
ग्निर्दूरगो यदि॥ तथैव भ्रातरस्त्वश्वे लौकिकाग्नावितिस्थितिः॥
औपासनाग्नौ दूरस्थे समीपे भ्रातरि स्थिते॥ यद्ययं जुहुयाद्वापि पाणौ वा स
ह्विपातकी॥ औपासनाग्नौ दूरस्थे केचिदिच्छंति सत्तमाः॥ पाणावेव तु
होतव्यमिति नैतत्समंजसं॥ तद्वहेनादराद्युपेक्ष्यं॥ हेमाद्रेयं
मः॥ अग्नौकरणवत्तत्र होमो विप्रकरे भवेत्॥ यद्युस्याद्दर्भनासी
र्यपतो ह्यग्निसमो द्विजः॥ भक्षणे न करेण वा होमः भक्षणे प्रहरणे
नेति वृत्तिः॥ स्मृतिरत्नावल्यां॥ नानुज्ञा पाणिहोमे स्यान्नतः पर्यूहनोक्षणे
नाग्नेर्नमधादिति वचनस्यानामिधमक्षणे॥ कर्काचार्योप्येवमाह॥
माधवीये चंद्रिकायां चानुज्ञादि सर्वं भवतीत्युक्तं॥ पाणिहोमप्रकारमाह
परार्के शौनकः॥ अनग्निकश्चेदाज्यं गृहीत्वा भवत्स्वेवाग्नौकरणमिति पृष्ट्वै
वं तथास्त्विति॥ आश्वलायनः॥ यदि पाणिष्वाचांतेष्वन्यदन्नमनुदि
शत्यन्नमन्ने हुतं स्विष्टं दत्तमध्रुवमिति॥ पाणौ हुतं पात्रे निधाय विधाय विप्रेणाचम्य
भोजनार्थमन्ने परिविष्टे हुतशेषं पात्रेषु दद्यादित्यर्थः॥ स्वृत्तप्रभूतम्॥ नैमित्ति
कं चेदमाचमनं न हुतभक्षणनिमित्तं अन्ये पाणितले दत्तं पूर्वमश्नंत्यबुद्धयः॥ पि
तरस्तेन तृप्यंति शेषान्नेन लभंति च॥ यच्च पाणितले दत्तं पश्चादन्नमुपकल्पि
तम्॥ एकीभावेन भोक्तव्यं पृथग्भावो न विद्यते॥ इति बह्वृचपरिशि
ष्टात्॥ हेमाद्रावप्याचमने हेत्वर्थवाद उक्तः॥ पाणिपात्रो हि द्विजः स्मृत इति
भाष्ये त्वाचांतेषु भक्षितेषु॥ चषु भक्षणे॥ भक्षणोत्तरं च नाचमनं॥
अग्निसाम्यात्॥ पूर्वनिषेधस्तु सपिंडीकरणे त्वेपः दद्यादिति चोदितत्वात्॥ तत्र
त्रा जुहोतिचोदितत्वादित्युक्तं तन्वेतद्बहुसंमतं॥ मत्तु बौधायनेन॥ तस्मिंस्तु
प्राशिते दद्याद्यदन्नं प्रकृतं भवेदिति भक्षणमुक्तं तत्तच्छाखीयानामेवेति हेमाद्रिः॥
तंत्रैव यमः॥ पित्र्यपाणिहुताच्छेषं पितृपात्रेषु निःक्षिपेत्॥ अग्नौकरणशेषं तु न दद्या
द्वैश्वदेविके॥ एतदग्निहोमेपि समं॥ तथा कर्कस्तु॥ स्वे स्वे हुतशेषं दत्त्वेत्यविशेषात्सर्वे
विप्रेषु दद्यादित्याह॥ तत्रैव बृहस्पतिः॥ पित्र्यविप्रकरे हुत्वा शेषं पा
त्रेषु निक्षिपेत्॥ पिंडेभ्यः शेषयेत्किंचिन्न दद्याद्वैश्वदेविके॥ अथापस्तंबसूत्रम्॥

उद्ध्रियतामग्नौ च क्रियतामित्यामंत्र्य पात्रे काममुद्ध्रियतां काममग्नौ च क्रियतामित्यतिसृष्ट
उद्धरेज्जुहुयाच्च॥ तथापि विधुरादेर्विशेषो बृहन्नारदीये॥ तथाग्निहे
रभार्यस्य यावद्वर्णोऽसमुपस्थिते॥ संधायाग्निं ततो होमं कृत्वाग्निं विसृजेत्पुनः॥
अयाश्चेति तत्कालेऽग्निं संधाय हुत्वा त्यजेदित्यर्थः॥ एतदापस्तंबानामेव॥ पा
णिहोमस्तु छंदोगादीनां॥ विश्वप्रकाशेपि॥ साग्निरौपासने तः
ग्नौ कुर्वीत लौकिके॥ पाणौ होमं प्रशंसंति तत्वापस्तंबशाखिनां॥
स्नातका विधुरा वा स्युर्यदि वा ब्रह्मचारिणः॥ अग्नौकरणहोमं तु कुर्युस्ते लौ
किकेऽनले॥ अयाश्चाग्ने मनोज्योतिरुद्ध्व्याहृतीर्हुनेत्॥ ततोनु
ज्ञातोग्नौ धनाधाज्यभागौ तेयन्मे मातेत्यादीन्जुहुयात्॥ तत्र सप्तान्याहुतयः
षडाज्यस्येति त्रयोदश॥ व्यत्ययो वा॥ यथा यन्मे माता प्रलुलो
भ तन्मे रेतः पिता वृंक्तामाभ्यंतोऽवपद्यतां अमुष्मै स्वाहेति पितुर्नाम्नाद्यो होमो
॥यन्मे पितामही प्रलुलोभ तन्मे रेतः पितामही वृंक्तां अन्तर्दधेऽद्भिरिति तन्नाम्ना पितामह्या यद्वो
यन्मे प्रपितामही तन्मे रेतः प्रपितामही वृंक्तां अन्तर्दधे ऋतुभिरिति तन्नाम्ना प्रपितामहाय
द्वौ॥ मातामहे तु नूहः॥ यन्मे मातामही तन्मे मातामही वृंक्ताम्॥
अन्नं मातामहाद्वृद्धमित्यादौ॥ यन्मे मातुः पितामही प्रलु० रेतो मातुः पितामही
वृंक्तां॥ अन्नं मातुः पितामहाद्वृद्धं॥ यन्मे मातुः प्रपितामही प्रलु० रेतो मातुः प्रपिता
मही वृंक्तां॥ अन्नं मातुः प्रपितामहाद्वृद्धं॥ सर्वत्रामुष्यामुष्मा इत्यत्र ङेंतं तत्
तन्नाम योज्यं॥ तदूह्यसंग्रहे॥ योज्यः पित्रादिशब्दानां स्थाने माता
महादिकः॥ अन्नहोमे तथा स्पर्शे जलपिंडादिदानके॥ यन्मे मातामं
हीत्यादितः प्रोदाहरणं भवेत्॥ ततो येचेहेत्येकाज्याहुतिः॥ ततः स्वा
हा पितृभ्य इत्यादि राज्यं हुत्वा स्विष्टकृतं हुत्वा सर्वमन्यं किंचिदादायोदग्दग्धं भस्माप्सु हुत्वा तू
ष्णीं स्वाहाकारेण जुहोति॥ परिषेचनं तु स्थालीपाकवत्॥ अ
यमग्नौकरणहोमो मासिकश्राद्ध एव॥ तच्च॥ स्मार्ताग्न्यभावे न कार्यमिति केचित्॥
कार्यमेवेति बहवः॥ अत एव सर्वाधाने तु होमवर्जं मासिश्राद्धमुक्तं सुदर्शनभा
ष्ये॥ महालये तद्वदित्येके॥ प्रकरणांतरत्वात्कर्मांतरत्वेन स्मार्ते पा
र्वणवत्कार्यमिति त्वस्मद्गुरवः॥ आह्निकादिषु तु स्मार्ते पार्वणविधिरेव॥
एवं मातृवार्षिकादिषु॥ मासिश्राद्धविकृतावष्टकायां मातृश्राद्धे वैकृतहोमेन
प्राकृतहोमबाधः॥ अन्वष्टकासु मातृश्राद्धं नेति भाष्ये॥ तत्रापि श्राद्धांतरवत् क्रिया
मात्रेण तु यन्मे मातेत्यादौ गुणत्वेपि मातृप्राधान्यं विवक्षितं॥ मासिश्राद्धे तु कल्पो व्याख्या
त इति सूत्रात्॥ आग्नेय्येव मतौ नाकार्येति वचनादग्निशब्दस्येव वैकृतदेवताभिधायि
त्वम्॥ तेनामुष्या इत्यत्रामुकशर्मभ्यां पितृभ्यामित्याद्यूहः कार्यः॥ तच्च मासिश्राद्धं जीव

त्पित्रादिनामुक्तममृतपित्रादिनाचकार्यमित्युक्तंसुदर्शनभाष्येतत्प्रकारस्तुवक्ष्यते॥
मातापित्रोर्हिरण्यादौतुनोह॥तस्मात्तुचनोहेदितिनिषेधात्प्रकृतावूहाहाभार्याश्चपत्नी
संनह्येतिवत्॥उपदेशिमतेतूहः॥यथायन्मेमातरोप्रलुलुभश्चरन्त्यावनतुरतेऽस्याय
समतिलक्षतमासिश्राद्धनिर्णयेज्ञेयमितिदिक्॥ अन्यत्प्राग्वत्॥
अथपरिवेषणम्॥ तच्चोपनीतेनैवाज्येनदेवपूर्वमामासुपक्वमितिपा-
त्राण्युपस्तीर्यकुर्यादितिहेमाद्रिः॥ भारतेदानधर्मेपि॥ आमाहु
तिविनानैवयत्किंचित्परिविष्यते॥दुराचारैश्चयद्भुक्तंतंभागंरक्षसांविदुः॥ त
त्रैवशौनकः॥ विधिनादेवपूर्वंतुपरिवेषणमाचरेत्॥तत्रैवधर्मःफलस्था
नंतत्प्रोक्तास्वयंचपरिवेषणे॥ तत्रैवव्यासभविष्ययोः॥ भार्याया
श्राद्धकालेतुप्रशस्तंपरिवेषणं॥ ब्रह्मांडे॥ नापवित्रेणनैकेनहस्तेननविना
कुशं॥नायसेनायसेनैवश्राद्धेतुपरिवेषयेत्॥ वसिष्ठः॥ आयसेनतुपात्रेण
यदन्नंसंप्रदीयतेभोक्ताविष्ठासमंभुंक्तेदाताचनरकंव्रजेत्॥ पैठीनसिः॥
सीसकायसरीतिपात्राण्ययज्ञीयानि॥ तत्रैवहारीतः॥ सौवर्णराजताभ्यां
चखड्गेनौदुंबरेणवा॥दत्तमक्षय्यतांयातिफल्गुपात्रेणवापुनः॥ कार्ष्णाजिनिः॥
दर्व्यादेयंघृतंवान्नंसमस्तव्यंजनानिच॥उदकंचैवपक्वान्नंनोदर्व्यातुकदाचन॥ य
मः॥ पंक्त्यांविषमदानञ्चनिष्कृतिर्नचविद्यते॥ पृथ्वीचंद्रोदयेपराशरः॥
सर्वदाचतिलाग्राह्याः॥पितृकार्येविशेषतः॥भोज्यपात्रेतिलान्दृष्ट्वानिराशाःपितरो
गताः॥ चंद्रिकायांवृद्धशातातपः॥ हस्तदत्तास्तुयेस्नेहालवणव्यंजना
दयः॥पितृणांनोपतिष्ठंतिभोक्ताभुंजीतकिल्बिषं॥घृतपात्रेविशेषोयंयथांतरेओदने
परमान्नेचपात्रमासाद्यसुधीः॥घृतेनक्षरयेत्पात्रेनहृतंरुधिरंभवेत्॥घृतादिपात्रं
भूमौस्थापयेन्नभोजनपात्रे इतिमदनरत्ने॥संग्रहे॥ हस्तदत्तंतु
नाश्नीयाल्लवणंव्यंजनादिकं॥अपक्वंतैलपक्वंचहस्तेनैवप्रदीयते॥पात्रालंभ
नभुक्तंचतुर्विंशतिमते॥उत्तानंदक्षिणंसव्यंनीचंपात्रास्युपस्पृशेत्॥याज्ञवल्क्यः॥
दत्वान्नंपृथ्वीपात्रमितिपात्राभिमंत्रणम्॥कृत्वेदंविष्णुरित्यन्नेद्विजांगुष्ठंनिवेशये
त्॥ बौधायनः॥ विप्रांगुष्ठेनानखेनानुदिशतिपृथिवीतेपात्रंद्यौरपि
धानंब्राह्मणस्यमुखेऽमृतेऽमृतंजुहोमि॥ब्राह्मणानांत्वाविद्यावतांप्राणापानयोर्जु
होम्यक्षितमसिमामेपितृणांक्षेष्ठाअमुत्रामुष्मिंल्लोकइति॥आज्यंजुहोम्यग्नेस्वाहा
शब्दःकात्यायनसूत्रेउक्तः॥मैत्रेःस्वधाशब्दः॥अंगुष्ठेविशेषमाह॥ हेमाद्रौधौ
म्यः॥ परिहृत्यनखांगुष्ठंद्विजस्यान्नेनिवेशयेत्॥तथा॥उत्तानेनतुहस्तेनद्विजां
गुष्ठंनिवेशनम्॥यःकरोतिद्विजोमोहात्तद्रक्षांसिभुंजते॥तत्रैवयमः॥विष्णोर्हव्यंचकव्यं
चब्रूयाद्रक्षस्वचेत्क्रमात्॥दैवेपित्रेचेत्यर्थः॥तत्रैवात्रिः॥स्वधनामगोत्राणिरस्म

न्नं ततः स्वधा॥ पितृक्रमाददुदीर्यैतिस्वसत्त्रां विनिवर्त्तयेत्॥ हस्तेनामुत्तानमन्नाद्यमिदम् न्नमुदीरयेत्॥ अत्रान्नदाने चतुर्थ्यास्यादित्यादिविशेषाः पूर्वमुक्ताः अत्र पूर्वोक्तमंत्रा नेगत्र पुरूरवार्द्रसंज्ञकाविश्वेदेवादेवताइदमन्नंसपरिकरं हव्यं अयं ब्राह्मणस्वाहव नीयार्थेदत्तंदास्यमानंचातृप्तेः गयेयंभूः गदाधरोभोक्ताइदमन्नंब्रह्मसौवर्णायात्रस्य मन्नमक्षय्यवटच्छायास्यममुकेभ्यो विश्वेभ्योदेवेभ्यो इदमन्नममृतरूपंपरिविष्टप रिवेक्ष्यमाणं चातृप्तेः स्वाहानमोनममेति वल्हचपरिशिष्टहेमाद्र्याद्यनुमतः प्रयोगः॥ एवंपित्रेऽमुकगोत्रवसुरूपादितत्तन्नामतेय॥ ततोपेदेवासइतिदेवेयेचेहपितर॥ इतिपित्र्ये केचित्जपंतितन्नोऽच्छिद्रं वाचयेत्॥ तत्रैव प्रचेताः॥ आपोशानकरे वि प्रेसंकल्प्याच्छिद्रभाषणात् निराशाः पितरोयांतिदेवैः सहनसंशयः॥ पारस्करः॥ संकल्प्यपितृदेवेभ्यः सावित्रीमधुमज्जपः॥ श्राद्धंनिवेद्यापोशानंजुषध्वमितिवाच्य भोज नं॥ निवेद्येतिब्राह्मणार्पणंतस्येत्यर्थः॥ अतएवबह्वृचारदीयेऽन्नत्यागमुक्त्योक्तं ॥ दत्तंहविश्वतत्कर्मविष्णवेदेसमर्पयेदिति॥ यत्तुक्तस्तरले कार्ष्णाजिनिः॥ अपसव्येनकर्तव्यं पितृकत्यमशेषतः॥ अ न्नदानादृतेसर्वमेवंमातामहेष्वपीति॥ तदयेतत्परं॥ तच्चब्रह्मा र्पणं ब्रह्महविः हरिर्दातावतुर्भिश्चेतिकेचित्पठंति॥ धर्मप्रदीपे॥ ततोन्नंपि तृदेवेभ्यः संकल्प्य चयथाविधि॥ दत्तंयद्दास्यमानंचश्चातृप्तेर्नममेतिच॥ तथा॥ श्राद्धीयान्नस्यसंकल्पोभूमावेवप्रदीयते॥ हस्तेमुदीयमानंतु पितृणांनोपतिष्ठते॥ वैश्वदेवस्यवामेतुपितृपात्रस्यदक्षिणे॥ संकल्पोदकदानंस्यात्नित्यश्राद्धेयथारुचि॥ प्रचेताः॥ आपोशानंप्रदायाथसा वित्रीं त्रिर्जपेदथ॥ मधुवाताइतित्र्यृचंमध्वित्येतत्त्रिकंतथा॥ मि ताक्षरायांपारस्करः॥ संकल्प्यपितृदेवेभ्यः सावित्रीमधुमज्ज पः॥ श्राद्धनिवेद्यापोशानंजुषध्वेमेत्यथभोजनम्॥ गायत्रींत्रिः सकृद्वापिजपेच्छ्राद्धनिष्ठकोमधुवाताइतित्र्यृचमध्वित्येनत्रिकंतथा॥ याज्ञवल्क्यः॥ सव्याहृतिकांगायत्रीं मधुवाताइत्र्यृचं॥ ज ष्टायथासुखंच्छंभुजीरंस्तेपिवाग्यताः॥ यथासुखंजुषध्वमितिवा च्य॥ अत्रिः॥ असंकल्पितमन्नाद्यंपाणिभ्यांयत्तुपस्थेत्॥ अभोज्यंतद्भवेदन्नंपितृणांनोपतिष्ठते॥ अन्नंद त्तेनगृह्णीयाद्यावत्तोयंनसंपिबेत्॥ आपोशाने विशेषः स्मृतिसमुच्चये॥ आपोशानं वामभागेसुरापानसमंभवेत्॥ दक्षभागेतुयः कुर्यात्सोमपानफलंलभेत्॥ तथा॥ पुनराद्यप्यो पोशानंसुरापानसमंभवेत्॥ हेमाद्रावत्रिः॥ दत्तेवाप्यथ

प्रचेताः॥ भुंजानेषु तु विप्रेषु त्र्यग्यजुःसामलक्षणम्। जपेदभिमुखो भूत्वा पित्र्यं चैव विशेषतः। यजूंषी चैव रुद्रं च रक्षोघ्नी ऋच एव च। रक्षोघ्नीः कृणुष्वपाजः रक्षोहणं वित्याद्याः। तत्रैव निगमः॥ भुंजत्सु जपेत्सावमानी रुदीरत। मध्वन्नवतीश्च। अन्नवत्यः पितृनुस्तोषमिति। पृथ्वीचंद्रोदये भरद्वाजः। भुंजानेषु तु विप्रेषु प्रमादात्स्खलते गुदं। पादकृच्छ्रं ततः कृत्वा अन्यं विप्रं निमंत्रयेत्। स्खलनपाद्यादित्वेत्यर्थः॥ विप्रवमने तत्रैव दक्षः॥ निमंत्रितस्तु यः श्राद्धे भोजने मुखनिःसृते। तदैव होमं कुर्वीत स्वाग्नौ विप्रः समाहितः। प्राणादिपंचभिर्मंत्रैर्यावद्द्वात्रिंशसंख्यया। ब्राह्मणस्तु ततः कृत्वा घृतप्राशनमाचरेत्॥ ऋग्विधाने तु॥ इंद्रायसाम सूक्तेन श्राद्धविप्रो यदा भवेत्॥ अग्न्यादिभिर्भोजनेन श्राद्धं संपूर्णमेव हीत्युक्तम्। अग्न्यादिभिरिति लौकिकाग्निस्थापनचरुनिर्वापाद्यग्निभागांते नामगोत्रपूर्वमग्नौ पितृनावाह्य। संपूर्णान्नत्यागं कृत्वा प्राणादिभिर्द्वात्रिंशदाहुतीर्हुनेदित्यर्थः भोजनेन पुनः श्राद्धेन॥ तेन होमः पुनः श्राद्धं वेति पक्षद्वयमुक्तं। सूक्तजपस्तु उभयानुगतः॥ स्मृतिसंग्रहे॥ प्राधान्यं पिंडदानस्य भोजनस्य तदंगता। अतो भुक्तिक्रियाहानौ श्राद्धावृत्तिर्नेमन्यते। पिंडदानोत्तरं वांतौ होम एव नावृत्तिः। पिंडदानात्प्राग्वांतौ तद्दिन उपवासं कृत्वा परेद्युः पुनः श्राद्धं कार्यमित्यर्थः। तत्रैव॥ श्राद्धपंक्तौ तु भुंजानो ब्राह्मणो वमते यदि। लौकिकाग्निं प्रतिष्ठाप्य अर्चयेच्च हुताशनं। तथा॥ एक एव यदा विप्रो भोजने छर्दितो यदि। तदैवाग्निं समाधाय होमं कुर्याद्यथाविधि। द्वितीयपक्षे ऋग्विधाने। भोजनोपक्रमादूर्ध्वं प्रक्रमात्स्रवतो यदि। श्राद्धविघ्ने पुनः कार्यं जपहोमौ न तद्विदो॥ स्मृतिसंग्रहे॥ अकृते पिंडदाने तु भुंजानो ब्राह्मणो वमेत्। पुनः पाकात्नुकर्तव्यं पिंडदानं यथाविधि॥ पिंडदाने श्राद्धं॥ अकृते पिंडदाने तु पिता यदि वमेत्तदा। पुनः पाकं प्रकुर्वीत श्राद्धं कुर्याद्यथाविधीति। तत्रैवोक्तेः॥ तथा॥ पित्रादीनां त्रयाणां हि पिता च वमते यदि तद्दिने चोपवासः स्यात्पुनः श्राद्धं परेहनि॥ तथा वमने वा विरेके वा तद्दिनं परिवर्जयेत्। एषु वचनेषु मूलं चिंत्यम्॥ इदं मासिकाब्दिकविषयम्। दर्शादौ तु वांतावामेन तदैककार्यम्। श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्तितं। अमावास्यादिनियतं माससंवत्सरादृते इति मरीचिस्मृतेः श्राद्धे पिंडदानमेव प्राधान्यमिति कर्काचार्यः। तन्मते दक्षोक्तो होम एव नावृत्तिः॥ विप्रभोजनमिति मेधातिथिः॥ भोजनपिंडदानाग्नौकरणानीति कपर्दिधूर्तस्वामिहेमाद्र्यादयः॥ तन्मते पूर्वोक्तो निर्णयः। तत्र॥ अन्नत्यागमात्रं प्रधानम्। भोजनं तु प्रतिपत्तिरूपमंगं। अतो वांतौ तद्दानेपि नावृत्तिरिति गौडमैथिलादयः॥ श्राद्धस्य यागदानोभयरूपत्वात्। संपूर्णे दानाभावाद्भोजनस्यांगत्वेपि। सोमवमने स्वयुक्तं नैमित्तिकविधानमिति युक्तं प्रतीमः। अत्रेदं तत्त्वं। वैश्वदेविकस्य वमने होम एव नावृत्तिः॥ अंगत्वात्॥ तस्य रक्षार्थत्वात्॥ इष्टिश्राद्धे क्रतुदक्षादिविप्रादिस्थानेप्यत्र जपान्जुहुयादितिवत्। पितामहादेरपि तथा। पितेत्युक्तेरिति केचित्। तस्यापि प्रधानत्वात् पितृवदिति तु युक्तम्। सपिंडीकरणादौ वार्षिकवत्। सपिंडीकरणादीनि यानि श्राद्धानि षोडश। तत्र पिंडप्रधानत्वं मेनत्व विनिवर्तकमिति स्मृतेः। महैकोद्दिष्टादौ तूभयप्राधान्यादावृत्तिरेव। एक एव द्विजो भोज्यः पिंडेप्येको विधीयत इति स्मृतेः। वृद्धिसंकल्पनित्यश्राद्धादौ तु भोजनप्राधा-

न्याद्धांतादावावृत्तिरेव। वृद्धिश्राद्धे विकल्पेन पिंडदानं वृद्धैः स्मृतम्। नित्यश्राद्धमदैवं स्यात् पिंडदा
नविवर्जितमिति स्मृतेः। भुक्तिः क्रियायाः प्राधान्यं श्राद्धे संकल्पस्तत्त्वके। तेनैव पितृविप्रस्य त्व
घाते पुनः क्रियेति संग्रहोक्तेश्च॥ मघादावप्येवं। तीर्थमहालयादौ दर्शवदित्यापरार्कः। पाले
चनं न प्रतीमः। आश्वलायनः॥ तृप्तान् ज्ञात्वा मधुमतीः श्रावयेदक्षन्नमीमदंतेति च सम्प
न्नं पृष्ट्वा यद्यदन्नमुपभुक्तं तत्तत्। स्थालीपाकेन सह पिंडार्थमुद्धृत्य शेषं निवेदयेदभिमतेऽ
नुमते चेति। स्वगृह्यपत्नीमधिगन्ति विकल्पो विज्ञेयः। तृप्तान् बुध्वान्नमादाय सतिलं पूर्ववज्जपेदि
ति प्रचेतसोक्तेः। व्यासः॥ तृप्ताः स्थेति पृच्छेत् ब्रूयुस्तृप्ताः स्मः इत्यथ। अभिमते विप्रैः स्वीकर्तुमिष्टे
शौनकोपि॥ अन्नशेषैश्च किं कार्यमिति पृष्टे नतान्नतः। तेइष्टैः सहभोक्तव्यमिति प्रत्युक्तः पूर्व
कम्। प्रदद्युः सकलं तस्मै स्वीकुर्युर्वा यथारुचिः। श्राद्धविशेषे प्रश्नभेदमाह हेमाद्रौ विष्णुः। पि
त्र्ये स्वदितमिति गोष्ठ्यां सुशृतं सम्पन्नमित्यभ्युदये दैवे रोचत इति। आयुष्यमिति सैरिषु। स्वर
मिच्छाश्राद्धं याज्ञवल्क्यः। अन्नमादाय तृप्ताः स्थ शेषं चैवानुमान्य च। तदन्नं विकिरेद्भूमौ दद्या
च्चापः सकृत्सकृत्। इदं चात्र विकिरदानमन्यशाखिनां। आश्वलायनानां तु पिंडदानोत्तरमेव
स्तत्कृतोक्तं। कात्यायनस्तु विकिरोत्तरं गायत्र्यादिजपं तृप्तिप्रश्नं चाह। हेमाद्रौ देवलः॥ ततः सर्वा
न्नं पात्रे गृहीत्वा विविधं बुधः। तेषामुच्छिष्टस्थाने विकिरं भुवि निक्षिपेत्। माधवीये प्रचेताः॥
सार्ववर्णिकमादाय पेयन्नीति भुवि क्षिपेत्। स च कुशेषु कार्यः। दर्भेषु विकिरश्च यस्तु के। मंत्रश्चा
नीयः॥ अग्निदग्धाश्च ये जीवा येप्यदग्धाः कुले मम। भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिं। अन्ये
तु असोमपाश्च ये देवा यज्ञभागविवर्जिताः। तेषामन्नं प्रदास्यामि विकिरं वैश्वदेविकमिति हेमाद्रौ
गोभिलोक्तेन दैवे। असंस्कृतप्रमीता ये त्यागिन्यो याः कुलस्त्रियः॥ दास्यामि तेभ्यो विकिरमन्न
नाभ्यश्च पैतृक इति पुराणोक्तेन पित्र्ये अन्नं विकीर्य ये अग्निदग्धा इत्युच्छिष्टपिंडं कुशोपरि
पृथग्दद्यादित्याहुः॥ पृथ्वीचंद्रोदयेप्येवं ब्राह्मे। ततः प्रक्षाल्य हस्तौ च द्विराचम्य हरिं स्मरेत्॥
माधवीये गौतमः॥ विकिरमुच्छिष्टैः प्रतिपादयेत्। हेमाद्रौ व्यासः। उच्छिष्टैरेव विकिरं सदैव प्र
तिपादयेत्। भृगुः॥ पिंडवत्प्रतिपत्तिः स्याद्विकिरस्येति नोक्तिः॥ श्राद्धकाशिकायां यजमान
स्य दासादीनुद्दिश्य द्विजसत्तमः। तस्मादन्नं त्यजेद्भूमौ वामभागेषु पैतृके॥ मनुः॥ उच्छेषणं भू
मिगतमजिह्मस्याशठस्य च। दासवर्गस्य तत्पित्र्ये भागधेयं प्रचक्षते॥ विष्णुः॥ उदङ्मुखेष्वाचमन
मादौ दद्यात्ततः प्राङ्मुखेषु। पित्र्ये दैवे चेत्यर्थः॥ शातातपः॥ विश्वेदेवनिविष्टानां च समं हस्तधाव
नं॥ हेमाद्रौ वाराहे॥ हस्तं प्रक्षाल्य यश्चापः पिबेद्भुक्त्वा द्विजः सदा। तदन्नमसुरैर्भुक्तं निराशाः पित
रो गताः॥ मरीचिः॥ हस्तं प्रक्षाल्य गंडूषं यः पिबेदविचक्षणः। आसुरं तद्भवेच्छ्राद्धं पितृणां नोप
तिष्ठते॥ तत्रैव संग्रहे॥ पवित्रं ग्रंथिमुत्सृज्य मंडलेषु विनिक्षिपेत्। हस्तादीन् क्षालयेद्विद्वान् श
रावादौ तु कुत्रचित्॥ व्यासः॥ तांबूलोद्धिरणं चैव गंडूषोद्धिरणं तथा। कांस्यपात्रे तथा ताम्रे न कु
र्वीत कदाचन॥ उष्णोदकैर्धान्यचूर्णैः करौ प्रक्षाल्य शोधयेत्॥ ॥अथ पिंडदानं॥ तच्चा
र्चनोत्तरमग्नौकरणोत्तरं भोजनोत्तरं विकिरोत्तरं स्वधावाचनोत्तरं विप्रविसर्जनोत्तरं वेति हेमा

द्वौ स्मृतिषु पक्षावुक्तौ। तयोः शाखाभेदेन व्यवस्था॥ प्रेतश्राद्धेषु सर्वेष्वन्येषु भोजनोत्तरमिति चंद्रिकामाध
वौ॥ सर्वत्र भोजनोत्तरमिति बहवः। आश्वलायनः। भुक्तवत्स्वनाचांतेषु पिंडान्दद्याद् नाचांतेष्वेके।
भुक्तवत्स्विति पूर्वनिषेधार्थः॥ साग्निरग्निशरणसमीपे निरग्निर्द्विजसमीपे॥ हेमाद्रौ जातूकर्ण्यः॥ आ
मपात्रं समुत्सृज्य पिंडांस्तत्र प्रदापयेत्॥ समाप्ते तु भुंजानेष्वासः। अरत्निमात्रमुत्सृज्येति॥ यत्तु तत्रैव॥
सिकताभिर्मृदा वापि वेदीं दक्षिणनिम्नगेति तदग्निशालाविषयं॥ देवलः॥ ततस्तैरभ्यनुज्ञातो दक्षिणां
दिशमेत्य च॥ चंद्रिकायां॥ पिंडनिर्वपणं कार्यं कुशाभावे विचक्षणैः॥ काशैस्तु राजदूर्वासु पवित्रे परमे हि
ते॥ आश्वलायनः॥ स्फ्येन लेखामुल्लिखेदपहता असुरा रक्षांसि वेदिषद इति तामभ्युक्ष्य सकृदाच्छिन्नैरु
पस्तीर्य प्राचीनवीती लेखां त्रिरुदकेनोपनयेत् शुंधंतां पितरः शुंधंतां पितामहाः शुंधंतां प्रपितामहा इ
ति तस्यां पिंडान्निपृणीयादसावेतत्तेऽस्मै पित्रे पितामहाय प्रपितामहाय ये च त्वामत्रान्विति॥ हे
माद्रौ पारस्करः॥ अरत्निमात्रमुल्लिखेत्स्फ्येन कुशेन वापि महीं द्विजः। वक्रनानामेकेन करेण लेखा चाग्न्यभि
मुखेति वृत्तिः। दक्षिणाप्राचीं वेदिमुद्धृत्य तामपलवोक्षेत्॥ देवलः॥ आवाहयित्वा दर्भाग्रे लेखायास्था
नानि कल्पयेत्। तेषामासीनेषु पात्रेण प्रयच्छेत्सतिलोदकं प्राचीनेन निम्नपितृतीर्थेन। वायवीये॥
मधुसर्पिस्तिलयुतांस्त्रीन्पिंडान्निर्वपेद्बुधः॥ त्रिस्थलीसेतौ॥ तिलमन्नं च पानीयं धूपं दीपं पयस्त
था। मधु सर्पिः खंडयुक्तं पिंडमष्टांगमुच्यते॥ याज्ञवल्क्यः॥ सर्वमन्नमुपादाय सतिलं दक्षिणामु
खः। उच्छिष्टसन्निधौ पिंडान्दद्याद्वै पितृयज्ञवत्। केचित्पिंडेषु माषान्वर्जयंति। माषाः श्राद्धेषु
वैशाखावर्ज्याश्चैवाग्निपिंडयोः। ब्राह्मणेषु यथा मधं तथा माषोऽग्निपिंडयोरिति स्मृत्यर्थसारात्
माषान्सर्वेषु दद्यात्पिंडेऽग्नौ च विवर्जयेदिति स्मृत्यंतरे च। अत्र मूलं चिंत्यं। हेमाद्रावपि सर्वशब्द
स्य प्रकृतार्थत्वात्सर्वान्नग्रहणमुक्तं। अन्नशेषमन्नमनुज्ञाप्य सर्वमेकत्रोद्धृत्योच्छिष्टसमीप
दर्भेषु त्रींस्त्रीन्पिंडान्दद्यादिति गोभिलसूत्रे सर्वस्मात्प्रकृतादन्नात्पिंडान् मधुतिलान्वितां
निति च। शेषनियमात्तदभावे पिंडनिवृत्तिरिति मैथिलवाचस्पतिः॥ तन्न॥ तुषो यवा यवत्प
रप्रयुक्तद्रव्यवत्शेष्यपि कर्मत्वाद्गुणानुरोधेन प्रधानत्यागाच्च शेषलोपे पिंड्व्यांतरेण कार्यं।
अतो नेयं प्रतिपत्तिः किंतु प्रधानमित्युक्तं प्राक्॥ अन्यथा सपिंडीकरणादौ संयोजनादेः प्रधा
नस्य लोपापत्तेरिति दिक्॥ ॥अथ पिंडप्रमाणं॥ हेमाद्रौ अंगिराः॥ कपित्थबि
ल्वमात्रान्वा पिंडान्दद्याद्विधानतः॥ कुक्कुटांडप्रमाणान्वामलकैर्वदरैः समानिति॥ तत्रै
व स्मृत्यः॥ कपित्थस्य प्रमाणेन पिंडं दद्यात्समाहितः॥ तत्समं विकिरं दद्यात्पिंडान्ते तु षडंगुलं॥
अंत्येष्टिपद्धतौ भट्टास्तु॥ एकोद्दिष्टे सपिंडे च कपित्थं तु विधीयते। नारिकेलप्रमाणं तु प्रत्यब्दे
मासिके तथा। तीर्थे दर्शे च संप्राप्ते कुक्कुटांडप्रमाणतः॥ महालये गयाश्राद्धे कुर्यादामलको
पममित्याहुः। कलिकायामाचार्याः॥ यत्र स्युर्बहवः पिंडास्तत्र बिल्वफलोपमाः। यत्र चैको भवे
त्पिंडस्तत्र खर्जूरसन्निभः। प्रेतपिंडस्तु दैर्घ्येण द्वादशांगुल उच्यते इति॥ वायवीये॥ पत्नी पिंडं
तु गृह्णीयात्त्रिवर्गस्य सहायिनी। हेमाद्रौ लौगाक्षिः॥ महालये गयायां च प्रेतश्राद्धे दशाहिके।
पिंडशब्दप्रयोगः स्यादन्नमन्यत्र कीर्तयेत् शाट्यायनिः॥ असावेतत्तेऽस्त्वित्युक्ता तदंते च स्वधा नमः

असावित्यत्र संबंधरूपगोत्रादिविशिष्टपित्रादिनामसंबुध्यंतमुक्त्वा पुनश्चतुर्थ्यंतं तदंते य पिंडद
ध्यमन्नं वा स्वधा नमो न ममेति वदेदिति हेमाद्रिः॥ पित्रादिनामाज्ञाने त्वापस्तंबः॥ यदि नामानि न
विद्यात्स्वधा पितृभ्यः पृथिवीषद्भ्य इति प्रथमपिंडं दद्यात् स्वधा पितृभ्यो ऽन्तरिक्षसद्भ्य इति द्वितीयं।
स्वधा पितृभ्यो दिविषद्भ्य इति तृतीयं। एवं मातामहेषु मातृषु च। बह्वृचानां तूक्तं प्राक्। कलिकायां
स्मृतिः॥ यावद्देवो ऽवरोऽस्मिंस्तावन्नामाणि निरोधयेत्। येषां तु गृह्ये दर्शे मातृश्राद्धं पृथगुक्तं तेषां पितृ
भ्यः पश्चिमे मातृभ्यस्तत्पश्चिमे मातामहेभ्यः पिंडान्दद्यादिति शांखायनः। अस्मिन्पक्षे तत्पश्चि
मे मातामहीभ्योपि दद्यादिति हेमाद्रिः। पूर्वासु पितृभ्यो दद्यादपरासु स्त्रीभ्य इति सूत्राच्च। एवं प
त्नीतीर्थे महालयादौ। केचिदिच्छंति नारीणां पृथक् श्राद्धं महर्षय इति। चतुर्विंशतिमतात्॥
पित्रादि नवदैवत्यं तथा द्वादशदैवतमित्यग्निपुराणाच्च मातॄणां पृथगुक्तम्॥ यत्तु॥ आ
चार्यगुरुशिष्येभ्यः सखिज्ञातिभ्य एव च। तत्पत्नीभ्यश्च सर्वाभ्यस्तथैव च जलांजलीन्। पिंडं
स्तेभ्यः सदा दद्यात्पृथग्भाद्रपदे नरः। तीर्थेषु चैव सर्वेषु माघमासे मघासु चेति चतुर्विंशतिमते
दौहित्रपौत्रदाराश्च ये कनिष्ठाः सहोदराः निःसंतानमृता ये च तेभ्योप्यत्र प्रदीयते इति। भविष्ये
चैकोद्दिष्टान्युक्तानि तत्रापि तत्पश्चिमे पिंडदानं ज्ञेयम्। येषां न पृथक्ते सपत्नीकाः पित्राद्यो
वाच्याः। अन्वष्टकागयामातृश्राद्धं चैव मृतेऽहनि। एकोद्दिष्टं तथा मुक्त्वा स्त्रीषु नान्यत्पृथग्भवे
त् इति शंखोक्तेश्च। मनुः॥ तेषु दर्भेषु तं हस्तं निमृज्याल्लेपभागिनां। हस्तलेपाभावेऽपि हस्तमृ
ज्यादेवेति मेधातिथिः॥ विष्णुः॥ अत्र पितरो मादयध्वमिति दर्भमूले करावघर्षणं। कलिका
यां सुमंतुः॥ एकोद्दिष्टेषु वर्षासु दर्भलेपो न विद्यते। सपिंडीकरणादौ तु लेपः सर्वत्र शस्यते॥ म
नुः॥ आचम्योदक्परावृत्य त्रिरायम्य शनैरसून्। षडृतूंश्च नमस्कुर्यात्पितॄनेव च मंत्रवत्॥ उद
कं निनयेच्छेषं शनैः पिंडांतिके पुनः॥ त्रिःप्राणायामं कृत्वेति मेधातिथिः। अमंत्रमाणं निरुध्ये
तिकर्षोधः। मंत्रवद्दूसंतायनः॥ नमो वः पितर इत्याद्यैः शेषं पूर्वोवनयनशेषं॥ आश्वलाय
नः॥ निपृतान्नं तु मंत्रयेतात्र पितरो मादयध्वं यथाभागमावृषायध्वमिति सव्यावृदुदगावृत्या
यथाशक्त्यं प्राणान्नासित्वाभिपर्यावृत्यामीमदंत पितरो यथाभागमावृषायिषतेति चरेः भा
भक्ष्यभक्ष्येन्नित्यं निनयनमिति। निनयग्रहणं शेषाभावेऽपि कुर्यादित्यर्थः॥ शौनकः॥ अथै
षामत्र पितर इत्यादिनानुमंत्रणं। अमीमदंतेत्याद्येन मंत्रेणाप्यनुमंत्र्य तान्। पिंडशिष्टाच्चरो
रन्नं किंचिदाघ्राय तत्त्यजेत्। प्रक्षाल्याचम्य शुंधंतामित्याद्यैरेव पूर्ववत्। मंत्रैः पिंडेषु पानीयं
निषिंचेत्पितृतीर्थतः॥ व्यासः॥ अद्भिः प्रक्षाल्य तत्पात्रं प्रतिपिंडं तु पूर्ववत्॥ कृत्वावनेज
नं कुर्यात्पिंडपात्रमधोमुखं। एतत्कातीयादीनां॥ आचार्यः॥ ततः सम्यग्द्विराचम्य नीवीं
विस्रस्य वाग्यतः॥ आश्वलायनः॥ असावभ्यंक्ष्वासावभ्यंक्ष्वेति पिंडेष्वभ्यंजनांजने वा
सो दद्याद्दशामूर्णास्तुकां वा पंचाशद्वर्षस्याया ऊर्ध्वं स्वलोमैतद्वः पितरो वासो मा नातोन्यत्पि
तरो युङ्ध्वमिति॥ श्राद्धचिंतामणौ॥ ब्राह्मे॥ एतद्वः पितरो वास इति जल्पन्पृथक्पृथ
क् अमुकामुकगोत्रेतत्तुभ्यं वासः पटेद्बुधः॥ इदं कातीयानां॥ एतद्व इति सूत्राणि प्रति

पिंडमितितन्न सूत्रात्॥ हेमाद्रौब्राह्मे॥ श्रेष्ठमाहुस्त्रैककुदमंजनंनित्यमेवहि। तैलंकृसतिलेभ्यश्च
दद्यादभ्यंजनंहितत्॥ त्रैककुदंसुरमाइतिप्रसिद्धम्। अंजनप्राथम्यमापस्तंबादिविषयम्। तत्रैव
व्याघ्रः॥ गंधपुष्पाणिधूपंचदीपंचविनिवेदयेत्॥ देवलः॥ दक्षिणांसर्वभोगांश्चप्रतिपिंडंप्रदा
पयेत्। भक्ष्याण्यपूपानिसूपांश्चव्यंजनान्यशनानिच॥ तत्रैवशंखः॥ यत्किंचित्पच्यतेगेहेभक्ष्यंभो
ज्यमगर्हितं अनिवेद्यनभोक्तव्यंपिंडमूलेकथंचन। एतत्सव्येनेतिकेचित्॥ युक्तंत्वपसव्येन॥
मनुः॥ अवजिघ्रेच्चतान्पिंडान्यथान्युप्तान्समाहितः। ततोनमोवःपितरइषेइत्यादिनोपस्था
नं॥ मात्स्ये। अथाचांतेषुचाचम्यवारिदद्यात्सकृत्सकृत्। तिलपुष्पाक्षतान्पश्चादक्षय्योदक
मेवच। अत्रदैवेसव्यंपित्रेत्वपसव्यमितिकर्कः। परिभाषोक्तवचनात्सव्यमितियुक्तं। अत्रशिवाआ
पःसंतुसौमनस्यमस्त्वित्यादिप्रयोगोज्ञेयः॥ मात्स्ये॥ दत्वाशीःप्रतिगृह्णीयाद्द्विजेभ्यःप्राङ्मुखोबु
धः। अघोराःपितरःसंतुसंत्वित्युक्तःपुनर्द्विजैः। गोत्रंतथावर्द्धतांनस्तथेत्युक्तःसतैःपुनः। दातारो
नोभिवर्द्धंतामन्नंचैवेत्युदीरयेत्। स्वस्तिवाचनकंकुर्यात्पिंडानुद्धृत्यभक्तितः। स्वस्तिवाचनात्प्राक्
पात्रचालनंकार्यं॥ हेमाद्रौबृहस्पतिः। भाजनेषुचतिष्ठत्सुस्वस्तिकुर्वंतियेद्विजाः। तदन्नमसुरैर्भु
क्तंनिराशैःपितृभिर्गतैः॥ जातूकर्ण्यः॥ पात्राणिचालयेच्छ्राद्धेस्वयंशिष्योथवासुतः। नस्त्रीभिर्न
चबालेननासजात्याकथंचन॥ याज्ञवल्क्यः॥ स्वस्तिवाच्यंततःकुर्यादक्षय्योदकमेवच॥ तत्रैव
वृद्धशातातपः पितृणांनामगोत्रेणकरेदेयंतिलोदकं। प्रत्येकंपितृतीर्थेन। अक्षय्यमिदमस्त्वि
ति। अत्रषष्ठीप्रयुक्ता। तत्रैवनागरखंडे। उत्तानमर्घ्यपात्रंतुकृत्वादद्याच्चदक्षिणां। हिरण्यंदेवता
नांचपितृणांरजतंतथा॥ ॥बृहस्पतिः॥ तस्मात्पणंकाकिणींवाफलंपुष्पमथापिवा। प्रदद्या
द्दक्षिणांपश्चात्तयासफलताभवेत्॥ अन्नंपितृद्देशेनदक्षिणादानेऽपसव्यंविप्रोद्देशेनतुसव्यमि
तिमाधवः। कालिकायामाचार्यैःदद्याद्यज्ञोपवीत्येवतांबूलंदक्षिणांतथा॥ अत्रिः॥ वदेच्च
तांस्ततोविप्रान्पित्रादिभ्यःस्वधोच्यतां। गोभिलः॥ अघोराःपितरःसंत्वित्युक्तेस्वधांवाचयिष्य
इतिपृच्छतिपितृभ्यःस्वधोच्यतामित्युक्तेऽस्तुस्वधेत्युच्यमानोधारांदद्यादूर्जंवहंतीरमृतंघृतमि
ति। आपस्तंबेनतुप्रत्यानयोत्रानभितर्पयंतीरित्यपिपरिषेचनेमंत्रउक्तः॥ आश्वलायनः॥ अथै
तान्प्रवाहयेत्परेतनपितरःसोम्यासोगंभीरेभिःपथिभिःपूर्विणेभिः। दत्वायास्मभ्यंद्रविणेहभद्रं
रयिंचनःसर्ववीरंनियच्छतेति। मात्स्ये॥ वाजेवाजइतिजपन्कुशाग्रेणविसर्जयेत्। प्रचेताः॥
स्वस्तिवाच्यततःकृत्वापितृपूर्वंविसर्जयेत्॥ आश्वलायनः। अन्नंप्रकीर्योपवीतीपास्वधेतिवि
सृजेदस्तुस्वधेतिवा॥ ब्रह्मवैवर्ते॥ आमावाजेतिमंत्रेतुपठित्वाचप्रदक्षिणं। द्वारोपांतेततःकृत्वा
संपन्नःप्रविशेद्गृहं प्रांजलिश्चततःप्राहतान्विप्रान्सत्यवादिनः दातारोनोभिवर्द्धंतामन्नंचन
ऽस्तीवहि। एवमस्त्वितितेप्रोचुस्तंब्रुवंतिसमाहिताः। एतन्मंडलदेशेकार्यमिति हेमाद्रिः॥ मनुः॥ दा
तारोनोभिवर्द्धंतांवेदाःसंततिरेवच। श्रद्धाचनोमाव्यगमद्बहुदेयंचनोस्त्विति॥ बौधायनः॥ अन्नं
चनोबहुभवेदतिथींश्चलभेमहि॥ याचितारश्चनःसंतुमाचयाचिष्मकंचन दातारोनोभिवर्द्धंताल
भ्व्यंयाचिद्धमित्यागृह्येनपठित्वाद्विजैःप्रतिवचनंकार्यमितिसुदर्शनभाष्ये॥ स्वादुषंसदइत्यन्नंप्रको

येत्राह्मणाः पितर इति मंत्रद्वयं पठंति॥ शौनकः॥ ब्राह्मणानथ निर्यातान्परीत्य त्रिः प्रदक्षिणं॥ स
स्त्रीकः स्वजनैः सार्द्धं प्रणमेद्बद्धांजलिः॥ कनिष्ठः प्रथमाज्ज्येष्ठश्चरमास्तु प्रदक्षिणे॥ हेमाद्रौ बृह
स्पतिः॥ अद्य मे सफलं जन्म भवत्पादाभिवंदनात्। अद्य मे वंशजाः सर्वे याता वोऽनुग्रहाद्दिवं॥ पत्र
शाकादिदानेन क्लेशिता यूयमीदृशाः॥ तत्क्लेशजातं चित्तात्तु विस्मृत्य क्षंतुमर्हथ॥ प्रचेताः॥ विसृजे
द्भक्तिसंयुक्तः सीमांतं चाप्यनुव्रजेत्॥ ॥अथ पिंडप्रतिपत्तिः॥ हेमाद्रौ ब्रह्मांडे॥ पिंडमग्नौ
सदा दद्याद्भोगार्थी प्रथमं नरः। पत्न्यै प्रजार्थी दद्यात्तु मध्यमं मंत्रपूर्वकं॥ उत्तमां गतिमन्विच्छन्गोषु
नित्यं प्रयच्छति। प्रज्ञां प्रज्ञां यशः कीर्तिमप्सु पिंडं प्रवेशयेत्। प्रार्थयेद्दीर्घमायुर्वा वायसेभ्यः प्रय
च्छति। आकाशं गमयेद्वाप्सु स्थितो वा दक्षिणामुखः॥ आश्वलायनः॥ वीरं मे दत्त पितर इति पिंड
नां मध्यमं पत्नी प्राशयेत्। आधत्त पितरो गर्भं कुमारं पुष्करस्रजं। यथायमरपा असदिति मंत्रौ दत्तस्यापे
नादाने द्वितीयेन प्राशनं॥ आपस्तंबस्तु दाने मंत्रमाह॥ अपां त्वौषधीनां रसं प्राशयामि भूतकृतं गर्भं
धत्स्वेति मध्यमं पत्न्यै प्रयच्छतीति प्राशनेपि पथ्यत्र पुरुषो आसदिति तदीयः पाठः॥ अन्ये यानतव्या
ख्यायां क्षेपः॥ तत्रैव शंखः॥ पत्नी वा मध्यमं पिंडमश्नीयाद्दानैवाग्निना॥ कलिकायां छागलेयः॥ प्र
चीनावीतिना मांमंत्र्य पत्नी पिंडो विभज्यते। प्रतिपत्त्यस्य मंत्रस्य कर्त्रे व्याहरतिरस्तु॥ माधवीये विष्णुधर्मे
तीर्थश्राद्धे सदा पिंडान्क्षिपेत्तीर्थे समाहितः॥ याज्ञवल्क्यः॥ पिंडांस्तु गोजविप्रेभ्यो दद्यादग्नौ ज
लेपि वा। प्रक्षिपेत्सत्सु विप्रेषु द्विजोच्छिष्टं न मार्जयेत्॥ गवेऽजाय ब्राह्मणाय वा तदर्थिने पिंडा
न्दद्यात्। अग्नौ अगाधे जले वा प्रक्षिपेत्। विप्रेषु सत्सु भोजनदेशादस्थितेषु द्विजोच्छिष्टं न मा
र्जयेत्॥ नोद्वासयेत्॥ बृहस्पतिः॥ अन्यदेशगता पत्नी रोगिणी गर्भिणी तथा। तदा तं जीर्ण
वृषभश्छागो वा भोक्तुमर्हति॥ ॥अथ पिंडोपघाते हेमाद्रौ प्रायश्चित्तकांडे देवलः॥
श्वशृगालखरैः पिंडः स्पृष्टो भिन्नः प्रमादतः॥ कर्तुः पुण्यनाशः स्यात्तेन तत्रोपसर्पति॥ जातू
कर्ण्यः॥ पूर्वश्लोकांते तद्दोषपरिहारार्थं प्राजापत्यं प्रकल्पयेत्। पुनः स्नात्वा तदा कर्त्ता पिंडं कुर्या
द्यथाविधि॥ काकस्पर्शे न दोषः॥ पिंडोपघाते प्रकम्प। धनस्य च विनाशः स्यात्काकस्प
र्शादिकं विनेति तत्रैव श्लोके गौतमोक्तेः॥ स्मृतिदर्पणेऽत्रिः॥ मार्जारमूषकस्पर्शे पिंडे च विदु
लीकृते। पुनः पिंडः प्रदातव्यः स्नानेन पाकेन तत्स्मरणात्॥ बौधायनः॥ श्वचांडालादिभिः स्पृष्टे पि
डोपघ्रे पहन्यते। प्राजापत्यं चरित्वाथ पुनः पिंडं समाचरेत्॥ वोपदेवोप्येवमाह॥ दिनांतरे तु प्राजा
पत्यमात्रं। शेषप्रतिपत्तित्वेन पिंडरक्षणमानाभावादिति मेधातिथिः॥ तन्न॥ सपिंडीकरणादौ शे
षनाशे संयोजनादिलोपापत्तेः। तेन वचनाद्दर्शनेऽपि वा तत्र पितृमात्रपिंडदानावृत्तिः॥ अत एव
नवनक्तं श्राद्धं कुर्वीतारब्धे चाभोजनसमापनादित्यापस्तंबसूत्रे। रात्रौ भोजनमात्रं पूर्वेद्युः का
र्यं श्राद्धसमाप्तिस्तु परेद्युरेव समाप्तिपर्यंतं कर्तुरुपवासश्चेति हरिदत्तेन व्याख्यातं। तस्मा
न्मासांतरेण पिंडदानमात्रं कार्यं॥ ॥अथ पिंडनिषिद्धकालः॥ स्वप्रायेण महाल
यादिनिर्णये पूर्वमुक्तः। हेमाद्रौ वृद्धपराशरः॥ युगादिषु मघायां च विषुवत्ययने तथा। भरणी
षु च कुर्वीत पिंडनिर्वपणं न हि। स्मृतिरत्नावल्यां॥ पुत्रे जाते व्यतीपाते ग्रहणे चंद्रसूर्ययोः॥

श्राद्धं कुर्य्यात्स्वपत्नेन पिंडनिर्वपणादृते। तत्रैव कात्यायनः॥ चूडेरनंतरं चैव यावन्मासः समाप्यते तावत्पिंडान्नैव दद्यान्न कुर्य्यात्तिलतर्प्पणं॥ बौधायनः॥ संस्कारेषु तथान्येषु मासं मासार्द्धमेव च तथा॥ भानौ भौमे त्रयोदश्यां नंदाभृगुमघासु च। पिंडदानं मृदा स्नानं न कुर्यात्तिलतर्पणं॥ त्रिस्थलीसेतौ कार्ष्णाजिनिः॥ विवाहव्रतचूडासु वर्षमर्द्धं तदर्द्धकं। उत्तरेद्भाग्वत॥ वृद्धिमात्रे तथान्यत्र पिंडदाननिराक्रिया। कृता गर्गादिभिर्मुख्यैर्मासमेकं तु कर्मिणां॥ हेमाद्रौ ज्योतिः पराशरः॥ विवाहे विहिते मासांस्त्यजेयुर्द्वादशैव हि। सपिंडाः पिंडनिर्वापं मौंजीबंधे षडेव हि तत्रैव॥ महालये गयाश्राद्धे मातापित्रोः क्षयेहनि। यस्य कस्यापि मर्त्यस्य सपिंडीकरणे तथा॥ कृतोद्वाहोपि कुर्वीत पिंडनिर्वपनं सदा॥ इति॥ मातापित्रोरिति क्षयाहविशेषणं। हविर्भयत्ववद्विवक्षितं। तेन भ्रातृपितृव्यादिवार्षिके पिंडदानं कार्यमिति केचित् सपिंडीकरणं नवश्राद्धषोडशश्राद्धोपलक्षणार्थमिति निर्णयामृते उक्तं। क्षयाहे विशेषः संग्रहे। मातापित्रोराब्दिके तु विवाहादिषु सर्वदा। तिलैः पिंडः प्रदातव्या अन्यश्राद्धे विवर्ज्जयेत्। अत्र मूलं चिंत्यं॥ रामकौतुके। नंदाश्वकामरव्यारभृगुवह्निपितृकलभे। गंडे वैधृतिपाते च पिंडास्त्याज्याः सुतैः शुभैः॥ विश्वरूपनिबंधे॥ तिथिवारसयुक्तो यो दोषो वै समुदाहृतः। स श्राद्धे न निमित्तः स्यान्नात्मश्राद्धे कदाचन। अन्यत्तु प्राक्॥ उच्छिष्टोद्वासनमाह हेमाद्रौ वसिष्ठः॥ श्राद्धे नोद्वासनीयानि उच्छिष्टान्यादिनःक्षयात्। श्च्योतंते वै सुधाधाराः ताः पिबंत्यकृतोदकाः। व्यासः॥ उच्छिष्टं न प्रमृज्यात्तु यावन्नास्तमितो रविः॥ इदं गृहांतरसत्वे। एकगृहे तु मनुः॥ उच्छेषणं तु तत्तिष्ठेद्यावद्विप्रा विसर्जिताः ततो गृहबलिं कुर्यादिति धर्मो व्यवस्थितः॥ बलि वैश्वदेवादिनित्यकर्मेति मेधातिथिः॥ ब्रह्मांडे॥ शूद्राय चानुपेताय श्राद्धोच्छिष्टं न दापयेत्॥ तथा॥ कामं दद्यात्स्वसत्त्वेन शिष्याय च सुताय च भोक्तव्यमिति निश्चयः॥ जातूकर्ण्यः॥ द्विजभुक्तावशिष्टं तु शुचिभूमौ निखानयेत् अथ वैश्वदेवादि॥ अत्र माधवः श्लोकः॥ श्राद्धे अनग्निककर्तृके ऽग्निकरणात्पश्चाज्जुहोति वैलिस्त्वंते स्यादथवा भवेद्विकरतः पश्चात्पृथक्पचे। श्राद्धांते त्वथवा महालयविधावूर्ध्वं भुजेः स्यात् क्षयेत्वंते मासु च मध्यतः शुभविधावादौ तथा साग्निके॥ अस्यार्थः॥ सांग्रैः पृथक्पाकेन सर्वत्रादौ वैश्वदेवः॥ पक्षांते कर्म निर्वर्त्य वैश्वदेवं च साग्निकः। पिंडयज्ञं ततः कुर्य्यात्ततोन्वाहार्यकं बुधः। पित्रर्थं निर्वपेत्पाकं वैश्वदेवार्थमेव च। वैश्वदेवं न पित्रर्थं न दार्शं वैश्वदेविकमिति लौगाक्षिस्मृतेः॥ अत्र साग्निकत्वाहिताग्निरिति हेमाद्रिः॥ श्राद्धात्प्रागेव कुर्वीत वैश्वदेवं तु साग्निकः। एकादशाहिकं मुक्त्वा तत्र ह्यंते विधीयते इति हेमाद्रौ सालंकायनोक्तेश्च॥ तत्रैव परिशिष्टे। संप्राप्ते पार्वणश्राद्धे एकोद्दिष्टे तथैव च। अग्रतो वैश्वदेवः स्यात्पश्चादेकादशेहनि। साग्नेरग्निमतां तद्दुहितानां चाग्नौकरणोत्तरं॥ विकिरोत्तरं वा होममात्रं पृथक्पाकेन श्रुतयज्ञादितु श्राद्धांत एव॥ अत्र मूलं हेमाद्रिचंद्रिकादौ स्पष्टं। सर्वेषां श्राद्धांते वा तत्पाकेन वैश्वदेवनित्यश्राद्धादीनीति तृतीयः॥ श्राद्धं निर्वर्त्य विधिवद्वैश्वदेवादिकं ततः। कुर्याद्भिक्षां ततो दद्याद्धंतकारादिकं तथेति पैठीनसिस्मृतेः। ततः श्राद्धशेषात्। श्राद्धाद्धि श्राद्धशेषेण वैश्वदेवं समाचरेदिति

चतुर्विंशतिमताच्च ॥ एवं वैश्वदेवकालत्रयं संग्रहार्के शांखायनपरिशिष्टमुदाहृत्यैवं व्यवस्थोक्ता ।
आदौ वृद्धौ क्षये चांते दर्शे पक्षे महालये । एकोद्दिष्टे निवृत्ते तु वैश्वदेवो विधीयत इति । बहूना
न्युक्तत्वात्सर्वेषां श्राद्धांत एवेति मेधातिथिस्मृतिरत्नावल्यादयो बह्वृचः ॥ वोपदेवस्तु वृत्तिकारेण
विसर्जनांतं श्राद्धमुक्त्वा उच्छेषणं त्विति श्लोकमनुवाक्योदाहरणाद्बह्वृचानां श्राद्धांत एव । म
ध्यपक्षस्त्वन्यशाखापर इत्याह । हेमाद्रिस्तु वृद्धा चप्यंत एव वैश्वदेवमाह कातीयानां तु स्मार्त्ते श्रौ
ताग्निमतामादावेके नैव पाकेनेतिकर्के ॥ अन्येषां मते । तैत्तिरीयाणां तु साग्निकानां सर्वत्रादौ वै
श्वदेवः ॥ पंचयज्ञाश्च अंते चेति सुदर्शनभाष्ये उक्तम् । अस्य पक्षद्वयस्य पूर्ववद्व्यवस्था । हेमाद्रौ मा
र्कंडेयः ॥ ततो नित्यक्रियां कुर्याद्भोजयेच्च ततोऽतिथीन् । ततस्तदन्नं भुंजीत सह भृत्यादिभिर्नरः । न
नः श्राद्धशेषात् । नित्यक्रियां नित्यश्राद्धं तत्र पृथक्पाकेन नैत्यकमिति तेनैवोक्तेः । पाकैक्ये विक
ल्पः ॥ ॥ अथ नित्यश्राद्धम् ॥ हेमाद्रौ व्यासः ॥ एकमप्याशयेद्विप्रं षण्णामप्यन्वहं गृहि
अपीत्यनुकल्पः ॥ प्रचेताः ॥ नामंत्रणं न होमं च नावाहनं न विसर्जनं । न पिंडदानं विकिरं न दद्याच्च
दक्षिणां ॥ अत्र ॥ निर्दिश्य भोजयित्वा तु किंचिद्दत्वा विसर्जयेत् । इति तेनैवोक्तेर्दक्षिणाविकल्पः
॥ यत्तु ॥ नित्यश्राद्धं देवहीनं नियमादिविवर्जितम् । दक्षिणारहितं चैव दातृभोक्तृव्रतोज्झितमि
ति काशीखंडे तद्विप्राभावपरमिति पृथ्वीचंद्रः ॥ भविष्ये ॥ आवाहनं स्वधाकारं पिंडाग्नौकरणादि
कम् । ब्रह्मचर्यादिनियमा विश्वेदेवा न चैव हि । दातृणामथ भोक्तृणां नियमो न च विद्यते । एतद्धि
धानाद्दिनासंभवे रात्रावपि कार्यम् ॥ दिवोदितानि कर्माणि प्रमादादकृतानि वै । यामिन्याः प्रह
रं यावत्तावत्कर्माणि कारयेदिति बृहन्नारदीयोक्तेः । रात्रौ प्रहरपर्यंतं दिवाकृत्यानि कारयेत् । ब
ह्मयज्ञं च सौरं च वर्जयित्वा विशेषतः । इति पृथ्वीचंद्रधृतसंग्रहोक्तेश्च ॥ न च दार्शिकादिकाप
पि रात्रौ स्यादिति वाच्यम् । इष्टापत्तेः । तथा च माधवेन प्रतिपत्करणे स्पष्टमुक्तम् । एवं चायेवस्था
मः । अस्य दिने अकरणे लोप एव । रात्रौ श्राद्धं न कुर्वीतेति निषेधादिति पृथ्वीचंद्रः ॥ पात्राभावे को
मे ॥ उद्धृत्य वा यथाशक्ति किंचिदन्नं प्रकल्पयेत् । तत्प्रतिपत्तिमाह विष्णुः ॥ भिक्षुकाभावेऽन्नं गोभ्यो
दद्यादग्नौ वा प्रक्षिपेदिति । हेमाद्रौ नागरखंडे । नित्यश्राद्धं न कुर्वीत प्रसंगाद्यत्र सिध्यति । श्राद्धांतरे
कृतेऽन्यत्र नित्यत्वात्तन्न हापयेत् ॥ षड्दैवत्ये पृथङ्नेत्यर्थः ॥ मात्स्ये ॥ ततस्तु वैश्वदेवांते सभृत्यसु
तबांधवः । भुंजीतातिथिसंयुक्तः सर्वं पितृनिषेवितम् । सर्वं पर्वनिषिद्धं मांसमाषाद्यपीत्यर्थः ॥ एवं
कृत्स्नैकादश्यादौ गृहिणोऽपि भोजनं । अस्य विधित्वेन निषेधाप्रवृत्तेः । एवं ग्रहणवेधेऽपि । यस्त्वनाहि
ताग्नेरमाषमांसं व्रतयेदित्युक्तम् ॥ तद्द्वयमेव । श्रौतत्वेन तस्य बलवत्त्वात् ॥ देवलः ॥ श्राद्धं कृत्वा
तु यो मर्त्यो न तु भुंक्ते कदाचन । देवा हव्यं न गृह्णंति कव्यानि पितरस्तथा । शिवरात्र्येकादश्यादौ त्व
घ्राणमेवेत्युक्तं प्राक् । यत्तूपवासे आवश्यके तत्रैकभुक्तमयाचितं वा कार्यमिति हेमाद्रिः ॥ जातूक
र्ण्यः ॥ अह्न्येव तु भोक्तव्यं कृते श्राद्धे द्विजन्मभिः । अन्यथा त्वासुरं श्राद्धं परपाके च सेविते । श्राद्धशे
षभोजनस्य क्वचिन्निषेधमाह । हेमाद्रौ प्रायश्चित्तकांडे मार्कंडेयः ॥ पित्रादीनामथान्येषां श्राद्धशेषा
न्नभोजनं । स्त्रीणां विधवानां च यतीनां च विगर्हितम् ॥ अन्ये भिन्नगोत्राः व्रतिनो ब्रह्मचारिणः ॥

श्राद्धावशिष्टभोक्तारस्तेवैनिरयगामिनः।सगोत्राणांसकुल्यानांज्ञातीनांचनदोषकृदिति।तत्रैवोक्तेः
तत्रैवजाबालिः॥विप्रस्त्वन्यगृहेश्राद्धशिष्टान्नंभोजनंचरेत् प्राजापत्यंविशुद्धिःस्यात्ज्ञातिगो
त्रेणदोषकृत्।यतीनांवपनंलक्षप्रणवजपश्चेतितत्रैवोक्तम्॥अस्यापवादमाहसएव॥श्वशुर
स्यगुरोर्वापिमातुलस्यमहात्मनः।ज्येष्ठभ्रातुश्चपुत्रस्यब्रह्मनिष्ठस्ययोगिनः एतेषांश्राद्धशिष्टा
न्नंभुक्त्वादोषोनविद्यते।इतिकेचित्स्मर्शंसतिसुतन्यस्तदसांप्रतं।विशेषान्तरंतत्रैवज्ञेयम्।हेमा
द्रौजाबालिः॥तांबूलंदंतकाष्ठंचस्नेहस्नानमभोजनं।रत्यौषधपरान्नानिश्राद्धकर्ताविवर्जये
त्॥पृथ्वीचंद्रोदयेव्याघ्रः॥नशूद्रंभोजयेत्तस्मिन्नहेपतेनतद्दिने।श्राद्धशेषंनशूद्रेभ्यःप्र
दद्यादखिलेष्वपि॥ इतिजगद्गुरुनारायणभट्टसूनुरामकृष्णभट्टसुतकमलाकरभट्टकृ
तेनिर्णयसिंधौपार्वणश्राद्धम्॥

॥अथानुकल्पः॥ तत्रविप्रालाभे।भोज
येदथवाप्येकंब्राह्मणंपंक्तिपावनं।दैवंकृत्वातुनैवेद्यंपश्चात्तस्यतुनिर्वपेदितिशंखोक्तेरेको
विप्रःपूर्वमुक्तः।विप्राभावेदर्भवटुःप्रागुक्तः।विधायवादर्भवटूनासनेषुसमाहितः।प्रैषानुप्रैष
संयुक्तंविधानंप्रतिपादयेदितिदेवलोक्तेः।अशक्तावामश्राद्धं।आपद्यनग्नौतीर्थेचप्रवासेपुत्रज
न्मनि।आमश्राद्धंप्रकुर्वीतभार्यारजसिसंक्रमे इतिकात्यायनोक्तेः॥ पृथ्वीचंद्रोदयेजमदग्निः॥
यावत्स्यान्नाग्निसंयुक्तःउत्सन्नाग्निरथापिवा।आमश्राद्धंतदाकुर्याद्धस्तेनौकरणंभवेत्॥कौ
र्मे॥अनग्निरध्वगोवापितथैवव्यसनान्वितः।आमश्राद्धंद्विजःकुर्याद्वृषलस्तुसदैवहि।आहि
ताग्नेःप्रवासस्थेतत्पत्नीगृहेदार्शंश्राद्धमृत्विगादिनाकारयेत्।अमावास्यादिनियतंमेविनेधब्रह्मचा
रिणी।पत्नीतुकारयेन्नित्यमन्येनाप्यृत्विगादिनेतिलघुहारीतोक्तेरितिपृथ्वीचंद्रोदयः॥आदि
पदमासिकादिसर्वपार्वणपरमितिशूलपाणिः॥सुमंतुः॥पाकाभावेधिकारःस्याद्द्विजादीनांन
राधिप।अपत्नीनांमहाबाहोविदेशगमनादिभिः॥सदाचैवतुशूद्राणामामश्राद्धंविदुर्बुधाः॥
प्रचेताः॥स्त्रीशूद्रःस्वपचश्चैवजातकर्मणिचाप्यथ।आमश्राद्धंसदाकुर्याद्विधिनापार्वणेनतु
स्वयंपचतीस्वपचः।विष्णूशनसौ॥आत्मनोदेशकालाभ्यांविप्लवेसमुपस्थिते।आपद्यनग्नौ
तीर्थेचप्रवासेपत्न्यसंभवे।चंद्रसूर्यग्रहेचैवदद्यादामंविशेषतः।नपक्वंभोजयेद्विद्वान्सत्कृ
तोपिकदाचन।भोजयन्प्रत्यवायीस्यान्नचतस्यफलंभवेत्।अत्रप्रवासतीर्थग्रहणादामहेम
श्राद्धमेव।पाकश्राद्धंतुनभवत्येवेतिहेमाद्रिरत्नावल्यादयः।अपरार्केविज्ञानेश्वरादयस्तु॥
पाकाभावाद्द्विजातीनामामश्राद्धंविधीयतइतिसुमंतूक्तेः।साग्निकैर्निरग्निकैश्चप्रवासादौस
त्यपाकाभावेआमादिकार्यं।पाकसंभवेत्वन्नेनैवेत्याहुः।अतएवपाकश्राद्धमुक्तं।एतच्चानु
पनीतोपिकुर्यात्सर्वेषुपर्वसु।भार्याविरहितोप्येतत्प्रवासस्थोपिनित्यशः।इतिमात्स्ये।निर
ग्नेरपिपाकेनोक्तमितिशूलपाणिकल्पतरू।एतच्छूद्रःश्राद्धमात्रपरइत्यन्ये।एकोद्दिष्टंतुक
र्तव्यंपाकेनैवसदास्वयमितिलघुहारीतीयमपिसाग्नेरेव।निरग्नेर्महैकोद्दिष्टमप्यामेन।शू
द्रस्यतुदशाहपिंडश्चामेनेतिहलायुधः।उत्सन्नाग्नीनांचामश्राद्धमेव।पूर्वोक्तजमदग्निवाक्या
त्॥मरीचिः॥श्राद्धविघ्नेद्विजातीनामामश्राद्धंप्रकीर्तितं।अमावास्यादिनियतंमाससंवत्सरादृ

ते। स्मृतिदर्पणे॥ मृताहं च सपिंडं च मघाश्राद्धं महालयं। आपन्नोपि न कुर्वीत श्राद्धमामेन कर्हिचित्
हेमाद्रौ व्यासः। आमं दद्यात्तु कौंतेय दद्यादामं चतुर्गुणं। द्विगुणं त्रिगुणं वापि नत्वेकगुणमर्पयेत्। सि
द्धान्नेतु विधिर्यः स्यादामश्राद्धे स्मृतो विधिः। आवाहनादि सर्वं स्यात्पिंडदानं च भारत॥ दद्याद्ध
च द्विजातीभ्यः शृतं वाशृतमेव वा। तेनाग्नौकरणं कुर्यात्पिंडांस्तेनैव निर्वपेत्। स एव॥ आमं द
द्यात्तु कौंतेय तद्दानं द्विगुणं चरेत्। त्रिगुणं चतुर्गुणं वापि नत्वेकगुणमर्पयेत्। स्मृत्यर्थसारेसम
मप्युक्तं। विष्णुपुराणे वाराहे च। असमर्थोन्नदानस्य धान्यमामं स्वशक्तितः। प्रदद्यात्तु द्विजाति
भ्यः स्वल्पाल्पामपि दक्षिणां। अत्र शक्तितः इत्यस्यान्नमलाभः। अशयन इति श्राश॥ षट्त्रिंश
न्मते। आमश्राद्धं यदा कुर्यात्पिंडदानं कथं भवेत्। गृहपाकात्समुद्धृत्य सक्तुभिः पायसेन वा।
पिंडान्दद्याद्यथालाभं तिलैः सह विमत्सरः। पृथ्वीचंद्रोदये व्यासः॥ आमश्राद्धं यदा कुर्या
द्विधिज्ञः श्राद्धदः सदा। हस्तेग्नौकरणं कुर्याद्ब्राह्मणस्य विधानतः। एतत्साग्नेः सदानत्त्वा
न। यत्तु॥ आमेन पिंडदाश्चेद्द्विजान्पक्वेन भोजयेत्। पक्वेन कुरुते पिंडमामान्नं यः प्रयच्छति
तावुभौ मनुजौ मोक्षौ नरकार्हौ न संशयः॥ इति॥ तद्देशादिपरं देशाचारव्यवस्थेति युक्तं॥ मरी
चिः॥ आवाहने स्वधाकारे मन्त्राः कुत्र विसर्जने। अन्यकर्माण्यनूलाः स्युरामश्राद्धविधिस्त्वतः
आवाहनेह विषेअन्नवइत्यत्र स्वकन्ने वाहरमूहः॥ स्वधाकारे नमो वः पितर एव इत्यत्र एषप
स्थाने आमइत्यायेनूहः। विसर्जने वाजे वाज इत्यत्र तृप्ता इति स्थाने तृप्यत तृप्यतेति वोहः॥
पद्यपितरस्ता हवं नो हेदितिकाव्यूहो निषिद्धः। तथापि वचनाद्भवति। तृप्तिप्रश्नो वृगाहस्युरूपम
त्रोपयासुरवं। आमश्राद्धे भवेन्नैतदापोशानेच पंचमं। अपच्चानुवादः। खलेवाल्पाच्छेद
नादीनामिवार्थाभावाल्लोपसिद्धेः। धर्मप्रदीपेतु। आमं चतुर्गुणं दद्यादथवा द्विगुणं तथा
हेमं चाष्टगुणं तद्वदामे हेम्नेत्यसौ विधिः॥ आमे हेम्ने तथानित्ये नांदीश्राद्धे तथैव च। व्यतीपा
तादिके श्राद्धे नियमान्परिवर्जयेत्। गृहपाकात्समुद्धृत्य सक्तुभिः पायसेन वा। पिंडदानं प्र
कुर्वीत आमे हेम्ने कृते सति॥ आमश्राद्धे च वृद्धौ च प्रेतश्राद्धे तथैव च। विकिरं नैव कुर्वीत मुनिः
कात्यायनोऽब्रवीत्॥ आमश्राद्धमनंगुष्ठमग्नौकरणवर्जितं॥ तृप्तिप्रश्नविहीनं तु कर्तव्यमा
नवेद्धुवम्॥ आवाहनाग्नौकरणं विकिरं पात्रधारणम्। तृप्तिप्रश्नं न कुर्वीत आमे हेम्ने कदाच
नेत्युक्तम्। एतच्च। आवाहनं भवेत्कार्यमर्घ्यदानं तथैव चेति हेमाद्रौ भविष्यादिविरोधाच्चिंत
म्। शाखांतरविषयं वास्तु। विकिरोप्यामे नेति हेमाद्रिः। शूद्रस्यैतु तंत्रे वोक्तं। अग्नौकरणमंत्र
श्च नमस्कारो विधीयते। अग्नये कव्यवाहनाय नमः। सोमाय पितृमते नम इत्ययं मंत्रः। मात्स्ये।
मंत्रवर्ज्यं हि शूद्रस्य सर्वमेव विधीयते। एवं शूद्रोपि सामान्यवृद्धिश्राद्धं च सर्वदा। नमस्कारेण मं
त्रेण कुर्यादामान्नवद्बुधः। तच्चापराह्णे कार्यं। आमश्राद्धं तु पूर्वाह्णे एकोद्दिष्टं च मध्यतः। पार्वणं
चापराह्णे तु प्रातर्वृद्धिनिमित्तकमिति हारीतोक्तेः। एतद्द्विजविषयम्। शूद्रकर्तृकं त्वपराह्णे एव
मध्याह्नात्परतो यस्तु कुतपः स उदाहृतः। आमश्राद्धं तु तत्रैव पितॄणां दत्तमक्षयमिति सुमंतूक्ते
रिति। अपरार्के हेमाद्रौ चोक्तं। तदभावे हेमश्राद्धमाह हेमाद्रौ मरीचिः। आमान्नस्याप्यभावे

नश्राद्धंकुर्वीतबुद्धिमान्। धान्यामंचतुर्गुणेनैवहिरण्येनसुरोत्तमा॥ यमः॥ आमंतुद्विगुणंप्रोक्तंहे
मंतद्वच्चतुर्गुणं। स्मृत्यर्थसारे। हिरण्यमष्टगुणंचतुर्गुणंसमंवादद्यात्। हेमाद्रौभविष्ये॥ अन्नाभा
वेद्विजाभावेप्रवासेपुत्रजन्मनि। हेमश्राद्धंसंग्रहेचतथास्त्रीशूद्रयोरपि। षट्त्रिंशन्मते॥ तुर्यपादे
वर्ज्जयित्वास्यपेहनीतिपाठः॥ यस्यभार्यारजस्वलेतिव्यासपाठः॥ पुत्रोमत्तोनुहेमनियममाह
संवर्तः॥ पुत्रजन्मनिकुर्वीतश्राद्धंहेम्नैवबुद्धिमान्। नपक्वेननचामेनकल्याणान्यभिकामयन्
भविष्ये॥ गृहपाकात्समुद्धृत्यसक्तुभिःपायसेनवा। पिंडदानंप्रकुर्वीतहेमश्राद्धेकृतेसति। शू
द्रस्तुगृहपाकेननपिंडान्निर्वपेत्तथा॥ सक्तुमूलफलैस्तस्यपायसेवाभवेत्स्मृतं। हेमश्राद्धेपिंडद
नेनेतिदिवोदासः। स्मृत्यर्थसारेतुविकल्पउक्तः। तद्दशपंतविप्रः॥ षट्त्रिंशन्मते॥ नामंत्रणा
ग्नौकरणंविकिरोनैवदीयते। तृप्तिप्रश्नोपिनैवात्रकर्तव्यःकेनचिद्बुधेन॥ अत्रमरीचिना॥ आ
माभावेहेमविधानेनस्यानापत्याधर्म्मशास्त्रेः। पूर्ववन्मंत्रोहः। पूर्वाह्णकालतावर्जयेदितिदिक्। पूर्वो
क्तधर्मप्रदीपोक्तेश्च। व्यासः॥ हिरण्यनामश्राद्धीयलब्धंयत्तस्त्रियादिनः। तस्येहविनियोगं
स्यात्भुंजीयात्ब्राह्मणान्स्वयं। विप्रान्लब्धंभुंजीयात्स्वादिलब्धेतुयथेष्टंविनियोगः। तेनापि
श्राद्धेवैश्वदेवादिनकार्यं। देवोद्देशेनत्यक्तस्यदेवतांतरएवत्यागायोगादितिदेवयाज्ञिकःशूद्रल
ब्धेतूक्तं। तत्रैवषट्त्रिंशन्मते। आमंशूद्रस्ययत्किंचित्क्वाथादिकंचलिंगस्यते। तत्सर्वंभोजनायालंनि
त्यनैमित्तिकेनचेति। शुद्धितत्वेंगिराः। शूद्रवेश्मनिविप्रेणक्षीरंवायदिवादधि। निर्वृत्तेननभोक्त
व्यंशूद्रान्नंतदपिस्मृतं। शूद्रात्विप्रगृहेयन्नंप्रविष्टंतुसदाशुचिः। पराशरः॥ तावद्भवतिशूद्रान्नं
यावन्नस्पृशतिद्विजः। द्विजातिकरसंस्पृष्टंसर्वंतद्धविरुच्यते। संग्रहेपिचात्मीयाच्छूद्रान्नं
गृहमागतं। अंगिराः॥ पात्रांतरगतंग्राह्यंदुग्धंस्वगृहमागतं। सपिंडश्राद्धाशक्तावाह हेमाद्रौसं
वर्तः। समर्थंयस्तुशक्नोतिकर्तुंनैवेहपार्वणं। अपिसंकल्पविधिनाकालेतस्यविधीयते। पात्रे
भोज्यस्यचान्नस्यत्यागःसंकल्पउच्यते॥ व्यासः॥ संकल्पंतुयदाकुर्यान्नकुर्यात्पात्रपूरणं। नावा
हनाग्नौकरणेपिंडांश्चैवनदापयेत्। पात्रमर्घ्यस्य। समंत्रकावाहनस्यनिषेधः। तूष्णींतुभवत्येवेति
हेमाद्रिः। स्मृत्यंतरेविकिरंतुनदातव्यमितितृतीयपादेपाठः॥ स्मृत्यंतरे॥ त्यजेदावाहनंचार्घ्यम
ग्नौकरणमेवच। पिंडांश्चविकिरांश्चैवश्राद्धेसंकल्पसंज्ञके॥ हेमाद्रेरुद्धृतानात्पत्तु॥ पिंडनि
र्वापरहितंयत्तुश्राद्धंविधीयते। स्वधावाचनलोपोत्रविकिरस्तुनलुप्यते। इत्याहपृथ्वीचंद्रोदयेव
सिष्ठः॥ आवाहनंस्वधाशब्दंपिंडाग्नौकरणंतथा। विकिरंचार्घ्यदानंचसांकल्पेषट्विवर्ज्जये
त्। विकिरेविकल्पः। स्मृत्यंतरे॥ अंगानिपितृयज्ञस्ययदाकर्तुंनशक्नुयात्। सतदावाचयेद्विप्रा
न्संकल्पात्सिद्धिरस्त्विति॥ छागलेयः॥ पिंडोयत्रनिवर्तेतमघादिषुकथंचन। सांकल्पंतुतदाका
र्यंनियमाद्ब्रह्मवादिभिः॥ कार्ष्णाजिनिः॥ मौंजीबंधाद्भ्रमराद्वंवत्सरंपाणिपिंडनात्। पिंडान्सपिं
डानोदद्युःप्रेतपिंडंविनात्रतु॥ अस्यापवादः। नपित्रोराब्दिकादौश्चेयुक्तः। तत्कार्येरपिसंकल्प
मुक्तेषट्त्रिंशन्मते। अनग्निकोयदाविप्रउच्छन्नाग्निस्तथैवच तथारजस्सुसर्वासुसंकल्पश्राद्ध
माचरेत्॥ अशक्तौतुपृथ्वीचंद्रोदयेब्रह्मांडेदीपे। द्रव्याभावेद्विजाभावेअन्नमात्रंतुपाचयेत्।

चैत्रकेणानुसूक्तेनहोमंकुर्याद्विचक्षणः॥देवलः॥ पिंडमात्रंप्रदातव्यमभावेद्रव्यविप्रयोः॥श्राद्धी
याहनिसंप्राप्तेभवेन्निरसनोपिवा॥गृह्ये वसिष्ठः॥किंचिद्दद्यादशक्तस्तुउदकुंभादिकंद्विजे।तृणा
निवागवेदद्यात्पिंडान्वाप्यथनिर्वपेत्।तिलदर्भैःपितॄन्वापितर्पयेत्स्नानपूर्वकं॥हेमाद्रौभविष्ये
अग्निनावादहेत्कक्षंश्राद्धकालेसमागते।तस्मिन्वोपवसेदह्निजपेद्वाश्राद्धसंहितां।श्राद्धसं
हितासमंत्रःश्राद्धसंकल्पः॥विष्णुवराहपुराणयोः॥असमर्थोन्नदानस्यधान्यमामंस्वशक्तितः
प्रदास्यतितिलान्वापिस्वल्पान्स्वल्पांचापिदक्षिणां॥सर्वाभावेवनंगत्वाकक्षामूलप्रदर्शकः।सूर्या
दिलोकपालानामिदमुच्चैःपठिष्यति॥नमेस्तिवित्तंनधनंनचान्यच्छ्राद्धोपयोग्यंस्वपितॄन्नतोस्मि
तृप्यंतुभक्त्यापितरोमयैतौभुजौकृतौवर्त्मनिमारुतस्य॥इत्येतत्पितृभिर्गीतंभावाभावप्रयोजनं॥
यःकरोतिकृतंतेनश्राद्धंभवतिभारत॥प्रभासखंडे॥गत्वारण्यममानुष्यमूर्ध्वबाहुर्विरौत्यदः॥नि
रन्नोनिर्धनोदेवाःपितरोमारुतग्रहाः॥नमेस्तिवित्तंनधनंनभार्याश्राद्धंकथंवःपितरःकरोमि
वनंप्रविश्येहतुनम्रयोच्चैर्भुजौकृतौवर्त्मनिमारुतस्य।श्राद्धर्णमेतद्भवतांप्रदत्तंमयादयध्वंपितृदे
वताद्याः॥आख्यायचोत्क्षिप्यभुजौततोवैदिवाचरात्रिंसमुपोष्यतिष्ठेत्।भवेत्सवैतेनकृतेनतेषामृ
णेनमुक्तःपितृदेवतानां॥इत्यनुकल्पः॥ ॥अथश्राद्धभोजनेप्रायश्चित्तं॥दशप्रा
णायामाः॥वृद्धोत्रयः॥संस्कारेषुजातकर्मादिचूडांतेषुमानपनं।आद्येचाब्दे॥अन्यसंस्कारेषूप
वासः॥सीमंतेचांद्रमितिविज्ञानेश्वरः।आपदिनवश्राद्धेकादशाहेषुभोजनेकार्यः।द्वादशाहेऊनमा
सेपादोनः।द्विमासेत्रिपक्षेऊनषण्मासाब्दयोःश्राद्धकृच्छ्रः॥त्रिमासाद्याब्दिकांतेषुसपिंडेषुपादकृच्छ्रः
उपवासोवा॥गृह्यार्थेभोजनेर्धं।जपशीलेनदर्द्धं।अनापदितुजननमासांतेषुचांद्रंकार्यं।द्विमा
सादौपादोनं।त्रिमासाद्यर्धंकार्यः।आब्दिकेपादोनंकार्यः।पुनराब्दिकेएकाहः।सत्रियादिश्राद्धे
वृद्धिर्द्विचतुर्गुणानिज्ञेयानि।चंडालसर्पपश्वादिहतपतितक्लीबादिनवश्राद्धेचांद्रं।आद्यमासिको
नेचांद्रंपराकश्च।द्वादशाहाद्यौपराकः।द्विमासादावतिकृच्छ्रः।त्रिमासादौकार्यः।आब्दिकेपादः।
अभ्यासेसर्वेद्विगुणं।आमहेमसंकल्पश्राद्धेषुतत्तदर्द्धानि॥यतिर्ब्रह्मचारीचोक्तप्रायश्चित्तंकृत्वा
त्रीनुपवासान्प्राणायामान् कृत्वाशनंचाधिकंकृत्वान्नशेषंसमापयेत्।अनापदिद्विगुणं।दर्शा
दौदशगायत्रीमंत्रिताआपःपिबेत्।षट्प्राणायामावा।संस्कारेषुचौलेकृच्छ्रः।सीमंतेचांद्रम्।अन्ये
षूपवासइतिदिक्॥अत्रमाधवमिताक्षरादौक्वचिद्विरोधोविषयभेदात्परिहार्यः।एकादशाहेचांद्रं
पुनःसंस्कारश्चेतिहेमाद्रिः।यत्तूशनाः।दशकृत्वःपिबेदापोगायत्र्याश्राद्धभुग्द्विजः।तत्तदुक्तप्राय
श्चित्तश्राद्धपरमितिविज्ञानेश्वरः॥ ॥अथक्षयाहश्राद्धम्॥तत्स्वरूपमाहहेमाद्रौव्या
सः॥मासपक्षतिथिस्पृष्टेयोयस्मिन्म्रियतेहनि।प्रत्यब्दंतुतथाभूतंक्षयाहंतस्यतंविदुः॥नारदीये।
भास्करोमरणेनृणांतिथिस्तात्कालिकीस्मृता।अत्रचाब्दमानंज्ञेयं।आब्दिकेपितृकार्येचचांद्रोमासः
प्रशस्यतेइतिगार्ग्योक्तेः।मलमासमृतस्यानुसौरं।मलमासमृतानांतुसौरमानंसमाश्रयेदितिहेमाद्रा
वुक्तेः।एतच्चतिमासस्यैवाधिक्येज्ञेयं।ब्राह्मे॥प्रतिसंवत्सरंकार्यंमातापित्रोर्मृतेहनि।पितृव्यस्या
प्यपुत्रस्यभ्रातुर्ज्येष्ठस्यचैवहि।अपुत्रस्येतिभ्रात्राप्यन्वयः।ज्येष्ठस्येतिकनिष्ठस्यानावश्यकत्वार्थं॥

मदनरत्ने भविष्ये। सर्वेषामेव श्राद्धानां श्रेष्ठं सांवत्सरं मतं॥ तथा॥ भोजको यस्तु वै श्राद्धं न करोति ख
गाधिप॥ मातापितृभ्यां सततं वर्षे वर्षे मृतेहनि। स याति नरकं घोरं तामिस्रं नाम नामतः। तच्च ना
नास्मृतिष्वेकोद्दिष्टं पार्वणं चोक्तं॥ त्राद्यमाह यमः॥ सपिंडीकरणादूर्ध्वं प्रतिसंवत्सरं सुतैः। माता
पित्रोः पृथक्कार्यमेकोद्दिष्टं मृतेहनि॥ व्यासः॥ एकोद्दिष्टं तु कर्तव्यं पित्रोश्चैव मृतेहनि। एको
द्दिष्टं परित्यज्य पार्वणं कुरुते नरः। अकृतं तद्विजानीयाद्भवेच्च पितृघातकः। अन्यमाह शातात
पः। सपिंडीकरणं कृत्वा कुर्यात्पार्वणवत्सदा। प्रतिसंवत्सरं श्राद्धं छागलेयोदितो विधिः॥ यः
सपिंडीकृतं प्रेतं पृथक्पिंडे नियोजयेत्। विधिघ्नस्तेन भवति पितृहा चोपजायते॥ अनौरसक्षे
त्रजयोः पार्वणं दत्तकादीनामेकोद्दिष्टमित्येकः पक्षः॥ साग्नेः पार्वणं निरग्नेरेकोद्दिष्टमिति
परः। तद्व्यवस्था मिताक्षरादौ ज्ञेया॥ कल्पतरुस्तु साग्नेरौरसक्षेत्रजयोः पार्वणं। निरग्निकयो
स्त्वेकोद्दिष्टमित्याह॥ अपरार्केप्येवं। दत्तकाद्या दश पुत्रास्तु साग्नयो निरग्नयश्चैकोद्दिष्ट
मेव कुर्युः। इत्यब्दं पार्वणेनैव विधिना क्षेत्रजौरसौ। कुर्यातामितरे कुर्युरेकोद्दिष्टं सुता दशेति
जातूकर्ण्योक्तेः। यदा तु दत्तकस्य पिता दर्शे महालये वा मृतस्तत्र पार्वणैकोद्दिष्टयोर्विकल्पः। व
स्तुतस्तु सर्वेषां॥ पार्वणैकोद्दिष्टयोर्व्रीहियववद्विकल्पः। स च देशाचाराद्व्यवस्थित इति सर्वनिब
न्धसिद्धांतः। अत एव पृथ्वीचंद्रोदये वृद्धपराशरः॥ मातापित्रोः पृथक्कार्यमेकोद्दिष्टं मृतेहनि। इत्यु
क्त्वाह। देशधर्मं समाश्रित्य वंशधर्मं तथा परे। स्वयं श्राद्धमिच्छंति पार्वणं च क्षयाहनीति॥ त
च्च केवलं पितृणां न सपत्नीकानामिति हेमाद्रिः। अत्र मातामहानां कार्यं कर्षूसमन्वितं मुक्त्वा
तथाद्यं श्राद्धषोडशं। प्रत्याब्दिकं च शेषेषु पिंडाः स्युः षडिति स्थितिरिति कात्यायनोक्तेः। कर्षूसम
न्वितं सपिंडनं। यैरेकोद्दिष्टं क्रियते तेषामपि दर्शवत्पार्वणमेव। अमावास्याक्षयो यस्य प्रेतपक्षे
ऽथवा पुनः। पार्वणं तस्य कर्तव्यं नैकोद्दिष्टं कदाचनेति शंखोक्तेः॥ वायवीये॥ संन्यासिनोप्याब्दि
कादि पुत्रः कुर्याद्यथाविधि॥ महालये तु यच्छ्राद्धं द्वादश्यां पार्वणं हि तत्। पृथ्वीचंद्रोदये वृद्ध
पराशरः॥ संन्यासे संस्थितानां च प्रेतपक्षे शशिक्षये तेषां पार्वणमेवोक्तं क्षयाहे पितृसत्तमैः।
चंद्रक्षयानाशकसंयुगेषु यः प्रेतपक्षे मृतावसपिंडः। सपिंडितानामपि चाब्दिकानि भवंति ते
षामिह पार्वणानि॥ तथा॥ भ्रातुर्ज्येष्ठस्य कुर्वीत ज्येष्ठो भ्रातानुजस्य च। दैवहीनं तु तत्कुर्याद्दि
तिधर्मविदाब्रवीत्॥ दैवहीनमेकोद्दिष्टं। ज्येष्ठो भ्राता नाद्यगर्भजः॥ तथा च तत्रैव शातातपः
अनाद्यगर्भज्येष्ठोपि भ्राता सद्भिर्निगद्यते। अतः सपिंडनात्तस्य नैव पार्वणमाचरेत्। आद्यगर्भे तु
पार्वणमेकोद्दिष्टं वेत्यर्थः॥ मातुलस्तु हेमाद्रौ कात्यायनः॥ प्रत्यब्दं यो यथा कुर्यात्पुत्रः पित्रे सदा द्वि
जः। तथैव मातुः कर्तव्यं पार्वणं वान्यदेव वा। यत्तु तेनैवोक्तं। सपिंडीकरणादूर्ध्वं पित्रोरेव हि पा
र्वणं। पितृव्यभ्रातृमातृणामेकोद्दिष्टं सदैव हीति। तत्सपत्न्यमातृपरं॥ यत्तु वृद्धपराशरः॥ अ
पुत्रस्य पितृव्यस्य तत्पुत्रो भ्रातृजो भवेत्। स एव तस्य कुर्वीत पिंडदानादिकाः क्रियाः। पार्वणेन न
कार्यं स्यात्पुत्रवद्भ्रातृजो न तु। पितृस्थाने तु तं कृत्वा शेषं पूर्ववदुच्चरेत्। इति॥ तत्पितृवद्देशा
चाराद्व्यवस्थितं ज्ञेयमिति पृथ्वीचंद्रः॥ श्राद्धदीपकलिकायां चतुर्विंशतिमते तु। पितृव्यभ्रा

तस्मात्स्त्रीणां ज्येष्ठानां पार्वणं भवेत्। एकोद्दिष्टं कनिष्ठानां दंपत्योः पार्वणं भवेत्। एकोद्दिष्टं कनिष्ठाना
दंपत्योः पार्वणं मिथः॥ अपुत्रस्य पितृव्यस्य भ्रातुश्चैवाग्रजन्मनः। मातामहस्य तत्पत्न्याश्च
द्धं पार्वणवद्भवेत् इत्युक्तं। पत्न्याः कर्तृत्वेपि पार्वणमेव। सर्वाभावे स्वयं पत्न्यः स्वभर्तॄणाममंत्र
कं। सपिंडीकरणं कुर्युस्ततः पार्वणमेव चेति लौगाक्षिस्मृतेः। तत्र पत्न्यपि कुर्वीत सापिंड्य
पार्वणं तथेति। सुमंतूक्तेश्चेति। निर्णयामृते उक्तं। अन्ये त्वेतत्सांवत्सरिकपार्वणपरमाहुः॥
।अत एव। भर्तुः श्राद्धं तु या नारी मोहात्पार्वणमाचरेत्। न तेन तृप्यते भ
र्ता कृत्वा तु नरकं व्रजेदिति वचनस्य पाद्मे पाक्षिकैकोद्दिष्टप्रशंसार्थेन पार्वणनिषेधार्थमित्युक्तं। त्रि
स्थलीसेतौ भट्टचरणैः स्वभर्तृप्रभृतित्रिभ्य इत्यनेन विरोधाच्च। अपुत्राणां त्वाह हेमाद्रावापस्तंबः
अपुत्रा ये मृताः केचित्स्त्रियो वा पुरुषाश्च ये। तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणं। मित्रबंधुस
पिंडेभ्यः स्त्रीकुमारीभ्य एव च। दद्याद्दै मासिकं श्राद्धं सांवत्सरमतोन्यथा। पारिजाते तु अन्यथा पार्व
णमित्युक्त्वा सर्वत्र पार्वणमुक्तं। एकोद्दिष्टवाक्यानि तु तीर्थमहालयपराणीत्युक्तं। पृथ्वीचंद्रोदये
वृद्धगार्ग्यः॥ मातुः सहोदरायाश्च पितुः सहभवा च या। तयोश्च नैव कुर्वीत पार्वणं पिंडदाहने॥ प्र
चेताः॥ सपिंडीकरणादूर्ध्वमेकोद्दिष्टविधीयते। अपुत्राणां च सर्वेषामपत्नीनां तथैव च। अप
त्नीनां ब्रह्मचार्यादीनां। मार्कंडेयपुराणे॥ प्रतिसंवत्सरं कार्यमेकोद्दिष्टं नरैः स्त्रियाः। मृताहनि
यथान्यायं नृणां यद्वदिहोदितम्॥ नृणामिति दृष्टांतात्प्रेतविप्रहतपाषंडादीनां सपिंडनाभावेपि
सांवत्सरमेकोद्दिष्टं कार्यमेवेति शूलपाणिः॥ अत्रिरुद्रवसिष्ठौ॥ सपिंडीकरणादूर्ध्वं यत्र यत्र
प्रदीयते। भ्रात्रे भगिन्यै पुत्राय स्वामिने मातुलाय च। पितृव्यगुरुवे श्राद्धमेकोद्दिष्टं न पार्वणं॥ यत्तु
यात्तु कार्ष्णः॥ पितृव्यभ्रातृमातॄणामपुत्राणां तथैव च। मातामहस्यासुतस्य श्राद्धादि पितृवद्भ
वेदिति। तदावश्यकत्वार्थं न तु पार्वणार्थमिति हेमाद्रिः। युक्तं त्वेवं॥ मातुः पितरमारभ्य त्रयो मा
तामहाः स्मृताः। तेषां च पितृवच्छ्राद्धं कुर्युर्दुहितृसूनव इति। पुलस्त्योक्तेर्मातामहस्य पार्वणमेव
तत्साहचर्यात्पितृव्यादेस्तथा। पितृव्यभ्रातृमातॄणामेकोद्दिष्टं च पार्वणमिति स्मृत्यंतरोपक्रमे पु
लस्त्योक्तेश्च विकल्पः॥ केचित्त्वापस्तंबादिवाक्यानि मुख्यमात्रपत्नीनां नैव कार्यो सपिंडने
तस्य पितृव्यादिपरत्वाद्ग्रहाभावे सपिंडनपितृव्यादिपराणीत्याहुः। माता सपत्नीमाता। एकोद्दिष्ट
तु कनिष्ठपरमिति। पृथ्वीचंद्रोदयेप्येवं॥ विशेषस्त्वधिकारिनिर्णये प्रागुक्तः। केचित्तु भ्रातृणामभावे
पितामहवार्षिकमप्यावश्यकं। पुत्राभावे च तत्पुत्रः। पत्नी माता तथा पिता। विज्ञाभावेपि सच्छि
ष्यः कुर्यात्तस्यौर्ध्वदैहिकमिति मार्कंडेयपुराणादित्याहुः। तन्न। पौत्रेणैकादशाहादिकर्तव्यं श्राद्
षोडशमितिकांतोपविशेषोक्तेः॥ ॥अथ श्राद्धे देशनिर्णयः॥ तत्रैकोद्दिष्टं मध्याह्ने
कार्यं॥ मध्याह्नश्च पंचधा भक्ते दिने तृतीयभाग इति माधवः॥ आमश्राद्धं तु पूर्वाह्णे एकोद्दिष्टं तु म
ध्यतः। पार्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकमिति हारीतोक्तो मानः प्राह्णसाहचर्यात्। तत्रापि कु
तपादिमुहूर्ते इष्यते क्षमम्। आरभ्य कुतपे श्राद्धं कुर्यादारौहिणं बुधः। विधिज्ञो विधिमास्थाय रौहिणं
तु न लंघयेदिति श्लोकगौतमोक्तेरेतत्परत्वात्। रौहिणो नवमो मुहूर्तः। मैथिलाः श्राद्धकौमुदीचे

वा। अन्यथा ऊर्ध्वं मुहूर्तात्कुतपाद्यन्मुहूर्तचतुष्टयं। मुहूर्तपंचकं ह्येतत्स्वधाभवनमिष्यते। इत्यादि विरोधात्। दीपिकापि॥ एकोद्दिष्टमुपक्रमेत कुतपे इति। माधवीये व्यासोपि। कुतपप्रथमे भागे एकोद्दिष्टमुपक्रमेत्। आवर्तनसमीपे वा तत्रैव नियतात्मवान्। तेन कुतपादि रौहिणांतो मुख्यः कालः॥ पृथ्वीचंद्रोदयेप्येवं दिनद्वयेन समव्याप्तौ च पूर्वा। विषमव्याप्तौ वाधिक्येन निर्णयः। अव्याप्तौ पूर्वैव परविद्धाया निषेधात्। स च वक्ष्यते। पूर्वदिने ग्रहणे रौहिणलंघनापत्तेः परैवेति गौडाः॥ कुलाचारवशात्स्ववेदपाठैर्वा व्यवस्थेत्यन्ये॥ तन्न॥ परविद्धानिषेधप्राबल्यात्। अत्र मूलं कालमाधवीये ज्ञेयम्। पार्वणं त्वपराह्णे कार्यं। पूर्वोक्तवचनात्। मध्याह्नव्यापिनी या स्यात्सैकोद्दिष्टे तिथिर्भवेत्। अपराह्णव्यापिनी या तु पार्वणे सा तिथिर्भवेदिति पृथ्वीचंद्रोदये गौतमोक्तेश्च॥ पूर्वेद्युरेव परे च परेद्युरेव वा अपराह्णव्याप्तौ सैव ग्राह्या। दिनद्वये तद्व्याप्तौ तदस्पर्शे शनः समव्याप्तौ वा पूर्वैव। विषमव्याप्तौ त्वधिका ग्राह्या। अपराह्णव्यापिनी या स्यादाब्दिकस्य यदा तिथिः। महती पत्र तद्विद्धा प्रशस्ता तिमहर्षय इति मरीचिस्मृतेः॥ दर्शं च पौर्णमासं च पितुः सांवत्सरं दिनं पूर्वविद्धमकुर्वाणो नरकं प्रतिपद्यते। इत्यपरार्के नारदोक्तेः। द्व्यहे प्रव्यापिनी चेत्स्यान्मृताहस्य यदा तिथिः। पूर्वविद्धा प्रकर्तव्या त्रिमुहूर्ता भवेद्यदीति॥ सुमंतूक्तेः॥ पूर्वस्यां निर्वपेत्पिंडानित्यांगिरसभाषितमिति हेमाद्रौ पाठः॥ तत्रैव वृद्धमनुः॥ नद्यह्नव्यापिनी चेत्स्यान्मृताहस्य यदा तिथिः पूर्वविद्धैव कर्तव्या त्रिमुहूर्ता च या भवेत्॥ मदनरत्नेप्येवं॥ यत्तु कार्ष्णाजिनव्यासौ॥ अह्नो लयवेलायां कला या चापरा तिथिः। सैव मत्याब्दिके ज्ञेया नापरा पुत्रहानिदेति तत्त्रिमुहूर्तस्तुतिः॥ पूर्वेद्युः सायं त्रिमुहूर्ताभावे तु परैव। त्रिमुहूर्तानते चेद्ग्राह्या परैव कुतप इति। कालादर्शो गोभिलोक्तेः। कालादर्शेपि। प्रत्याब्दिकेप्येवमेव तिथिर्ग्राह्यापराह्णिकी। उभयत्र तथात्वे तु महत्त्वेन विनिर्णयः॥ अन्यत्रापि॥ समत्वे पूर्वविद्धैव ग्राह्या तथात्वेपि सा यदि। त्रिमुहूर्ता भवेत्सायं सर्वैषोयं विनिर्णयः॥ अन्यत्रापि। सायंतन्यस्तं चेन्मृततिथिः सैवाब्दिके मासिके ग्राह्या साह्यपराह्णयोर्यदि तदा पत्राधिका सा मता। तुल्या चेदुभया पराह्णसमये पूर्वा न चेत्तद्द्वये। पूर्वैव त्रिमुहूर्तगा लसमये नो चेत्परैवोचिता। माधवपृथ्वीचंद्रौ तु दिनद्वये पराह्णव्याप्त्यभावे वशतः समव्याप्तौ च क्षये पूर्वा वृद्धौ परा। खर्वो दर्पो परो ह्यास्यादित्युक्तेः। अपराह्णद्वयव्यापिनी तस्य च या दा तिथिः। क्षये पूर्वा च कर्तव्या वृद्धौ कार्या तथोत्तरेति बौधायनोक्तेः। क्षयाहस्य तिथिर्या तु अपराह्णद्वये यदि। पूर्वा क्षये तु कर्तव्या वृद्धौ कार्या तथोत्तरेति। वृहन्नारदीयाच्चेत्याहतुः। वृद्धिक्षयौ चात्र परतिथ्येव तु ग्राह्यतिथेः। तस्याः क्षये पराह्णद्वयेव्याप्तेरसंभवात्। तदाह माधवः॥ ग्राह्यतिथिगौ वृद्धिक्षयावूर्ध्वतिथिस्तुताविति॥ यत्तु पृथ्वीचंद्रः॥ पूर्वोक्तवचनेषु यत्र सायाह्नात्समययोगिनी तिथिरुक्ता। तत्रापराह्णव्यापिनी सैपा। सायाह्ने त्रिमुहूर्तैः स्यात्तत्र श्राद्धं न कारयेदिति मात्स्यादौ सायाह्ने निषेधात् यच्च त्रिमुहूर्ताद्यिग्रहणं तत्कुतपाद्यह्यपराह्णरूपत्रिमुहूर्तपरमित्याह। तद्धेमाद्रिमदनरत्नकालादर्शादिग्रंथविरोधाल्लक्षणापत्तेः चिंत्यं। तस्मात्पूर्वोक्तमेव साधु। यदा विघ्नवशाद्दिने सांवत्सरं श्राद्धं नष्टं तत्तदा रात्रावपि कार्यं। मृताहं समतिक्रम्य चंडालेष्वभिजायते। इति मरीचिनाम्

मातृ एयज्येष्ठानां पार्वणं भवेत्। एकोद्दिष्टं कनिष्ठानां दंपत्योः पार्वणं भवेत्। एकोद्दिष्टं कनिष्ठानां
पत्न्योः पार्वणं मिथः॥ अपुत्रस्य पितृव्यस्य भ्रातुर्वाग्रजन्मनः। मातामहस्य तत्पत्न्याः श्रा
पार्वणं च भवेत्। इत्युक्तं। पत्न्याः कर्तृत्वे पि पार्वणमेव। सर्वाभावे स्वयं पत्न्युः स्वभर्तृणाममं
के। सपिंडीकरणं कुर्युस्ततः पार्वणमेव चेति लौगाक्षिस्मृतेः। तत्र पत्न्यपि कुर्वीत सापिंड्य
पार्वणं तथेति। सुमंतूक्तेश्चेति। निर्णयामृते उक्तं। अन्ये त्वेतत्पाक्षिकपार्वणपरमाहुः॥
।अतएव। भर्तुः श्राद्धं तु या नारी मोहात्पार्वणमाचरेत्। ततेनैनव्यतेभ
ुक्त्वा तु नरकं व्रजेदितिवचनस्य पाहे पाक्षिकैकोद्दिष्टप्रशंसार्थेन पार्वणनिषेधार्थमित्युक्तं। त्रि
स्थलीसेतौ भट्टचरणैः स्वभर्तृप्रभृतित्रिभ्य इत्यनेन विरोधाच्च। अपुत्राणां त्वाह हेमाद्रावापस्तंबः
पुत्रायेमृताः केचित्स्त्रियो वा पुरुषाश्च ये। तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणं। मित्रबंधुस
पिंडेभ्यः स्त्रीकुमारीभ्य एव च। इयाद्मासिकं श्राद्धं सांवत्सरमतोन्यथा। पारिजाते तु अन्यथा पार्व
णमित्युक्त्वा सर्वत्र पार्वणमुक्तं। एकोद्दिष्टवाक्यानि तु तीर्थमहालयपराणीत्युक्तं। पृथ्वीचंद्रोदये
वृद्धगार्ग्यः॥ मातुः सहोदरा या च पितुः सहभवा च या। तयोश्च नैव कुर्वीत पार्वणं पिंडनाहृते॥ अ
ज्ञाताः॥ सपिंडीकरणादूर्ध्वमेकोद्दिष्टविधीयते। अपुत्राणां च सर्वेषामपत्नीनां तथैव च॥ अप
त्नीनां ब्रह्मचार्यादीनां। मार्कंडेयपुराणे॥ प्रतिसंवत्सरं कार्यमेकोद्दिष्टं नरैः स्त्रियाः। मृताहनि
यथान्यायं नृणां यद्वदिहोदितम्॥ नृणामिति दृष्टांतात्क्लीबविप्रहतपाषंडादीनां सपिंडनाभावेपि
संवत्सरमेकोद्दिष्टं कार्यमेवेति शूलपाणिः॥ अत्रिरुद्रवसिष्ठौ॥ सपिंडीकरणादूर्ध्वं यत्र यत्र
प्रदीयते। भ्रात्रे भगिन्यै पुत्राय स्वामिने मातुलाय च। पितृव्यगुरवे श्राद्धमेकोद्दिष्टं न पार्वणं॥ यत्तु
यात्रकल्पे॥ पितृव्यभ्रातृमातॄणामपुत्राणां तथैव च। मातामहस्यासुतस्य श्राद्धादिपितृवद्
वेदिति। तद्वद्धपकत्वार्थं न तु पार्वणार्थमिति हेमाद्रिः। युक्तं त्वेवं॥ मातुः पितरमारभ्य त्रयोमा
तामहाः स्मृताः। तेषां च पितृवच्छ्राद्धं कुर्युर्दुहितृसूनव इति। पुलस्त्योक्ते मातामहस्य पार्वणमेव
तत्साहचर्यात्पितृव्यादीनां तथा। पितृव्यभ्रातृमातॄणामेकोद्दिष्टं च पार्वणमिति स्याहोपकामे पु
लस्त्योक्तेश्च विकल्पः॥ केचित्त्वापस्तंबादिवाक्यानि व्युत्क्रमाच्च मीतानां नैव कार्या सपिंडते
त्यस्य पितृव्यादिपरत्वादकृतसपिंडनपितृव्यादिपराणीत्याहुः। माता सपत्नीमाता। एकोद्दिष्ट
न्तु निषेधपरमिति। पृथ्वीचंद्रोदयेप्येवं॥ विशेषस्त्वधिकारिनिर्णये प्रागुक्तः। केचित्पुत्रांतराभावे
पैतामहवार्षिकमप्यावश्यकं। पुत्राभावे च तत्पुत्रः। पत्नी माता तथा पिता। वित्ताभावे पि सच्चि
ष्यः कुर्यात्तस्योर्ध्वदैहिकमिति मार्कंडेयपुराणादित्याहुः। तन्न। पौत्रेणैकादशाहादिकर्तव्यं श्राद्ध
षोडशमिति कात्यायनविशेषोक्तेः॥ ॥अथ सपाहद्वैधे निर्णयः॥ तत्रैकोद्दिष्टं मध्याह्ने
कार्यं॥ मध्याह्नश्च पंचधाभक्तेदिने तृतीयभाग इति माधवः॥ आमश्राद्धं तु पूर्वाह्ने एकोद्दिष्टं तु म
ध्यतः। पार्वणं चापराह्णे तु मातृवृद्धिनिमित्तकमिति हारीतोक्तौ मातृः शब्दसाहचर्यात्। तत्रापि कु
तपादिमुहूर्तेद्वयेपेक्षेत्यम्। आरभ्य कुतपे श्राद्धं कुर्यादारौहिणं बुधः। विधिज्ञो विधिमास्थाय रौहिणं
तु न लंघयेदिति स्नोकगौतमोक्तेरेतत्परत्वात्। रौहिणो नवमो मुहूर्तः। मैथिलाः श्राद्धकौमुद्यां

वा। अन्यथा ऊर्ध्वमुहूर्त्तात्कुतपाद्यमुहूर्ते चतुष्टये। मुहूर्त्तपंचकं ह्येतत्स्वधाभवनमिष्यते। इत्यादि
विरोधात् दीपिकायां॥ एकोद्दिष्टमुपक्रमेत्कुतपे इति। माधवीये व्यासोपि। कुतपप्रथमे भागे
एकोद्दिष्टमुपक्रमेत्। आवर्तनसमीपे वा तत्रैव नियतात्मवान्। तेन कुतपादिरौहिणांतो मुख्यः
कालः॥ पृथ्वीचंद्रोदयेप्येवं दिनद्वयेन समव्याप्तौ च पूर्वा। विषमव्याप्तौ वाधिक्येन निर्णयः। अ
व्याप्तौ पूर्वैव परविद्धाया निषेधात्। स च वक्ष्यते। पूर्वदिनग्रहणे रौहिणलंघनापत्तेः परैवेति गौ
डाः॥ शुक्लकृष्णपक्षत्वे वेदपाठे वा व्यवस्थेत्यन्ये॥ तन्न॥ परविद्धानिषेधप्राबल्यात्। अत्र मू
लं कालमाधवीये ज्ञेयम्। पार्वणं त्वपराह्णे कार्यं। पूर्वोक्तवचनात्। मध्याह्नव्यापिनी या स्यात्सै
कोद्दिष्टे तिथिर्भवेत्। अपराह्णव्यापिनी या तु पार्वणे सा तिथिर्भवेदिति पृथ्वीचंद्रोदये गौतमोक्ते
श्च। पूर्वेद्युरेव परेद्युरेव वा अपराह्णव्याप्तौ सैव ग्राह्या। दिनद्वये तद्व्याप्तौ तदस्पर्शेंऽशतः सम
व्याप्तौ वा पूर्वैव। विषमव्याप्तौ त्वधिका ग्राह्या। ह्यपराह्णव्यापिनी या स्यादाब्दिकस्य यदा तिथिः
महनीयत्र तद्विद्धां प्रशंसंति महर्षय इति मरीचिस्मृतेः॥ दर्शे च पौर्णमासे च पितुः सांवत्सरे दिने
पूर्वविद्धमकुर्वाणो नरकं प्रतिपद्यते। इत्यपरार्के नारदोक्तेः। द्व्यहेप्यव्यापिनी चेत्स्यान्मृताहस्य य
दा तिथिः। पूर्वविद्धा प्रकर्तव्या त्रिमुहूर्त्ता भवेद्यदीति॥ सुमंतूक्तेः॥ पूर्वस्यां निर्वपेत्पिंडानित्यांगि
रसभाषितमिति हेमाद्रौ पाठः॥ तत्रैव वृद्धमनुः॥ न चाह्नव्यापिनी चेत्स्यान्मृताहस्य यदा तिथिः
पूर्वविद्धैव कर्तव्या त्रिमुहूर्त्ता च या भवेत्॥ मदनरत्नेप्येवं॥ यत्तु कार्ष्णाजिनव्यासौ॥ अन्होस्तम
यवेलायां कला मात्रा यदा तिथिः। सैव प्रत्याब्दिके ज्ञेया नापरा पूर्वहानि दिने तत्त्रिमुहूर्त्तस्तु तिः॥
पूर्वेद्युः सायं त्रिमुहूर्त्ताभावे तु परैव। त्रिमुहूर्त्ता न चेद्ग्राह्या परैव कुतपे हि सेति। कालादर्शे गोभिलो
क्तेः। कालादर्शेपि। प्रत्याब्दिकेप्येवमेव तिथिर्ग्राह्यापराह्णिकी। उभयत्र तथात्वे तु महत्त्वेन विनि
र्णयः॥ अन्यत्रापि॥ समत्वे पूर्वविद्धैव स्यात्तथात्वेपि सा यदि। त्रिमुहूर्त्ता भवेत्सायं सर्वेषोयं विनि
र्णयः॥ अन्यत्रापि। सायंतन्यस्तं चेन्मृततिथिः सैवाब्दिके मासिके ग्राह्या सा त्वपराह्णयोर्यदि त
दा यत्राधिका सा मता। तुल्या चेदुभयापराह्णसमये पूर्वा न चेत्तद्द्वये। पूर्वैव त्रिमुहूर्त्तगा त्वसमये नो
चेत्परैवोचिता। माधवपृथ्वीचंद्रौ तु दिनद्वये पराह्णव्याप्तावंशतः समव्याप्तौ च क्षये पूर्वा वृद्धौ परा।
खर्वोदर्पौ परौ पूज्याविति तदुक्तेः। अपराह्णद्वयव्यापि मृतीतस्य च यदा तिथिः। क्षये पूर्वा च कर्तव्या वृ
द्धौ कार्या तथोत्तरेति बौधायनोक्तेः। मृताहस्य तिथिर्या तु अपराह्णद्वये यदि। पूर्वा क्षये तु कर्तव्या
वृद्धौ कार्या तथोत्तरेति। वृद्धनारदीयाच्चेत्याहतुः। वृद्धिक्षयौ चात्र परतिथ्यैव न तु प्राह्यतिथेः। त
स्याः क्षये पराह्णद्वये व्याप्तेरसंभवात्। तदाह माधवः॥ न प्राह्यतिथिगौ वृद्धिक्षयावूर्ध्वतिथे
स्तु ताविति॥ यत्तु पृथ्वीचंद्रः॥ पूर्वोक्तवचनेषु यत्र सायाह्नास्तसमययोगिनी तिथिरुक्ता। तत्रा
पराह्णव्यापिनी ज्ञेया। सायाह्ने त्रिमुहूर्त्तः स्यात्तत्र श्राद्धं न कारयेदिति मात्स्यादौ सायाह्ने निषेधात्
यच्च त्रिमुहूर्त्तादिग्रहणं तच्छ्राद्धार्हापराह्णरूपत्रिमुहूर्त्तपरमित्याह॥ तद्धेमाद्रिमदनरत्नका
लादर्शादिग्रंथविरोधात्स्वप्रतिपत्तेः चिंत्यं। तस्मात्पूर्वोक्तमेव साधुः। यदा विघ्नवशाद्दिने सांव
त्सरं श्राद्धं नष्टं तदा रात्रावपि कार्यं। मृताहसमतिक्रम्य चंडालेष्वभिजायते। इति मरीचिनाम

तस्मात्स्वज्येष्ठानांपार्वणंभवेत्। एकोद्दिष्टंकनिष्ठानांदंपत्योःपार्वणंभवेत्। एकोद्दिष्टंकनिष्ठानां
दंपत्योःपार्वणंमिथः॥ अपुत्रस्यपितृव्यस्यभ्रातुर्ज्येष्ठस्यवाग्रजन्मनः। मातामहस्यतत्पत्न्याश्रा
द्धंपार्वणवद्भवेत् इत्युक्तेः। पत्न्याःकर्तृत्वेपिपार्वणमेव। सर्वाभावेस्वयंपत्न्यःस्वभर्तृणाममं
त्रकं। सपिंडीकरणंकुर्युस्ततःपार्वणमेवचेतिलौगाक्षिस्मृतेः। तत्रपत्न्यपिकुर्वीतसापिंड्यं
पार्वणंतथेति। सुमंतूक्तेश्चेति। निर्णयामृतेउक्तं। अन्येत्वेतत्क्षयाहिकपार्वणपरमाहुः॥
अतएव। भर्तुःश्राद्धंतुयानारीमोहात्पार्वणमाचरेत्। व्रतेनेतरप्यतेभ
र्तारंहत्वातुनरकंव्रजेदितिवचनक्षयाहे पाक्षिकैकोदिष्टप्रशंसार्थंनपार्वणनिषेधार्थमित्युक्तं। त्रि
स्थलीसेतौभट्टचरणैः। स्वभर्तृप्रभृतित्रिभ्यइत्यनेनविरोधाच्च। अपुत्राणांत्वाह। हेमाद्रावापस्तंबः
अपुत्रायेमृताःकेचित्स्त्रियोवापुरुषाश्चये। तेषामपिचदेयंस्यादेकोद्दिष्टंनपार्वणं। मित्रबंधुस
पिंडेभ्यःस्त्रीकुमारीभ्यएवच। इदंहैमासिकंश्राद्धंसांवत्सरमतोन्यथा। पारिजातेतुअन्यथापार्व
णमित्युक्त्वासर्वत्रपार्वणमुक्तं। एकोद्दिष्टवाक्यानितुतीर्थमहालयपराणीत्युक्तं। पृथ्वीचंद्रोदये
वृद्धगार्ग्यः॥ मातुःसहोदरायाश्चपितुःसहभवाश्चया। तयोश्चैवकुर्वीतपार्वणंपिंडदाने॥ प्र
चेताः॥ सपिंडीकरणादूर्ध्वमेकोद्दिष्टंविधीयते। अपुत्राणांचसर्वेषामपत्नीनांतथैवच। अप
त्नीनांब्रह्मचार्यादीनां। मार्कंडेयपुराणे॥ प्रतिसंवत्सरंकार्यमेकोद्दिष्टंनरैःस्त्रियाः। मृताहनि
यथान्यायंनृणांयद्वदिहोदितम्॥ नृणामितिदृष्टांतान्नोविप्रहतपाषंडादीनांसपिंडनाभावेपि
सांवत्सरमेकोद्दिष्टंकार्यमेवेतिशूलपाणिः॥ अत्रिरुद्रवसिष्ठौ॥ सपिंडीकरणादूर्ध्वंयत्रयत्र
प्रदीयते। भ्रात्रेभगिन्यैपुत्रायस्वामिनेमातुलायच। पितृव्यगुरवेश्राद्धमेकोद्दिष्टंनपार्वणं॥ यत्तु
यातूकर्ण्यः॥ पितृव्यभ्रातृमातॄणामपुत्राणांतथैवच। मातामहस्यासुतस्यश्राद्धादिपितृवद्भ
वेदिति। तदावश्यकत्वार्थंनतुपार्वणार्थमितिहेमाद्रिः। युक्तंत्वेवं॥ मातुःपितरमारभ्यत्रयोमा
तामहास्तथा। तेषांचपितृवच्छ्राद्धंकुर्युर्दुहितृसूनवइति। पुलस्त्योक्तेर्मातामहस्यपार्वणमेव
तत्साहचर्यात्पितृव्यादेस्तथा। पितृव्यभ्रातृमातॄणामेकोद्दिष्टंचपार्वणमितिस्पष्टोपक्रमेपु
लस्त्योक्तेश्चविकल्पः॥ केचित्त्वापस्तंबादिवाक्यानित्युक्तमात्रशमीनांनैवकार्यासपिंडते
तस्यपितृव्यादिपरत्वादन्तसपिंडनपितृव्यादिपराणीत्याहुः। मातासपत्नीमाता। एकोद्दिष्टं
तुकनिष्ठपरमिति। पृथ्वीचंद्रोदयेप्येवं॥ विशेषस्त्वधिकारिनिर्णयेप्रागुक्तः। केचित्पुत्राद्यभावे
पितामहवार्षिकमप्यावश्यकं। पुत्राभावेचतत्पुत्रः। पत्नीमातातथापिता। पित्राभावेपिसच्छि
ष्यःकुर्यात्तस्यौर्ध्वदेहिकमितिमार्कंडेयपुराणादित्याहुः। तच्चपौत्रेणैकादशाहादिकर्तव्यंश्राद्ध
षोडशमितिकात्यायनेविशेषोक्तेः॥ ॥अथसपादद्वैधेनिर्णयः॥ तत्रैकोद्दिष्टंमध्याह्ने
कार्यं॥ मध्याह्नःश्राद्धपंचधाभक्तेदिनेतृतीयभागइतिमाधवः॥ आमश्राद्धंतुपूर्वाह्णेएकोद्दिष्टंतुम
ध्यतः। पार्वणंचापराह्णेतुप्रातर्वृद्धिनिमित्तकमितिहारीतोक्तेःप्रातःशब्दसाहचर्यात्। तत्रापिकु
तपादिमुहूर्तद्वयेज्ञेयम्। आरभ्यकुतपेश्राद्धंकुर्यादारौहिणंबुधः। विधिज्ञोविधिमास्थायरौहिणं
तुनलंघयेदितिश्लोकगौतमोक्तेरेतत्परत्वात्। रौहिणोनवमोमुहूर्तः। मैथिलाःश्राद्धकौमुदीचे

वे। अन्यथा ऊर्ध्वं मुहूर्तात्कुतपाद्यमुहूर्ते चतुष्टये। मुहूर्तपंचकेह्येतत्स्वधाभवनमिष्यते। इत्यादि विरोधात्। दीपिकायां। एकोद्दिष्टमुपक्रमेत्कुतपे इति। माधवीयेप्यासोपि। कुतपप्रथमेभागे एकोद्दिष्टमुपक्रमेत्। आवर्तनसमीपे वा तत्रैव नियतात्मवान्। तेन कुतपादि रौहिणांतो मुख्यः कालः॥ पृथ्वीचंद्रोदयेप्येवं दिनद्वयेन समव्याप्तौ च पूर्वा। विषमव्याप्तावाधिक्येन निर्णयः। अव्याप्तौ पूर्वैव परविद्धाया निषेधात्। स च वक्ष्यते। पूर्वदिनग्रहणे रौहिणलंघनापत्तेः परैवेति गौडाः॥ मुख्यकालस्य वशात्स्ववेदपाठ्येवाव्यवस्थेत्यन्ये॥ तन्न॥ परविद्धानिषेधप्राबल्यात्। अत्र मूलं कालमाधवीये ज्ञेयं। पार्वणं त्वपराह्णे कार्यं। पूर्वोक्तवचनात्। मध्याह्नव्यापिनी या स्यात्सैकोद्दिष्टे तिथिर्भवेत्। अपराह्णव्यापिनी या तु पार्वणे सा तिथिर्भवेदिति पृथ्वीचंद्रोदये गौतमोक्तेश्च॥ पूर्वेद्युरेव परे च परेद्युरेव वा अपराह्णव्याप्तौ सैव ग्राह्या। दिनद्वये तद्व्याप्तौ तदस्पर्शेशनःसमव्याप्तौ वा पूर्वैव। विषमव्याप्तौ त्वधिका ग्राह्या। यापराह्णव्यापिनी या स्यादाब्दिकस्य यदा तिथिः। महती यत्र तद्वृद्धौ प्रशंसंति महर्षय इति मरीचिस्मृतेः॥ दर्शे च पौर्णमासे च पितुः सांवत्सरे दिने पूर्वविद्धमकुर्वाणो नरकं प्रतिपद्यते। इत्यपरार्के नारदोक्तेः। द्व्यहेप्यव्यापिनी चेत्स्यान्मृताहस्य यदा तिथिः। पूर्वविद्धा प्रकर्तव्या त्रिमुहूर्ता भवेद्यदीति॥ सुमंतूक्तेः॥ पूर्वेद्युर्निर्वपेत्पिंडान्नित्यांगिरसभाषितमिति हेमाद्रौ पाठः॥ तत्रैव वृद्धमनुः॥ द्व्यह्नव्यापिनी चेत्स्यान्मृताहस्य यदा तिथिः पूर्वविद्धैव कर्तव्या त्रिमुहूर्ता च या भवेत्॥ मदनरत्नेप्येवं॥ यत्तु काष्मीजिनव्यासौ॥ अह्नोस्तमयवेलायां कलामात्रापि यदा तिथिः। सैव प्रत्याब्दिके ज्ञेया नापराह्णगताहीति तत्त्रिमुहूर्तस्तुतिः॥ पूर्वेद्युः सायंत्रिमुहूर्ताभावे तु परैव। त्रिमुहूर्ता न चेद्ग्राह्या परैव कुतपे हि सेति। कालादर्शोभिलानेः। कालादर्शेपि। प्रत्याब्दिकेप्येवमेव तिथिर्ग्राह्यापराह्णिकी। उभयत्र तथात्वे तु महत्त्वेन विनिर्णयः॥ अन्यत्रापि॥ समत्वे पूर्वविद्धैव ह्यतथात्वेपि सा यदि। त्रिमुहूर्ता भवेत्सायं सर्वैषोयं विनिर्णयः॥ अन्यत्रापि। सायंतनस्त्वं चेन्मृततिथिः सैवाब्दिके मासिके ग्राह्या साल्पपराह्णयोर्यदि तदा पत्राधिका सा मता। तुल्या चेदुभयापराह्णसमये पूर्वा न चेत्तद्द्वये। पूर्वैव त्रिमुहूर्तगास्तसमये नो चेत्परैवोचिता। माधवपृथ्वीचंद्रौ तु दिनद्वये पराह्णव्याप्त्यवशतः समव्याप्तौ च क्षये पूर्वा वृद्धौ परा। खर्वो दर्पो परो हिंस्रा इत्युक्तेः। अपराह्णद्वयव्यापिन्यतीतस्य च या तिथिः। क्षये पूर्वैव कर्तव्या वृद्धौ कार्या तथोत्तरेति बोधायनोक्तेः। क्षयाहस्य तिथिर्या तु अपराह्णद्वये यदि। पूर्वा क्षये तु कर्तव्या वृद्धौ कार्या तथोत्तरेति। वृहन्नारदीयाच्चेत्याहतुः वृद्धिक्षयोश्चात्र परतिथ्येन तु ग्राह्यतिथेः। तस्याः क्षये पराह्णद्वयेव्याप्त्यसंभवात्। तदाह माधवः। ग्राह्यतिथिगो वृद्धिक्षयावूर्ध्वतिथ्युक्तावितिः॥ यत्तु पृथ्वीचंद्रः॥ पूर्वोक्तवचनेषु यत्र सायाह्नास्तसमययोगिनी तिथिरुक्ता तत्रापराह्णव्यापिनी ज्ञेया। सायाह्नत्रिमुहूर्तः स्यात्तत्र श्राद्धं न कारयेदिति मात्स्यादौ सायाह्ने निषेधात् च त्रिमुहूर्तादिग्रहणं। तत्कृत्याद्वाहापराह्णरूपत्रिमुहूर्तपरमित्याह॥ तद्धेमाद्रिमदनरत्नकालादर्शादिग्रंथविरोधाल्लक्षणापत्तेश्चिंत्यं। तस्मात्पूर्वोक्तमेव साधु। पराविद्धवशाद्दिने सांवत्सरं श्राद्धं नष्टं तत्तदा रात्रावपि कार्यं। मृताहसमतिक्रम्य चंडालेष्वभिजायते। इति मरीचिनाम्ना

न्नाहानिक्रमेदोषैत्युक्तेः। नचनक्तंश्राद्धंकुर्वीतारब्धेचाभोजनसमापनमित्यापत्तेर्वेनगौणकालोऽ
स्त्वितिमाधवः॥ आरब्धश्राद्धविघ्नवशाद्रात्रिपातभोजनसमाप्त्यनंतरंरात्रौकार्यः। शेषसमाप्तिःपर
दिनएवेतिहरदत्तः॥ ग्रहणादिनेवार्षिकमापतितद्दिनएवान्नेनामेनहेम्नावाकुर्यात् नोत्तरदिने
इत्युक्तंप्राक्ग्रहणनिर्णये। तच्चप्रथमाब्दिकंत्रयोदशेमलमासेकार्यंअन्यथान। प्रत्यब्दंद्वादशे
मासिकार्योपिंडक्रियासुतैः। क्वचित्त्रयोदशेपिस्यादाद्यमुक्त्वातुवत्सरमितिलघुहारीतोक्तेःइद
मत्याधिमासपरं। द्वादशेत्रयोदशेचातीतइत्यर्थः॥ तेनयत्रद्वादशमासिकंशुद्धमासेभवतितत्रत्र
योदशेधिकेएवाद्याब्दिकंकार्यं। यत्राधिकमध्येद्वादशमासिकंतत्रतस्यद्विरावृत्तिंकृत्वाचतुर्द
शेशुद्धेएवप्रथमाब्दिकमितिनिष्कर्षः। माधवीयेहेमाद्रौचैवं। द्वितीयादिकंतुशुद्धमासएवनाधि
केनाप्युभयोः। मलमासमृतानांतुयदामासएवाधिकस्तत्तदातत्रैवकार्यमन्यथाशुद्धएवेतिप्रागु
क्तम्॥ दर्शेवार्षिकंचेत्तदापूर्वंवार्षिकंकृत्वाततःपिंडपितृयज्ञादर्शश्राद्धंवेतिनिर्णयदीपेक्रमउ
क्तः। स्मृतिसारेपि॥ दर्शेक्षयाहेसंप्राप्तेकथंकुर्वीतयाज्ञिकाः। आदौक्षयाहंनिर्वर्त्यपश्चाद्दर्शोवि
धीयतेइति। युक्तंत्वेवं। तद्वचनेमूलाभावात्। पिंडयज्ञंततःकुर्यात्ततोन्वाहार्यकंबुधइति दर्शश्राद्धे
पिंडपितृयज्ञानंतर्यात्तत्याब्दिकेप्यतिदेशप्राप्तेः। पितृयज्ञानंतरंवार्षिकं ततोदर्शश्राद्धमिति।
व्यतिषंगस्तुनभवतितस्यार्थिकत्वात्॥ कालादर्शेपि। निमित्तानियतिश्चात्रपूर्वानुष्ठानकारण
मिति। सर्वात्मनैकरूप्याभावात्क्षयाहनिमित्तस्यानियतत्वं। देवज्ञानीयेप्येवं। एवंमासिका
दिष्वपिज्ञेयं। मत्स्यपद्मयोःयथाकुर्यात्तथाकुर्यात्सतान्यपीतिसर्वातिदेशात्। मृताहेवृषोत्सर्गउ
क्तोहेमाद्रौविष्णुधर्मे॥ अयनद्वितयेचैवमृताहेबांधवस्यच। उत्सृजेन्नीलवृषभंकौमुद्यांसमु
पागमे। कौमुदीकार्त्तिकी॥ ॥अथशुद्धिश्राद्धं॥ दिवोदासीये। सपिंडकर
णादूर्ध्वंयावदब्दत्रयंभवेत्। तावदेवनभोक्तव्यंक्षयेहनिकदाचन। वर्षांतसपिंडनेप्येतत्तुल्यं
मृताहनितुसंप्राप्तेयावदब्दचतुष्टयं। वह्निःश्राद्धंप्रकुर्वीतनकुर्याच्छ्राद्धभोजनं। प्रथमेस्थीनिम
ज्जाचद्वितीयेमांसभक्षणं तृतीयेरुधिरंप्रोक्तंश्राद्धशुद्धंचतुर्थकमिति। श्राद्धकाशिकोक्तेः॥
शुद्धंकिंचिदितिज्ञेयं। स्मृत्यंतरे। सप्तत्रिंशच्चयोमासान्श्राद्धेभुंक्तेनमोहतः। सपंक्तिदूषितःपापः
प्रेतासीचभवेत्तुसः। तत्रप्रथमेब्देवर्षांतसपिंडनपक्षेमृताहात्पूर्वेन्हिसपिंडनमब्दपूर्तिश्राद्धंचकृत्वा
परेद्युर्वार्षिकंकुर्यादितिस्मृत्यर्थसारेउक्तं। कालकांडेहेमाद्रिस्तु। मृताहेसपिंडीकरणेनैववार्षि
कसिद्धिः। पूर्णेसंवत्सरेपिंडःषोडशःपरिकीर्तितः। तेनैवचसपिंडत्वंतेनैवाब्दिकमिष्यतेतिवच
नादित्याह। इदमेवचयुक्तम्॥ ॥अथक्षयाहाज्ञानेमरीचिः॥ श्राद्धविघ्नेसमुत्प
न्नेअविज्ञातेमृतेहनि। एकादश्यांतुकर्तव्यंकृष्णपक्षेविशेषतः। विशेषतइत्युक्तेःशुक्लैकादश्याम
पि। बृहस्पतिः॥ नज्ञायतेमृताहश्चेत्प्रमीतेप्रोषितेसति। मासश्चेत्प्रतिविज्ञातस्तद्दर्शःस्यात्तथाब्दिकं
दिनमासौनविज्ञातौमरणस्ययदापुनः। प्रस्थानमासदिवसौग्राह्यौपूर्वोक्तयादिशा॥ मदनरत्ने
भविष्ये॥ मृताहंयोनजानातिमानवोविनतात्मज। तेनकार्यममावास्यांश्राद्धंसंवत्सरंसदा। दिन
मेवतुजानातिमासंनैवंतुयोनरः मार्गशीर्षेथवाभाद्रेमाघेवातद्दिनंभवेत्। निर्णयामृतेतु। यदा

मासोनविज्ञातोविज्ञातंदिनमेवतु। तदाप्याषाढकेमासिमाघेवातद्दिनंभवेत्। इतिबृहस्पतिस्मृतेराषाढेयुक्तः। कालादर्शेपि। मासाज्ञानेदिनज्ञानेकार्यमाषाढमाघयोरित्युक्तं। हेमाद्रौप्रभासखंडे। मृताहंयोनजानातिमासंवापिकथंचन। तेनकार्यममायांस्यात्श्राद्धंमाघेथमार्गके॥ भविष्ये॥ मृतवार्ताश्रुतेर्थश्चोनोपूर्वोक्तक्रमेणतु। पूर्वोक्तेति। प्रस्थानदिनाज्ञानेमासज्ञानेचतद्दर्शे। मासाज्ञानेदिनज्ञानेचमार्गादावितिच। श्रवणदिनेपिज्ञेयमित्यर्थः। श्रवणदिनमासाज्ञानेमाघमार्गदर्शेकार्यंपूर्वोक्तप्रभासखंडात्। अतोन्नलोपइतिशूलपाण्युक्तंहेयं। तिथितत्त्वेयमः॥ गतस्यनभवेद्वार्तायावद्द्वादशवार्षिकी। प्रेतावधारणेनस्यकार्यंवसुतबांधवैः। यन्मासियदहर्यातस्तस्मिन्मासितदहःक्रिया। दिनाज्ञानेकुहूस्तस्यआषाढस्याथवाकुहूः॥ ॥अथश्राद्धविघ्नेनिर्णयः॥ तत्रविप्रस्यनिमंत्रणोत्तरंसूतकेमृतकेचाशौचाभावः। निमंत्रितेषुविप्रेषुप्रारब्धेश्राद्धकर्मणि। निमंत्रणाद्धिविप्रस्यस्वाध्यायादिरतस्यच। देहेपितृषुतिष्ठत्सुनाशौचंविद्यतेक्वचिदितिब्राह्मोक्तेः। कर्तुस्तुविष्णुराह। व्रतयज्ञविवाहेषुश्राद्धेहोमेर्चनेजपे। आरब्धेसूतकंनस्यादनारब्धेतुसूतकं। श्राद्धप्रारंभस्तेनैवोक्तः। प्रारंभोवरणंयज्ञेसंकल्पोव्रतसत्रयोः। नांदीमुखंविवाहादौश्राद्धेपाकपरिक्रियेति। माधवीयेब्राह्मेपि। श्राद्धादौपितृयज्ञेचकन्यादानेचनोभवेत्। मिताक्षरायांस्मृत्यंतरे। सद्यःशौचंप्रकृत्य। पक्वसंभृतसंभारेविवाहेश्राद्धकर्मणीति। तिथितत्त्वादिगौडग्रंथास्तुनिमंत्रणोत्तरंकर्तुर्भोक्तुश्चनाशौचं। निमंत्रणोत्तरंश्राद्धप्रारंभःस्यादितिस्मृतिरितिविसूक्तेः॥ यत्तुश्राद्धेपाकपरिक्रियेतितद्दर्शश्राद्धविषयमित्याहुः। तन्न। हेमरत्नादौब्राह्मेउक्तं। भोजनार्धेतुसंभुक्तेविप्रेदातुर्विपद्यते। एषदेशनिशेषः॥ यदाकश्चिन्नरोच्छिष्टःशेषःपक्वास्समाहितः। आचम्यपरकीयेनजलेनशुचयोद्विजाइति। अस्यश्राद्धविषयत्वंहेमाद्रिणोक्तं। पृथ्वीचंद्रोदयेप्येवं। ममतुप्रतिभाति। इदंविवाहादिविषयंनतुश्राद्धविषयं। तत्पदाभावात्। विवाहोत्सवयज्ञेषुत्वंतरामृतसूतके। पक्वान्नंभुंजानेषुतुविप्रेषुत्वंतरामृतसूतके। अन्यगेहोदकाचांताःसर्वेतेशुचयःस्मृताइति। षट्त्रिंशन्मतैकवाक्यत्वात्। निमंत्रितेषुविप्रेषुप्रारब्धेश्राद्धकर्मणीति। पूर्वोक्तविरोधाच्च॥ श्राद्धेतुयद्यपिविष्णुनापाकोत्तरमाशौचाभावउक्तस्तथापिकर्तुरेवसः॥ भोक्तुस्तुदोषोस्त्येव। अपिदातृग्रहीत्रोश्चसूतकेमृतकेतथा। अविज्ञातेनदोषःस्यात्श्राद्धादिषुकथंचन। विज्ञातेभोक्तुरेवस्यात्प्रायश्चित्तादिकंक्रमादितिमाधवीये॥ ब्राह्मोक्तेः। आदिशब्देनाशौचमुच्यते। तथाहविष्णुः॥ ब्राह्मणादीनामाशौचेयःसकृदेवान्नमश्नातितस्यतावदाशौचं। यावत्तेषामाशौचव्यपगमेप्रायश्चित्तंकुर्यादिति। यत्तुदेहेपितृषुतिष्ठत्सुनाशौचंविद्यतेक्वचिदितिब्राह्मंतत्प्राक्कालीनस्यनिषेधकं। नतदुत्तरकालीनस्य। शुद्धिदीपस्तुनिमंत्रितेष्वित्यामश्राद्धपरं। भोजनार्धेत्वित्यादितत्पक्वश्राद्धपरमित्याह। प्रायश्चित्तंत्वाहमार्कंडेयः॥ भुक्त्वातुब्राह्मणाशौचेचरेत्सांतपनंद्विजः। एतत्कामतः। अभ्यासेशंखः। ब्राह्मणस्यतथाभुक्त्वामासमेकंव्रतीभवेदिति। अज्ञानात्तुकालेयः॥ एकाहंचत्र्यहंपंचसप्तरात्रमभोजनं। ततःशुचिर्भवेद्विप्रःपंचगव्यंपिबेन्नरः॥ इति॥ वर्णक्रमेणेदं। अभ्यासेतुद्विगुणमित्यादिमिताक्षरामाधवीयादौज्ञेयं। मिताक्षरामाधवीयादौतुश्राद्धेकर्तुर्भोक्तुश्चसर्वथादोषाभावउक्तः॥

ताहानिक्रमेदोषैकेः। नचनक्तंश्राद्धंकुर्वीतारब्धेचाभोजनसमापनमित्यापस्तंबेनगौणकालोक्ते
श्चेतिमाधवः॥ आरब्धश्राद्धविघ्नवशाद्द्विपाताभोजनसमाप्त्यंतंरात्रौकार्यं। शेषसमाप्तिःपर
दिनएवेतिहरदत्तः॥ ग्रहणादिनेवार्षिकप्राप्तौतद्दिनएवान्नेनामेनहेम्नावाकुर्यान्नोत्तरदिने
इत्युक्तंप्राक्ग्रहणनिर्णये। तत्रप्रथमाब्दिकंत्रयोदशेमलमासेकार्यंअन्यथाना। प्रत्यब्दंद्वादशे
मासिकार्योपिंडक्रियापुनः। कचित्त्रयोदशेपिस्याद्गार्ग्यमुक्तानुवत्सरमितिलघुहारीतोक्तेःअथइद
मन्याधिमासपरं। द्वादशेत्रयोदशेचातीतरत्वर्थः॥ तेनयत्रद्वादशमासिकंशुद्धमासेभवतितत्रत्र
योदशेधिकेएवाद्याब्दिकंकार्यं। यत्राधिकमध्येद्वादशमासिकंतत्रतस्यद्विरावृत्तिंकृत्वाचतुर्द
शेशुद्धएवप्रथमाब्दिकमितिनिष्कर्षः। माधवीयेहेमाद्रौचैवं। द्वितीयादिकंतुशुद्धमासएवनाधि
केनाप्युभयोः। मलमासमृतानांतुयदासएवाधिकःस्यात्तदातत्रैवकार्यमन्यथाशुद्धएवेतिप्राग
क्तम्॥ दर्शेवार्षिकंचेत्तदापूर्वंवार्षिकंकृत्वाततःपिंडपितृयज्ञादर्शश्राद्धंचेतिनिर्णयदीपेक्रमउ
क्तः। स्मृतिसारेपि॥ दर्शेक्षयाहेसंप्राप्तेकथंकुर्वंतियाज्ञिकाः। आदौक्षयाहंनिर्वर्त्यपश्चाद्दर्शोवि
धीयतेइति। युक्तंत्वेवं। तद्वचनेमूलाभावात्। पिंडयज्ञंततःकुर्यात्ततोन्वाहार्यकंबुधःइति दर्शश्राद्धे
पिंडपितृयज्ञानंतर्यान्न्याब्दिकेप्यतिदेशप्राप्तेः। पितृयज्ञानंतरंवार्षिकं ततोदर्शश्राद्धमिति।
व्यतिषंगस्तुनभवतितस्यार्थिकत्वात्॥ कालादर्शेपि। निमित्तानियतिश्चात्रपूर्वानुष्ठानकारण
मिति। सर्वान्प्रत्येकरूप्याभावात्क्षयाहनिमित्तस्यानियतत्वं। देवज्ञानीयेप्येवं। एवंमासिका
दिष्वपिज्ञेयं। प्रत्यब्दंयोयथाकुर्यात्तथाकुर्यात्सतान्यपीतिसर्वातिदेशात्। मृताहेवृषोत्सर्गउ
क्तोहेमाद्रौविष्णुधर्मे॥ अयनद्वितयेचैवमृताहेबांधवस्यच। उत्सृजेन्नीलवृषभंकौमुद्याःसमु
पागमे। कौमुदीकार्त्तिकी॥ ॥अथशुद्धिश्राद्धं॥ दिवोदासीये। सपिंडकर
णादूर्ध्वंयावदब्दत्रयंभवेत्। तावदेवनभोक्तव्यंक्षयाहनिकदाचन। वर्षांतसपिंडनेप्येतत्तुल्यं
मृताहनितुसंप्राप्तेयावदब्दचतुष्टयं। बहिःश्राद्धंप्रकुर्वीतनकुर्याच्छ्राद्धभोजनं। प्रथमेस्थिनिम
ज्जाचद्वितीयेमांसभक्षणं तृतीयेरुधिरंभोक्ताश्राद्धंशुद्धंचतुर्थकमिति। श्राद्धकाशिकोक्तेः॥
शुद्धंकिंचिदितिज्ञेयं। स्मृत्यंतरे। सप्तत्रिंशत्त्रयोमासान्श्राद्धेभुंजीतमोहतः। सपंक्तिदूषितःपाप
प्रेतासीचभवेत्तुसः। तत्रप्रथमेब्देवर्षांतसपिंडनपक्षेमृताहात्पूर्वेद्युःसपिंडनमब्दपूर्तिश्राद्धंचकृत्वा
परेद्युर्वार्षिकंकुर्यादितिस्मृत्यर्थसारेउक्तं। कालकांडेहेमाद्रिस्तु। मृताहेसपिंडीकरणेनैववार्षि
कसिद्धिः। पूर्णेसंवत्सरेपिंडःषोडशःपरिकीर्तितः। तेनैवचसपिंडत्वंतेनैवाब्दिकमिष्यतेइतिवच
नादित्याह। इदमेवचयुक्तम्॥ ॥अथक्षयाहाज्ञानेमरणविधिः॥ श्राद्धविघ्नेसमुत्प
न्नेअविज्ञानेमृतेहनि। एकादश्यांतुकर्तव्यंकृष्णपक्षेविशेषतः। विशेषतस्त्वुक्तेःशुक्लैकादश्याम
पि। बृहस्पतिः। नज्ञायतेमृताहश्चेत्प्रमीतेःप्रोषितस्यतु। मासश्चेत्प्रतिविज्ञातस्तद्दर्शेस्याद्यथाब्दिकं
दिनमासौनविज्ञातौमरणस्ययदापुनः। प्रस्थानमासदिवसौग्राह्यौपूर्वोक्तयादिशा॥ मदनरत्ने
भविष्ये॥ मृताहंयोनजानातिमानवोविनतात्मज। तेनकार्यममावस्यांश्राद्धंसंवत्सरंसदा। दिन
मेवतुजानातिमासंनैवतुयोनरः मार्गशीर्षेथवाभाद्रेमाघेवातद्दिनंभवेत्। निर्णयामृतेतु। यदा

मासोनविज्ञातोविज्ञातेदिनमेवतु।तदाचाषाढकेमासिमाघेवातद्दिनंभवेत्।इतिरहस्यनिस्मृतेरप्या
ह्येयुक्तः।कालादर्शेपि।मासाज्ञानेदिनज्ञानेकार्यमाषाढमाघयोरित्युक्तं।हेमाद्रौप्रभासखंडे।मृता
हेयोनजानातिमासंवापिकथंचन।तेनकार्यममायांस्यात्श्राद्धंमाघेथमार्गके॥भविष्ये॥मृ
तवार्ताश्रुतेर्यास्यौतौपूर्वोक्तक्रमेणतु।पूर्वोक्तेति।प्रस्थानदिनाज्ञानेमासज्ञानेचतद्दर्शे।मासाज्ञा
नेदिनज्ञानेचमार्गादाविति च।श्रवणदिनेपिज्ञेयमित्यर्थः।श्रवणदिनमासाज्ञानेमाघमार्गदर्शे
कार्यंपूर्वोक्तप्रभासखंडात्।अतोत्रलोपइतिशूलपाण्युक्तंहेयं।तिथितत्त्वेयमः॥गतस्यनभवे
द्वार्तायावद्द्वादशवार्षिकी।प्रेतावधारणंतस्यकर्तव्यंसुतबांधवैः।यन्मासिपद्दहयोतस्मात्तिन
दहःक्रिया।दिनाज्ञानेकुहूस्तस्यआषाढस्याथवाकुहूः॥ ॥अथश्राद्धविप्रनिर्ण
यः॥तत्रविप्रस्यनिमंत्रणोत्तरंसूतकेमृतकेचाशौचाभावः।निमंत्रितेषुविप्रेषुप्रारब्धेश्राद्धकर्म
णि।निमंत्रणाद्धिविप्रस्यस्वाध्यायादिरतस्यच।देहेपितृषुतिष्ठत्सुनाशौचंविद्यतेक्वचिदितिब्रा
ह्मोक्तेः।कर्तुस्तुविष्णुराह।व्रतयज्ञविवाहेषुश्राद्धेहोमेर्चनेजपे।आरब्धेसूतकंनस्यादनारब्धेतु
सूतकं।श्राद्धारंभस्तेनैवोक्तः।प्रारंभोवरणंयज्ञेसंकल्पोव्रतसत्रयोः।नांदीमुखंविवाहादौश्रा
द्धेपाकपरिक्रियेति।माधवीयेब्राह्मेपि।श्राद्धारंभेपितृयज्ञेचकन्यादानेचनोभवेत्।मिताक्षरा
यांस्मृत्यंतरे।सद्यःशौचंप्रकृत्य।यज्ञसंभृतसंभारेविवाहेश्राद्धकर्मणीति।तिथितत्त्वादिगौडग्रं
थास्तुनिमंत्रणोत्तरंकर्तुर्भोक्तुश्चनाशौचं।निमंत्रणोत्तरंश्राद्धप्रारंभःस्यादितिसनिरितिवि
स्तरेः॥यत्तुश्राद्धेपाकपरिक्रियेतितद्दर्शश्राद्धविषयमित्याहुः।तत्तुगृहेमरणादौब्राह्मेउक्तं।भो
जनार्थंतुसंभुक्तेविप्रेदातुर्विपद्यते।गृहेइतिशेषः॥यदाकश्चित्तदोच्छिष्टशेषंयत्नात्समाहितः
आचम्यपरकीयेनजलेनशुचयोद्विजाइति।अस्यश्राद्धविषयत्वंहेमाद्रिणोक्तं।पृथ्वीचंद्रोदयेप्ये
वं।नमतुमतिभाति।इदंविवाहादिविषयंनतुश्राद्धविषयं।तत्पदाभावात्।विवाहोत्सवयज्ञेषुत्व
त्कस्यभुंजानेषुतुविप्रेषुत्वंतरामृतसूतके।अन्यगेहोदकाचांतास्सर्वेतेशुचयःस्मृताइति।षट्त्रिं
शन्मतैकवाक्यत्वात्।निमंत्रितेषुविप्रेषुप्रारब्धेश्राद्धकर्मणीतिपूर्वोक्तविरोधाच्च॥श्राद्धेतुयद्यपि
विष्णुनापाकोत्तरमाशौचाभावउक्तस्तथापिकर्तुरेवसः॥भोक्तुस्तुदोषोस्त्येव।अपिदातृग्रहीत्रो
श्चसूतकेमृतकेतथा।अविज्ञातेनदोषःस्यात्श्राद्धादिषुकथंचन।विज्ञातेभोक्तुरेवस्यात्प्रायश्चि
त्तादिकंक्रमादितिमाधवीये॥ब्राह्मोक्तेः।आदिशब्देनाशौचमुच्यते।तथाहविष्णुः॥ब्राह्मणादीना
माशौचेयःसकृदेवान्नमश्नातितस्यतावदाशौचं।यावत्तेषामाशौचव्यपगमेप्रायश्चित्तंकुर्यादिति
यत्तुदेहेपितृषुतिष्ठत्सुनाशौचंविद्यतेक्वचिदितिब्राह्मंतत्श्राद्धकालीनस्यनिषेधकं।तदुत्तरका
लीनस्य।शुद्धिदीपस्तुनिमंत्रितेविप्रामश्राद्धपरं।भोजनार्थेत्विप्रादितन्यथापरमित्याह।प्राय
श्चित्तंत्वाहमार्कंडेयः॥भुक्त्वातुब्राह्मणाशौचेचरेत्सांतपनंद्विजः।एतत्कामतः।अभ्यासेशंखः।
ब्राह्मणस्यतथाभुक्त्वामासमेकंव्रतीभवेदिति।अज्ञानात्तुच्छागलेयः॥एकाहेचत्र्यहंपंचसप्तरा
त्रेमभोजनं।ततःशुचिर्भवेद्विप्रपंचगव्यंपिबेन्नरः॥इति।वर्णक्रमेणेदं।अभ्यासेतुद्विगुणमित्यादि
मिताक्षरामाधवीयादौज्ञेयं।मिताक्षरामाधवीयादौतुश्राद्धेकर्तुर्भोक्तुश्चसर्वथादोषाभावउक्तः॥

आशौचमध्ये श्राद्धदिनप्राप्तौ तु माधवीये कालादर्शे च ऋष्यशृङ्गः॥ देये पितॄणां श्राद्धे तु आशौचं जाय
ते यदा। आशौचे तु व्यतिक्रान्ते तेभ्यः श्राद्धं प्रदीयते। श्राद्धचिन्तामणौ ज्योतिषे। इति संवत्सरश्राद्ध
माशौचान्तेति निश्चयः। मलमासे पितृकार्यमिति भागुरिभाषितं। आशौचान्तदिनत्वेन निमित्त
त्वादित्यर्थः। एतन्मासिकाब्दिकपरं न दार्शिकादौ। अत एव सुदर्शनभाष्ये परपक्षेऽपि आशौचीति
नियमात्। कृष्णपक्षे श्राद्धलोपे प्रायश्चित्तमेव न तु गौणकाले करणम्। तच्चोपवासः॥ वेदोदिता
नां नित्यानां कर्मणां समतिक्रमे स्नातकव्रतलोपे च प्रायश्चित्तमभोजनमिति मनूक्तेरित्युक्तं॥
आशौचे तु प्रायश्चित्तमपि न मुख्यकाले नाधिकारात्। आशौचान्ते असंभवे तु व्यासः। श्राद्धविघ्ने स
मुत्पन्ने अन्तरा मृतसूतके। अमावास्यां प्रकुर्वीत शुद्धावेके मनीषिणः॥ हेमाद्रौ षट्त्रिंशन्मतेऽपि॥
मासिके चाब्दिके त्वह्नि संप्राप्ते मृतसूतके। वदन्ति शुद्धौ तत्कार्यं दर्शे वापि विचक्षणाः॥ गोभिलः॥
देये मत्याब्दिके श्राद्धे अन्तरा मृतसूतके। आशौचानन्तरं कुर्यात्तन्मासेन्दुक्षयेऽपि वा॥ मरीचिः॥ श्राद्धवि
समुत्पन्ने अविज्ञाते मृतेऽहनि। एकादश्यां तु कर्तव्यं कृष्णपक्षे विशेषतः। विशेषतः इत्युक्तेः शुक्ला
यामपि आशौचेन तु विघ्ने एतदिति माधवपृथ्वीचन्द्रौ॥ यत्त्वत्रिः॥ न दहश्चेन्मदुष्येन केन विलम्बन
कादिना। सूतिकानन्तरं कुर्यात्पुनर्लदहरेव चेति। तत्पूर्वकालाभावे ज्ञेयं। एतदाब्दिकेतरश्राद्ध
परं॥ यच्च देवलः॥ एकोद्दिष्टे तु संप्राप्ते यदि विघ्नः प्रजायते। मासेऽन्यस्मिन्तिथौ तस्मिन् श्राद्धं कु
र्यात्प्रयत्नतः॥ इति। तदपि मासिकपरमिति मदनरत्ने हेमाद्रौ च। इदमपि पूर्वकालासंभवे। व्या
ध्यादौ विस्मरणे चैवं ज्ञेयं॥ ॥अथ भार्यारजोदर्शने॥ तत्र दार्शिकमासेन का
र्यं॥ श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्तितं। अमावास्यादिनियतमाससंवत्सरादृते इति।
हेमाद्रौ हारीतोक्तेः॥ व्याघ्रपादोऽपि॥ आर्त्तवे देशकालानां विप्लवे समुपस्थिते। आमश्राद्धं द्विजैः
कार्यं शूद्रः कुर्यात्सदैव हि॥ दीपिकापि॥ दर्शे तु भार्यार्त्तवे व्यामश्राद्धविधिं प्रवासिविधुराद्याश्चा
चरेयुर्द्विजाः वस्तुतस्तु पाकाभावे द्विजातीनामामश्राद्धं विधीयते। इति सुमन्तूक्तेः। पाककर्त्रंतरे
सत्यन्नेनान्यथामेनेति युक्तं॥ मासिकानि सपिण्डानि अमावास्यां तथाब्दिके। अन्नेनैव तु कर्तव्यं
यस्य भार्या रजस्वलेति। कलिकायां वचनाच्च। कालादर्शे तु। स्त्रिया रजोदर्शने दर्शश्राद्धं पञ्च
मेऽहनीति। पक्षान्तरमुक्तं। पारिजातेऽप्येवं। एवं महालय युगादावपि। आब्दिकं तु रजोदर्शनेऽपि त
द्दिन एव कार्यं॥ पुष्पवत्सु च दारेषु विदेशस्थोऽप्यनग्निकः। अन्नेनैवाब्दिकं कुर्याद्धेम्ना वामेन
च क्वचित् इति। माधवीये लौगाक्षिस्मृतेः॥ मरीचिरपि॥ अनग्निश्च प्रवासी च यस्य भार्या रजस्व
ला। आमश्राद्धं प्रकुर्वीत न तत्कुर्यादनेऽहनीति। कार्ष्णाजिनिः॥ आपन्नोऽप्याब्दिकं नैव कुर्यादा
मेन कुत्रचित्। अन्नेन तदमायां तु कृष्णे वा हरिवासरे। प्रयोगपारिजाते॥ रजस्वलायां भार्यायामस्
यां हेयः परित्यजेत्। सर्वेन एकमाप्नोति यावदामन्तसंभवं। मासिकानि सपिण्डं च अमावास्यां तथा
ब्दिके। अन्नेनैव तु कर्तव्यं यस्य भार्या रजस्वला॥ देवयाज्ञिकनिबन्धेऽपि॥ भर्तुः श्राद्धं पञ्चमेऽह्नि
कुर्याद्भार्या रजस्वला। पुत्रः पित्रोः प्रकुर्वीत मृतेऽहनि शुचिर्यतः॥ कालादर्शेऽपि॥ रजस्वलाग
तोऽनग्निर्विदेशस्थोऽथवाब्दिके। दर्शादाविव नामेन तत्वन्नेन श्राद्धमाचरेत्॥ अन्यत्रापि॥ विदेश

गोवा निरग्निको वा रजस्वलायामपि धर्मपत्न्यां श्राद्धं मृताहे विदधीत पाकेनामेन हेम्ना न तु पंचमे
ह्नि॥ एवं मासिकेपि॥ यत्तु मरीचिः॥ आब्दिके समनुप्राप्ते यस्य भार्या रजस्वला॥ पंचमेहनि तच्छ्राद्धं
न तत्कुर्यान्मृतेहनि। माधवीये। श्राद्धदानं न कर्तव्यं कर्तव्यं पंचमेऽहनीति। उत्तरार्द्धं॥ तदपत्नीक
र्तृकश्राद्धविषयं। अपुत्रा तु यदा भार्या संप्राप्ते भर्तुराब्दिके। रजस्वला भवेत्सा तु कुर्यात्तत्पंचमेहनी
ति श्लोकगौतमोक्तेः। दैवे कर्मणि पित्र्ये च पंचमेहनि शुध्यतीति प्रभासखंडाच्च। नन्वशुचित्वादेव
तत्र पंचमेऽहन्यर्थात् श्राद्धप्राप्तमिति वचनं व्यर्थं। मैवं॥ गर्भिणीसूतिकादिश्च कुमारी वाथ रोगि
णी। यदाऽशुद्धा तदान्येन कारयेत्प्रयता स्वयमिति॥ हेमाद्रौ भविष्योक्तेः॥ अनुपनीताः स्त्रीशूद्राश्च
श्राद्धमृत्विजा वा कारयेयुः स्वयं वा मंत्रकं कुर्युरिति स्मृत्यर्थसाराच्चान्यद्वारा करणनिवृत्त्यर्थत्वात्त
स्यास्तदुक्तदिशा आशौचानंतरं श्राद्धकर्तृत्वमतावदेव। वाक्यवैयर्थ्याच्च। अतः पत्नी पंचमेहनीति नियु
क्तम्॥ यत्तु सप्ताहात्पितृदेवानां भवेद्योग्या वरानने इति तद्रजोनिवृत्तिपरमिति हेमाद्रिभिन्नसर्व
निबंधसिद्धांतः॥ हेमाद्रिस्तु श्राद्धादौ स्त्रिया सहैवाऽधिकारात् तस्यां रजोदुष्टायां तन्निवृत्तेरेकभा
र्येण पंचमेहनि कार्यं। प्रागुक्तमरीच्युक्तेः। भार्यांतरसत्त्वे तु पुष्पवत्स्वपीति वचनात्तद्दिने एवेत्याह
दीपिकापि। भार्यार्त्तौ सति पंचमे च दिवसे स्याद्वार्षिकं मासिकं। पक्वान्नैर्बहुभार्यकस्त्वधिकृते पत्न्यंत
रेणेष्टिनिकुर्यात्तु हितयेसमुत्थे दिवस इति॥ तच्चिंत्यं॥ सहाधिकारः सहत्वश्च ममावा एकफलभाक्त्वे
न वा। पाककर्तृत्वेन वा। नाद्यः॥ तदभावात्॥ पाणिग्रहणाद्धि सहत्वं कर्मस्विति स्याग्निसाध्यक
र्मविषयत्वात्। आब्दिकस्य च निरग्नेरपि पाकेनैवोक्तेः स्मार्ताग्निसाध्यत्वानियमात् तामपृ
ध्येति वत्पुष्पवत्स्वपीति पूर्वोक्तवचनसत्त्वाच्च। कथं च भार्यांतरसत्त्वेधिकारः॥ ज्येष्ठया न विने
तेति नियमात् ज्येष्ठापरत्वे वचनेनैव सिद्धे वचनवैयर्थ्यात्। न द्वितीयः॥ अविभक्तभ्रातृणामेकस्या
शुचित्वेऽन्यस्यानधिकारापत्तेः। न तृतीयः॥ प्रवाससंनिदेशसूतिकारोगिण्यादिष्वप्यकरणाप
त्तेः॥ आरभेत नवैः पात्रैरन्वारंभं च बांधवैः। इति देवलोक्ता बाह्मनेपदात्स्वस्य बांधवानां च पा
ककर्तृत्वोक्त्या विरोधाच्च। अयं ततस्तानि पपाचाशु सीता जनकनंदिनीति पाद्मादिलिंगात्॥
शास्त्रं भार्यापाकस्योच्येत न तत्कस्याप्यनिशाने नैतद्वचनपुत्राद्यभावात्पूर्वोक्तवचोविरोधा
च्च। यत्किंचिदेव। यदपि श्राद्धीयाहनि संप्राप्ते यस्य भार्या रजस्वला। श्राद्धं तत्र न कर्तव्यं कर्तव्यं
पंचमेहनीति। श्लोकगौतमपाठोऽन्यथा दर्शितः। माधवीये च तद्दर्शनमस्थानरमुक्तं। तेनापि
नाभिप्रेतार्थसिद्धिः। यस्यप्रेतस्येत्यर्थात्॥ तेनात्र हेमाद्रिर्भ्रांत एवेति। बहुवक्तव्येपि नोच्यते॥
॥०॥ ॥अथान्वारोहणे निर्णयः॥ लौगाक्षिः॥ मृताहनि समासेन पिंड
निर्वपणं पृथक्। नवश्राद्धं च दंपत्योरन्वारोहण एव तु॥ समासेन तंत्रेण द्विपितृकश्राद्धवद्द्वयो
रेकः पिंडो विप्रश्च। विप्रशब्दः श्राद्धपरः नवश्राद्धं पृथगिति हेमाद्रिपृथ्वीचंद्रौ। अत्र मृताहनी
त्येकत्वाद्दिनभेदे दिनैक्ये चामृततिथेरेकत्वे कालैक्यं कर्तैक्यं पाकैक्यं च। एकचित्यधिरोहे तु
तिथिरेकैव जायते। एकपाकेन पिंडैक्यं द्वयोर्गोत्रे तु नामनी इति स्मृत्यंतराच्च॥ अन्ये त्रिपदुक्तो
भेदेप्युदाहृतः। अन्वारोहे तु नारीणां पत्युश्चैकोदकक्रिया। पिंडदानक्रिया तद्वच्छ्राद्धं प्रत्याब्दि

केनथा। नवश्राद्धानि सर्वाणि सपिंडीकरणं पृथक्। एकएव वृषोत्सर्गो गौरेकात्र दीयते॥ इति॥
तिथिभेदे तु वार्षिकं पृथगेव। तथा॥ वार्षिके समासविधानादत्र सर्वत्र पृथक्त्वे प्राप्ते नवश्राद्धमे
व पृथगिति परिसंख्ययान्यत्र पृथक्त्वे पित्रादिकषोडशश्राद्धतीर्थसपिंडनान्वष्टक्यादिषु समास
एवेति मदनपारिजातनिर्णयामृतादयः। अतः समासविधिवलाज्ज्येष्ठपुत्रस्य कर्तृत्वे सापत्न्य
मातुरन्वारोहणे तत्पुत्रे सत्यपि तद्वार्षिकादिकमविभक्तः सापत्न्यपुत्र एव ज्येष्ठः कुर्यात्तौरसः। व
क्ष्यमाणपृथ्वीचंद्रादिमते तु औरस एव मातुः पृथक् कुर्यात् एवं वल्कीयपि मातृपुत्रेषम्। त्रिस्थली
सेतौ पितामहचरणैरप्येवमुक्तं। यत्तु गार्ग्यः। एकचित्यां समारूढौ दंपती निधनं गतौ। पृथक्श्राद्धं
तयोः कुर्यात् ओदनं च पृथक्पृथक्। ओदनं पिंडः॥ तन्नवश्राद्धविषयं। यत्तु भृगुः॥ या समारोह
णं कुर्याद्भर्तुश्चितिमां पतिव्रता। तां मृताहनि संप्राप्ते पृथक्पिंडे नियोजयेत्॥ तत्पदं च नवश्राद्धयुग
पत्तौ समापयेत्॥ तथेषां वार्षिकमेकोद्दिष्टमुक्तं तद्विषयं। तत्पदं मृताहनीत्यन्वयः। नवश्राद्धं युगप
दिति। दर्शे वर्गद्वयवदेकतंत्रेण पृथगित्यर्थमाह हेमाद्रिः॥ एतन्मृततिथिभेदविषयमिति पृथ्वीचंद्र
निर्णयामृतादयः। देवयाज्ञिकोप्येवं॥ पराशरमाधवस्तु गार्ग्यभृग्वादिवचनात्तौगाक्षिवाक्ये त
मासेनपाकादितंत्रैक्येन दर्शे वर्गद्वयवत्पृथक् श्राद्धं नवश्राद्धवत्तथेत्याह। पृथ्वीचंद्रचंद्रिकादयस्तु
द्वयोरेकपिंडदानं लौगाक्षिवचनं चापद्विषयं पृथक्पिंडदानं तु मुख्यः कल्पः। तदाह वृद्धपराशरः
आरुह्य भर्तुश्चितिमंगना या मात्रातिमृत्युः स्वलु सत्वयुक्ता। एकादशाहे तु तयोर्विधेयं श्राद्धं पृथक्
स्वर्गमवेक्ष्य सद्भिः॥ एकत्वमिच्छंति मतिप्रहीनाः एकादशाहादिषु येन नार्योः। ते स्वर्गमार्गं विनिह
त्य कुर्युः स्त्रीसत्वघातान्नरकाधिवासं॥ भर्त्रा सह मृता या तु नाकलोकमभीप्सती। साहं श्राद्धं पृथक्
पिंडान्नैकत्वं तु स्मृतं तयोः॥ पृथगेवाह्निकं तंत्रं श्राद्धमेकादशाहिकं। यानि श्राद्धानि सर्वाणि तान्यु
क्तानि पृथक्पृथक् इति॥ विश्वादर्शेपि॥ मातुर्गयाष्टकावृद्धिमृताहेषु महालये॥ श्राद्धं कुर्यात्पृथक्
दैवं तंत्रं चानुगतावपि। एकचित्यां समारुह्य मृतयोरेकवर्हिषः। पित्रोः पिंडान् पृथक् दद्यात्पिंडं त्वाप
त्सु न त्वतः॥ इत्यग्निस्मृतेरित्याहुः॥ यत्तु षट्त्रिंशन्मते। एकत्वसागता भर्तुः पिंडे गोत्रे च सूतके। न पृथ
क् पिंडदानं तु तस्मात्पत्नीषु विद्यते॥ इति तद्दर्शादिपरं। चंद्रप्रकाशेपि॥ एकचित्यां समारूढौ दंपती प्रम
तौ यदि। पृथक्श्राद्धं प्रकुर्वीत पत्युरेव समेहनि। मृतानामपि भर्त्यानां भार्याणां पतिना सह। तंत्रेण श्र
पणं कृत्वा श्राद्धं स्वामिक्षयेहनि। पूर्वं कस्यमत स्यादौ द्वितीयस्य ततः पुनः। तृतीयस्य ततः कुर्यात्स
न्निपाते क्रमस्त्वतः इति। सहगमने सर्वत्र श्राद्धार्थमेकः पाक इत्याह। मदनरत्ने प्रचेताः। एकचित्यां समा
रूढौ म्रियते दंपती यदि। तंत्रेण श्रपणं कुर्यात् पृथक् पिंडं समाचरेत्॥ पृथ्वीचंद्रोदयेप्येवं। अत्र भर्तुराशौ
च। मध्ये न्यदिनेनुगमनेन स्त्रीमरणे पतिमरणदिनगणनयाशौचपिंडदानैकादशाहादिकार्यं।
नात्र पक्षिणी वृद्धिः। मृतपतिमनुव्रजपत्नी चेद्दनलं गता ततत्र पक्षिणी कार्या येनकादेव शुध्यति।
पुत्रोन्यो वाग्निदस्तस्यास्तावदेव शुचिस्तयोः। नवश्राद्धं सपिंडं च युगपत्तु समापयेत्॥ इति षडशीतिम
तात्॥ यदा नारी विशेदग्निं म्रियुक्षयियवांछया तदाशौचे विधातव्यं भर्त्राशौचक्रमेणहीति। लघुहा
रीतोक्तेश्च। भर्त्रशौचोत्तरमन्वारोहणे तु अहमाशौचं। ऋग्वेदवादात्साध्वी स्त्री न भवेदात्मघातिनी

महाशौचेतुनिर्वृत्ते श्राद्धंप्राप्नोतिशास्त्रतइतिव्यासोक्तेरिति पृथ्वीचंद्रापरार्कौ॥ एतदन्वारोहणेएव
नत्वेकचितिनावग्वेदवादइमानारीरविधवेत्यादिः एतदसवर्णापरमित्यन्ये॥ स्मार्तगौडास्तुदे
शांतरेमृतेपत्न्यासाध्वीतत्पादुकाद्वयमित्युपक्रम्यब्राह्मे महाशौचेतुनिर्वृत्तेइत्युक्तेर्भर्त्राशौचान्त
रमन्वारोहणमाहुः। सहगमनेतुपूर्णोदशाहादि। पिंडास्तुदशापिसहैव। तथाचत्रिकांडमंडनशूलपा
णिप्रभृतिभिस्त्वधृतव्यासः। संस्थितंपतिमालिंग्यप्रविशेद्याहुताशनं। तस्याःपिंडादिकंदेयंक्रम
शःपतिपिंडवत्। अन्वितापिंडदानंतुयथाभर्तुर्दिनेदिने। तदर्थारोहणीयस्मात्तस्मात्स्नाना
त्मयातिनीति। विश्वरूपोक्तेश्च॥ पृथक्चितौतुभर्तृशौचमध्येतदूर्ध्वंवासत्यांत्र्यहेणदशपिंडाः॥
अन्वितायाःप्रदातव्यादशपिंडास्त्र्यहेणतु। स्वाम्यशौचेव्यतीतेतुतस्याःश्राद्धंप्रदीयतइतितत्रैव
पैठीनसिस्मृतेः। भर्तृशौचान्तरंमृतौतुचतुर्थेऽह्निश्राद्धं। शूलपाणिनात्विदमग्निपुराणीयत्वेनोक्तं
पुत्रहतस्यसद्यःशौचेत्वन्वारोहणेत्रिरात्रं। एकचितौसंस्थितंपतिमितिप्रागुक्तव्यासोक्तेः सद्यः
शौचमित्याहुः। अन्यसपिंडाशौचमध्येन्वारोहणंत्वनाशंक्यमेव। अशुचितायागतत्वात्। अन्ये
तुरजोवत्याःसूतिकायाश्चगमननिषेधादितराशौचेतस्यानिषेधः। अन्यथात्वस्यभर्तृमरणेका
गतिरित्याहुः। तन्मूलवचनंविनाचिंत्यमेव। स्मृत्यर्थसारे॥ सहगमनेसर्वत्रश्राद्धपिंडादौपाकै
क्यंकालैक्यंकर्त्रैक्यंचेति। यातुपतिमुद्दिश्यान्यकालेन्यतिथावन्वारूढातस्याःश्राद्धंतत्स्व
तिथौकार्यंनभर्तृतिथौ। पार्वणेमरणेतुरणा। तिथिस्तात्कालिकीस्मृतेतिस्कांदात्तिथिरेकैव
ज्ञापनेइत्यादिवचनाच्चेतिमदनपारिजातपृथ्वीचंद्रादयः। अन्येतुतस्याःपतिमरणेनमृतत्वा
पत्त्वात्। सहायतःपृष्ठतोवातत्कृत्याम्रियतेयदि। तस्याःश्राद्धंप्रदातव्यंपृथक्पुत्रैस्तुयेहनी
तिस्मृत्यन्तरात्। अयतःपृष्ठतोवापितदूत्याम्रियतेयदि। तस्याःश्राद्धंसुतैःकार्यंपत्युरेवक्षये
हनीतिपुराणसमुच्चयाच्चभर्तृतिथावित्याहुः। अत्रमूलंचिंत्यं॥ अत्रविशेषोहेमाद्रौस्मृत्यं
तरे॥ मातामंगलसत्रेणम्रियतेयदितद्दिने। उद्दिश्यविप्रपत्नीस्तांभोजयेच्चसुवासिनीम्॥
॥२०॥ ॥अथश्राद्धसंपातेनिर्णयः॥ तत्रपित्रोर्मृततिथ्यैकत्वेमरणक्रमे
णादर्शवद्द्वयंतंत्रेणश्राद्धंकुर्यान्मोवापयोर्ज्ञानेतुपितुःपूर्वंकुर्यादितिहेमाद्रिमाधवादयस्तु
पितृश्राद्धेसमंप्राप्तेतनवैपर्युषितेपिवा। पितुःपूर्वंसुतःकुर्यादन्यत्रासन्निपातइतिकार्ष्णाजिनि
स्मृतेः। सर्वत्रपितुःपूर्वंभिन्नंप्रयोगमाहुः। पार्वणैकोद्दिष्टयोःसंपातेमाधवीयेजाबालिः। प्रत्य
केत्रोभयप्राप्तमेकोद्दिष्टंचपार्वणं। पार्वणंत्वभिनिर्वर्त्यएकोद्दिष्टंसमाचरेत्। गृहदाहादिना
युगपन्मरणेतुभृगुः॥ एककालेगतासूनांबहूनामथवाद्वयोः। तंत्रेणश्रपणंकृत्वाकुर्याच्छ्रा
द्धंपृथक्पृथक्। पूर्वंकस्यमृतस्यादौद्वितीयस्यततःपुनः। तृतीयस्यततःकुर्यात्सन्निपातेत्वयं
क्रमः॥ ऋष्यशृंगः॥ भवेद्यदिसपिंडानांयुगपन्मरणंतदा। संबंधासत्तिमालोच्यतत्क्रमाच्छ्रा
द्धमाचरेत्॥ गृह्ये॥ एकेनैवतुपाकेनश्राद्धानिकुरुतेयदि। विकिरंत्वेकतःकुर्यात्पिंडान्दद्या
त्पृथक्पृथक्। अत्रानुगमनेचदाहसपिंडनादौविशेषंवक्ष्यामः॥ अत्रिः। बहूनामथवा
द्वाभ्यांश्राद्धंचेत्स्यात्समेहनि। तंत्रेणश्रपणंकृत्वाश्राद्धंकुर्यात्पृथक्पृथक्[illegible]॥ महा

न्तपेऽगयाश्राद्धे गतास्तेषां क्षयेऽहनि। तंत्रेण श्रपणं कृत्वा श्राद्धं कुर्यात्पृथक्पृथक्। इदं च पृथक्पाकेन भिन्नश्राद्धाशक्तौ। पृथक्पाकेन सर्वथा सत्याश्राद्धभेदस्तु मुख्यः पक्षः। एकत्रैव दिने श्राद्धद्वयं प्राप्तं यदा तदा चरेदेवपुत्र एव क्रमात्पितुर्मातुश्च तत्सुतः। एकस्मिन्यः करोत्यह्नि द्वयोः श्राद्धं यदा द्विजः। तदा पूर्वं मृतस्यादौ कृत्वा स्नात्वा यथाविधि। पश्चात्तच्छ्राद्धमन्यस्यैव पृथक्पाकैः समाचरेत्॥ नैकस्मिन्दिवसे श्राद्धत्रयाणां कुर्वीत द्विजः। एकः कुर्यात्तथा शास्त्रे ऽन्यो भ्राता समाचरेत्॥ भ्रात्रभावे विद्यमाने तु तत्परेऽह्नि समाचरेत्। अन्यथा श्राद्धहंता स्यात् श्राद्धसंकरकृद्भवेदिति। आश्वलायनोक्तेरिति पृथ्वीचंद्रः॥ कात्यायनः॥ द्वे बहूनि निमित्तानि जायेरन्नेकवासरे। नैमित्तिकानि कार्याणि निमित्तोत्पत्त्यनुक्रमात्॥ जाबालिः॥ श्राद्धं कृत्वा तु तस्यैव पुनः श्राद्धं न तद्दिने॥ नैमित्तिकं तु कर्तव्यं निमित्तानुक्रमोदयं। कालादर्शे॥ नित्यदार्शिकयोश्चोदकुंभमासिकयोरपि। दार्शिकस्य युगादेश्च दार्शिकालाभ्ययोगयोः। दार्शिकस्य च मन्वादेः संपाते श्राद्धकर्मणः॥ प्रसंगादितरस्यापि सिद्धेरुत्तरमाचरेत्। अस्य देवताभेदे सिद्धेरुत्तरमपवादः। नाहस एव। नित्यस्य चोदकुंभस्य नित्यमासिकयोरपि नित्यस्य चाब्दिकस्यापि दार्शिकाब्दिकयोरपि। युगाद्याब्दिकयोश्चैव मन्वाद्याब्दिकयोस्तथा। प्रत्याब्दिकस्या चलभ्ययोगेषु विहितस्य च। संपाते देवताभेदात् श्राद्धयुग्मं समाचरेत्॥ निमित्तानियतिश्चात्र पूर्वानुष्ठानकारणं। पित्रोस्तु पितुः पूर्वं तु सर्वत्र श्राद्धकर्मणि। माधवीयेप्येवं निसंग्रहे॥ कामं तंत्रेण नित्यस्य तंत्रं श्राद्धस्य सिद्ध्यति॥

॥अथ श्राद्धांगतर्पणम्॥

पारिजातपृथ्वीचंद्रोदययोर्गर्गः॥ पूर्वं तिलोदकं कृत्वा ततः श्राद्धं तु कारयेत्। प्रत्यब्दे न भवेत्पूर्वं परेऽहनि तिलोदकं। पक्षश्राद्धे हिरण्ये च अनुव्रज्य तिलोदकं। न च नित्यतर्पणस्यैवायं परेऽह्न्युत्कर्षः नतु श्राद्धांगतर्पणमस्तीति वाच्यं। यस्तर्पयति तानेव विप्रः श्राद्धं कृत्वा परेऽहनि। पितरस्तेन तृप्यंति न चेत्कुप्यंति वै भृशमिति। गर्गेण फलनिंदार्थवाभ्यामंगत्वोक्तेः। श्राद्धप्रकाशो ह्याब्दिके। बृहन्नारदीये प्याब्दिकं प्रकृत्य। परेद्युः श्राद्धकृन्मर्त्यो यो न तर्पयते पितॄन्। तस्यैते पितरः क्रुद्धाः शापं दत्त्वा व्रजंतिहि॥ पितृशब्दश्च श्राद्धेऽप्यवर्गपरः। तेन तर्पणस्य पशुपुरोडाशयागवत् प्रस्तरप्रहरणवच्च देवतासंस्कारकता। तेनाब्दिकदिने नित्यस्य पित्रादितर्पणं कार्यमेव। श्राद्धांगभूतस्यैव परेद्युरुक्तेः। तदुक्तं। प्रत्यब्दांगं तिलं दद्यान्निषेधेपि परेऽहनि। वर्गैकस्य बचोयेषु मन्येषां तु विवर्जयेत्॥ क्वचिद्विशेषमाह गर्गः॥ कृष्णे भाद्रपदे मासि श्राद्धं प्रतिदिनं भवेत्॥ पितृणां प्रत्यहं कार्यं निषिद्धाहेपि तर्पणं। तर्पणं तिलतर्पणम्। निषिद्धाहेपीत्युक्तेः। सकृन्महालयेभ्यः स्यात्पृथक्कालस्त एव हि। अत्र सप्तमीनिर्देशाद्गितास्तुठेवा। तत्र जपान्जुहुयात्। मंत्रेशापराणीयापांमंत्रेशातः सवनेस्यात्विति॥ अस्यापवादो बृहन्नारदीये। वृद्धिश्राद्धे सपिंडे च प्रेतश्राद्धेऽनुमासिके। संवत्सरविमोके च न कुर्यात्तिलतर्पणम्। तदयमर्थः। दर्शे विप्रनिमंत्रणोत्तरं पाकारंभोत्तरं वा श्राद्धप्रयोगस्यारब्धत्वात्। ब्रह्मयज्ञोत्तरं नित्यतर्पणे नैव श्राद्धांगतर्पणस्य तंत्रेण प्रसंगेन वा सिद्धिः॥ ततः पूर्वं वैश्वदेवोत्तरं ब्रह्मयज्ञकरणे श्राद्धांगतर्पणं पृथक्कार्यं। पित्रोर्वार्षिके तु नित्यतर्पणं तिलवर्जं कार्यं॥ नैव श्राद्धदिने कुर्यात्तिलैस्तु पितृतर्पणं। श्राद्धं कृत्वा परेऽह्नि च तर्पणं तु तिलैः सहेति वचनात्

सप्तम्यां भानुवारे च मातापित्रोर्मृतेऽहनि। तिलैर्यस्तर्पणं कुर्यात्स भवेत्पितृघातकः। इति स्मृतिरत्नावल्यां वृद्धमनूक्तेश्च। अत्र नित्यतर्पणे तिलमात्रनिषेधः न तु तर्पणस्य तिलैरपि सर्वेषां प्राप्तेः। यत्तु कात्यायनः। उपरागे पितुःश्राद्धे पाते मायां च संक्रमे। निषिद्धेऽपि हि सर्वत्र तिलैस्तर्पणमाचरेदिति। तत्परेद्युः श्राद्धांगतर्पणविषयमिति केचित्। श्राद्धांगस्य तत्स्थानापन्नतर्पणाविषयमिति तु युक्तं सकृन्महालये परेद्युस्तर्पणं। अष्टकासु तु सप्तम्यष्टमीश्राद्धयोरनेन देववर्गद्वयस्य। अन्वष्टक्ये तु मातृवर्गस्यापि। तीर्थश्राद्धे दर्शवत्तन्माभावर्यादिश्राद्धकाः वदंते। अनेकश्राद्धसंपाते तु यदिश्वसंगसिद्धिस्तदा तदीयमेव तर्पणं। तंत्रत्वे तु श्राद्धसमसंख्यत्वे श्राद्धावृत्तेर्वा। विषमसंख्यायां वृद्धनुरोध इति। तस्मात्श्राद्धांगतर्पणं सिद्धं। तद्विधिः संग्रहे स्नात्वा तीरं समागत्य उपविश्य कुशासने। संतर्पयेत्पितॄन्सर्वान्स्नात्वा वस्त्रं च धारयेत्। तर्पणोत्तरं निमस्नानं कृत्वेत्यर्थः। अपसव्यं ततः कृत्वा सव्यं जान्वाच्य भूतले। नामगोत्रस्वधाकारैर्द्वितीयांतेन तर्पयेत्। तत्र वस्वादिरूपतोक्ता स्मृत्यर्थसारे। वसुरुद्रादितिसुतान्श्राद्धार्थेन तर्पयेत्पितॄन्। तच्च बह्वृचानां दक्षिणेनैव। दक्षिणं प्रतिपादनादेश इति सत्त्वात्। अत्र प्रत्यंजलिमंत्रावृत्तिः। निर्वापवत् संध्यार्घ्यदानवच्च द्रव्यभेदात्। अवघातवदृष्टोक्षणादौ तु द्रव्यैकत्वान्न मंत्रावृत्तिः। केचित्तु परिव्राणमंत्रवत्क्रियमाणानुवादित्वेन करणत्वाभावात्सकृदिच्छंति। तन्न। तत्तद्द्रव्यैक्यात्परिवीरसीतिकरणभूतमंत्रांतरसत्त्वात्स्तनरेणाव्यवधानापन्नोभयोः करणत्वायोगात्। कर्तृभेदेन विकल्पायोगाच्च। क्रियमाणानुवादित्वे। नत्वंतथात्वे यापनादिवचनाकरणत्वमेव। तेनावृत्तिरेव युक्ता। एवं नित्येऽपि। यत्तु संग्रहे नामापठंति पित्रोः श्राद्धाहे समापन्ने यः कुर्यात्तिलतर्पणं। आसुरं तद्भवेच्छ्राद्धं तत्तोयं रुधिरं भवेत्। सर्वदा तर्पणं कुर्यान्नब्रह्मयज्ञपुरःसरं। मृताहे नैव कर्तव्यं कृतं चेन्निष्फलं भवेदिति। तत्समूलत्वे तिलविषयं यच्च पठंति कपिलः। मन्वादिषु युगाद्यासु दर्शे तत्क्रमणेषु च। पौर्णमास्यां व्यतीपाते दद्यान्नूर्वं तिलोदकं मम। अर्धोदये गजच्छायेऽष्टम्यां चैव महालये। भरण्यां च मघाश्राद्धे तद्दत्ते तर्पणं विदुः। शौनकः। मातापित्रोर्मृताहे तु परेऽहनि तिलोदकं। कारुण्यश्राद्धविषये सद्यो दद्यात्तिलोदकं। एतन्निर्मूलम्॥

॥अथ तिलतर्पणनिषेधः॥ गार्ग्यः॥ भानौ भौमे त्रयोदश्यां नंदाभृगुमघासु च। पिंडदानं मृदा स्नानं न कुर्यात्तिलतर्पणम्॥ स्मृत्यर्थसारे॥ विवाहव्रतचूडासु वर्षमर्धं तदर्धकं। अर्द्धंतदेवाद्बहोसत्ता च तन्मासि नेत्याहुस्तिलतर्पणं। हेमाद्रौ मरीचिः॥ सप्तम्यां रविवारे च गृहे जन्मदिने तथा। निशासंध्यासु पुत्रार्थी न कुर्यात्तिलतर्पणं। यत्तु संग्रहे॥ नंदायां भार्गवदिने कृत्तिकासु मघासु च। भरण्यां भानुवारे च गजच्छायाग्रहे तथा। अयनद्वितये चैव मन्वादिषु युगादिषु। पिंडदानं मृदा स्नानं न कुर्यात्तिलतर्पणमिति॥ तच्चिंत्यं॥ पानीयमप्यत्र तिलैर्विमिश्रं दद्यात्पितृभ्यः प्रयतो मनुष्य इत्यादिविरोधात्। अत्रापवादः॥ पृथ्वीचंद्रोदये॥ तीर्थे तिथिविशेषे च गयायां प्रेतपक्षके॥ निषिद्धेऽपि दिने कुर्यात्तर्पणं तिलमिश्रितं। स्मृत्यर्थसारेऽपि। तिथितीर्थविशेषेषु कार्यं प्रेते च सर्वदेति। गोभिलः॥ तिलाभावे निषिद्धाहे सुवर्णरजतान्विते। तदभावे निषिंचेत्तु दर्भैर्मंत्रेण वा पुनः। पतितस्य तिलोदकं वस्यामः॥

॥अथ वृद्धिश्राद्धं॥ तन्निमित्तं पृथ्वीचंद्रोदये॥ ब्राह्मे॥

जन्मन्यथोपनयने विवाहे पुत्रकस्य च । पितॄन्नांदीमुखान्नाम तर्पयेद्विधिपूर्वकं । वेदव्रतेषु चाधान
यज्ञपुंसवनेषु च ॥ नवान्नभोजने स्नाने ऊढायाः प्रथमार्तवे । देवारामतडागादिप्रतिष्ठासु मखेषु
च ॥ राज्याभिषेके बालान्नभोजने वृद्धिसंज्ञकान् ॥ वनस्थाद्याश्रमं गच्छन्पूर्वेद्युः सद्य एव वा
पितॄन्पूर्वोक्तविधिना तर्पयेत्कर्मसिद्धये ॥ आदिपदात्संन्यासः ॥ विष्णुपुराणे ॥ यज्ञोद्वाहप्र
तिष्ठासु मेखलाबंधमोक्षयोः । पुत्रजन्मवृषोत्सर्गे वृद्धिश्राद्धं समाचरेत् ॥ तत्र नामकर्मणि बा
लानां चूडाकर्मादिके तथेत्युक्तेर्निष्क्रमान्नप्राशनयोर्नेत्याहुर्मैथिलाः ॥ तन्न ॥ पूर्वोक्तवि
रोधात् नानिष्क्रेति निषेधात् ॥ सुतोत्पत्तौ तथा श्राद्धमन्नप्राशनिके तथेति राजमार्तंडाच्च । यत्तु
छंदोगपरिशिष्टं ॥ सूर्येन्द्वोः कर्मणी ये च तयोः श्राद्धं न विद्यते । इति तत्तेषामेवेति कल्पतरुः ॥ बृ
ह्वृचकारिकायां । स्यादाभ्युदयिकं श्राद्धं वृद्धिपूर्तेषु कर्मसु । पुंसःसवनसीमंतचोलोपनयनेषु हि
। विवाहे चानलाधेयप्रभृतिश्रौतकर्मसु । इदं श्राद्धं प्रकुर्वीत वृद्धिनिमित्तकं । अन्ये षो
डशसंस्कारश्रावण्यादिष्वपीष्यते । वाप्याद्युद्यापनादौ च कुर्युः पूर्तनिमित्तकं । वोपदेवः ॥ का
लादर्शे । सीमंतजातचौलनामकरणान्नप्राशनोपायनस्नानाधानविवाहयज्ञतनयोत्पत्तिप्र
तिष्ठासु च ॥ पुंसवनावसथप्रवेशनसुताद्यस्यावलोकाश्रमस्वीकारक्षितिपाभिषेकदयिता
द्युतौ च नांदीमुखं । गृहकामधेनौ । जलाशयप्रतिष्ठायां वृषोत्सर्गादिकर्मसु । वत्सराभ्यन्तरेऽपि
नावेद्यस्योत्सर्गकर्मणि । वृद्धिश्राद्धं न कुर्वीत तदन्यत्र समाचरेदिति तत्र जलाशयवृद्धिश्राद्धस
निषेधो न तु कर्मांगस्येति केचित् । अन्ये त्वस्य निर्मूलतामाहुः । श्राद्धकौमुद्यां निर्णयामृते च मा
त्स्ये । अन्नप्राशे च सीमंते पुत्रोत्पत्तिनिमित्तके । पुंसवने निषेके च नववेश्मप्रवेशने । देववृक्षजला
दीनां प्रतिष्ठायां विशेषतः । तीर्थयात्रावृषोत्सर्गे वृद्धिश्राद्धं प्रकीर्तितं । इदं चावश्यकं ॥ वृद्धौ न
तर्पिता ये वै पितरो गृहमेधिभिः । तद्धीनमफलं ज्ञेयमासुरो विधिरेव स इति शातातपोक्तेश्च ॥ अत्र
श्राद्धत्रयमस्त्येवाह । मातृश्राद्धं तु पूर्वं स्यात्पितॄणां तदनंतरं । ततो मातामहानां च वृद्धौ श्राद्धत्रयं
स्मृतं । तत्कालमाह पृथ्वीचंद्रोदये गार्ग्यः ॥ मातृश्राद्धं तु पूर्वे स्यात्पितॄणां तदनंतरं । ततो माता
महानां च वृद्धौ श्राद्धत्रयं स्मृतं ॥ अशक्तौ च शातातपः । पूर्वाह्णे मातृकं श्राद्धं मध्याह्ने पैतृ
कं तथा । ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतं ॥ अत्राप्यशक्तौ स एव । पृथक्दिनेष्वशक्त
श्चेदेकस्मिन्पूर्ववासरे । श्राद्धत्रयं प्रकुर्वीत वैश्वदेवं तु तांत्रिकमिति ॥ वृद्धमनुरपि ॥ अलाभे
भिन्नकालानां नांदीश्राद्धत्रयं बुधः । पूर्वेद्युर्वै प्रकुर्वीत पूर्वाह्णे मातृपूर्वकं । अत्र महत्सु पूर्वेद्यु
रल्पे हरस्त्वेष्विति गृह्यपरिशिष्टाद्व्यवस्था ज्ञेया । तच्च प्रातरेव । पार्वणं चापराह्णे तु प्रातर्वृद्धि
निमित्तकमिति शातातपोक्तेः । अत्र प्रातःशब्दः सार्धप्रहरपरः ॥ प्रहरोऽर्धसंयुक्तः प्रातरि
त्यभिधीयते इति गार्ग्योक्तेरिति पृथ्वीचंद्रः । इदं च पुत्रजन्मातिरिक्तविषये । तदाहात्रिः ॥ पूर्वा
ह्णे वै भवेद्वृद्धिर्विना जन्मनिमित्तकं । पुत्रजन्मनि कुर्वीत श्राद्धं तात्कालिकं बुधः इति । एतदनि
यतनिमित्तपरं । नियतेषु निमित्तेषु प्रातर्वृद्धिनिमित्तकं । तेषामनियतत्वे तु तदानंतर्यमिष्य
ते इति लौगाक्षिस्मृतेः ॥ आधानांगनांदीश्राद्धं तु अपराह्णे एव । आमश्राद्धं तु पूर्वाह्णे सिद्धा

मितिनिर्णयामृतेगालवोक्तेः॥ नांदीमुखोद्
यप्रातराग्निकंत्वपराह्णतइतिविष्णूक्तेश्च॥उद्भवमातृपितृमातामहादिक्रमेणनववैवत्यंकार्यं॥तत्र
ःसपत्नीकाः वृद्धप्रमातामहमातामहानांसपत्नीकानामितिपृथ्वीचंद्रोदयेगारुडे॥ग
द्यरूपेणपागतं।हेमाद्रौशंखः।नांदीमुखेसत्यवसुसंकीर्तौवैश्वदेविके॥वृद्धपराशरः॥नांदीमु
खेभ्योदेवेभ्यःप्रदक्षिणाकुशासनं॥पितृभ्यस्तन्मुखेभ्यश्चप्रदक्षिणमितिस्मृतिः
नांदीमुखेविवाहेचप्रपितामहपूर्वकं।नामसंकीर्तयेद्विद्वानन्यत्रपितृपूर्वकं।यत्तुस्मृत्यर्थसारे
वृद्धमुख्यास्तुपितरोवृद्धिश्राद्धेषुभुंजतेइति॥यच्चगारुडेव्युत्क्रमप्रतिपादनंतत्कात्यायनविषयं।पि
तृभ्यःपितामहेभ्यइतिवृद्धचपरिशिष्टेकात्यायनेनचानुलोम्याम्नानात्।पृथ्वीचंद्रोदयेप्येवं।यत्तु
केचिद्रूपदपित्रादिषुप्रयुंज्यते॥तन्न॥अत्रसत्यवसुशब्दानामरूपाणमगोत्रिणां॥अनाम्ना
मतिलाद्येश्चनांदीश्राद्धंतुसव्यवदितिपृथ्वीचंद्रोदयसंग्रहोक्तेः।नचनिषेधादेवविधिःकल्प्यत
इतिवाच्यं॥श्रौतपदीश्राद्धप्रपितामहान्येषांवृद्धपित्रादीनांदेवतात्वान्नांदीश्राद्धत्वसाम्येने
हापितत्याप्तौनिषेधात्।गोत्रनामादिनिषेधस्तुशुभार्थीप्रथमातेनवदेसंकल्पमाचरेत् इत्युप
क्रम्यानस्मद्वृद्धशब्दानामित्युक्तेःसंकल्पःश्राद्धपरःसपिंडकेतुसर्वंभवतीतिप्रयोगपारिजातः।
गोत्रनामभिरामंत्र्यपितृभ्योर्घंप्रदापयेदितिछंदोगपरिशिष्टेतद्विधानात्॥यत्तुब्राह्मे॥पितापि
तामहश्चैवतथैवप्रपितामहः।त्रयोह्यश्रुमुखाह्येतेपितरःपरिकीर्तिताः।तेभ्यःपूर्वतरायेचप्र
जावंतःसुखेधिताः।तेतुनांदीमुखानांदीसमृद्धिरितिकथ्यतेइति।यच्चमार्कंडेयपुराणे॥येस्युः
पितामहादूर्ध्वंतेतुनांदीमुखाःस्मृताः।इतितत्त्रौवपित्रादित्रिककर्तृकवृद्धिश्राद्धविषयपि
तिकस्तत्परः।तेनतस्येदमवश्यकं।यत्तुविष्णुः॥मदनपारिजातेप्येवं॥हेमाद्रिस्तु॥नांदीमुखा
नांश्राद्धंतुकन्याराशिगतेरवौ।पौर्णमास्यांतुकर्तव्यंवराहवचनंयथेतिमोक्षपदीश्राद्धेकवा
क्यत्वात्तेनैवपूर्वेषांदेवतात्वमित्याह।अत्रसत्यवसूविश्वेदेवाइत्युक्तंशाकं।यत्तुशातातपः।मा
तृश्राद्धंतुयुग्मैःस्याद्दैवंप्राङ्मुखैःपृथगिति।तद्भिन्नप्रयोगमातृश्राद्धपरं।यच्चमार्कंडेयपुरा
णे॥विश्वेदेवविहीनंतुकेचिदिच्छंतिमानवाइति।तद्भिन्नप्रयोगमातृश्राद्धभिन्नश्राद्धद्वयेवि
श्वेदेवविकल्पार्थं।प्रयोगैक्येतुदेवनियमइतिहेमाद्रिः।एतच्चमातृपूजापूर्वककार्यं।
मातृकायागंयःश्राद्धेपरिवेषयेत्।तस्यक्रोधसमाविष्टाहिंसामिच्छंतिमातरइतिशातातपोक्तेः
मेपि।पुष्पैर्धूपैःसनैवेद्यैर्गंधाद्यैर्भूषणैरपि।पूजयित्वामातृगणंकुर्याच्छ्राद्धत्रयंबुधः।छंदोग
परिशिष्टे॥कर्मादिषुतुसर्वेषुमातरःसगणाधिपाः पूजनीयाःप्रयत्नेनपूजिताःपूजयंतिताः
प्रतिमासुचशुभ्रासुलिखितावाघटादिषु।अपिवाक्षतपुंजेषुनैवेद्यैश्चपृथग्विधैः॥कुड्यलग्नावसो
र्धारांसप्तधारांघृतेनतु।कारयेत्पंचधारांवानातिनीचांनचोच्छ्रिताः॥आयुष्याणिचशांत्यर्थंजप्त्वा
ह्निनःषड्भ्यःपितृभ्यस्तदनुश्राद्धदानमुपक्रमेत्।अत्रसर्वेषुतिथ्यहणाद्धृदयज्ञतद्विका
पिनित्यश्राद्धंनानिष्ट्वातुपितृन्श्राद्धकर्मकिंचित्समाचरेदितिशातातपोक्तेश्च
रानच्छ्रावणीयानांनियता।अन्येषांत्वनियता।वह्न्यंचखदगसोक्तमित्युक्तेः।कारणोत्वभ्युदयः।

यन्नाम्नां तत्र शाखायामित्युक्तेः। आयुष्याणि च शांतो भद्रा इत्यादीनि। षड्भ्य इति मात्रादित्रिकोपलक्षण
मिति पृथ्वीचंद्रः॥ छंदोगानां षड्दैवत्यमन्येषां नवदैवत्यमित्याशार्कः॥ मम तु मतं कोकिलमतानुसा
रिणां मातृमातामहप्रमातामहा इति मात्रा सहैव पाना महश्राद्धाचरणात् तद्विषयमिदं षड्भ्य इति मा
तरस्तत्रैवोक्ताः॥ गौरी पद्मा शची मेधा सावित्री विजया जया। देवसेना स्वधा स्वाहा मातरो लोकमा
तरः। धृतिः पुष्टिस्तथा तुष्टिरात्मदेवतया सह। गणेशेनाधिका ह्येता वृद्धौ पूज्याश्च षोडश॥ मातरो लो
कमातर इति सर्वविशेषणं। तेन चतुर्दशत्वं। यदा षोडशेति पाठस्तदा देवतांतरं। चंद्रिकायां चतुर्द
शेति मतेत्वन्या उक्ताः। तिस्रः पूज्याः पितुः पक्षे तिस्रो मातामहे तथा। इत्येता मातरः प्रोक्ताः पितुर्मा
तुः स्वसाष्टमी। आसां जीवने पृथक्पूजनं मृतानां त्वक्षतपुंजेष्विति हेमाद्रिः॥ ब्रह्माण्याद्यास्तथा
सप्त दुर्गाक्षेत्रगणाधिपान्। वृद्धादौ पूजयित्वा तु पश्चान्नांदीमुखान् पितॄन्। मातृपूर्वान् पितॄन्
इत्यन्ततो मातामहानपि। मातामहीस्ततः केचित् युग्मा भोज्या द्विजातय इति। अत्र द्वादशदैवत
स्य देशाचारतो व्यवस्था॥ ब्रह्माण्याद्याः॥ ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा। वाराही
च तथेंद्राणी चामुंडा सप्त मातर इत्यपरार्के उक्ताः। अत्र चौलादीनां यौगपद्ये तंत्रेणोक्तं छंदोग
परिशिष्टे। गणशः क्रियमाणानां मातृभ्यः पूजनं सकृत्। सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु॥
मातृभ्य इति षष्ठ्यर्थे चतुर्थी। गणशः एकानेकपुत्राणां संस्कारे एकदिने एकदेशकालकर्तृत्वा
दित्यर्थः॥ तथा आवश्यकानि कर्माणि क्रियेरन् कर्मकारिणा। प्रतिप्रयोगं नैव स्युः मातरः सग
णाधिपाः। कर्मांतरेत्वादौ कृत्वा श्राद्धकार्यं कुर्वीतेत्युक्तं तत्रैव। आधानहोमयोश्चैव वैश्वदेवे त
थैव च। बलिकर्मणि दर्शे च पौर्णमासे तथैव च॥ नवयज्ञे च यज्ञज्ञा वदंत्येवं मनीषिणः। ए
कमेव भवेच्छ्राद्धमेतेषु न पृथक् पृथक्। एषु प्रतिप्रयोगं नावर्तते किंत्वादौ। एतद्भिन्ने सोमया
गादौ तु प्रतिप्रयोगमावर्तत एव श्राद्धमित्यर्थः। कचिदादावपि निषेधमाह। स एव। नाष्टकासु
भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते। न सोष्यंतीजातकर्मप्रोषितागतकर्मसु। विवाहादिकर्मग
णो य उक्तो गर्भाधानं शुश्रुम यस्य चांते विवाहादावेकमेवात्र कुर्याच्छ्राद्धं नादौ कर्मणः क
र्मणः स्यात्। सोष्यंत्या आसन्नप्रसवायाः सोष्यंतीमप्युक्तं कर्म। कात्यायनोक्तस्य श्राद्ध
स्य पाकसाध्यत्वात् तस्य जातश्राद्धं न स्यात् पक्वान्नं ब्राह्मणेभ्योपि निषेधात् जातकर्मणि नांदी
श्राद्धं। आमान्नेन वा कार्यमित्याशार्कः। गौडास्तु। जातकर्मण्येव निषेधः। पुत्रजन्मनिमित्त
कं तु कार्यमेव। जन्मन्यथोपनयने इत्युक्तेः। नैमित्तिकमथो वक्ष्ये श्राद्धमभ्युदयात्मकं। पुत्रजन्म
नि तत्कार्यं जातकर्मसमं नरैरिति मार्कंडेयपुराणाच्चेत्याहुः। हारलतायां श्राद्धविवेके चैवं। स्ते
न जातकर्मणि कालांतरे श्राद्धनिषेधो न जन्मदिने इति वाचस्पतिमतं परास्तं॥ अत्र निषेककाले
इति वचनाद्गर्भाधाने न निषेधः॥ प्रोषितेति। प्रोष्येत्य गृहानुपतिष्ठते पुत्रं दृष्ट्वा जपतीति विहितं क
र्म। विवाहादिगर्भाधानांतो यो गृहप्रवेशधृतिहोमचतुर्थीकर्मादिकर्मसमूह उक्तः स तत्कारेण
तत्रापि प्रतिकर्म नेत्यर्थः। अन्येपि हलाभियोगादयोपवादविषयास्तत्रैव ज्ञेयाः। अत्र चारणेऽन्म
ने। अथात्राधिकारिणः। विष्णुपुराणे॥ जातस्य जातकर्मादिक्रियाकांडमशेषतः। पिता पुत्रस्य कु

र्वीत श्राद्धं चाभ्युदयात्मकं॥ अत्र केचित्॥ जीवत्पितुः साग्नेरेव वृद्ध्यधिकारः। न तु निरग्नेः॥ न जीवत्पितृकः कुर्याच्छ्राद्धमग्निमृते द्विजः। येभ्य एव पिता दद्यात्तेभ्यः कुर्वीत साग्निकः। पितामहेष्वेवमेव कुर्याज्जीवति साग्निकः। साग्निकोपि न कुर्वीत जीवति च पितामहे इति चंद्रिकायां सुमंतूक्तेरित्याहुः॥ प्रयोगपारिजातेप्यनाहिताग्निर्न कुर्यादितीदृश्यव्याख्यातं॥ तन्न॥ अनग्निकोपि कुर्वीत जन्मादौ वृद्धकर्मणि। येभ्यः एव पिता दद्यात्तानेवोद्दिश्य तर्पयेदिति हारीतोक्तेः। सोमंतयनुर वृद्धिश्राद्धं भिन्नश्राद्धपरमित्युक्तं मदनरत्ने। पिंडपितृयज्ञपरमिति पृथ्वीचंद्रः। निर्णयामृते तु हारीतीये नग्निको नाहिताग्निरभिमतः। पूर्ववचनेन तु साग्निः स्मार्त्ताग्निश्चोच्यते। तेनोभयाग्निहीनस्यैनेत्युक्तं। तन्न॥ पूर्वोक्तदिशा गतिसंभवे अग्निपदस्य स्मार्त्ताग्निपरत्वे मानाभावात् वक्ष्यमाणनित्यानित्यसंयोगविरोधात्। पितरौ जनकस्येत्याद्यावद्भूतमनाहितं। समाहितव्रतः पश्चात्त्वान यजेत पितामहानिति पृथ्वीचंद्रोदयमवचोविरोधाच्च। अपरार्कोपि समावर्त्तने ब्रह्मचारी स्वयमेव नांदीश्राद्धं कुर्यादित्याह अतः पूर्वमेव साधु। वोपदेवोप्येवमाह। यत्तु मत्तेः। जीवत्पितुः पुत्रनामकर्माग्नेन वृद्धिश्राद्धं। हारीतीये जन्मादौ इत्यादिशब्देन तत्प्राप्तावपि उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे। तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुरिति मैत्रपरिशिष्टे उद्वाह एव तस्योपसंहारात्। एवं च पुत्रसंस्कारादिपदं तु पुत्रोद्वाहादिपरमेवेति। तन्न॥ उद्वाहपदस्य स्वविवाहपरत्वस्यापि संभवात् पुत्रविवाहादिपरत्वे मानाभावात्॥ अतो जन्मादाविति सर्वसंस्कारसंग्रहः। तथा च कात्यायनः॥ स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु पिंडानोद्वहनात्तेषां तस्याभावे तु तत्क्रमात्। सुतानां चोलादिसंस्कारेषु पिता पितृभ्यः पिंडश्राद्धं। पिंडदोपलक्षणमेषामिति दर्शनात्। उद्वहनाद्विवाहपर्यंतं दद्यात्। विवाहश्च प्रथमः नांदीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे बुधः। अत ऊर्ध्वं प्रकुर्वीत स्वयमेव तु नांदिकमिति स्मृतेः। तस्य पितुरभावे तत्क्रमात्। असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैरिति यः कर्तृक्रमः तेन क्रमेण ज्येष्ठभ्रात्रादिर्दद्यादिति चंद्रिकादयः। हेमाद्रिस्तु तस्य पितुरभावे यः पितृव्यमातुलादिः संस्कुर्यात्स तत्क्रमात्संस्कार्यपितृक्रमाद्दद्यात् न तु स्वपितृभ्य इति व्याचख्यौ॥ समावर्तनस्यापि विवाहप्राचीनसुतसंस्कारत्वात्पितैव नांदीश्राद्धं कुर्यात्॥ तदभावे ज्येष्ठभ्रात्रादिः तदभावे स्वयमेव कुर्यात्। उपनयनेन कर्माधिकारस्य जातत्वात् एवमाद्यविवाहेपीति पृथ्वीचंद्रचंद्रिकादयः। यदा तु पितरि संन्यस्ते सोपि पितेपतिते वा धर्मार्थं तत्पुत्रमन्यः संस्कार्य पितुः पितामहादिभ्यो दद्यात् पितरौ जनकस्येत्याद्यावद्भूतमनाहितं समाहितव्रतः पश्चात्त्वान यजेत पितामहानिति पृथ्वीचंद्रोदये यमोक्तेः। जीवत्पितृकस्य विशेषमाह कात्यायनः॥ वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते तथा। येभ्यः एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः। यत्तु वृद्धवृच परिशिष्टे जीवत्पिता सुतसंस्कारे मातृमातामह्योः कुर्यात्। तस्यां जीवंत्यां मातामह्यादेवेति तत्र कात्यायनानामेवेति दिक्। स्मृतितत्त्वादिमोऽयं ग्रंथेषु जीवन्मातृकः पितामह्यादिभ्यो वृद्धौ दद्यात्। जीवंतमति दद्यात्। वामेनापान्योदेकेद्विज इति कात्यायनोक्तेः। जीवंत्यस्मिन्सुताः कुर्युः पितामह्याः सहैव तु तस्यां चैव तु जीवं

मातस्याः श्राद्धे निनिषिद्धमपि इति हारीतोक्तेनेत्युक्तं। तस्मिन् भर्तरि॥ दाक्षिणात्यास्तु पूर्वोक्तस्य सपिंडी
करणादिविषयत्वात्। जीवत्पितृकपदेन गोपालवर्गं तु परित्यजेदिति वचनात् तद्वर्गस्य लोपस्तेनाहुः
पत्नुचंद्रिकायां पारस्करः॥ निषेककाले सोमे च सीमंतोन्नयने तथा॥ ज्ञेयं पुंसवने श्राद्धं कर्मांगं
वृद्धिवत्कृतदिति। तत्र गर्भाधानादौ कर्मांगं जातकर्मादौ तु कृत वृद्धिश्राद्धं पृथगेव। वृद्धिवदित्यु
क्तेः॥ गौडनिबंधे मात्स्ये॥ अन्नप्राशने सीमंते पुत्रोत्पत्तिनिमित्तके। पुंसवे च निषेके च नववेश्म
प्रवेशने। देववृक्षजलादीनां प्रतिष्ठायां तथैव च। तीर्थयात्रावृषोत्सर्गे वृद्धिश्राद्धं प्रकीर्तितं
अत्र भूतनिमित्तानां वृद्धित्वं भाविनिमित्तानामंगत्वं। वृद्धिशब्दस्तु कर्मातिदेशार्थ इति गौडाः
अन्ये तु निषेकादौ कर्मांगवृद्धिश्राद्धयोः समुच्चयमाहुः॥ नांदीश्राद्धसंज्ञान्वयाऽनुगता॥
अथेतिकर्तव्यता॥ पृथ्वीचंद्रोदये वृद्धपराशरः॥ मालत्याशतपत्रचंपामल्लिकाकुब्जयोरपि।
केतक्याः पाटलाया वा देया माला न लोहिताः। अत्र मालानिषेधस्यापवादः॥ तथा॥ सु
वेषभूषणैः स्रग्माल्यालंकारैस्तथा नरैः कुंकुमाद्यनुलिप्तांगैर्भाव्यं सुब्राह्मणैः सह॥ स्त्रियोपि सु
स्तथाभूता गीतनृत्यादिहर्षिताः। हेमाद्रौ ब्रह्मांडे॥ कुशस्थाने च दूर्वाः स्युर्मंगलस्याभिवृद्धये
कुशा अपि वृत्त्वपनीते छंदोगपरिशिष्टे। प्रातरामंत्रितान्विप्रान्युग्मानुभयतस्तथा॥ दैवे पित्र्ये
च॥ वैश्वदेवे द्वौ विप्रौ पित्रादीनामेकैकस्य द्वौ द्वाविति विंशतिः। त्रिके वा द्वावित्यष्टौ विप्राः
अत्र विप्रालाभे स्त्रियोपि भोज्याः स्याहाशाके वृद्धवसिष्ठः॥ मातृश्राद्धे तु विप्राणामलाभे पू
जयेदपि पतिपुत्रान्विता भव्याः योषितोऽष्टौ कुलोद्भवाः॥ मातृत्रिके च तत्स्थाने मातामहीत्रिके चेत्य
ष्टाविति। हेमाद्रिः॥ अत्र पित्र्ये प्राङ्मुखा विप्राः। पाद्ये पित्र्ये चतुरस्रं मंडलमिति जयंतः। हेमाद्रौ ब्रा
ह्मे पि॥ विप्रान्प्रदक्षिणावर्तं प्राङ्मुखानुपवेशयेत् छंदोगपरिशिष्टे। गोत्रनामभिरामंत्र्य
पितृभ्योर्घ्यं प्रदापयेत्॥ नात्रापसव्यकरणं न पित्र्यं तीर्थमिष्यते। ज्येष्ठोत्तरकरान्युग्मान्करा
ग्राग्रपवित्रकान्। कृत्वार्घ्यं संप्रदातव्यं नैकैकस्यात्र दीयते। पित्रादेर्द्वौ द्वौ विप्रौ तयोर्दक्षिण
हस्तौ संयोज्य प्रथमोपवेशितविप्रकरोपरि तेनैव द्वयोरर्घ्यं दद्यादित्यर्थः। तत्त्वकारिकायां तु
दत्त्वार्घ्यमेकदेशः स्यादर्घ्यदानं प्रति द्विजं। आवृत्तिरिति मंत्रस्य प्रतिब्राह्मणमिष्यते। प्रतिद्वि
जं पृथक् कुर्यान्निवीत्यर्घ्यानुमंत्रणमित्युक्तं॥ मधुमध्विति यत्तत्र त्रिर्जपोऽशितुमिच्छतां। गा
यत्र्यनंतरं सोत्र मधुमंत्रविवर्जितः। न चाश्नन्तु जपेदत्र कदाचित्पितृसूक्तकं॥ तथा॥ संपन्न
मिति तृप्ताः स्थ प्रश्नस्थाने विधीयते। सुसंपन्नमिति प्रोक्ते शेषमन्नं निवेदयेत्। अक्षय्योदकदा
नं च अर्घ्यदानवदिष्यते षष्ठ्यैव नित्यं तत्कुर्यान्न चतुर्थ्या कदाचन। चंद्रोदये ब्राह्मे॥ पठेच्छकु
निसूक्तं तु स्वस्तिसूक्तं शुभं तथा। नांदीमुखान्पितॄन्भक्त्या सोऽजलिश्च समाह्वयेत्॥ तथा॥
शाल्यन्नं दधिमध्वक्तं बदराणि यवांस्तथा। मिश्रीकृत्वा तु चतुरः पिंडान् श्रीफलसन्निभान्॥
दद्यान्नांदीमुखेभ्यश्च पितृभ्यो विधिपूर्वकं॥ द्राक्षामलकमूलानि यवांश्च विनियोजयेत्। ना
न्नेव दक्षिणार्थं तु दद्याद्विप्रेषु सर्वदा॥ तत्रैव चतुर्विंशतिमते॥ द्वौ द्वौ चाभ्युदये पिंडावेकैकस्मै
विनिक्षिपेत्। एकं नाम्ना परं तूष्णीं दद्यात्पिंडान् पृथक् पृथक्॥ वसिष्ठः॥ प्राङ्मुखो देवती

येन प्राक्कूलेषु कुशेषु च। दत्त्वा पिंडान्न कुर्वीत पिंडपात्रमधोमुखं। नांदीमुखेभ्यः पितृभ्यः स्वाहेति वा
पिंडदानमंत्र इति वृत्तिः। अत्र पिंडाः कृताकृता इत्युक्तं तन्नैव भविष्ये॥ पिंडनिर्वपनं कुर्यान्न वा
कुर्याद्विचक्षणः॥ वृद्धिश्राद्धे महाबाहो कुलधर्मानवेक्ष्य तु॥ छागलेयः॥ अग्नौकरणमर्घ्यं चा
वाहनं चावनेजनं। पिंडश्राद्धे प्रकुर्वीत पिंडहीने निवर्तते। तेनात्र भोजनस्यैव प्रधानत्वाद्यद्वि
प्रस्यैवमन्नं तद्दानस्यैव पार्वणस्य प्रकरणवृत्तिरिति सिद्धं॥ अत्र संकल्पे विशेषः प्रयोगपारिजाते सं
ग्रहे। शुभार्थी प्रथमं तेन वृद्धौ संकल्पमाचरेत्॥ न षष्ठ्या पदिवा कुर्यान्महान्दोषोभिजायते॥
नामगोत्रादि निषेधोप्यत्रैव न तु सपिंडकश्राद्धे इति स एव। अत्रायं क्रमः। नांदीश्राद्धे देवक्षणः
क्रियतामिति द्वौ युगपन्निमंत्र्य। ॐ तथेति विप्राभ्यां युगपदुक्ते प्राप्नुतां भवंतौ प्राप्नुवावेति वैश्व
देववत्पित्र्ये च द्विवचनांतेन विप्रद्वये प्रयोगं कुर्यात्। आह्निकाग्नेस्तु हेमाद्रौ वाह्ने॥ योग्नौ तु वि
द्यमाने पितृश्राद्धे पिंडान्न निर्वपेत्। पतंति पितरस्तस्य नरके स च पच्यते। बह्वृचपरिशिष्टे॥ दौर्
भौ पवित्रे पवित्राणि चत्वारि शन्नोदेवीरित्यनुमंत्रिता सुयवानाव्यपतिमृचा सिसोमदेवलाग्
सवा द्वे विनिर्मितः। प्रत्नवद्भिः प्रत्नः इच्छा नांदीमुखान् पितॄन् इमान् लोकान्प्रीणाहि नः स्वाहेति
स्वाहाभ्यां इति पञ्चकृति विश्वेदेवाः देवोर्घ्यं नांदी: (ला: पितर इति यथा लिंगमर्घ्यदानमाग
धोरित्यादि [illegible] तोदेवा अनु
नास्त्यपुष्पग्रहणं पावमानीः शंवतीरैंद्रीरभ निर्यं च श्रावयेन्मधुवातेन्द्रच स्याने उपास्मै गाय
तेति पंचमधुमतीः श्रावयेदक्षन्नमीमदंतेति च षष्ठीं भुक्तशेषेणैकैकस्य द्वौ द्वौ पिंडौ दद्यादिति
चंद्रिकायां बह्वृचविषयं॥ तृप्तिप्रश्ने तु संपन्नं देवैरुचितमित्यपि॥ दधिकर्कंधुमिश्रास्तु पिंडाः कार्या
यथाक्रमं॥ कात्यायनः॥ स्मृत्युवाजनमिति विप्रांश्चैव विसर्जयेत्। नांदीमुखाः पितरः प्रियंता
मित्यक्षय्यस्थाने स्वधावाचयिष्ये इत्यस्य स्थाने नांदीमुखान् पितॄन्वाचयिष्य इति न स्वधां प्रयु
जीतेति अत्र साग्निरनग्निर्वा द्वौ वैश्वदेवं कुर्यात्॥ आदौ वृद्धौ क्षये चांते मध्ये श्राद्धे तु
पार्वणे एकोद्दिष्टे निवृत्ते तु वैश्वदेवो विधीयते इत्याश्वलायनशाखायनपरिशिष्टात्। हेमाद्रौ तु शे
षमन्नमनुज्ञाप्य वैश्वदेवं क्रियां ततः श्राद्धान्ते श्राद्धशेषेण वैश्वदेवं समाचरेदिति चतुर्वि
शतिमतं नांदीश्राद्धेप्यंते वैश्वदेव उक्तः। बह्वृचानां पितृत्पालोचनात्तथैव। सर्वोक्तं तु येषां प
रिशिष्टं तद्विषयमन्यविषयं वा ज्ञेयं। ॥अत्र श्राद्धांगतर्पणं नेत्युक्तं प्राक्॥ ॥इति
श्रीजगद्गुरुनारायणभट्टात्मजरामकृष्णभट्टसूनुकमलाकरभट्टकृते निर्णयसिंधौ वृद्धिश्रा
द्धं॥ ॥अथ जीवत्पितृकश्राद्धं॥ ॥तत्रानेके पक्षाः दृश्यन्ते॥
जीवंतं पितरं भोजयित्वा परयोः श्राद्धं कुर्यादित्येकः। होमांतमेव कुर्यादित्यन्यः॥ होमांतः पितृ
यज्ञः स्याज्जीवे पितरि जानतः पितरं भोजयित्वा वा पिंडौ निर्वृणुयात्परौ इति यज्ञपार्श्वोक्तेः। य
दि जीवेत्पिता न दद्यात्। आहोमात्कृत्वा विरमेदित्याश्वलायनोक्तेश्च। जीवंतो पिंडानग्नौ हुत्वा परे
भ्यो देयमित्यपरः। जुहुयाज्जीवेभ्य इत्याश्वलायनोक्तेः। जीवतामजीवतां च पिंडदानमिति तरः
जीवतामजीवतां वा देयमेवेति हिरण्यकेशिरिति निगमात्। तस्माज्जीवत्पिता कुर्याद्द्वाभ्यामे

वनसंभवइतिभविष्योक्तेर्वोभ्यामेवेत्यन्ये। एतेपक्षाःकलौनिषिद्धाः। ब्रह्मक्षमवेनश्राद्धेनिषिद्धंमनुरब्रवीत् पिंडनिर्वपणंचापिमहापातकसंमितमितिपृथ्वीचंद्रोदयेभविष्योक्तेः। चंद्रिकायामप्येवं॥ तस्मात्पितरिजीवतिश्राद्धानारंभएवेत्येकःपक्षः। सपितुःपितृकृत्येषुअधिकारोनविद्यतइतिकात्यायनोक्तेः। जीवत्पितरिवैपुत्रःश्राद्धकालंविवर्जयेदितिहारीतोक्तेश्च॥ पितुःपित्रादिभ्योदद्यादितिसिद्धांतः। म्रियमाणेतुपितरिपूर्वेषामेवनिर्वपेदितिमनूक्तेः। पितुःपितृभ्योवादद्यात्सपितेत्यपराश्रुतिरितिकात्यायनोक्तेश्च। अयंबहुसंमतःपक्षः। अन्येशाखाभेदेनव्यवस्थाः। एवंजीवन्मातामहेनाप्यूहेनकार्यं। मातामहानामप्येवंश्राद्धंकुर्याद्विचक्षणः। मंत्रोहेनयथान्यायंशेषाणांमंत्रवर्जितमितिविष्णूक्तेः। एवंमात्रादिकस्यापितथामातामहादेश्चेति। पृथ्वीचंद्रोदयेऽग्निपुराणाच्च। पितरिजीवतितुस्वमातरिमृतायामपिपितुरेवमातृमातामहयोःकुर्यात्। येभ्यएवपितादद्यादितिवक्ष्यमाणवचनादितिपितामहचरणाः। मदनरत्नेतुजीवत्पितास्वमातृमातामहयोर्दद्यादित्युक्तं। कालादर्शेप्येवं। मृतेतुपितरिजीवन्मातृकःपितामहादिभ्योदद्यादितिस्मृतितत्त्वादिगौडग्रंथाः। दाक्षिणात्यास्तु पितृवर्गेमातृवर्गेतथामातामहस्यच॥ जीवेत्तुयदिवर्गाद्यस्तंवर्गंतुपरित्यजेदितिवचनात्तद्वर्गत्यागएवेत्याहुः। एवंपतितसंन्यस्तपितृकादेरपिज्ञेयं। ब्राह्मेतीर्थेचसंन्यस्तेजातेचपतितेसति। येभ्यएवपितादद्यात्तेभ्योदद्यात्स्वयंसुतइतिषट्त्रिंशन्मतात्। संन्यस्तेजीवतीत्यर्थः। मृतेतुसंन्यस्तेनदायेवदेयं। मृतेपिपरेभ्यएवेतिगौडाः। कालादर्शेपि। ब्राह्मणादिहतेतातेपतितेसंगवर्जिते। व्युत्क्रमाच्चमृतेदेयंयेभ्यएवददात्यसौ॥ यत्तुसंन्यस्तपित्रादेरविशेषात्सद्यश्राद्धेधिकारः॥ एतत्त्रिदंडपरम्॥ एकादशाहपार्वणादिकाय पितुस्यैव। अहन्येकादशेप्राप्तेपार्वणंतुविधीयतइति। उक्तत्रिदंडग्रहणादेकदंडेनात्वनेनैवज्ञापनेन्यनुशतसाविशेषोक्तेः ब्राह्मणादिहतेत्यादिनिषेधस्त्वेकदंडादिपरः। अतःपरमहंसानांवार्षिकादिकिमपिनकार्यमितिशूलपाणिश्राद्धतत्त्वादयोगौडग्रंथाः। इदमेवयुक्तं॥ यत्तुहेमाद्रौकौंडिन्यः। दर्शश्राद्धंगयाश्राद्धंश्राद्धंचापरपक्षकं। नजीवत्पितृकःकुर्यात्तिलैस्तर्पणमेवचेति। तत्संन्यस्तपित्राद्यतिरिक्तविषयं। मैत्रायणीयपरिशिष्टे। उद्वाहेपुत्रजननेपित्र्येष्ट्यांसौमिकेमखे। तीर्थेब्राह्मणआयातेषडेतेजीवतःपितुः॥ तत्रैव॥ महानदीषुसर्वासुतीर्थेषुचगयामृते। जीवत्पितापिकुर्वीतश्राद्धंपार्वणधर्मवत्। गयामृतेइतिमातृव्यतिरिक्तविषयं। आन्वष्टक्यंगयाप्राप्तौसत्यांसत्यमृतेहनि मातुःश्राद्धंसुतःकुर्यात्पितर्यपिचजीवतीतितत्रैवोक्तेः। गयाश्राद्धेप्रासंगिकंया। गयांप्रसंगतोगत्वामातुःश्राद्धंसमाचरेदितिवचनात्। तेनमृतमातृकोगयायांतत्पार्वणमात्रंकुर्वीत॥ तज्जीवनेतु। तीर्थश्राद्धमपिनेतिकालादर्शस्मृतिदर्पणादयः। अन्येतुगत्वाश्राद्धंनेतिनिषेधार्थः। सामान्यतःप्राप्तेतीर्थेश्राद्धंभवत्येवगयायामित्याहुः। यदापितुःप्रतिनिधित्वेनगयांयाति। तदापत्रमानस्यपितृपितामहप्रपितामहानामेवश्राद्धं॥ तत्रस्वमातुःपितृपत्नीत्वेनैकोद्दिष्टंकृत्वामातृत्वेनपुनःपार्वणंकुर्यादितित्रिस्थलीसेतौ॥ तत्रफल्गुविष्णुपदाक्षयवटेष्वेवेतिकेचित्। आद्यंत्ययोरेवेत्यन्ये। मध्यमांत्ययोरित्यपरे। संकोचहेत्वभावात्तत्सर्वश्राद्धानिमातुःकार्याणीतियुक्तंप्रतिभाति। यत्तुप

दत्तपारिजाते। नजीवत्पितृकः कुर्याच्छ्राद्धमग्निमृतेद्विजः येभ्यएवपितादद्यात्तेभ्यः कुर्वीतसा
ग्निकइतिसुमंतूक्तेः। साग्नेरेवजीवत्पितृकस्यतीर्थादिश्राद्धमुक्तं। साग्नेरपिमैत्रायणीयशाखी
यस्यैवनान्येषां। षडेतेजीवतःपितुरितितत्परिशिष्टएवोक्तेरितिरत्नावलीदिवोदासाद्याः तदयु
क्तं। सोमंतत्वंपिंडपितृयज्ञविषयं। संन्यस्तपित्राद्यतिरिक्तविषयंवेतिपृथ्वीचंद्रोदयोक्तेः। वृद्धौतीर्
र्थेचेत्यादेःसाधारण्येनतस्यापितथात्वाच्च। तथानिरग्नेरपिनांदीश्राद्धमुक्तंप्राक्। एवंपितामह
जीवनेपिज्ञेयं। विशेषःपितृकृतजीवत्पितृकनिर्णयेज्ञेयः॥ ॥अथपितामहेजीवति
मृतेचपितरियद्यपि पितामहोवातच्छ्राद्धंभुंजीतेत्यब्रवीन्मनुरिति। मनुनाजीवतःपितामह
स्यभोजनमुक्तं। तथापिअत्यक्षाचेतस्यश्रवेनिषिद्धत्वात्पितामहंविहायपितृप्रपितामहवृद्धप्र
पितामहेभ्योज्ञेयं। पितायस्यतुवृत्तःस्याज्जीवेच्चापिपितामहः। पितुःसनामसंकीर्त्यकीर्तये
त्प्रपितामहमितिमनूक्तेः॥ अयमेवसर्वसम्मतःपक्षः। यत्तुछंदोगपरिशिष्टे। पितामहेध्रियमा
णेपितुःप्रेतस्यनिर्वपेत्। पितुस्तस्यचवृत्तस्यजीवेच्चेत्प्रपितामहइति। एकपुरुषंद्विपुरुषंवापार्व
णमाह तत्तीर्थपितृयज्ञपरं शूद्राशूद्रोक्तमेव। एवंपूर्वयोर्मृतयोःप्रपितामहेजीवतिपितृपितामह
तत्परयोजीवतोश्चवृद्धप्रपितामहादिभ्योज्ञेयं। जीवंतमतिदद्याद्वाप्रेतायान्नोदकेद्विजः। पितुः
पितृभ्योवादद्यात्सपितेत्यपराश्रुतिः। इतिकात्यायनोक्तेश्च॥ एतत्सर्वंनमसिकृत्याहहेमाद्रौविष्णुः
पितरिजीवतियःश्राद्धंकुर्याद्येषांपिताकुर्यात्तेषांकुर्यात्पितरिपितामहेचजीवतितेषांपिताम
हः पितरिपितामहेप्रपितामहेचजीवतिनैवकुर्यात्। यस्यपितामृतःस्यात्सपित्रेपिंडंनिधायप्र
पितामहात्पराभ्यांद्वाभ्यांदद्यात्। यस्यपितापितामहश्चप्रेतौस्यातांसताभ्यांपिंडौदत्वापिताम
हपितामहायदद्यात्। यद्यपिपितामहःसपित्रेपिंडंनिधायप्रपितामहात्पराभ्यांद्वाभ्यांदद्यात्।
यस्यपिताप्रपितामहश्चप्रेतौस्यातांसपित्रेपिंडंनिधायपितामहात्परंद्वाभ्यांदद्यात्। मातामहाना
मप्येवंश्राद्धंकुर्याद्द्विचक्षणः। मंत्रोहेनयथान्यायंशेषाणांमंत्रवर्जितमिति। अत्रपितृवन्माता
महेजीवतितत्पित्रादिभ्यः। यस्यातत्रत्रिषुजीवत्सुनैवकुर्यात्त्वाचत्रापीत्यादिसर्वमतिदेष्टव्यं। ए
वंमातृजीवनेपीतिशूलपाणीकालादर्शौ॥ तन्न॥ येभ्यएवेत्यादेरपच्छेदादेव्यक्तिविशेष
वाचित्वेनतत्प्रसंगादितिदिक्॥ उत्तरार्द्धव्याख्यानंप्राक्। यत्त्वत्रविज्ञानेश्वरेणोक्तं पित्रेपिंडंनि
धायेति पितुरेकोद्दिष्टविधिनाश्राद्धंकृत्वाप्रपितामहादिभ्यःपार्वणंकुर्यात्॥ तद्व्युत्क्रममृतस
पिंडीकरणाभावपक्षेसपिंडीकरणस्थानापन्नंज्ञेयं। व्युत्क्रमात्तुप्रमीतानांनैवकार्यासपिंड
तेतिवचनात्। दर्शादौतुपितुरेकोद्दिष्टमेवकार्यम्। नजीवंतमतिदद्यानीतिश्रुतेः। जीवत्पिता
महोयस्यपिताचांतरितोभवेत् पितुरेकस्यदातव्यमेवमाहुर्मनीषिणः॥ इतियज्ञपार्श्वोक्तेः
पितामहेजीवतिवैपितर्येवसमापयेदितिहारीतोक्तेश्च॥ शिष्टास्तुव्युत्क्रमात्तुप्रमीतानांनैव
कार्यासपिंडता यदिमातायदिपिताभर्त्तानेषविधिःस्मृतइतिमाधवीयेस्कांदोक्तेषुव्युत्क्रम
मृतसपिंडीकरणाभावःपितृव्यादिविषयइत्याहुः एषविधिर्निषेधरूपः। त्रिषुजीवत्सुविष्णु
रह। त्रिषुजीवत्सुनैवकुर्यादिति। एतद्दर्शादिविषयं। नांदीश्राद्धंतुपरेभ्यस्त्रिभ्योभवत्येवेति

वनस्थश्चयइतिभविष्योक्तेर्द्वाभ्यामेवेत्यन्यः। एतेपक्षाःकलौनिषिद्धाः। प्रत्यक्षमर्चनंश्राद्धेनिषिद्धंमनुरब्रवीत् पिंडनिर्वपणंचापिमहापातकसंमितमिति पृथ्वीचंद्रोदयेभविष्योक्तेः। चंद्रिकाप्येवं॥ तस्मात्पितरिजीवति श्राद्धानारंभएवेत्येकः पक्षः। सपितुः पितृकृत्येषु अधिकारोनविद्यतइतिकात्यायनोक्तेः॥ जीवत्पितरिवैपुत्रः श्राद्धकालंविवर्जयेदितिहारीतोक्तेश्च॥ पितुःपित्रादिभ्योदद्यादितिसिद्धांतः। म्रियमाणेनुपितरिपूर्वेषामेवनिर्वपेदितिमनूक्तेः। पितुःपितृभ्योवादद्यात्सपितेत्यपराश्रुतिरितिकात्यायनोक्तेश्च। अयंबहुसंमतःपक्षः। अन्येशाखाभेदेनज्ञेयाः। एवंजीवन्मातामहेनाप्यूहेनकार्यं। मातामहानामप्येवंश्राद्धंकुर्याद्विचक्षणः। मंत्रोहेनयथान्यायंशेषाणांमंत्रवर्जितमितिविष्णूक्तेः। एवंमात्रादिकस्यापितथामातामहादेश्चेति। पृथ्वीचंद्रोदयेग्निपुराणाच्च। पितरिजीवतितुस्वमातरिमृतायामपिपितुरेवमातृमातामहयोःकुर्यात्। येभ्यएवपितादद्यादितिवक्ष्यमाणवचनादितिपितामहचरणाः। मदनरत्नेतुजीवत्पितास्वमातृमातामहयोर्दद्यादित्युक्तं। कालादर्शेप्येवं। मृतेतुपितरिजीवन्मातृकः पितामह्यादिभ्योनदद्यादिति स्मृतितत्त्वादिगौडग्रंथाः। दाक्षिणात्यास्तु। पितृवर्गेमातृवर्गेतथामातामहस्यच॥ जीवेत्तुयदिवर्गाद्यस्तंवर्गंतुपरित्यजेदितिवचनात्तद्वर्गत्यागएवेत्याहुः। एवंपतितसंन्यस्तपितृकादेरपिज्ञेयं। वृद्धेतीर्थेचसंन्यस्तेतातेचपतितेसति। येभ्यःएवपितादद्यात्तेभ्योदद्यात्स्वयंसुतइति षट्त्रिंशन्मतात्। संन्यस्तेजीवतीत्यर्थः। मृतेतुसंन्यस्तेतदाद्येवदेयं। मृतेपिपरेभ्यएवेतिगौडाः। कात्यायनोपि। ब्राह्मणादिहतेतातेपतितेसंगवर्जिते। व्युत्क्रमाच्चमृतेदेयंयेभ्यएवददात्यसौ॥ अयंचसंन्यस्तपित्रादेरविशेषात्सर्वश्राद्धेधिकारः। एतत्त्रिदंडपरम्। एकादशाहपार्वणवार्षिकादिपितुस्तस्यैव। अहन्येकादशेप्राप्तेपार्वणंतुविधीयतइति। उक्तत्रिदंडग्रहणादेवप्रेतत्वंनैवजायतइत्युशनसाविशेषोक्तेः ब्राह्मणादिहतेइत्यादिनिषेधस्त्वेकदंड्यादिपरः। अतःपरमहंसानांवार्षिकादिकिमपिनकार्यमितिशूलपाणिश्राद्धतत्त्वादयोगौडग्रंथाः। इदमेवयुक्तं॥ यत्तुहेमाद्रौकौंडिन्यः। दर्शश्राद्धंगयाश्राद्धंश्राद्धंचापरपक्षकं। नजीवत्पितृकःकुर्यात्तिलैस्तर्पणमेवचेति। तत्संन्यस्तपित्राद्यतिरिक्तविषयं। मैत्रायणीयपरिशिष्टे। उद्वाहेपुत्रजननेपित्रेष्ट्यांसौमिकेमखे। तीर्थेब्राह्मणआयातेषडेतेजीवतःपितुः॥ तत्रैव॥ महानदीषुसर्वासुतीर्थेषुचगयामृते। जीवत्पितापिकुर्वीतश्राद्धंपार्वणधर्मवत्। गयामृतेइतिमातृव्यतिरिक्तविषयं। अन्वष्टक्यंगयाप्राप्तौसत्यांसच्चमृतेहनि मातुःश्राद्धंसुतःकुर्यात्पितर्यपिचजीवतीतितत्रैवोक्तेः। गयाप्राप्तौमासिक्यां। गयायांसंगतोगत्वामातुःश्राद्धंसमाचरेदितिवचनात्। तेनमृतमातृकोगयायांतत्पार्वणमात्रंकुर्यात्॥ तज्जीवनेतु। तीर्थश्राद्धमपिनेतिकालादर्शस्मृतिदर्पणादयः। अन्येतुगत्वाश्राद्धंनेतिनिषेधार्थः। सामान्यतःप्राप्ते तीर्थश्राद्धंभवत्येवगयायामित्याहुः। यदापितुःप्रतिनिधित्वेनगयांयाति। तदायजमानस्यपितृपितामहप्रपितामहाइत्येवंश्राद्धं॥ ततस्वमातुःपितृपत्नीत्वेनैकोद्दिष्टंकृत्वामातृत्वेनपुनःपार्वणंकुर्यादितित्रिस्थलीसेतौ॥ तच्चफल्गुविष्णुपदाक्षयवटेष्वेवेतिकेचित्। आद्यान्येवेत्यन्ये। मध्यमांत्यइत्यपरे। संकोचहेत्वभावात्तत्रत्यएवश्राद्धानिमातुःकार्याणीतियुक्तंप्रतिभाति। यत्तु

दनपारिजाते। नजीवत्पितृकः कुर्याच्छ्राद्धमग्निमृते द्विजः। येभ्य एव पितादद्यात्तेभ्यः कुर्वीत सा
ग्निक इति सुमंतूक्तेः। साग्नेरेव जीवत्पितृकस्य नीर्यादिश्राद्धमुक्तं। साग्नेरपि मैत्रायणीयस्यैव
यस्यैव नान्येषां। यदेते जीवतः पितुरिति तत्परिशिष्टवचनादिति रत्नावली दिवोदासाद्याः। तदयु
क्तं। सोमंतवं पिंडपितृयज्ञविषयं। संन्यस्तपित्राद्यतिरिक्तविषयं वेति पृथ्वीचंद्रोदयोक्तेः। वस्तुतो ती
र्थे चेत्यादेः साधारण्येन नास्यापि तथात्वाच्च। तथा निरग्नेरपि नांदीश्राद्धमुक्तं प्राक्। एवं पितामह
जीवने पि ज्ञेयं। विशेषः पितृकृत जीवत्पितृकनिर्णये ज्ञेयः॥ ॥अथ पितामहे जीवति
मृते च पितरि यद्यपि पितामहो वा तच्छ्राद्धं भुंजीतेत्यब्रवीन्मनुरिति। मनुना जीवतः पितामह
स्य भोजनमुक्तं। तथापि ब्रह्मपक्षार्वनस्यपूर्वं निषिद्धत्वात्पितामहं विहाय पितृप्रपितामहवृद्धप्र
पितामहेभ्यो ज्ञेयं। पिता यस्य तु वृत्तः स्याज्जीवेच्चापि पितामहः। पितुः सनाम संकीर्त्य कीर्तये
त्प्रपितामहमिति मनूक्तेः। अयमेव सर्वसम्मतः पक्षः। यत्तु छंदोगपरिशिष्टं। पितामहे ध्रियमा
णे पितुः प्रेतस्य निर्वपेत्। पितुस्तस्य च वृत्तस्य जीवेच्चेत्प्रपितामह इति। एकपुरुषं द्विपुरुषं वापार्व
णमाह तत्तीर्थपितृयज्ञपरं वृद्धश्राद्धोक्तमेव। एवं पूर्वयोर्मृतयोः प्रपितामहे जीवति पितृमातामह
तत्परयो जीवतो वृद्धप्रपितामहादिभ्यो ज्ञेयं। जीवंतमपि दद्याद्वा प्रेतायान्नोदके द्विजः। पितुः
पितृभ्यो वा दद्यात्सपितेत्यपरा श्रुतिः। इति कात्यायनोक्तेश्च॥ एतत्सर्वं नमसिक्रत्याह हेमाद्रौ विष्णुः
पितरि जीवति यः श्राद्धं कुर्यात् येषां पिता कुर्यात्तेषां कुर्यात् पितरि पितामहे च जीवति तेषां पिताम
हः पितरि पितामहे प्रपितामहे च जीवति नैव कुर्यात्। यस्य पिता प्रेतः स्यात्स पित्रे पिंडं निधाय प्र
पितामहात्परभ्यां द्वाभ्यां दद्यात्। यस्य पिता पितामहश्च प्रेतौ स्यातां स ताभ्यां पिंडौ दत्वा पिताम
हपितामहाय दद्यात्। यद्यपि पितामहः स पित्रे पिंडं निधाय प्रपितामहात्परभ्यां द्वाभ्यां दद्यात्।
यस्य पिता प्रपितामहश्च प्रेतौ स्यातां स पित्रे पिंडं निधाय पितामहात्परं द्वाभ्यां दद्यात्। मातामहाना
मप्येवं श्राद्धं कुर्य्याद्विचक्षणः। मंत्रोहेन यथान्यायं शेषाणां मंत्रवर्जितमिति। अत्र पितृवन्माता
महे जीवति तत्पित्रादिभ्यः। यस्या तत्र त्रिषु जीवत्सु नैव कुर्य्यात् मातापीत्यादि सर्वं मतिदेश्यं। ए
वेमात् जीवने पीति शूलपाणी कालादर्शो॥ तन्न॥ येभ्य एवेत्यादेरपवच्छेदादेव्यक्तिविशेष
वाचित्वेन तत्प्रसंगादिति दिक्॥ उक्तं रुद्रव्याख्याने प्राक्। यत्त्वत्र विज्ञानेश्वरेणोक्तं पित्रे पिंडं नि
धायेति पितुरेकोद्दिष्टविधिना श्राद्धं कृत्वा प्रपितामहादिभ्यः पार्वणं कुर्यात्॥ तद्व्युत्क्रममृतस
पिंडीकरणाभावविषयं सपिंडीकरणस्थानापन्नं ज्ञेयं। व्युत्क्रमात्तु प्रमीतानां नैव कार्या सपिंड
नेति वचनात्। दर्शादौ तु पितुरेकोद्दिष्टमेव कार्यं न। नजीवंतमतिदद्यादिति श्रुतेः। जीवत्पिता
महो यस्य पिता चानरितो भवेत् पितुरेकस्य दातव्यमेव माहुर्मनीषिणः॥ इति यज्ञपार्श्वोक्तेः
पितामहे जीवति वै पितर्येव समापयेदिति हारीतोक्तेश्च॥ शिष्टास्तु व्युत्क्रमात्तु प्रमीतानां नैव
कार्या सपिंडता यदि माता यदि पिता भर्त्ता नैष विधिः स्मृत इति माधवीयेस्कांदोक्तेः व्युत्क्रम
मृतसपिंडीकरणाभावः पित्रव्यादिविषय इत्याहुः एष विधिर्निषेधरूपः। त्रिषु जीवत्सु विष्णु
रह। त्रिषु जीवत्सु नैव कुर्यादिति। एतद्दर्शादिविषयं। नांदीश्राद्धं तु परेभ्यस्त्रिभ्यो भवत्येवेति

वनस्थश्च पर इति भविष्योक्तेर्येभ्य एवेत्यन्ये। एते पक्षाः कलौ निषिद्धाः। अत्यसमर्थेन श्राद्धे विवि
द्धमनुरब्रवीत्। पिंडनिर्वपणं चापि महापातकसंमितमिति पृथ्वीचंद्रोदये भविष्योक्तेः। चंद्रिका
य्यप्येवं॥ तस्मात्पितरि जीवति श्राद्धनारंभ एवेत्येकः पक्षः। स पितुः पितृकृत्येषु अधिकारो न वि
द्यत इति कात्यायनोक्तेः॥ जीवत्पितरि वै पुत्रः श्राद्धकालं विवर्जयेदिति हारीतोक्तेश्च॥ पितुः
पित्रादिभ्यो दद्यादिति सिद्धांतः। म्रियमाणे तु पितरि पूर्वेषामेव निर्वपेदिति मनूक्तेः। पितुः पितृभ्यो
वा दद्यात्स पित्रेत्यपरा श्रुतिरिति कात्यायनोक्तेश्च। अयं बहुसंमतः पक्षः। अन्ये शाखाभेदेन व्यवस्थे
याः। एवं जीवन्मातामहेनाप्यूहेन कार्यं। मातामहानामप्येवं श्राद्धं कुर्याद्विचक्षणः। मंत्रोहेन
यथान्यायं शेषाणां मंत्रवर्जितमिति विष्णूक्तेः। एवं मात्रादिकस्यापि तथा मातामहादिष्वेव इति
पृथ्वीचंद्रोदयेऽग्निपुराणाच्च। पितरि जीवति तु स्वमातरि मृतायामपि पितुरेव मातृमातामहयोः कु
र्यात्। येभ्य एव पिता दद्यादिति वक्ष्यमाणवचनादिति पितामहचरणाः। मदनरत्ने तु जीवत्पितास्व
मातृमातामहयोर्दद्यादित्युक्तं। कालादर्शेऽप्येवं। मृते तु पितरि जीवन्मातृकः पितामहादिभ्यो द
द्यादिति स्मृतितत्त्वादिगौडग्रंथाः। दाक्षिणात्यास्तु। पितृवर्गे मातृवर्गे तथा मातामहस्य च॥
जीवेत्तु यदि वर्गाद्यस्तं वर्गं तु परित्यजेदिति वचनात्तद्वर्गत्याग एवेत्याहुः। एवं पतितसंन्यस्तपितृका
देरपि ज्ञेयं। वृद्धो तीर्थे च संन्यस्ते ताते च पतिते सति। येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुत इति
षट्त्रिंशन्मतात्। संन्यस्ते जीवतीत्यर्थः। मृते तु संन्यस्ते न दाधवद्देयं। मृतेऽपि परेभ्य एवेति गौडाः। का
त्यायनोऽपि। ब्राह्मणादिहते ताते पतिते संगवर्जिते। व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ॥ अ
यं च संन्यस्तपित्रादेर्विशेषात्सर्वश्राद्धेऽधिकारः॥ एतत्त्रिदंडपरम्॥ एकादशाहपार्वणवार्षिकाद्य
पि तस्यैव। अहन्येकादशे प्राप्ते पार्वणं तु विधीयत इति। उक्तमिदं महालये एवमेतत्त्वे नैकमायोऽस्तु
शनसाविशेषोक्तेः आत्महणादिहतेष्वादि निषेधस्त्वेकदंडिपरः। अतः परमहंसानां वार्षिकादि
किमपि न कार्यमिति शूलपाणिश्राद्धतत्त्वादयो गौडग्रंथाः। इदमेव युक्तं॥ यत्तु हेमाद्रौ कौथुमः। दर्श
श्राद्धं गयाश्राद्धं श्राद्धं चापरपक्षकं। न जीवत्पितृकः कुर्यात्तिलैस्तर्पणमेव चेति। तत्संन्यस्तपितृपाति
रिक्तविषयं॥ मैत्रायणीयपरिशिष्टे। उद्वाहे पुत्रजनने पित्र्यां सौमिके मखे। तीर्थे ब्राह्मण आयाते
षडेते जीवतः पितुः॥ तत्रैव॥ महानदीषु सर्वासु तीर्थेषु च गयामृते। जीवत्पिताऽपि कुर्वीत श्राद्धं पा
र्वणधर्मवत्। गयामृते इति मातृव्यतिरिक्तविषयं। आन्वष्टक्यं गयायां च संन्यासे च मृतेऽहनि। मातुः
श्राद्धं सुतः कुर्यात्पितर्यपि च जीवतीति तत्रैवोक्तेः। गयाश्राद्धे मासं विवर्ज्यं। गयायां संगतो गत्वा मातुः
श्राद्धं समाचरेदिति वचनात्। तेन मृतमातृको गयायां तन्मात्रेण मातृकं कुर्यात्॥ तज्जीवने तु। तीर्थ
श्राद्धमपि नेति कालादर्शस्मृतिदर्पणादयः। अन्ये तु गत्वा श्राद्धं नेति निषेधार्थः। सामान्यतस्तु
तीर्थश्राद्धं भवत्येव गयायामित्याहुः। यदापि तु मातृनिषिद्धे गयायां याति। तदा पञ्चमातृस्वपितृ
पितामहप्रपितामहास्वेव श्राद्धं॥ तत्र स मातुः पितृपत्नीत्वेनैकोद्दिष्टं कृत्वा मातृस्वेव पुत्रः पार्व
णं कुर्यादिति त्रिस्थलीसेतौ॥ तच्च फल्गुविष्णुपदाक्षयवटेष्वेवेति केचित्। आद्यांत्येष्वेवान्ये। म
ध्यमांत्येष्वन्यपरे। संकोचहेत्वभावात्तत्सर्वेष्वपि ज्ञानमातृकार्यमेवेति युक्तं प्रतिभाति। यत्तु

एष्टव्याबहवःपुत्राःशीलवंतोगुणान्विताः तेषांतुसमवेतानांयद्येकोपिगयांव्रजेत्॥ तारितास्मो
यंतेनसयातिपरमांगतिमिति॥ हेमाद्रौकौर्मोक्तेः। काम्येपिदानहोमादावन्यनुसत्यैवाधिकारः
इत्याहाश्वजपादौतांचिनापि॥ अपरार्केपैठीनसिः॥ विभक्तैस्तुपृथक्कार्यंप्रतिसंवत्सरादि
एकेनैवाविभक्तेषुकृतेसर्वैस्तुतत्कृतं।संवत्सरात्सर्वाणिमासिकान्येकत्रैवतदाहलघुहारीतः
सपिंडीकरणांतानियानिश्राद्धानिषोडश।पृथङ्नैवसुताःकुर्युःपृथक्द्रव्याअपिक्वचित्।सपिं
डनंमासिकोपलक्षणं।अर्वाक्संवत्सराज्ज्येष्ठःश्राद्धंकुर्यात्समेत्यतु।ऊर्ध्वंसपिंडीकरणात्सर्वे
युःपृथक्पृथगितिव्यासोक्तेः।उशनाः नवश्राद्धंसपिंडत्वंश्राद्धान्यपिचषोडश।एकेनैवतुकार्या
णिसविभक्तधनेष्वपि मघात्रयोदशीश्राद्धंत्वविभक्तानामपिपृथगित्युक्तंप्राक्।यत्तुवृद्धवसि
ष्ठः।मासिकंचवृषोत्सर्गंसपिंडीकरणंतथा।ज्येष्ठेनैवप्रकर्तव्यमाब्दिकंप्रथमंतथेति।तन्निर्मू
लं।बह्वृचपरिशिष्टे।नवश्राद्धंसहदद्युः॥ ॥अथतीर्थश्राद्धं॥
तत्रयद्यप्यस्मत्पितामहकृतत्रिस्थलीसेतुरेवजागर्तितथापिकिंचिदुच्यते।तत्रयात्रायां।सहा
ग्निर्वासपत्नीकोगच्छेत्तीर्थानियत्नतः।प्रायश्चित्तीव्रजेत्तीर्थंपत्नीविरहितोपिवा।यद्येवंनधि
कारीचपश्चवामनत्रसाधकइतिकौर्मवचनात्साग्नेःसपत्नीकस्यैवाधिकारः।भारते।ब्राह्मणः
क्षत्रियोवैश्यःशूद्रोवाराजसत्तम नवियोनिंव्रजंत्येतेस्नाताःतीर्थेमहात्मनः।स्कांदेविश्व
वाधर्मेषु।स्नानंदानंतीर्थयात्रांविष्णोर्नामग्रहंमुहुः।एतत्पुत्राद्यनुमत्यैवासधवायाःपत्या
सहैवेतिप्रागुक्तं।काशीखंडे।मातुःपितुःक्षेप्तुमनास्तथास्थिसुतस्तुकुर्यात्खलुतीर्थयात्रां॥
तद्विधिःस्कांदे।तीर्थयात्रांचिकीर्षुःप्राग्विधायोपोषणंगृहे॥ गणेशंचपितॄन्विप्रान्साधून्
शक्त्याप्रपूज्यच।कृतपारणकोहृष्टोगच्छेन्नियमधृक्पुनः। आगत्याभ्यर्च्यचपितॄन्यथोक्तफल
भाग्भवेत् उपवासात्प्राङ्मुंडनंचकार्यं।प्रयागेतीर्थयात्रायांपितृमातृवियोगतः। कचानांव
पनंकुर्यान्नवृथानविकचोभवेदितिविष्णूक्तेः।प्रायश्चित्तार्थंयात्रायांगयायांचैतदित्यके।केचि
त्तुहेमाद्रौमहाभारते।केशश्मश्रुनखादीनांवपनंनचशस्यते अतोनकार्यंवपनंगयाश्राद्धार्थि
नासदा।येभारतेस्मिन्पितृकर्मतत्पराःसंधार्यकेशानतिभक्तिभाविताः।त्वगास्थयार्थंपितृ
तीर्थमागतास्तेषामृणंसंक्षयमेष्यतिध्रुवमितिनिषेधात्।गयायात्रांगवपनंनकार्यमित्याहुः
वस्तुतस्तु॥ गयाधिकरणकस्यैवायंनिषेधः।ननुयात्रांगस्य॥श्राद्धार्थिनेत्युक्तेः।विशालो
विरजंगयाश्रित्यनेनैकवाक्यत्वाच्च।श्राद्धंचपरान्नवृद्धादशदेवतंवाघृतेनकार्यं॥ गच्छेद्देशां
तरंयस्तुश्राद्धंकुर्यात्ससर्पिषेतिविष्णुपुराणात्।यात्रांगवृद्धिश्राद्धोक्तेश्च।श्राद्धंचपारणादि
नेएव।उपोष्यरजनीमेकांप्रातःश्राद्धंविधायच।गणेशंब्राह्मणान्नत्वाभुक्त्वाप्रस्थितवान्सु
धीरितिस्कांदलिंगात्।गौडनिबंधेगौतमः तीर्थयात्रासमारंभेतीर्थात्प्रत्यागमेपिच।वृद्धि
श्राद्धंप्रकुर्वीतबहुसर्पिःसमन्वितं।वृद्धिपदंतद्धर्मार्थम्।श्राद्धोत्तरंयात्रासंकल्पइतिभट्टाः॥वा
पनीये॥ उद्यतस्तुगयांगंतुंश्राद्धंकृत्वाविधानतः।विधायकार्पटीवेषंग्रामंकृत्वाप्रदक्षिणं।
ततोग्रामांतरंगत्वाश्राद्धशेषस्यभोजनं।घृतस्यभोजनं।तच्चक्रोशमध्ये।श्राद्धोत्तरंक्रोशगमन

कल्पतरुः पृथ्वीचंद्रोदये तु। द्यात्रिभ्यः परेभ्यस्तु जीवेच्चेत्रितयं पदीति मनूक्तेः। सर्वत्र विकल्पाः स च देशाचाराद्यवनिष्ठत इत्याहुः। सुदर्शनभाष्ये तु मातामहश्राद्धं जीवत्पित्रादिनाप्युत्क्रममृतपित्रादिर्नैव कार्यमेवेत्युक्तं। मदनरत्ने तु॥ अष्टकादिषु संक्रांतौ मन्वादिषु युगादिषु। चंद्रसूर्यग्रहे पाते स्वेच्छया ह्यपयोगतः। जीवत्पिता नैव कुर्याच्छ्राद्धं काम्यं तथाखिलं। अन्येपि विशेषाः श्रीपितृकृतजीवत्पितृकनिर्णये भट्टकृतत्रिस्थलीसेतौ च ज्ञेयाः॥ इति भट्टकमलाकरकृते निर्णयसिंधौ जीवत्पित्रादिश्राद्धं॥

॥अथ विभक्ताविभक्तनिर्णयः॥

पृथ्वीचंद्रोदये मरीचिः॥ बहवः स्युर्यदा पुत्राः पितुरेकत्रवासिनः। सर्वेषामनुमत्यैव द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत्। ज्येष्ठस्य कर्तृत्वेपि सर्वे फलभागिन इत्यर्थः। तेन यमब्रह्मचर्यादिनियमास्ते फलित्वात्सर्वैः कार्याः। एवं संसृष्टिनामपि। तुल्यत्वात् मिताक्षरायां नारदः। भ्रातॄणामविभक्तानामेको धर्मः प्रवर्तते। विभागे सति धर्मोपि भवेत्तेषां पृथक् पृथक्। बृहस्पतिरपि॥ एकपाकेन वसतां पितृदेवद्विजार्चनं। एकं भवेद्विभक्तानां तदेव स्याद्गृहे गृहे। अत्र यद्यपि अविशेषणात् ब्रह्मयज्ञसंध्यादिष्वपि विभक्तानां पृथक्त्वनिषेधः प्राप्नोति। तथापि द्रव्यसाध्यश्राद्धवैश्वदेवादिविषयः॥ द्रव्यस्यानेकस्वामिकत्वेनैकस्यापेनाधिकारात्। यानि तु द्रव्यसाध्यानि मंत्रजपोपवाससंध्याब्रह्मयज्ञपारायणादीनि नित्यनैमित्तिककाम्यानि तेषु पृथगेवाधिकारः द्रव्यव्ययाभावेऽनुमत्यनपेक्षणात्। द्रव्येण चाविभक्तेनेत्यस्याविषयत्वात्। पृथगप्येकपाकानां ब्रह्मयज्ञाद्विजन्मनां अग्निहोत्रं सुरार्चा च संध्या नित्यं भवेत्तथेति। प्रयोगपारिजाते आश्वलायनोक्तेः। अग्निहोत्रशब्देनाग्निसाध्यश्रौतस्मार्तनित्यकर्मपरः तेषामन्यानुमत्यैवाधिकारेण न्यायसाम्यात्। पितृश्राद्धादिषु तुल्यफलेषु नित्येषु तु मतिं विनाप्येकस्याधिकारः। एकोपि स्थावरे कुर्याद्दानाधमनविक्रयं आपत्काले कुटुंबार्थे धर्मार्थे च विशेषतः॥ इति वचनात्। धर्मार्थेऽवश्यकर्तव्ये पितृश्राद्धादाविति विज्ञानेश्वरः। केचित्तु विभक्तानामपि पृथक्पाकत्वे देशांतरे च दार्शिकाब्दिकयोः पृथक्त्वमाहुः भ्रातॄणामविभक्तानां पृथक्पाको भवेद्यदि। वैश्वदेवादिकं श्राद्धं कुर्युस्ते वै पृथक्पृथगिति हारीतोक्तेः। अविभक्तेन पुत्रेण पितृमेधे मृताहनि। देशांतरे पृथक्कुर्युर्दर्शश्राद्धं तथैव चेति यमोक्तेश्चेति तन्मूलं चिंत्यं। तदयमर्थः॥ पंचमहायज्ञमध्ये देवभूतपितृमनुष्ययज्ञानन्यानुमत्या ज्येष्ठ एव कुर्यात्। होमाग्निदानरहितं न भोक्तव्यं कदाचन। अविभक्तेषु संसृष्टेष्वेकेनापि कृतं कृतमिति व्यासोक्तेश्च॥ यस्य तु ज्येष्ठेनाकृते वैश्वदेवेन्नसिद्धे ततस्त्रीमग्नौ किंचित्क्षिप्त्वा भोक्तव्यं। यस्य त्वेषामग्नितोन्नसिद्धिस्तस्मिन्नियुक्तमग्नौ कृत्वाग्रं ब्राह्मणाय दत्वा भुंजीतेत्यविभक्ताधिकारे पृथ्वीचंद्रोदये गोभिलोक्तेः। आश्वलायनस्तु॥ पाकपार्थक्ये पृथक्त्वं तदेकत्वेऽपृथक्त्वमाह। वसतामेकपाकेन विभक्तानामपि प्रभुः एकस्तु चतुरो यज्ञान्कुर्याद्वाग्यज्ञवर्जितान्॥ अविभक्ता विभक्ता वा पृथक्पाकाद्द्विजातयः कुर्युः पृथक्पृथक्पञ्चयज्ञान्भोजनात्प्राग्दिने दिने इति। ब्रह्मयज्ञसंध्यास्नानतर्पणादि तूक्तहेतोः पृथगेव देवपूजा तूक्तवचनद्वयादेकत्वपृथक्त्वे॥ दर्शग्रहणश्राद्धादि त्वेकस्यैव तीर्थश्राद्धाद्यपि प्रागुक्तं तेषामविभक्तानां प्राप्तावेकस्यैव भेदेन प्राप्तौ भिन्नम्। गयाश्राद्धेप्येवं। य

एष्टव्या बहवः पुत्राः शीलवंतो गुणान्विताः तेषां तु समवेतानां यद्येकोपि गयां व्रजेत्॥ तारितास्ते
यं तेन स याति परमां गतिमिति॥ हेमाद्रौ कौर्मोक्तेः काम्ये पिंडदानहोमादावप्यनुमत्यैवाधिकारः
द्रव्यासाध्यजपादौ तां विनापि॥ अपरार्के पैठीनसिः॥ विभक्तैस्तु पृथक्कार्यं प्रतिसंवत्सरादि
एकेनैवाविभक्तेषु कृतं सर्वैस्तु तत्कृतं। संवत्सरात्पूर्वाणि मासिकान्येकत्रैव तदाह लघुहारीतः
सपिंडीकरणांतानि यानि श्राद्धानि षोडश। पृथङ्नैव सुताः कुर्युः पृथग्द्रव्या अपि क्वचित्॥ स
पिंडनं मासिकोपलक्षणं। अर्वाक् संवत्सराज्ज्येष्ठः श्राद्धं कुर्यात्समेत्य तु। ऊर्ध्वं सपिंडीकरणात्सर्वे कु
र्युः पृथक्पृथगिति व्यासोक्तेः। उशनाः नवश्राद्धं सपिंडत्वं श्राद्धान्यपि च षोडश। एकेनैव तु कार्या
णि संविभक्तधनेष्वपि मघात्रयोदशीश्राद्धं त्वविभक्तानामपि पृथगित्युक्तं प्राक्। यत्तु वृद्धवसि
ष्ठः। मासिकं च वृषोत्सर्गं सपिंडीकरणं तथा। ज्येष्ठेनैव तु कर्तव्यमाब्दिकं प्रथमं तथेति। तन्निर्मू
लं। बह्वृचपरिशिष्टे। नवश्राद्धं सह दद्युः॥ ॥अथ तीर्थश्राद्धं॥
तत्र यद्यप्यस्मत्पितामहकृतत्रिस्थलीसेतुरेव जागर्त्ति तथापि किंचिदुच्यते। तत्र यात्रायां। सा
ग्निर्वा सपत्नीको गच्छेत्तीर्थानि संयतः। प्रायश्चित्ती व्रजेत्तीर्थे पत्नीविरहितोपि वा। यत्रैवानधि
कारी च पश्चवामनुसाधक इति कौर्मवचनात् साग्नेः सपत्नीकस्यैवाधिकारः। भारते। ब्राह्मणः
क्षत्रियो वैश्यः शूद्रो वा राजसत्तम न वियोनिं व्रजन्त्येते स्नाताः तीर्थे महात्मनः। स्कांदे विध
वाधर्मेषु। स्नानं दानं तीर्थयात्रां विष्णोर्नामग्रहं मुहुः। एतत्पुत्राद्यनुमत्यैव। सधवायाः पत्या
सहैवेति प्रागुक्तं। काशीखंडे। मातुः पितुः स्वेष्टमनालभ्यास्थि सुतस्तु कुर्यात्खलु तीर्थयात्रां॥
तद्विधिः स्कांदे। तीर्थयात्रां चिकीर्षुः प्राग्विधायोपोषणं गृहे॥ गणेशं च पितॄन्विप्रान्साधून्
शक्त्या प्रपूज्य च। कृतपारणको हृष्टो गच्छेन्नियमधृक्पुनः। आगत्याभ्यर्च्य च पितॄन् यथोक्तफल
भाग्भवेत् उपवासात्प्राग्मुंडनं च कार्यं। प्रयागे तीर्थयात्रायां पितृमातृवियोगतः कचानां व
पनं कुर्यात् वृथा न विकचो भवेदिति विष्णूक्तेः। प्रायश्चित्तार्थयात्रायां गयायां चैतदित्यन्ये। केचि
त्तु हेमाद्रौ महाभारते। केशश्मश्रुनखादीनां वपनं न च शस्यते अतो न कार्यं वपनं गयाश्राद्धार्थि
नां सदा। ये भारतेस्मिन् पितृकर्मतत्पराः संधार्य केशानतिभक्तिभाविताः। ऋणक्षयार्थं पितृ
तीर्थमागता स्तेषामृणं संक्षयमेष्यति ध्रुवमिति निषेधात्। गयायात्रांगं वपनं न कार्यमित्याहुः
वस्तुतस्तु॥ गयाधिकरणकस्यैवायं निषेधः न तु यात्रांगस्य॥ श्राद्धार्थिनेत्युक्तेः। विशालां
विरजं गयामित्यनेनैकवाक्यत्वाच्च। श्राद्धं च पूर्णवद्द्वादशदैवतं वा घृतेन कार्यं॥ गच्छेद्देशां
तरं यस्तु श्राद्धं कुर्यात्ससर्पिषेति विष्णुपुराणात्। यात्रांगवृद्धिश्राद्धोक्तेश्च। श्राद्धं च पारणादि
ने एव। उपोष्य रजनीमेकां प्रातः श्राद्धं विधाय च। गणेशं ब्राह्मणान्नत्वा भुक्त्वा प्रस्थितवान्सु
धीरिति स्कांदलिंगात्। गौडनिबंधे गौतमः तीर्थयात्रासमारंभे तीर्थात्प्रत्यागमेपि च। वृद्धि
श्राद्धं प्रकुर्वीत बहुसर्पिःसमन्वितं। वृद्धिपदं तत्कर्मार्थम्। श्राद्धोत्तरं यात्रासंकल्प इति भट्टाः॥ वा
यवीये॥ उद्यतस्तु गयां गंतुं श्राद्धं कृत्वा विधानतः। विधाय कार्पटीवेषं ग्रामं कृत्वा प्रदक्षिणं।
ततो ग्रामांतरं गत्वा श्राद्धशेषस्य भोजनं। घृतस्य भोजनं। तच्च क्रोशमध्ये। श्राद्धोत्तरं क्रोशगमन

निषेधात् ततः प्रतिदिनं गच्छन्प्रतिग्रहविवर्जितः। गयायामेवैतन्नान्यत्रेति केचित्। हेमाद्रिस्तु
गयायां श्राद्धदिनएवमस्यान्तीर्थांतरेतु श्राद्धोत्तरदिनेऽस्याह। प्रभासखंडे। पश्चान्मुक्तोरुच्छ-
न्तीतीर्थयात्रान्नरेश्वरः। स्वकीयद्रव्ययानाभ्यां तस्य पुण्यं चतुर्गुणं। यात्रामध्ये आशौचे रजसि च
शुद्धिपर्यंतं स्थित्वा तदंते गच्छेत्। मार्गे वैषम्ये न दोषः। यात्रामध्ये तीर्थांतरप्राप्तौ श्राद्धादिकार्यमेव
वाराणस्याद्यर्थं गतेन तु मुंडनोपवासादि न कार्यमिति प्रयोगसेतौ भट्टाः। वस्तुतस्तु तत्रापि मुंडनोपवास
श्राद्धादिकार्यं। अर्द्धं तीर्थफलं तस्य यः प्रसंगेन गच्छतीति वाक्योक्तेः॥ स्कांदे॥ द्विभोजनं तीर्थयाशह-
रेत्तीर्थफलं स्वकं। वाराणस्यां तथा भागान्हंति सर्वं प्रतिग्रहः॥ यानमर्द्धं चतुर्थांशं छत्रोपानहमेव
च त्युनएऽर्द्धं पाणंतरं॥ अत्र नदीषु विशेषः॥ मार्गेन तान्नदीपारौ स्नानादि पस्वारतः। अर्वागेव सरस्व-
ताः एव मार्गेणैतो विधिः॥ यत्तु पितॄन्तर्पयित्वा तु नदीं तरति यो नरः तस्यास्त्कपालकामास्ते भवंति
भृशं दुःखिता इति तत्सरस्वतीपरं॥ शंखः॥ तीर्थं प्राप्यानुषंगेण स्नानं तीर्थे समाचरेत् स्नानजं
फलमाप्नोति तीर्थयात्राकृतं न तु। स एव॥ न स्रवंतीमतिक्रामेन्नवसिद्धतीर्थमाप्नोतु प्रभासखंडे।
यानानि तु परित्यज्य भावं पादचारैर्नरैः। लुंठित्वा लोडनीतं कृत्वा कार्पटिकाकृतिं। कृत्वेति टहाग्नि-
गमसमये कार्पटं दं। प्रथमं चालयेत्तीर्थं प्रणवेन जलं शुचि। अवगाह्य ततः स्नायाद्यथावन्मंत्रपो-
गतः मंत्रश्च प्रभासखंडे॥ ॐ नमो देवदेवाय शितिकंठाय दंडिने रुद्राय चापहस्ताय चक्रिणे वेध-
से नमः सरस्वती च सावित्री वेदमाता गरीयसी। संनिधात्री भवत्वत्र तीर्थे पापप्रणाशिनीति॥ मं-
त्रवत्स्नानं च वपनोत्तरं कार्यं। पूर्वं मावाहनं तीर्थे मुंडनं तदनंतरं ततः स्नानादिकं कुर्यात्पश्चात् श्राद्धं
समाचरेदित्युक्तेः। यत्तु गत्वा स्नानमकुर्वीत वपनं तदनंतरमिति। मत्स्यशूलस्तानपरं। तीर्थोपवास-
काशीखंडे॥ तीर्थोपवासः कर्तव्यः शिरसो मुंडनं तथा उपवासस्तत्रैवोक्तः। यस्मिंस्तीर्थप्राप्तिःस्या-
त्तदह्नः पूर्ववासरे। उपवासः प्रकर्तव्यः प्राप्तेऽह्नि श्राद्धदो भवेत्। अत्र उपवासं ततः कुर्यात्तस्मिन्न-
ह्नि सुयत इति। प्राप्तिदिने तूपवासोक्तो विकल्पः। मुंडनं तु स्कांदे देवलौ मुंडनं चोपवासश्च सर्व-
तीर्थेष्वयं विधिः। वर्जयित्वा कुरुक्षेत्रं विशालां विरजां गयां। विरजं लोणारं॥ प्रसिद्धमहाती-
र्थपरः शवतीर्थशब्दः अत्र विशेषः स्मृत्यंतरे। ऊर्ध्वं पक्षाद्द्विमासाद्वा पुनस्तीर्थं व्रजेद्यदि मुंड-
नं चोपवासं च ततो यत्नेन कारयेत्। तदा न तु पशल्मापस्थितमृते द्विजेति पाठः। प्रयोगपारि-
जाते तु भोजनत्रयमित्युक्ते क्षौरं कृत्वा तु विधिवत्ततः स्नायात्सिताऽसिते। अपरार्के स्कांदे॥ उदङ्मु-
खः प्राङ्मुखो वा वपनं कारयेत्सुधीः केशश्मश्रुलोमनखान्युदक्संस्थानि वापयेत्। इदं प्रयागे-
ऽष्टवान्यमपि समूलं भवतीति भट्टाः। युक्तं तु सर्वान् केशान् समुद्दिश्य छेदयेदंगुलद्वयं। एवमेव
स्त्रीणां शस्यते वपनं क्रियेति॥ तच्चाकृतचूडानां न कार्यमिति केचित्। तत्त्वं तु नैमित्तिकत्वात्पु-
त्रादिश्तवत्कार्यमेवेति। तदपि प्रयागे नित्यं नान्यत्र। तच्च पतिमित्यर्थमपि अनुसंधियेवकार्यं गा-
न्दा। कुंसोपस्थशिखावर्जं अनुसंधिपुवापयेदिति स्मृतेः॥ इदं जीवत्पितृकेन। वितीर्थं कार्यं
न तु मुंडनं पिंडदानं चेति दक्षवचनेन निषेधः। विना तीर्थं विना यज्ञमाता पितोर्मृतिं विना। यो व-
पेदक्षिलोमानि स भवेत्पितृघातक इति स्मृत्यन्तरसंकोचात्॥ तदपि प्रयागे मतिमान्नमन्यतीर्थे

अथपात्राभावमेवेतिशिष्टाः॥ ततःस्नानं॥ पद्मेऽथतु। मार्कंडेयपुराणे॥ मातरंपितरंजायांभ्रातरंसुहृदंगुरुं यमुद्दिश्यनिमज्जेतद्वादशांशंलभेतुसः। पैठीनसिः॥ प्रतिकृतिंकुशमयींतीर्थवारिणिमज्जयेत्। मज्जयेच्चयमुद्दिश्यसोष्टभागंफलंलभेत्। ततस्तर्पणंश्राद्धं॥ पृथ्वीचंद्रोदयेब्रह्मदेवीपुराणकाशीखंडादिषु॥ अकालेप्यथवाकालेतीर्थश्राद्धंचतर्पणं अविलंबेनकर्तव्यंनैवविघ्नंसमाचरेत्॥ मात्स्ये॥ पितृणांचैवतर्पणमितितुर्यपाठः। तत्रदेवतामहालयनिर्णयेप्रागुक्ताः शंखदेवलौ॥ तीर्थद्रव्योपपत्तौचनकालमवधारयेत्। पात्रंचब्राह्मणंप्राप्यसद्यःश्राद्धंसमाचरेत्। हारीतः दिवावायदिवारात्रौभुक्तोवाप्यभुक्तोपिवा नकालनियमस्तत्रगंगांप्राप्यसरिद्वरां भारते॥ भुक्तोवाप्यथवाभुक्तोरात्रौवायदिवादिवा पर्वकालेथवाकालेशुचिर्वाप्यथवाशुचिः यदेवदृश्यतेतत्रनदीचित्रिपथाप्रिये॥ प्रणामंदर्शनंतस्यातन्नकालस्तत्रकारणं आशौचेपिकार्यं॥ विवाहदुर्गयज्ञेषुयात्रायांतीर्थकर्मणि। नतत्रसूतकंतद्वत्कर्मयज्ञादिकारयेदिति पैठीनसिस्मृतेः॥ तदानीमकरणेत्वाशौचांतेएवकुर्यात्। प्रभासखंडे॥ तत्रांतरंचनक्षत्रंनकालस्तत्रकारणं। यदेवदृश्यतेतीर्थंतदापर्वसहस्रकं मलमासेपिकार्यं नित्यनैमित्तिकेकुर्यात्प्रयतःसन्मलिम्लुचे तीर्थश्राद्धंगजच्छायांप्रेतश्राद्धंतथैवचेतिबृहस्पतिस्मृतेः। एतच्चाशौचेकृतभोजनस्यरात्रौस्नानश्राद्धादिकमाकस्मिकतीर्थप्राप्तावामहेमश्राद्धविषयंग्रहणादिवत् नतुबुद्धिपूर्वमाशौचादौतीर्थयात्रापिकार्या। मलमासेतुमासद्वयेतीर्थश्राद्धंकार्यमिति। चंद्रिकायां देवीपुराणे श्राद्धंचतत्रकर्तव्यमर्घ्यावाहनवर्जितं हेमाद्रौ॥ अर्घ्यमावाहनंचैवद्विजांगुष्ठनिवेशनं तृप्तिप्रश्नंचविकिरंतीर्थश्राद्धेविवर्जयेत्॥ भविष्ये॥ आवाहनंविसृष्टिश्चतत्रतेषांनविद्यते। आवाहनंनतीर्थेस्यान्नार्घ्यदानंतथाभवेत्। आहूताःपितरस्तीर्थेकृतार्घ्यासन्निवेषतः अग्नौकरणंचनेति रत्नावल्यां। अत्रषड्दैवतश्राद्धेपिमातादीनांपिंडमात्रंदेयं हविःशेषंततोगृह्यमादायैकैकमाहृतः। क्रमशःपितृपत्नीनांपिंडनिर्वपणंचरेदिति तीर्थोपक्रमेस्वलोक्तेरितिपृथ्वीचंद्रः। ततःसामान्यपिंडंदद्यात्। ततःपिंडमुपादायहविषःसंस्कृतस्यच ज्ञातिवर्गस्यसर्वस्यसामान्यपिंडमुत्सृजेत्। इतितत्रैवोक्तेः। पाद्मे॥ तीर्थश्राद्धंप्रकुर्वीतपक्वान्नेनविशेषतः आमान्नेनहिरण्येनकंदमूलफलैरपि। पिंडद्रव्याणि देवीपुराणे। हेमाद्रौब्राह्मे॥ सक्तुभिःपिंडदानंचसंयावैःपायसेनवा कर्तव्यमृषिभिःप्रोक्तंपिण्याकेनगुडेनवा। पिंडानांतीर्थेप्रक्षेपएव। नान्याप्रतिपत्तिरित्युक्तंप्राक्। एतच्चविधवयाऽपुत्रयाकार्यं। नसपुत्रयेत्युक्तंप्राक्। सपुत्रयानकर्तव्यंभर्तुःश्राद्धंकदाचनेतिस्मृतेश्च। अनुपनीतेनापिकार्यं। एतच्चानुपनीतोपिकुर्यात्सर्वेषुपर्वस्वितिप्रागतीर्थश्राद्धमुपक्रम्योक्तेः॥ ।एतज्जीवत्पितृकेणापिकार्यमित्युक्तंप्राक्। यतिनातुनकार्यं। नकुर्यात्सूतकंभिक्षुःश्राद्धपिंडोदकक्रियां। यतेःसन्यासयोगेनगृहस्थधर्मादिकंव्रतं। गोत्रादिचरणंसर्वंपितृमातृकुलंधनमितिस्मृतेः॥ गयायांस्कंदवायवीये। दंडंप्रदर्शयेद्भिक्षुर्गयांगत्वानपिंडदः। दंडंस्पृष्ट्वाविष्णुपदेपितृभिःसहमुच्यते। गयायांमुंडपृष्ठेचकूपेयूपेवटेतथा दंडंप्रदर्शयन्भिक्षुःपितृभिःसहमुच्यते॥

स्कान्दे प्रभासखंडे॥ तीर्थे चेत्सति शक्त्या न ब्राह्मणो यदि दुर्बलः दशांशमर्जितं दद्यादेवं कुर्वन्न हीयते इति विशेषो विशेषांतराणि भट्टकृतत्रिस्थलीसेतौ ज्ञेयानीति दिक्॥ इति तीर्थश्राद्धविधिः

॥ अथाशौचनिर्णयपरिच्छेदः प्रारंभः ॥ ०

श्रीगणेशाय नमः॥ अथाशौचं॥ नारायणात्मजश्रीमद्रामकृष्णस्य सूनुना कमलाकरसंज्ञेनाशौचं निर्णीयतेऽधुना॥ मरीचिः॥ आचतुर्थाद्भवेत्स्रावः पातः पंचमषष्ठयोः। अत ऊर्ध्वं प्रसूतिः स्याद्दशाहं सूतकं भवेत्। स्रावे मातुस्त्रिरात्रं स्यात्सपिंडाशौचवर्जनं पाते मातुर्यथामासं सपिंडानां दिनत्रयं। अत्र सर्वत्र मूलं मिताक्षरादौ ज्ञेयं। अत्र मासत्रये त्रिरात्रं स्यादित्यनुवादः। रजस्वलात्वेनैव तत्सिद्धेः। यद्यप्यनेन चतुर्थमासेऽपि त्रिरात्रं प्राप्तं तथापि षण्मासाभ्यंतरे स्राव गर्भस्रावो भवेद्यदि तदा माससमैस्तासां दिवसैः शुद्धिरिष्यते। इत्यादिपुराणात्। रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशुध्यतीति मनूक्तेः। गर्भस्रावे यथामासमचिरे तूत्तमे त्र्यहमिति मरीच्युक्तेश्च चतुरात्रं ज्ञेयं। अचिरे त्रिमासमध्ये। उत्तमे ब्राह्मणे। अत्र सपिंडानां स्नानं। सद्यः शौचं सपिंडानां गर्भस्य पतने सतीति तत्रैवोक्तेः। एतदाचतुर्थमासात्। पाते त्रिदिनस्योक्तेः। अकारलायाः अदेरसंभवात्। सद्यः पदं स्नानपरं। एवमर्थे विगर्भस्रावे स्नानमात्रं पुरुषस्येति। दक्षवसिष्ठोक्तेः। पुरुषस्येति सपिंडोपलक्षणम् पूर्वोक्तवचनात्। आचतुर्थमासं सपिंडानां स्नानं। किंतु पुंस एव पाते त्रिदिनं निर्गुणपरं। गुणवतस्तु अजातदंते तनये शिशौ गर्भच्युते तथा सपिंडानां तु सर्वेषामेकरात्रमशौचकमिति यमोक्तेरेकाह इति मदनपारिजातः। सप्तममासादिस्त्वाह। एतत्सर्ववर्णविषयं॥ तुल्यं वयसि सर्वेषामतिक्रांते तथैव चेति व्याघ्रोक्तेः। पराशरः। जाते विप्रो दशाहेन द्वादशाहेन भूमिपः वैश्यः पंचदशाहेन शूद्रो मासेन शुध्यति॥ संवर्तः॥ जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते। माता शुध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः। पुत्रपदात्कन्योत्पत्तौ न पितुः स्नानमिति हारलतायां। तन्न॥ पुत्रपदस्य पौत्री मातामहत्वेनेति कन्यायामपि प्रयोगात्। यत्त्वनेनैवोक्तम् सूतके तु मुखं दृष्ट्वा जातस्य जनकः सुतः कृत्वा सचैलं स्नानं तु शुद्धो भवति तत्क्षणादित्यादित्यपुराणान्मुखदर्शनोत्तरमेव पितुः स्नानमिति। तन्न। विदेशे मुखदर्शनाभावस्यापत्तेः। मुखदर्शनोत्तरं पुनः स्नानार्थमिदमिति स्मार्तगौडाः तन्न॥ मूलैक्येन स्नानमात्रपरत्वात्। इदं सर्ववर्णसमं। सूतिका सर्ववर्णेषु दशरात्रेण शुध्यति। ऋतौ च न पृथक्शौचं सर्ववर्णेष्वयं विधिरिति॥ हारलतायां प्रचेतसोक्तेः॥ यत्तु ब्राह्मे॥ ब्राह्मणी क्षत्रिया वैश्या प्रसूता दशभिर्दिनैः। गतैः शूद्रा च संस्पृश्या त्रयोदशभिरेव चेति॥ प्रयोगपारिजाते पारस्करः॥ द्विजातेः सूतिकायाः स्यात्सा दशाहेन शुध्यति॥ त्रयोदशेऽह्नि संप्राप्ते शूद्रा शुध्यत्यसंशयमिति तत्स्पृश्यपरं। अंगिराः। सूतिके सूतिकावर्जं संस्पर्शो न निषिध्यति। संस्पर्शे सूतिकायास्तु स्नानमेव विधीयते। नाशौचं सूतके पुंसः संसर्गं चेन्न गच्छति रजस्तत्राशुचि ज्ञेयं तच्च पुंसि न विद्यते। संसर्गो मैथुनं स्पर्श इत्यन्ये। मातुरेव सूतकं तां स्पृशतश्चेति हारलतायां सुमंतूक्तेरिति॥ तन्न॥ संस्पर्शे सूतिकायास्तु स्नानमेव विधीयते। इति स्नानमात्रोक्तेः। सोमनवस्य स्नानपर्यंतमस्पृश्यत्वमात्रबोधकत्वात्। एवकारो बालस्पृश्यतार्थः। माधवस्तु॥ पत्नेः

महासपिंडेऽपि प्रकुर्याच्छयनाशनं। बांधवो वा परो वापि स दशाहेन शुध्यतीति। बृहस्पतिस्मृतेः॥ श
यनाशनादिरूपं संसर्गमाह॥ पराशरः॥ यदि पत्न्यां प्रसूतायां द्विजः संस्पर्शमिच्छति सूतकं तु भ
वेत्तस्य यदि विप्रः षडंगवित्। पितृवत्सपत्नमातुः शाकस्नानादस्पृश्यत्वं। सूतिकास्पर्शे तु याव
दाशौचं। अन्याश्रमान्तरलब्ध्वतद्गृहे न व्रजंति चेदिति॥ ब्राह्मोक्तेरिति शुद्धितत्त्वादयः। तन्न॥
तद्गृहे गत्वा सूतिकां यदि न स्पृशंति तदास्पृश्या अन्यथा नेति तस्यार्थः। कर्मानधिकारमाह पै
ठीनसिः॥ सूतिकां पुत्रवतीं विंशतिरात्रेण कर्माणि कारयेन्मासेन स्त्रीजननीं॥ इदमाशौचो
त्तरं॥ अन्यथा शूद्रासपिंडानामाशौचे न तदभावः स्यात्। विध्यनुवादविरोधश्च॥ एतच्च सोमया
गादिश्रौतभिन्नपरं। प्रजातायाश्च दशरात्रादूर्ध्वं स्नानादिति कात्यायनोक्तेः॥ व्यासः॥ प्रथमे
दिवसे षष्ठे दशमे चैव सर्वदा। त्रिष्वेतेषु न कुर्वीत सूतकं पुत्रजन्मनि॥ पुत्रशब्दोऽपत्यमात्र
परः॥ ब्राह्मे॥ देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनां। आयांति तस्मात्तदहः पुण्यं पूज्यं च सर्वदा॥
जनने विशेषः प्रागुक्तः। अत्र प्रयोगपारिजातः। पुंप्रसवे दशाहः। अपत्ये तु त्र्यहः। पुत्रजन्मनि
सपिंडानां दशाहाच्छुद्धिरिष्यते अहादेकोदकानां च एकाहे सूतकं क्वचित्। स्त्रीजन्मनि सपिं
डानां सोदकानां अहाच्छुचिः। स्त्रीपुंस्त्रिपुरुषं ज्ञेयं सपिंडत्वं द्विजोत्तमाः॥ इत्यग्निस्मृतेरित्याह
मेधातिथिरपि। अप्रत्तानां तु स्त्रीणां त्रिपुरुषी विज्ञायते इति वासिष्ठमुक्ताशौचे एव न विवाहे तु
विधिर्दर्शित एवेत्याह। अन्ये तु त्रिपुरुषसापिंड्यकालीनकन्यापरत्वमाहुः। अप्रत्तानां तथा स्त्री
णां सापिंड्यं साप्तपौरुषं। प्रत्तानां भर्तृसापिंड्यं प्राह देवः प्रजापतिरिति कौर्म्यविरोधाच्च। अत्रेदं
तत्त्वं। पंचमात्सप्तमाद्धीनां यः कन्यामुद्वहेद्द्विजः। गुरुतल्पी स विज्ञेय इत्यादिविरोधात्त्रिपुरुषं
प्रकरणान्मरणाशौचपरं। वासिष्ठे तदग्रे उदकदानोक्तेः। तेन कन्याप्रसवेऽपि साप्तपुरुषं दश
रात्रमेव। न च कन्यापुत्रकसंप्रसवे बलाबलं काप्युक्तं। अग्निस्मृतिस्त्वनुकल्पो विगीता चेति
सर्वं सिद्धांतः। अन्यथा त्रिपुरुषे सपिंडानामष्टमादिसोदकानां च त्र्यहसाम्यापातात्। चतु
र्थादिसप्तमांतानां च किमपि न स्यात्किं च स्त्रीजन्मोद्देशेन त्रिपुरुषं सापिंड्यं तेषां च त्रिरात्र
मित्यनेकार्थविधिः कथं स्यात्। वाक्यभेदापत्तेः। न च चतुर्थादीनां सोदकत्वं क्वापि सिद्धं।
येन त्रिपुरुषं चतुर्थादीनां च स्त्रीजन्मनि सोदकत्वं विधाय पुनस्तेषां त्रिरात्राशौचविधौ वि
ध्यनुवादविरोधो वाक्यभेदद्वयं चेत्यसंबद्धार्थाग्निस्मृतिर्हेया॥ ॥अथ मृता
शौचं हारीतः॥ जातमृते मृतजाते वा सपिंडानां दशाहं। दशाहमिति स्वाशौ
चपरं। जातमृते नालच्छेदोर्ध्वं। यावन्न छिद्यते नालं तावन्नाप्नोति सूतकं छिन्ने नाले त
तः पश्चात्सूतकं तु विधीयते इति जैमिन्युक्तेः। नाभ्यां छिन्नायामाशौचमिति हारीतोक्तेश्च
मृताशौचपरमेव। जननाशौचं तु नालच्छेदात्पूर्वमपि जननादेव। मृतजाते नालच्छेदाभा
वात्षष्ठीपूजाद्युत्कर्षापत्तेश्च। तेन नाडीच्छेदात्प्राक् मातुः स्पर्शेऽपि न दोष इति। शुद्धितत्त्वो
क्तिः परास्ता॥ नाभिच्छेदात्प्राक्मृते तु बृहन्मनुः॥ जीवन्जातो यदि मृतो मृतः सूतक एव
तु। सूतकं सकलं मातुः पित्रादीनां त्रिरात्रकं। उदकं च प्रसवाशौचमेव। शावनिमित्तं स्नानमा

त्रे। माडः नामकरणात्सद्यः शौचमिति शंखोक्तेः॥ अपरार्कस्त्वाह॥ नामकरणमाशौचांतकालोप
लक्षणं। अशौचव्यपगमे नामधेयमिति विष्णूक्तेः। आशौचे तु व्यतिक्रांते नामकर्म विधीयते इति
मनूक्तेश्च। नाम्नो नियतकालत्वात्। नचनामधेयं दशम्यां तु द्वादश्यां वापि कारयेत्। पुण्ये तिथौ
मुहूर्ते वा नक्षत्रे वा गुणान्विते इति मनूक्तेरनियतकालत्वं। दशम्यामतीतायां विप्रः द्वादश्या
मतीतायां क्षत्रियः। वैश्यः षोडशे शूद्र एकत्रिंशे इत्यपि ज्ञेयं। पुण्य इत्याद्यनुकल्पः। तेन नाम्नः का
लोपलक्षणं। एवं दंतजनने पि दंतजन्म सप्तममासीत्युपनिषदि नियतकालत्वात्। चौले तु न कालोप
लक्षणं। प्रथमे ब्दे तृतीये वा कर्तव्यं श्रुतिचोदनादिति मनूक्तेः। ततः संवत्सरे पूर्णे चूडाकर्म विधीयते॥
द्वितीये वा तृतीये वा कर्तव्यं स्मृतिदर्शनादिति यमोक्तेश्च तस्यानियतकालत्वादिति। तन्मंदं॥ चौ
लवन्नामदंतजननयोरपि स्वरूपेण निमित्तत्वोपपत्तेस्तद्विशिष्टकालानुवादे वाक्यभेदात्। सप्तममा
सादर्वाग्दंतजनने तदभावप्रसंगाच्च। पक्षे पनिषद्दर्शनेन निर्णयं कुर्यात्तन्नेशतायुः पुरुष इति श्रु
तेरर्वाक् पितृमरणेन तदन्यकर्मापि त्यजेत्। ननु कालानुपलक्षणे नामोत्कर्षेण तदभावे वा स्नानमात्रा
च्छुद्धिः स्यात्। ततः किमस्तु। अतएवोक्तं। आदंतजन्मनः सद्य इति। सा च विष्णुवचनाद्दाहाभाववि
षयेति वक्ष्यामः। त्रिवर्षादावपि स्यादिति चेन्न। दाहदंतादि निमित्तविशेषाशौचैः पूर्वस्य बाधात्
तदुक्तं। पूर्वत्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिध्यतीति। जननाद्दशरात्रे व्युष्टे शतरात्रे संवत्सरे वेति पारस्क
रः। द्वादश्यामपरेण्यां मासे पूर्णे तथापरे अष्टादशेहनि तथा वदंत्यन्ये मनीषिण इति भविष्ये वा
म्नः॥ कालानियमाच्च। न च प्राथम्याद्दशाहे गौणे इति मुख्यः कालस्त्वन्यस्त्वनुकल्प इति वाच्यं। चौ
लेपि तथापत्तेः। नच दंतजननकालानुपलक्षणे सदंतजातमृतस्य दाहे काहप्रसंगः। दशाहवद
धात्। नामकरणोत्तरमेव दाहस्य वृत्तेः। दशाहाभ्यंतरे बाले प्रमीते तस्य बांधवैः शावाशौचं न कर्त
व्यं सूत्याशौचं विधीयते इति बृहन्मनूक्तेश्च। आशौचं दाहोपलक्षणं। सूतकवदिति पारस्करोक्तेः
यत्तु विष्णुः। अनिवृत्ते दशाहे तु पंचत्वं यदि गच्छति। सद्य एव विशुद्धिः स्यान्न पिंडं नोदकक्रियेति।
तदपि प्रेताशौचनिषेधार्थं। ननु सद्यस्त्वपरं वाक्यभेदात्। किंच। नामकालात्प्राक् मृतस्य स्नानं।
तदुत्तरं त्वेकाहादि। नामकाले त्वेकादशाहे मृतस्य न किमपि स्यात्॥ ॥ अथ संस्कृते
ष्वप्युलोपं पंचमी। तदा प्रभृति नोपपद्यते। नाग्निर्वापि कृते सतीति मन्वादिविरोधान्न तनाम्न
इति माधवमिताक्षरादिविरोधाच्च। न कालोपलक्षणं। कापीतिदिक्। नामोत्तरं दंतोत्पत्तेः प्राक्
दाहे सत्यहः। अदंतजाते तनये शिशौ गर्भच्युते तथा। सपिंडानां तु सर्वेषामहोरात्रमशौचकमिति
मोक्तेः। दाहाभावे तु स्नानमात्रं। अदंतजाते प्रेते सद्य एव नास्याग्निसंस्कार इति विष्णुना दाहाभावे
तदुक्तेः॥ आदंतजन्मनः सद्य इति याज्ञवल्क्योक्तेश्च। दाहविकल्पं वाह लौगाक्षिः। तूष्णीमेवोदकं
कुर्यात्तूष्णीं संस्कारमेव च। सर्वेषां कृतचूडानामन्यत्रापीच्छया द्वयं। अन्नप्राशनचूडे। अत्र चूडाकर
णांतनीयवर्षरूपकालोपलक्षणार्थमिति मेधातिथिहरदत्तौ। मनुरपि॥ नात्रिवर्षस्य कर्तव्या बांधवै
रुदकक्रिया। जातदंतस्य वा कुर्युर्नाम्नि वापि कृते सतीति। उदकं दाहोपलक्षणं। दंतोत्पत्त्यनंतरमाकृत
चूडांतानां त्र्यहः। दंतजातेनुकृतचूडे त्वहोरात्रेण शुद्धिरिति विष्णूक्तेः। त्रिवर्षोर्ध्वं कृतचूडे अकृतचूडे

वाशागु१नयनात्र्यहः। यद्यप्यकृतचूडो वै जातदंतस्तु संस्थितः। तथापि दाहयित्वैनमाशौचं त्र्यहमाचरेदिति
आंगिरसोक्तेः। अत्र जातदंतत्वमुद्देश्यविशेषणत्वादविवक्षितं दाहयित्वेत्यप्यनुवादः। उभयविधौ
वाक्यभेदात्। त्रिवर्षात्प्राक्चूडाभावेऽग्निदाने त्र्यहस्तदभावे विष्णूक्तैरेकाह इति माधवः॥ यत्तु कश्चिद
हा आत्रिवर्षेषु विप्रपादस्मादेवार्थात् त्रिवर्षोर्ध्वमपि तन्निसिद्धिः। विज्ञानेश्वरेणोक्तं। त्रिवर्षोर्ध्वमकृतचूडे
विप्रयत्नं चिंत्यं। जातपदवैयर्थ्यादिति। तन्न। दाहस्याविशेषत्वात्। तेन मकृतचूडानामप्यग्निर्नै
मित्तिकी स्नेनेति मदनोक्तेस्त्रिवर्षोर्ध्वमेकाहापत्तेर्या महासिद्धेः। तथाप्ययेन यागीकारणदैवेयर्थ्यस
साम्याद्व्याख्याता नाच्येऽप्युक्तमिति तात्पर्यं। तमित्तदूषणेन। प्रथमवर्षादौ कृतचूडस्य सदा त्र्यहः।
निर्वृत्तचूडकानां तु त्रिरात्रा च्छुद्धिरिष्यत इति मनूक्तेः। एतत्सर्वं माधवोक्तं सपिंडानां। मातापित्रोस्तु दशाहो ध्रुवं
मनोस्तवेचत्रिरात्रंबालानाम जातदंतानां त्रिरात्रेणाशुद्धिरिति काश्यपोक्तेः। दैमिकादर्भिसंबंधादनुत्
ध्यादद्यस्त्र्यहमिति मदनोक्तेश्च। शुद्धितत्त्वादयो गौडास्तु। अजातदंतमरणे पित्रोरेकाहमिष्यते। दंतजाते
त्रिरात्रं स्याद्यदि स्यातां तु निर्गुणाविति कौर्मात्। काश्यपं शूद्रपरं। अनूढानां तु कन्यानां तथा वै शूद्रज
न्मनामिति मत्वा तु वर्तिनो शंखोक्तेः। त्रिरात्रं तु भवेच्छूद्रे वर्षमासे पिपीशो मृत इति मत्स्यसूक्ताच्च। दंत
जातशूद्रे तु पंचाहः। यथाहांगिराः॥ शूद्रे त्रिवर्षान्न्यूने तु मृते शुद्धिस्तु पंचभिः। अत ऊर्ध्वं मृते शूद्रे द्वा
दशाहो विधीयते॥ षड्वर्षान्तमतीतो यः शूद्रः संम्रि यते यदि मासिकं तु भवेच्छौचमित्यंगिरस
भाषितमिति॥ यत्तु अनूढभार्यः शूद्रस्तु विंशतिशंखोक्तमाशौचं तत्सगुणशूद्रपरं। निर्गुणत्वे तूढभा
र्ये शूद्रे त्रिवर्षोर्ध्वं द्वादशाहः षड्वर्षोर्ध्वं मासः। षड्वर्षादागपि कृतोद्वाहे मास इत्याहुः। एतत्तु त्यवयसि
संदेहमिति विरोधाच्छिष्टविगानाच्चादर्तव्यमिति विज्ञानेश्वरादयः। दाक्षिणात्यानां तत्र्येवाभ्य
पदेशमायुक्तमिति गौडाः। एवं कन्यास्वपि। तास्वप्यजातदंतासु पित्रोरेकरात्रमिति माधवः। य
तु विज्ञानेश्वरेणोक्तं ऊनद्विवर्षे उभयोः सूतकं मातुरेव हीति याज्ञवल्क्योक्तेः। गर्भस्थप्रेते मातु
र्दशाहः। जाते उभयोः कृते नाम्नि सोदराणां चेति। पैठीनसोक्तेश्च पित्रोः सोदराणां च दशाहमस्पृश्य
त्वमिति तन्नेदानीमाचरंति। अतएव स्मृत्यर्थसारे तन्नाहृतं। कन्यासु चौलात्प्राक् मृतौ स्नानं। अ
चूडायां तु कन्यायां सद्यः शौचं विधीयते इत्यापस्तंबोक्तेः। इदं त्रिपुरुषमध्ये अप्रत्तानां तु स्त्रीणां
त्रिपुरुषी विज्ञायते इति वसिष्ठोक्तेः। इदं वाग्दानोत्तरमिति गौडाः। अप्रत्तानां तथा स्त्रीणां सापिं
ड्यं साप्तपौरुषमिति वचनात्। चौलोत्तरं वाग्दानपूर्वं तास्वेकाहः। अविशेषेण वर्णानामर्वाक्
संस्कारकर्मणः। त्रिरात्रात्तु भवेच्छुद्धिः कन्यास्वन्हा विधीयते इत्यंगिरसा त्रिरात्र विषये ह्यो विधा
नात्। अप्रत्तानामविवाहितानां त्रिपुरुषी पितृपितामहप्रपितामहैः सह कन्याया आ चतुर्थ्याः सापिं
ड्यं। एवं च कन्यायाः स्वयं पंचमे वृद्धप्रपितामहे सापिंड्यनिवृत्तेरिति तत्संतानेन्यस्मिन्विवाहस्त्वा
शौचादिधर्मो न भवतीत्यर्थः। इति गोविंदार्णवे संस्कारवीचौ। स्त्रीणां तु पितृपक्षे पंचावधिकं
सपिंडत्वं अप्रत्तानां तु स्त्रीणां त्रिपुरुषमित्यादि संस्कारवीचौ प्रपंचितम्। अतश्च कन्यायाः प्रपि
तामहसंतत्यां तत्सापिंड्याभावात्कन्यामरणे पितृपिंडकृन्माशौचं नास्तीति पृथ्वीचंद्रोदयगोविंदा
र्णवे। अतः शूद्रस्योपनयनस्थानीयविवाहात्पूर्वं त्रिरात्रं। विवाहोत्तरं तु षोडशाब्दमध्ये त्रिरात्र

मेवेत्यपरार्कोयाः। शूद्रनिर्णयेऽप्यब्दोर्ध्वं पंचाहः। षडब्दोर्ध्वं विवाहाभावे द्वादशाह इति गौडाः। स्त्रीणा
नां षोडशाब्दोर्ध्वं तु विवाहाभावेऽपि पूर्णाशौचं वक्ष्यते। तदूर्ध्वं प्राग्विवाहाज्जनने कुलपितृकुले त्र
सप्तपुरुषावधि त्रिरात्रं। अवशिष्टं प्रत्तानुयानेनैव प्रतिपादितं। असंस्कृतानु सा ज्ञेया त्रिरात्रं तु भ
योः स्मृतमिति मरीच्युक्तेः। रत्नाकरे शुद्धितत्त्वे च शंखः। पितृवेश्मनि या नारी रजः पश्यत्यसंस्कृ
ता। तस्यां मृतायां नाशौचं कदाचिदपि शाम्यति। यावज्जीवमशौचमिति वाचस्पतिमिश्राः॥

॥ अथानुपनीते किंचिदुच्यते॥ तत्र पूर्वं खननमेव। तदूर्ध्वं वर्षत्रयात्पूर्वं चौलाभावेऽप्यु
दकदानविकल्पः। त्रिवर्षस्य कर्तव्या बांधवैरुदकक्रिया। जातदंतस्य वा कुर्युर्नाम्नि वापि कृते सती
ति मनूक्तेः। उदकक्रियामाह वर्षात्प्रागुपलक्षणं खनने तु नान्यदौर्ध्वदेहिकं। ऊनद्विवर्षं निखनेन्न कुर्या
दुदकं ततः इति याज्ञवल्क्योक्तेः। उदकमत्यकर्मपरमित्यपरार्कः॥ यमः॥ ऊनद्विवर्षकं प्रेतं घृताक्तं
निखनेद्भुवि। यमगाथां गायमानो यमसूक्तमनुस्मरन्। माधवीये ब्राह्मेऽपि॥ स्त्रीणामनुपनीतो गर्भः
सद्योजातो मृतोऽथवा। अजातदंतो मासे वा मृतः स्वाद्भिर्गतो बहिः। वस्त्राद्यैर्भूषितं कृत्वा निक्षिपेत्तं तु
काष्ठवत्। खनित्वा शनकैर्भूमौ सद्यः शौचं विधीयते। अलंकरणमपि वक्ष्यते। कृतचूडस्य तु त्रिवर्षात्
प्रागूर्ध्वं चाप्युदकदानं नियतं॥ यत्तु वसिष्ठः॥ ऊनद्विवर्षे प्रेते गर्भपतने वा सपिंडानां त्रिरात्रमिति तत्त
धूमादचूडापरं। वर्षत्रयादूर्ध्वमकृतचूडस्यापि नियतं। वर्षत्रयोर्ध्वमुपनयनात्पूर्वं च तूष्णीमुद
कदानं तूष्णीमेवोदकं कुर्यात्तूष्णीं संस्कारमेव च इति पूर्वोक्तलौगाक्षिस्मृतेः॥ पिंडदानमपि कार्यं।
असंस्कृतानां भूमौ पिंडं दद्यात् संस्कृतानां कुशेष्विति प्रचेतसोक्तेः। उदकदानं सपिंडैः कृतचूडस्ये
ति गौतमोक्तेः। उदकग्रहणमौर्ध्वदेहिकपरमिति हरदत्तः। द्वादशाब्दात्तदर्वाक् पौगंडमरणे
सति सपिंडीकरणं न स्यात् एकोद्दिष्टं निकारयेदिति हरदत्तधृतदेवलोक्तेश्च। मरीचिरपि॥ प्रे
तपिंडं बहिर्दद्याद्दर्भमंत्रविवर्जितमिति॥ एतदनुपनीतपरमिति विज्ञानेश्वरः॥ अत्र वृद्धवत्सोऽव
धिः। पूर्ववाक्ये तु तद्ग्रहणात्। उदकग्रहणस्योपलक्षणत्वादाह। सर्वावधिरिति केचित्। द्वादशा
ब्दस्यानुपनीतद्विजातेरुद्दिश्य। आशौचे पिंडदानविधिमाह पारस्करः। प्रथमेऽह्नि दिव
से देयास्त्रयः पिंडाः समाहितैः। द्वितीये चतुरो दद्यादस्थिसंचयनं तथा। त्रींस्तु दद्यात्तृतीयेऽह्नि व
स्त्रादि क्षालयेत्ततः इति। अत्र देवयाज्ञिकनिबंधे विशेषः। शिशुरादंतजननाद्बालः स्याद्यावदा
शिखः। कथ्यते सर्वशास्त्रेषु कौमारं मौंजिबंधनात्। आपंचवर्षात्कौमारं पौगंडं नवहायनः॥ तथा
गर्भे नष्टे क्रिया नास्ति दुग्धं देयं शिशौ मृते। परं च पायसं क्षीरं दद्याद्बालविपत्तितः। एकादशाहाद्
शाहं वृषोत्सर्गं विधिं विना। तथा॥ यत्र यस्मिन् मृते बालस्तत्र भागः प्रदीयते। किंचित्समानवयसां सं
स्कृत्यान्नं यथाविधि॥ भक्ष्यं भोज्यं च दातव्यं तथा चक्षुर्वभस्त्रिका तद्वस्त्राणि प्रदेयानि सोपान
त्कानि तत्समे। कुमाराणां च बालानां भोजनं वस्त्रवेष्टनं। पंचोपजीवने बालत्वं हि प्रदीयते।
तथा॥ भूमिनिःक्षेपणं बाले त्वावर्षद्वयमाशिखं। ततः परं खगश्रेष्ठ देहदाहो यथाविधिः॥ अत्रै
पूर्वं खनननिवृत्त्यर्थं मावर्षद्वयमिति। प्रागपि कृतचूडस्य निवृत्त्यर्थमाशिखमिति॥ तथा॥ चूडा
कर्मणि संजाते विपत्तिस्तु यदा भवेत्। सतकाले प्रकर्तव्यं सर्वमेवासर्जनं तदा। तत्र दाहः प्रकर्तव्य

उक्तं तन्न निश्चितम्। आद्यान्नि षोडशापि स्युः सपिंडीकरणं विना। इदं पंचवर्षोत्तरं॥ जन्मतः पंचवर्षाणि भुंक्ते दत्तमसंस्कृते। पंचवर्षाधिके बाले विपत्तिर्यदि जायते। वृषोत्सर्गादिकं कार्यं भक्ष्यान्नमुदकुंभकं। अहन्यहनि संप्राप्ते कुर्याच्छ्राद्धानि षोडश॥ पायसेन गुडेनैव पिंडं दद्याद्यथाक्रमं। उदकुंभप्रदानं च पददानानि यानि च। दीपदानानि यत्किंचित्पंचवर्षाधिके सदा॥ कर्तव्यं तु खगश्रेष्ठ प्रेतानां वाक्प्रेततृप्तये स्वाहाकारेण वै कार्यो रण्ये को हि शानि षोडश॥ कत्रुद्दर्भैस्तिलैः शुक्लैः प्राचीनावीतिना नयेति तत्रैवोक्तेः। अत्र मूलं चिंत्यं। वार्षिकादिनभवत्येव। सपिंडत्वाभावे पितृत्वायोगात्। वचनाभावाच्च। दिवोदासीये। अनूढे निधनं प्राप्ते विशाद्दौ शूद्रजातिवत्। क्रियाः सर्वाः समुद्दिष्टाः सपिंडीकरणं विना॥ उदकं पिंडदानं च कृतचूडे विधीयते इति। स्त्रीणां तूद्वाहात्प्रागुदकपिंडदानविकल्पः॥ स्त्रीणां चैके प्रत्तानामिति गौतमोक्तेः। स्त्रीशूद्राश्चधर्मिणः इति वचनाच्छूद्रेप्येवं। एतद्द्वयोर्निमित्ताशौचं सर्ववर्णसमं तुल्यं वयसि सर्वेषामतिक्रांते तथैव चेति व्याघ्रपादोक्तेः॥ यानि तु। निवृत्तचूडके विप्रे त्रिरात्राच्छुद्धिरिष्यते। निवृत्ते क्षत्रिये षड्भिर्वैश्ये नवभिरुच्यते॥ शूद्रे त्रिवर्षन्यूने तु मृते शुद्धिस्तु पंचभिः॥ अत ऊर्ध्वं मृते शूद्रे द्वादशाहो विधीयते। षड्वर्षांतमतीते तु शूद्रे मासमशौचकमित्याङ्गिरसादीनि तानि शिष्टविगानान्नादर्त्तव्यानीति विज्ञानेश्वरमदनपारिजातादयः। तेनेतद्दशाद्विद्राणां व्यवस्थापयुक्ता हेयैव। तुल्यं वयसि सर्वेषामिति दाक्षिणात्यपरं। अन्यदेशे कौर्मोक्ता व्यवस्थेति शुद्धितत्त्वे॥

॥अथ जाताशौचं॥

॥ तच्च द्विजपुंसामुपनयनोर्ध्वं प्रवर्तते। त्रिरात्रमाव्रतादेशाद्दशरात्रमतः परं॥ क्षत्रस्य द्वादशाहानि विशः पंचदशैव तु। त्रिंशद्दिनानि शूद्रस्य तदर्धं न्यायवर्तिनः इति याज्ञवल्क्योक्तेः॥ यत्तु मनुः। त्रिरात्रं दशरात्रं वा शावमाशौचमिष्यत इत्याह। तद्दशाहे त्रिरात्रमस्पृश्यत्वं। एकदिनोत्पन्नमशौचद्वयं दशाहमस्पृश्यत्वं। मरणोपदितुल्यस्यान्मरणेन कथंचन। अस्पृश्यं तु भवेज्जातं सर्वमेव सबांधवमित्यंगिरसोक्तेः। दशाहाशौचपरत्वे दशरात्रमतः परमित्यनेन पौनरुक्त्यापत्तेरिति शुद्धिविवेकादयः॥ तन्न॥ स्मृतिभेदात्। त्रिरात्रं दशरात्रं वेति विकल्पायोगाच्च॥ यत्तु उशना। वेदानध्याप्यवर्जं विद्यामिति नाहाश्वलायनः॥ द्वादशरात्रं महागुरुषु दानाध्ययने वर्जयेरन्निति। अत्र पावदुक्तनिषेधो वा स्पृश्यत्वमात्रं वा। न तु कर्मानधिकारः। एकादशाहे नैवैश्वदेवोक्तेः। एकादशाहिकमुक्त्वा ततः स्वं ते विधीयत इति। शुद्धितत्त्वेनु नेपः उरुषस्यातिगुरवो भवंति मातापिता चार्यश्चेति विष्णूक्तेः। पित्रादयो महागुरवः भर्त्ताप्युक्तो रामायणे। पतिर्बंधुर्गतिर्भर्त्ता दैवतं गुरुरेव च। शातातपः॥ पतिरेको गुरुः स्त्रीणां सर्वस्याभ्यागतो गुरुः॥ एकपदविमूढानां पितृमातृनिषेधार्थं। सोदकानां त्रिरात्रं। अहस्त्वदत्तकन्यानामिति मनूक्तेः। आश्रिशरणे। सपिंडता तु पुरुषे सप्तमे विनिवर्तते। समानोदकभावस्तु निवर्तेताचतुर्दशात्॥ जन्मनामस्मृतेरेके तत्परं गोत्रमुच्यते॥ बृहस्पतिः॥ दशाहेन सपिंडास्तु शुध्यंति प्रेतसूतके। त्रिरात्रेण सकुल्यास्तु स्नात्वा शुध्यंति गोत्रजाः। स्त्रीशूद्रयोस्तु विवाहोर्ध्वं जाताशौचं। वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृत इत्युक्तेः। दत्तानां भर्त्तुरेव हि। स्वजन्मुकमशौचं स्यान्मृतके जातके तथेति माधवीये मात्स्याच्च। शूद्रस्य विवाहाभावेपि षोडशवर्षोर्ध्वं मासः अनूढभार्यः शूद्रस्तु षोडशाद्वत्सरात्परं। मृत्यु

मतं समधिगच्छेद्वे मासानस्याविवाधया: ॥ शुद्धिं समधिगच्छेदिति नात्र कार्या विचारणेति । अपरार्के शंखो
क्तेः निर्णयामृतमदनपारिजातादौ व्यक्तमुक्तं ॥ हारीतः अपेतांश्चेत्प्रनाद्दिवः सत्रिपक्षवधनुर्महान् ।
आसनोदयहादेश्यः शूद्रेवसमहद्योमहान् ॥ धनुःशतोरावघमेदेहादशोवसमहघमिति । मेधातिथिस्तु
त्रिरात्रमात्रनादेशाद्दिनत्रयात्कालोपलक्षणार्थं । स च कालः स्वल्पीयः । सर्वेषां चाष्टमं वर्षं रूपं तेन च
तुर्णामिति वर्णानामुपनयनाभावेप्यष्टमादूर्ध्वं शूद्राणामाशौचं तत्रापि भागश्रमादिकारकः सोतकाइतिस्व
म्पंतरादूर्ध्वं संश्लेमर्वाक् नित्रं । यथा मार्याषोडशानकेवालस्याहुलेपामप्यष्टमादूर्ध्वं शूद्रे मासस्य अर्ध
मष्टभ्यो वर्षेभ्यः शुद्धिः शूद्रस्य मासिकीति वचनादित्याह । हारलतायां तु तन्नादिगौडमते तथोक्तं । अनु
पनीतो विप्रइत्युक्त्या ॥ गोपते यत्तत्र स्यादाशौचं त्र्यहं नेव हि । द्विजन्मनां समं कालं सर्वेषां वर्णानामुपगादि
कारत्वाद्द्विवर्णानां मतमुपनयनकालोपलक्षणं । षड्वर्षादर्मासतत्र यापिकपरं । गर्भाष्टमेष्टमे वाब्दे इत्युक्तेः
मनुजाबालः ॥ अतचूडाद्विजानां च यतो नित्यथाक्रमं । दशाहमहरेकाहे त्वधृतविहिता निर्णयाः ॥ इति
द्विजादेता: इदेवनीतिमुक्तेः पंचाद्वोपनीतपरिमितः तदेतन्नाडिपनेदशाः । मानितुपराशरः एका
हाद्ब्राह्मणः शुद्धिर्योग्निवेदसमन्वितः । त्र्यहात्केवलवेदस्तु निर्हीनो दशभिर्दिनैः ॥ केवलवेदः के
वलश्रौतान्नेरप्युपलक्षणं । अयं संकोचो होमाध्यापनपर एव । ननु संध्यादिविधिहारलतायां ॥
अंगिराः ॥ सर्वेषामेव वर्णानां सूतके मृतके तथा । दशाहाच्छुद्धिरेतेषामिति शातातपोऽब्रवीत् । दे
वलः ॥ आशौचं दशरात्रं तु सर्वेषामपरे विदुः । निधने मरणे चैव यथोक्तं क्रमेण सः ॥ अयं तो
न्कृतस्य कर्महानौ पीडवतो विप्रपरिचर्यापरं । शूद्रे दशरात्रमिति हारलतायां ॥ दक्षः ॥ सद्यः शौ
चं तथैकाहस्त्र्यहश्चतुरहस्तथा । षड्दशाहो द्वादशाहश्च पक्षो मासस्तथैव च । मरणांतं तथा चान्यद
शपक्षास्तु सूतके । मिताक्षरायां स्मृत्यंतरे । चतुर्थे दशरात्रं स्यात्षण्णिशाः पुंसि पंचमे । षष्ठे चतुर
हाच्छुद्धिः सप्तमे त्वहरेव तु इत्यादि तितानापदनापट्टगुणवद्गुणवद्विषयाणि देशाचारभेदा
द्वा नेयानि । सद्यः शौचादिषडहांताः पक्षा यायावरादिपराः । अत्र मरणांतं जननादिनिमित्ताद्वि
न्नं । त्रिषु विगानान्नादर्तव्यानीति विज्ञानेश्वरः । असत्त्वात्चाप्यहुत्वा वाप्यदत्वा सत्त्यापि हि न
एवं विधस्य विप्रस्य सर्वदा सूतकं स्मृतमिति । दक्षोक्तेः । व्याघ्रश्चापि गृहे भार्या स्यात्तस्य नित्यशः
आशौचं सर्वकार्येषु देहे भवति सर्वदेति । ब्राह्मादिविषयाण्येतान्यपरार्के मदनपारिजाते च ।
माधवस्तु ॥ वृत्तस्वाध्यायसापेक्षमघसंकोचनं तथेति कलिवर्ज्येषूक्तेः । दशाह एव विप्रस्य स
पिंडमरणे सति कलौ न राशौ कुर्वीणः कलौ भवति किल्बिषीति ॥ हारीतोक्ते स्त्यूनाशौचपक्षास्तु यु
गांतरविषया । मरणांतादिपक्षास्तु निंदार्थवादः । अन्यथा नामधारकविप्रस्तु दशाहं सूतकी भवेदि
ति विरोधः स्यादित्याह । मनुर्देवलः ॥ दशाहादिविभागेन क्रमेणैकतमात् अंगस्पर्शनमि
ति वर्णानां तत्त्वदर्शिन इति । शूलपाणौ शौचे स्पर्शनामाह । यत्त्वानुपनीतानिक्रांताशौचे त्रिरात्रादौ ने
त्युक्तं । स्वाशौचकालाद्विज्ञेयं स्पर्शनं तु त्रिभागतः इति ॥ तदपि युगांतरेषु । अस्थिसंचयनादूर्ध्वं
मंगस्पर्शनमेव च इति माधवीये कलौ तन्निषेधात् । यत्तु हारलतायां ॥ चतुर्थेहनि कर्तव्यः संस्पर्शो
ब्राह्मणस्य तु इति मदनरत्नोक्तेः । सहैकाशौचेपि चतुर्थाहरेवांगस्पर्श इति । तन्न ॥ देवलादि

वंशेनास्य दशाहमेवोचितत्वात्। यत्तु॥ वर्णसंकरजा मूर्धावसिक्ताद्यास्तेषामाशौचविशेषः कलौ नोपयुक्त
इति नोच्यते। प्रतिलोमजानां नाशौचं। मलापकर्षणार्थं तु स्नानमात्रमिति विज्ञानेश्वरः। माधवस्तु
शौचाशौचे प्रकुर्वीरन् शूद्रवद्वर्णसंकरा इति ब्रह्मोक्तेः शूद्रवदाह। हारलताप्येवं॥ दत्तक्रीतकृत्रि
मादिपुत्रेषु अहीनवर्णगासु स्त्रीषु च सपिंडत्वेपि प्रसवे मरणे च पूर्वापरपित्रोर्भर्तुश्च त्रिरात्रमेव न द
शाहादि। अनौरसेषु पुत्रेषु जातेषु च मृतेषु च। परपूर्वासु भार्यासु प्रसूतासु मृतासु चेति त्रिरात्रानुवृत्तौ
विष्णूक्तेः। सपिंडानां त्वेकाहः। परपूर्वासु भार्यासु पुत्रेषु कृतकेषु च। भर्तृपित्रोस्त्रिरात्रं स्यादेकाहस्तु
सपिंडत इति माधवीये हारीतोक्तेः। सूतके मृतके चैव त्रिरात्रं परपूर्वयोः। एकाहस्तु सपिंडानां त्रिरात्रं
यत्र वै पितुरिति मरीच्युक्तेश्च। शंखः॥ अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च। परपूर्वासु च स्त्रीषु त्रि
रात्राच्छुद्धिरिष्यते॥ परपूर्वा पुनर्भूः॥ इदं सवर्णासु हीनवर्णासु तु शंखलिखितौ। परपूर्वासु भार्या
सु पुत्रेषु कृतकेषु च। नानध्यायो भवेत्तस्य नाशौचं नोदकक्रिया। ब्राह्मेपि। अशौचं तु त्रिरात्रं स्यात्स
मर्थासु निश्चितं। यत्तु षडशीतौ। अन्यपूर्वोढदारासु त्रिदिनाच्छुद्धिरिष्यते। तासु चानन्यपूर्वासु पं
चाहोभिर्विशुध्यतेति। तत्र पंचाहे मूलं चिंत्यं। यत्तु याज्ञवल्क्यः अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु
चेत्येकाहमाह॥ तदसन्निधौ ज्ञेयं। यदा पितुरेकाहस्तदा सपिंडानां स्नानं। अन्याश्रितेषु दारेषु प
रपत्नीसुतेषु च। गोत्रिणः स्नानशुद्धाः स्युस्त्रिरात्रेणैव तत्पितेति प्रजापत्युक्तेः। पितेति चेद्गुरुपलक्ष
णं। तथोपक्रमात्। यत्तु दत्तके पालकप्रतियोगिकपुत्रत्वात् एवं पितुर्न त्रिरात्रं एवं संबंधनिवृत्तेश्च न
दशाहादीति कश्चित्। तन्न। जनकेपि बैजिकादभिसंबंधादनुरुंध्याद्घं त्र्यहमिति वाचनिकाशौच
स्यानिवार्यत्वात्। पितृमरणेपि दत्तकादीनां त्रिरात्रं। शुद्धितत्वे माले॥ दत्तकश्च स्वयंदत्तः कृत्रिमः
क्रीत एव चेति। उपक्रम्य सूतके मृतके चैव त्र्यहाशौचस्य भागिन इत्युक्तेः। स्मृतिकौमुद्यां हारलतायां
चैवं। दत्तकस्य पुत्रपौत्राणां जनने मरणे वा सपिंडानामेकाहः। बीजिनश्चेति॥ गौतमेन साप्तपौरुष
सापिंड्योक्तेः। सपिंडानां चैकाहस्योक्तत्वात्। सपिंडे तु पुत्रीकृते सपिंडदत्तौरसयोर्भ्रात्रोस्तत्पुत्रयोर्द
शाह एव। तत्रावासाभावात्सपिंडत्वेन दशाहप्राप्तस्याच। एवं परमतेत्वनयोः पुत्रयोस्त्र्याहमाधवी
ये मरीचिः मातुरैक्याद्द्विपितृकौ भ्रातरावन्यगोत्रजौ। एकाहं सूतकं तत्र त्रिरात्रं मृतके तयोरिति दि
क्। ऊढाकन्यायां तु विष्णुराह॥ संस्कृतासु स्त्रीषु नाशौचं पितृपक्षे तत्प्रसवमरणे चेत्पितृगृहे स्यातां
तदैकरात्रं त्रिरात्रं चेति प्रसवे एकरात्रं मरणे त्रिरात्रमिति। विज्ञानेश्वरापरार्कौ॥ माधवस्तु प्रसवेपि
त्रिरात्रं पित्रोः एकरात्रं भ्रात्रादिबंधुवर्गस्य दत्ता नारी पितुर्गेहे सूयेताथ म्रियेत वा। तद्बंधुवर्गस्त्वेके
न शुचिस्तज्जनकस्त्रिभिरिति ब्राह्मोक्तेरित्याह॥ यत्तु कश्चिदाह पक्षपदेन भ्रातरो गृह्यंते॥ वाक्यांतरेण
भगिनीमृतौ त्रिरात्रोक्तेरिति तच्चिंत्यं॥ तदभावादेतद्विरोधाच्च॥ भ्रातुः प्रसवे एकाहः। मृतौ त्रिरात्रमि
ति केचित्। युक्तं तु पक्षिणी परस्परमृतौ भ्रातृभगिन्योः पक्षिणी भवेदिति ब्राह्मात्। भ्रातृभिन्नाना
मेकाहः वर्गोक्तेः॥ इतरेषां पक्षिणीति वक्ष्यमाणवचनाच्च। यत्तु प्रधानगृहे मृतौ पित्रोः पूर्णं भ्रातु
स्त्र्यह इति कश्चित्तन्निर्मूलत्वान्नाशौचं पितृपक्षे इत्यनेन विरोधाच्चाभ्रांतः॥ दत्ता नारी पितुर्गेहे प्रधाने
सूयेत यदा। म्रियते वा तदा तस्याः पिता शुध्येत्त्रिभिर्दिनैरिति कल्पतरौ शुद्धितत्वे च। पतिगृहे प्रसवे

तुपित्रादीनामाशौचंनास्तिमृतौपित्रोःत्रिरात्रमस्त्येव।प्रत्ताप्रत्तासुयोषित्सुसंस्कृतासंस्कृतासुच।
मातापित्रोस्त्रिरात्रंस्यादितरेषांयथाविधिः।अप्रत्तासुपित्रोरेकरात्रमितिमाधवीयेशंखवाक्यं
ङ्गिरःस्मृतेःवैजिकादभिसंबंधादित्युक्तेश्च।स्मृत्यर्थसारेप्येवं॥माधवस्तुइदंत्रिरात्रंजातदंतापु
त्र्यांदंतोत्पत्तेःप्रागेकरात्रंपित्रोः।सद्यस्त्वदंतकन्यानांप्रागूढायांवासराच्छुचिः।प्रदत्तायांत्रिरात्रेणाद
त्तायांपक्षिणीभवेदितिपुलस्त्योक्तेरन्यत्रकन्यामृतौपित्रोःपक्षिणीमाह।षडशीतावपि॥पितृ
गेहादृतेयत्रयदिपुत्रीप्रमीयते।पक्षिणीतत्रपित्रोःस्यान्नान्येषामितिनिश्चयः॥ग्रामांतरेइयमि
तिस्मृत्यर्थसारे।भ्रातुस्तुपक्षिणी।श्वशुरयोर्भगिन्यांचमातुलान्यांचमातुले।पित्रोःस्वसरितद्वच्च
पक्षिणींक्षपयेन्निशामितिवृहस्पतिस्मृतेः।शुद्धितत्त्वेकौर्मे।आदंतात्सोदरेसद्यःआचूडादेकरा
त्रकं।आप्रदानात्त्रिरात्रंस्यात्दशरात्रमतःपरं।पित्रोर्मृतौस्त्रीणांत्रिरात्रं।पित्रोरुपरमेस्त्रीणामूढाना
तुकथंभवेत्।त्रिरात्रेणैवशुद्धिःस्यादित्याहभगवान्यमः॥इतिमाधवीयेवृहन्मनूक्तेः।इदंदशाहांतः
ऊर्ध्वंपक्षिणी॥भ्रातुर्भगिनीगृहेतस्यावातद्गृहेमृतौत्रिरात्रमन्यत्रतुपक्षिणीतिषडशीतावुक्तं॥अ
न्येपि॥परस्परंमृतौभ्रातृभगिन्योःपक्षिणीभवेत्।मातुलाशौचवत्तज्ज्ञाःपितृव्याशौचमिच्छति।
पितृष्वसुस्तुनिर्मूलत्वात्पितृव्येस्नानमाचरेत्।त्रिंशच्छ्लोक्याम्॥मृतेचाचार्यपत्नीनामहर्दुहितृसुतश्रो
त्रियर्त्विक्शाल्ययाज्यस्त्रीयेषुत्रिरात्रंत्रिदिवसमशुचिः।सोदकस्त्वप्यत्रपक्षिण्याशौचंमृत्विग्दुहितृ
सुतसखाध्यापकश्वशुरयातेवासिश्वश्रुपुत्रमित्रश्वशुरभगिनिकाभागिनेयप्रयाणे।मातामह्यांचपित्रोः
स्वसरिचविरतौमातुलेमातुलान्यां।चाथोसद्योनिरवद्यविषयपतौग्रामनाथेचनष्टे।शिष्योपाध्या
यबंधुत्रयगुरुतनयाचार्यभार्यासगोत्रानूचानश्रोत्रियेषुस्वगृहपरमृतोमातुलेचैकरात्रं॥रात्रिंसब्रह्म
चारिण्यथनुकथमपिस्वल्पसंबंधयुक्तेस्नानंवासोयुतंस्यादिहमपिसकलंसर्ववर्णेषुतुल्यमिति।
अत्रमूलंमिताक्षरादौस्पष्टं।दौहित्रभागिनेययोरुपनीतयोस्त्रिरात्रं।अनुपनीतयोःपक्षिणी।
संस्थितेपक्षिणींरात्रिंदौहित्रेभगिनीसुते।संस्कृतेतुत्रिरात्रंस्यादितिधर्मोव्यवस्थितःइतिवृहन्म
नूक्तेः।संस्कृतेदाहे।तेनदाहेत्रिरात्रंनान्यथेतिगौडाः॥तन्न॥विशेषवैयर्थ्यात्।मातुलादौसन्नि
धिविदेशाभ्यांपक्षिण्येकाहयोर्व्यवस्था॥मनुः॥त्रिरात्रमाहुराशौचमाचार्येसंस्थितेसति।तस्य
पुत्रेचपत्न्यांचदिवारात्रमितिस्थितिः॥श्रोत्रियेसगृहेत्रिरात्रंश्रोत्रियेतूपसंपन्नेत्रिरात्रमशुचिर्भ
वेदितिस्मृतेरितिमाधवः।एकग्रामीणेत्वेकाहःऋत्विजिवाहल्यकालश्रौतस्मार्तेयाजनपरे
त्रिरात्रैकरात्रेज्ञेये।यद्यपिकर्मकुर्वन्नेववाचकःशब्दोभवतीतिशबराचार्यैःकर्ममध्येऋत्वि
क्त्वमुक्तं।तथापिकर्मारंभाशौचनिषेधात्तदुत्तरमेवेतिज्ञेयं॥गौडास्तु।एकोदकानांतुअसगो
त्रजानामहःस्मृतं।मातृवंश्येगुरौमित्रेमंडलाधिपतौतथेतिजाबालोक्तेर्मातृबंधुरेकाहमाहुः।शिष्येस
पत्नीकेत्र्यहः।शिष्यसतीर्थ्यसब्रह्मचारीषुक्रमेणत्रिरात्रमेकाहइतिमाधवीयेबौधायनोक्तेः।अन्यत्रतु
मनुःमातुलेपक्षिणींरात्रिंशिष्यर्त्विग्बांधवेषुचेति।बंधुत्रयंचात्मपितृष्वसृमातृष्वसृमातुलपुत्राः
पितुःपितृष्वसृमातुलपुत्राःमातुःपितृष्वसृमातृष्वसृमातुलपुत्राश्चेतिविज्ञानेश्वरः।अत्रपक्षिणी
पितृष्वस्रादिकानामूढानांत्वेकाहःतद्बंधुवर्गस्त्वेकेनेति।पूर्वोक्तमाद्यातरइतिकेचित्।यत्तुषडशी

मां। एवं पित्रोर्भगिन्यौ ये ये पितामहयोस्तथा। ये मातामहयोश्चैव भगिन्यौ तत्प्रजाश्च याः॥ मातुलाः स्व
स्वपित्रोश्च पत्न्यश्चैषां प्रजाश्च याः। पितरश्चेति सर्वेषु पक्षिणी स्वगृहे त्र्यहं। एवं श्वशुरजामातृदौहि
त्रविषये स्मृतं। यमः जामातर्यमृते शुद्धिस्त्रिरात्रेणोभयोः स्मृता। पक्षिणी शालकानां स्यादि
ति शातातपोऽब्रवीत्। इति॥ तन्निर्मूलत्वात् मिताक्षरादिविरोधाच्चोपेक्ष्यं। मदनपारिजाते विष्णुः
असपिंडे स्ववेश्मनि मृते एकरात्रं। अत्र हरदत्तोक्तं शवे वेत्यापलवस्त्रेनः शवे ग्रामे धनुः। शता
द्वागन्नमभोज्यं। दीपमुदकुंभं चोपनिधाय भुंजीत। यदि समानवंशान्गृहमेवस्तुतिका यामि
नाह। तथा नगरे हे मृतो तु। गृहे यस्य मृतः कश्चिदसपिंडः कथंचन। तस्याप्यशौचं विज्ञेयं त्रिरात्रं नात्र
संशय। इत्यंगिरसोक्तमिति माधवः॥ एतेन त्रिरात्रमसपिंडेषु स्वगृहे संस्थितेषु चेति कौर्मं व्याख्या
तं शुद्धितत्त्वे वृहन्मनुः॥ अशूद्रपतिताश्चान्यामृताश्चेद्द्विजमंदिरे। शौचं तत्र प्रवक्ष्यामि मनुना भा
षितं यथा। दशरात्राच्छुनि मृते मासाच्छूद्रे भवेच्छुचिः। द्वाभ्यां तु पतिते गेहमन्त्ये मासचतुष्टयात्।
अत्यंते वर्जयेद्गेहमित्येवं मनुरब्रवीत्॥ अत्यंतो म्लेच्छः। अन्त्यः श्वपाकः इति वाचस्पतिः। तत्रैव य
मः॥ द्विजस्य मरणे वेश्म विशुध्यति दिनत्रयात्। स्मृतेः॥ गृहशुद्धिं प्रवक्ष्यामि अंतःस्थशवदूषिते
प्रोत्सृज्य मृण्मयं भांडं सिद्धमन्नं तथैव च। गोमयेनोपलिप्याथ छागेनाघ्रापयेद्बुधः ब्राह्मणैर्मंत्र
पूतैश्च हिरण्यकुशवारिभिः। सर्वमभ्युक्षयेद्वेश्म ततः शुध्यत्यसंशयं॥ बृहद्विष्णुः॥ याममध्यग
तो यावच्छवस्तिष्ठति कस्यचित्। ग्रामस्य तावदाशौचं निर्गते शुचितामियात्। गृहयश्वादौ मृतेऽप्ये
वं पत्तु माधवीये प्रचेतसा। मातृष्वस्रादिषु त्रिरात्रमुक्तं। मातृष्वसृमातुलयोः श्वश्रूश्वशुरयोर्गुरौ
मृते चर्त्विजि याज्ये च त्रिरात्रेण विशुध्यति। गुरुराचार्यः॥ ऋत्विकुलागतः॥ तत्र गृहे मृतौ ज्ञेयं।
श्वशुरयोरन्यत्र मृतावपि सन्निधौ त्रिरात्रं असन्निधौ पक्षिणी। देशांतरे एकरात्रं वस्यमाण विष्णू
क्तेरिति माधवगौडादयः॥ अन्यत्र तु मातृष्वस्रादिषु पक्षिणी। पित्रोः स्वसरि तद्वच्च पक्षिणीः॥
सपत्निशामिति वृद्धमनूक्तेः। यत्तु वृद्धमनुः। असंस्कृतायां तु भ्रात्र्यामपि च संस्कृते। मित्रजा
मातरि चैते दौहित्रे भगिनीसुते। शालके तत्सुते चैव सद्यः स्नानेन शुध्यतीति। तत् भ्रातृदौहित्रादौ
देशांतरे। शालकसुतजामात्रोः स्वदेशे ज्ञेयं। शालके तु स्वदेशे एकाहः। आचार्यपत्नीपुत्रोपाध्या
यमातुलश्वसुरश्वशुर्यसहाध्यायिशिष्येष्वेकरात्रमिति माधवीये विष्णूक्तेः। हरदत्तीये दशश्लोक्या
मप्येवं। श्वशुर्यः शालकः। देशांतरे स्नानं। श्वसुरयोर्देशांतरे एकाहः जाबालः॥ एकोदकानां तु
त्र्यहो गोत्रजानामहः स्मृतं सर्वत्र मूल्याभावे पि क्रयकर्तुर्दशाहः। गुरोः प्रेतस्य शिष्यस्तु पितृमेधं
समाचरेत् प्रेताहारैः समं तत्र दशरात्रेण शुध्यतीति मनूक्तेः। शिष्य इत्युपलक्षणं। निरन्वये स
पिंडे तु मृते सति दयान्वितः तदाशौचं तदाशौचं पराचीर्णो कुर्यात्तु पितृवत्क्रियामिति माध
वीये ब्राह्मोक्तेः। दिवोदासीये। सगोत्रो वा सगोत्रो वा योऽग्निं दद्यात्सखेवं नरः सोऽपि कुर्यान्नवश्रा
द्धमुदकं च दशमेऽहनि। यत्रैकविषये पक्षिण्येकाहादिपक्षद्वयमुक्तं तत्र सन्निधिविदेशाभ्यामादि
कृता व्यवस्था। त्रिंशत्श्लोक्यां॥ वानप्रस्थे यतौ चोपरमति कुलजे षट्कचा सूवः स्याद्यो बिद्धो
विप्रशस्त्रे मृत उत नितु दिनं युद्धविद्धे च सद्यः। अत्र मूलमाकरे स्पष्टं। युद्धस्थे मृतस्य स्नानं। उप

नैरहत्वेशस्त्रैः क्षत्रधर्मेहतस्य च सद्यः संतिष्ठते यज्ञस्तथाशौचमिति स्थितिरिति मनूक्तेः। यज्ञोत्र क
र्मसंवर्तेष्टिर्वेत्यर्थः। यत्तु भारते राजधर्मेषु॥ अशोच्यो हि हतः शूरः स्वर्गलोके महीयते न ह्यन्नमु
दकं तस्य न स्नानं नाप्यशौचकमिति श्राद्धादिनिषेधः स पुत्राद्यभावपरः। अत एव तत्र कर्णादीनां
श्राद्धमुक्तं। अन्ये तु दशपिंडनिषेधमाहुर्यतिवत्। यत्तु पराशरः॥ आहवेषु हतानां च एकरात्रम
शौचकमिति। तद्युद्धस्थाने न कालांतरमृते ज्ञेयं आसन्निधौ स्नानमिति माधवः। शुद्धितत्वेप्यप
रार्के। दंष्ट्रिभिः शृंगिभिर्वापि हतानां म्लेच्छतस्करैः। येषामर्थे हतानां तु राजन्स्वर्गे न संशयः
। सर्वेषामेव वर्णानां तत्र विप्रस्य विशेषतः। यत्तु बृहस्पतिः॥ डिंबाहवे विद्युता च राज्ञा गोविप्रपाल
ने। सद्यः शौचं मृतस्याहुस्त्र्यहं चान्ये महर्षयः। तच्छस्त्रं विना परस्परमुखहते च त्रिरात्रं। राजस्याप्याह
ने सद्यः शौचमन्यत्र त्रिरात्रं। तत्रैव व्याघ्रः। क्षतेन म्रियते यस्तु तस्याशौचं भवेद्द्विधा। आसप्ताहात्त्रि
रात्रं स्याद्दशरात्रमतः परं। शस्त्रघातेक्षतं विना शवस्पर्शे तु हारीतः। शवस्पर्शेऽशौचं न भवति विशेषपरा
न्नस्पर्शे नाद्यगोवेदादिस्पर्शे। यत्तु मनुः॥ अन्हा चैकेन रात्र्या च त्रिरात्रैरेव च त्रिभिः। शवस्पृशो वि
शुध्यंति त्र्यहादुदकदायिनः॥ इति अन्हा रात्र्या चेति अहोरात्रमुक्तम्। त्रिभिस्त्रिरात्रैरिति नवरात्रमे
वं दशरात्रमित्यर्थः। तत्र तदन्नाशने तद्गृहवासे नापि दिवसेषु। अनदन्नन्नमन्हैव न चेत्तस्मिन्गृहे वसेदि
ति तेनैवोक्तेः। अंगिराः॥ आशौचं यस्य संसर्गादापतेद्गृहमेधिनः। क्रियास्तस्य न लुप्यंते गृह्याणां
च न तद्भवेत्॥ ॥अथ निर्हाराद्याशौचं॥ ॥स्नेहेन सवर्णनिर्हारे तद
न्नाशने तद्गृहवासे च दशाहः। तदन्नाशने तद्गृहवासे त्र्यहः। गृहावासे त्वभक्षणे चैकाहमिति
हरदत्तः। निर्हारे दाहे च ज्ञात्याशौचापादिनिर्हरतिमेनं भलोभाक्रांतमानसः। दशाहेन द्विजः शुध्ये
द्दशाहेन भूमिपः। मासार्धेन तु वैश्यस्तु शूद्रो मासेन शुध्यतीति कौर्मोक्तेः। विजातीयनिर्हारे तु श
वजातीयमशौचं। अत्र मृतिर्गृहे द्विगुणं। अवरश्चेद्वरं वर्णमवरं वा वरो यदि। वहेच्छवं तदाशौ
चं दृष्ट्वा शुद्धिर्द्विगुणं भवेदिति माधवोक्तेः। कौर्मे मृतदिति गौडः। दाहेप्येवं। यत्तु वासे॥ योस
मूल्येन नीत्वा चैव दहेन्नरः। अशौचं तु भवेत्तस्य प्रेतजातिसमं नृपेति। तद्दापदितेयं। सोऽकामे नि
र्हारे तु दशाह इति माधवः। अलंकरणे तु पराशरः॥ कृच्छ्रपादो सपिंडस्य प्रेतालंकरणे कृते [illegible]
नाद्युपवासस्य दशको स्नानमिष्यते। धर्मार्थमनाथसवर्णहरणे क्रियाकरणे च बहुफलं तन्न
यज्ञफलं स्नानेन शाणा मानोऽग्निस्पर्शोऽप्रतीमाधवीये अग्निरप्येवं। प्रेतसंस्पर्शसंस्कारे नास्यै
नेव द्रुष्यति। वोढा चैवाग्निदाता च सद्यः स्नात्वा विशुध्यतीति अपरार्के ब्रह्मपुराणोक्तेः। मातुल
त्वादिसंबंधे त्रिरात्रं। असंबंधि द्विजान्वहित्वा दहित्वा च सद्यः शौचे संबंधे त्रिरात्रमिति पैठीनसि
स्मृतेः। गौतममिताक्षरायां च ह्यात्रिः॥ सूतकाद्द्विगुणं शावं शावाद्द्विगुणमार्तवं। आर्तवाद्द्विगु
णा सूतिस्ततोपि शवदाहकः। अत्र शवेन नौ तर निषिद्धं इत्यर्थः॥ विष्णुः॥ मृतं द्विजं न शूद्रेण हा
रयेन्न शूद्रं द्विजेन॥ देवलः॥ ब्रह्मचारी न कुर्वीत शववाहादिकं क्वचित्। यदि कुर्याच्चरेत्कृच्छ्रं
पुनः संस्कारमेव च॥ याज्ञवल्क्यः॥ आचार्यपित्रुपाध्यायान्निर्हृत्यापि व्रती व्रती। अमुनान्नेन तु स
पिंडेन दोषः। विहितं हि सपिंडानां प्रेतनिर्हरणादिकं तेषां करोति यः कश्चित्तस्याधिकं यदि ते

इति देवलोक्तेः ॥ दोषः स्यात्त्वसपिंडस्य तत्तान्नाथक्रियाविनेति हारीतोक्तेः । समोत्कृष्टवर्णे तु माधवीये कण्वः । अनुगम्य शवं बुध्वा स्नात्वा स्पृष्ट्वा हुताशनं । सर्पिः प्राश्य पुनः स्नात्वा प्राणायामैर्विशुध्यति । हीनवर्णे तु क्षत्रिये त्र्यहः । वैश्ये पक्षिणी शूद्रे दिनं क्षत्रियस्य वैश्ये त्र्यहः शूद्रे पक्षिणी वैश्यस्य शूद्रे त्र्यह इति विज्ञानेश्वरः ॥ माधवस्तु विप्रस्य वैश्ये द्व्यहः क्षत्रियस्य शूद्रेऽप्येवं ॥ अन्यत्राग्वत् स्नानाग्निस्पर्शघृताशनानि सर्वत्रेत्याह । हीनवर्णस्य दाहोर्ध्वदैहिककरणे तु ब्राह्मे ॥ ब्राह्मणो हीनवर्णस्य न कुर्यादौर्ध्वदैहिकं । कामाल्लोभाद्भयान्मोहात्कृत्वा तज्जातितां व्रजेत् ॥ मनुः ॥ व्रात्यानां याजनं कृत्वा परेषामन्त्यकर्म च । अभिचारमहीनं च त्रिभिः कृच्छ्रैर्व्यपोहति । परेषां सर्ववर्णानां । हीनेषु तु द्वैगुण्यत्रैगुण्यचातुर्गुण्याद्यूह्यं ॥

॥अथयोरस्नेस्पोत्तमवर्णयोः॥

॥संचयनात् वैसचैलस्नानमूर्ध्वमाचमनम् । हीनवर्णे तु संचयनात्प्राक् सचैलमूर्ध्वं स्नानमात्रं ॥ विप्रस्य क्षत्रवैश्यविषये तु ब्राह्मे ॥ अस्थिसंचयने विप्रो रोदिति चेत्क्षत्रवैश्ययोः । तदा स्नानः सचैलस्तु द्वितीयेऽहनि शुध्यति । कृते तु संचये विप्रः स्नानेनैव शुचिर्भवेत् । क्षत्रस्य वैश्येऽप्येवम् । शूद्रे तु संचयनात्प्राक् विप्रस्य त्रिरात्रं क्षत्रवैश्ययोर्द्विरात्रं । ऊर्ध्वं तु द्विजानामेकाहः ॥ शूद्रस्य शूद्रे स्पर्शं विनास्थिसंचयनात्पूर्वमेकाहः ऊर्ध्वं सज्योतिरिति माधवीये ज्ञेयं । शुद्धितत्त्वे पारस्करस्तु ॥ अस्थिसंचयनादूर्ध्वं मासं यावद्द्विजातयः । दिवसेनैव शुध्यन्ति वाससां क्षालनेन च । सजाते दिवसेनैव अहात्क्षत्रियवैश्ययोरित्युक्तम् । सपिंडनाशेन निर्हारादावदोषस्तूक्तः प्राक् । विज्ञानेश्वरस्तु । मृतस्य बांधवैः सार्द्धं कृत्वा तु परिदेवनं । वर्जयेत्तदहोरात्रं दानश्राद्धादिकर्म वै इति पारस्करोक्तेः सर्वत्रैकरात्रमाह ॥

॥अथाशौचान्नभक्षणे॥

विष्णुः ॥ ब्राह्मणादीनामाशौचे यः सकृदेवान्नमश्नाति । तस्य तावदाशौचं यावत्तेषां । आशौचव्यपगमे प्रायश्चित्तं कुर्यादिति । अज्ञाने त्वंगिराः ॥ सूतके शावे भुक्त्वान्नं सूतके मृतकेऽपि वा । अस्याशौचं भवेन्नावद्यावदन्नं व्रजत्यधः । प्रायश्चित्तं त्वमत्या विप्रस्य वर्णक्रमेणैकाहत्र्यहपंचाहसप्ताहोपवासः । दशविंशतिषष्टिः शतं च प्राणायामाः पंचगव्याशनं च । अभ्यासे द्विगुणं । आपदि तु प्राणायामशतं पंचशतमष्टसहस्रं गायत्रीजपश्च ॥ मत्या यदि तु सवर्णाशौचे त्रिरात्रमुपोषणं । गायत्र्यष्टसहस्रं च । क्षत्रियाशौचे उपवासश्च । वैश्याशौचे त्रिरात्रोपवासश्च । शूद्राशौचे कृच्छ्रं । क्षत्रवैश्ययोः पंचशतमष्टशतं गायत्रीजप उक्तमेव । शूद्रस्य सर्वत्र स्नानं । मत्या तापदि विप्रस्य वर्णेषु शांतपनं कृच्छ्रं महाशांतपनं चांद्रायणं । अभ्यासे तु मासिकद्वैमासिकत्रैमासिकषाण्मासिकानीत्यादि माधवीयादौ ज्ञेयं ॥

॥अथ दासस्य स्वदास्युत्पन्नस्य॥

॥स्वसपिंडमृतौ स्नानमात्रेण स्वामिकार्ये स्पृश्यत्वं भक्तदासस्य त्र्यहोर्ध्वं । सद्यः स्पर्शे गर्भदासो भक्तदासस्त्र्यहाच्छुचिरिति मत्स्यपुराणोक्तेः । भृत्यकर्मकराः शूद्रा दासीदासास्तथैव च ॥ स्नाने शरीरसंस्कारे गृहकर्मण्यदूषिताः इति । शातातपोक्तेश्च । एतच्चानन्यसाध्ये तत्कार्यमात्रे । अन्यत्र मासाद्याशौचमस्त्येव । एवं दास्यामपि सूतिकायां तस्या अस्पृश्यत्वमपि मासमात्रं । दासीदासश्च सर्वो वै यस्य वर्णस्य यो भवेत् तद्वर्णस्य भवेच्छौचं दास्या मासस्तु सूतकमित्यंगिरसोक्तेः । षडशीतौ तु ॥ स्वामिशौचेन दासाद्याः स्पृश्या मासानुकर्मसु । योग्यास्तु मासतो दासी सूती चेत्स्पर्शनामियात्

दत्तदासादीनांस्वसपिंडमरणादौस्वाम्याशौचसमसंख्यदिनोर्ध्वं स्वपिमामाद्याशौचेस्वामिका ॥
र्येस्पृश्यतेतिहरदत्तः॥ दासांतेवासिभृतकाः शिष्याश्चैकत्रवासिनः। स्वामितुल्येनशौचेनशु ॥
ध्यंतिमृतसूतकेइतिहस्तिस्मृतेः। दासश्चात्रगृहजातस्तथाक्रीतोलब्धोदायादुपागतः। अन्ना
कालमृतस्तस्याहितःस्वामिनाचयः। मोक्षितोमहतश्चर्णाद्युद्धप्राप्तःपणेजितः। तवाहमित्यु
पगतःप्रव्रज्यावसितःकृतः। भक्तदासश्चविज्ञेयस्तथैववडवाहृतः। विक्रेताचात्मनःशास्त्रेदा
सःपंचदशस्मृताइति नारदोक्तेषुगर्भदासभक्तदासौविनाज्ञेयः॥ वडवादासी॥ तयाहृतःत
सुद्वाह्यदासीजातस्त्वयं। अन्तेवास्यपितेनेवोक्तः। स्वशिल्पमिच्छन्नाहर्तुंबांधवानामनुज्ञया
आचार्यस्यवसेदंतेकृत्वाकालंसुनिश्चितं। आचार्यःशिक्षयेदेनंस्वगृहेदत्तभोजनमितिशि
ष्यस्तत्तुल्योविद्यार्थी दासादेःस्वामिनःसपिंडमरणेनुविष्णुः। वर्णानांदासानामानुलोम्येनस्वा
मितुल्यमाशौचंमृतेस्वामिन्यात्मीयमिति। प्रतिलोमदासानामाशौचाभावः। वर्णानामानुलो
म्येनदास्यनप्रतिलोमतइतियाज्ञवल्क्योक्तेः॥ ॥अथशावेजननमरणेवाएकत्रिविभा
गात्मकात्प्रथमभागद्वयेचेत्पूर्वंदिनंअन्त्येतत्परमितिमिताक्षरायां। यत्तुभागद्वयंरात्रेस्तत्राद्यात्पूर्वार
पांत्पूर्वदिनमित्युक्तं तत्तद्देशाचारतोव्यवस्था। सर्वमाशौचमाहिताग्नेर्दाहतःअन्यस्यमरण
मारभ्यज्ञेयं। अनग्निमतउत्क्रांतेराशौचंहिद्विजातिषु। दाहादग्निमतोविद्याद्विदेशस्थेमृतेस
तीतिपैठीनसिस्मृतेः। साग्निराहिताग्निः। आहिताग्निश्चेत्प्रवसन्म्रियेतपुनःसंस्कारंकृत्वा
शाववदाशौचमितिवासिष्ठेविशेषोक्तेः। दाहादेवतुकर्तव्यंयस्यवैतानिकोविधिरितिबालाद्य
यत्तुधूर्तस्वामिनारामांडारेणचोक्तं। आहिताग्नेरपिमरणादेवदशरात्रं। दशाहशावमाशौच
मितिमरणनिमित्तत्वात्तस्य। यत्तुदाहादेवतस्याशौचमुक्तं तत्संस्कारनिमित्ताशौचंपृथगे
वातेनगृह्याग्नेःसंस्कारांगत्रिरात्रं। श्रौताग्नेस्तुदशरात्रं। मरणनिमित्तंतूभयोर्दशाहंदाहात्प्रागपीति
तद्वचनविरोधात्पूर्वस्यैवोत्कर्षोन्मूलकल्पनालाघवाच्चिंत्यं॥ ॥अथातिक्रांताशौ
चं॥ ॥तत्राशौचमध्येजननादौज्ञातेतच्छेषेणशुद्धिः॥ विगतंतुविदेशस्थंशृणुया
द्योह्यनिर्दशं। यच्छेषंदशरात्रस्यतावदेवाशुचिर्भवेदितिमनूक्तेः। अत्रकेचिदेतत्पुत्रातिरिक्त
विषयं। तेषांत्वाशौचमध्येश्रवणेपितृदाद्येवदशाहादि। पितरौचेन्मृतौस्यातांदूरस्थोपिहिपुत्र
कः। श्रुत्वातद्दिनमारभ्यदशाहंसूतकीभवेदित्यस्यसर्वापवादत्वादित्याहुः। तन्न॥ ज्ञानमरण
योर्निमित्तत्वात्॥ अनग्निमतउत्क्रांतेरित्यादिविरोधाच्च॥ स्मृत्यर्थसारेपि॥ जननेमरणेवाप्रथ
मदिनादूर्ध्वंज्ञातेपुत्रादीनांशेषेणैवशुद्धिरिति। षडशीतावपरार्केचैवं। दशाहादूर्ध्वंज्ञानेतुवृद्ध
वशिष्ठः॥ मासत्रयेत्रिरात्रंस्यात्षण्मासेपक्षिणीतथा। अहस्तुनवमादर्वागूर्ध्वंस्नानेनशुध्य
ति। जननेत्वतिक्रांताशौचंनास्त्येव। नाशुद्धिःप्रसवाशौचेव्यतीतेषुदिनेष्वपीतिदेवलोक्तेः। पि
तुःस्नानंतत्रापिभवत्येव। निर्देशंज्ञातिमरणंश्रुत्वापुत्रस्यजन्मच। सवासाजलमाप्लुत्यशुद्धोभव
तिमानवः। इतिमनूक्तेः॥ तत्रातिक्रांताशौचंदशाहादिजात्याशौचविषयं। नत्वनुपनीतादिनि
मित्तत्रिरात्रादौ॥ उपनीतेतुविषमंतस्मिन्नेवातिकालजमित्याद्युक्तेः। निर्देशंज्ञातिमरणं।

अतिक्रांते दशाहे त्रिनिमनूक्तेश्च॥ माधवीये देवलस्तु॥ आत्रिपक्षात्त्रिरात्रं स्यात् षण्मासात्पक्षिणी ततः॥ परमेकाहमावर्षादूर्ध्वं स्नातो विशुध्यतीत्याह। तत्राप्यनापद्यपन्वेन व्यवस्था। इदं चैकदेशे देशांतरे तु स्नानमात्रं देशांतरमृते श्रुत्वा क्लीबे वैखानसे यतौ। मृते स्नानेन शुध्यंति गर्भस्रावे च गोत्रिणइति॥ पराशरोक्तेरिति विज्ञानेश्वरः। स्नानं वत्सरांते। अर्वाक् त्रिपक्षात्त्रिनिशं षण्मासाच्च दिवानिशं। अहः संवत्सरादर्वाक् देशांतरमृते ग्रपी विष्णूक्तेरिति माधवः॥ इदं सपिंडानां। देशांतरे स्नानं सोदकानामिति। युक्तं तल्लक्षणं त्वाह बृहस्पतिः॥ महानद्यंतरं यत्र गिरिर्वा व्यवधायकः वाचो यत्र विभिद्यंते तद्देशांतरमुच्यते। देशांतरं वदंत्येके षष्टियोजनमायतं। चत्वारिंशद्वदंत्यन्ये त्रिंशदन्ये तथैव चेति॥ एतत्सर्वं मातापितृमित्रविषयं। तयोस्तु पितरौ चेदिति पूर्वपैठीनसिवाक्यात्तदापूर्वमेव दशाहादि। स्मृत्यर्थसारे॥ मातापितृमरणे दूरदेशेपि संवत्सरोर्ध्वमपि पुत्रो दशाहादिकं श्रुत्वाशौचं कुर्यात्॥ स्त्रीपुंसयोः परस्परसवर्णोत्तमवर्णसपत्नीषु चैवमिति। शुद्धितत्त्वाद्योगोडास्तु॥ ऊर्ध्वं संवत्सराद्यावद्वधुश्चेत्कूपते मृतः। भवेदेकाहमेवात्र नचसत्यास्त्रिरात्रंत्विति देवलोक्तेः पित्रोरब्दमध्ये त्रिरात्रमूर्ध्वमेकाहः। बंधुर्मातापिता भर्त्ता च। पूर्वोक्तं दशाहं तु कलिंगादिदेशपरमित्याहुः। तेन बंधुपदस्यापि ज्ञात्यादिपरत्वे मानाभावात्। उपेक्ष्यं। शौद्रसपत्नमातृस्तु दक्षः। पितृपत्न्यामपेतायां मातृवर्जं द्विजोत्तम। संवत्सरे व्यतीतेपि त्रिरात्रमशुचिर्भवेत्॥ हीनवर्णामातृहीनवर्णसपत्नीषु चैवमिति स्मृत्यर्थसारे। केचित्तु पत्न्यामतीतायामौरसे तनयेपि चेति। ब्राह्मोक्तेरौरसे पीदमाहुः॥ षडशीतावप्येवं। एतत्सर्ववर्णतुल्यं। तुल्यं वयसि सर्वेषामतिक्रांते तथैव चेति व्यासोक्तेः॥

॥अथाशौचसंपात उच्यते॥

॥ तत्र शावे शावस्तके सूतकं। शावे सूतकं। सूतके शावं वा॥ तत्राप्युत्तरकालजः पूर्वेण समन्यूनमधिकं वेति द्वादशभेदाः। यदेकदिने समन्यूनमधिकं वाशौचद्वयं तत्र तंत्रेणान्यसिद्धिः। द्वयोरेककालत्वात्। यदा तु द्वितीयादिदिनेषूत्तरं सजातीयं शावं जननं वा समकालं। न्यूनकालं वा परं स्यात्तदा परस्य पूर्वशेषेण शुद्धिः॥ अंतरा जन्ममरणे शेषाहोभिर्विशुध्यतीति॥ याज्ञवल्क्योक्तेः। अंतरा ज्ञाते इत्यर्थः। ज्ञानस्यैव जननादौ निमित्तत्वात्॥ पूर्वाशौचोत्तरं तन्मध्योत्पन्ने ज्ञाते तूत्तरमेव कार्यं। शुद्धितत्त्वेप्युक्तं। पूर्वाशौचांतरुत्पन्नं समानं लघु वा निमित्तं तत्कालादुपरिस्थितस्याशौचहेतुरेव। अज्ञातं तु न। अविज्ञाने न दोषः स्याच्छ्राद्धादिषु कथंचनेत्यस्याशौचसांकर्येपि स्मृतेः॥ तेनाज्ञानात्। वृषोत्सर्गादौ कृते पश्चात्तज्ज्ञानेपि नावृत्तिरिति। माधवीये यमोपि॥ जनने जनने तु स्यान्मरणे मरणं तथा। पूर्वशेषेण शुद्धिः स्यादुत्तराशौचवर्जनं। अत्र केचिद्दशाहस्यांते चेत्पुनर्मरणजन्मनी॥ तावत्स्यादशुचिर्विप्रो यावत्तत्स्यादनिर्दशमिति मनुपराशराद्यैर्दशाहमध्ये मरणाशौच एव पूर्वशेषेण शुद्धिः। अन्यथाल्पाशौचसंपाते उत्तरेणैव शुद्धिरित्याहुः। हरदत्तोप्येवमाह। गौडा अप्येवं। तन्न॥ याज्ञवल्क्यादिवचनेन दशाहस्य तुल्यकालाशौचोपलक्षणत्वात्। समानाशौचसंपाते प्रथमेन समापयेत्। असमानं द्वितीयेन धर्मराजवचो यथेति माधवीये शंखोक्तेः। अपरार्कमिताक्षरादिविरोधाच्च। यदा तु सूतके शावं समं न्यूनमधिकं वा तदा न

दाऊर्ध्वं द्विरात्रेणाप्युषायां त्रिरात्रेणेति बौधायनोक्तेः ऊनःपाने दशाहः। प्राक्पूर्वेणासह गच्छति दशमे
ह्नि पतेद्यस्याहद्वेयात्स विशुध्यति। प्रभाते तु त्रिरात्रेण दशरात्रिष्वयं विधिरिति देवलोक्तेश्च। नवमद
शमशेषे चाप्यान्यास्मद्दिनपरौ। तेन सत्रियादावपि तथेत्याहुः। माधवीयेप्येवं। अन्ये त्वाहुः अंत
र्दशाहे स्यातां चेत्पुनर्मरणजन्मनी। तावत्स्यादशुचिर्विप्रो यावत्तत्स्यादनिर्दशमिति। मनुपराश
राद्युक्तेः शेषदिनेनान्तरस्य शुद्धेरुक्तत्वाद्विरोधः स्पष्ट एव विरोधे च यद्वै किंचन मनुरवदत्तद्भेषजं। क
लौ पाराशरः स्मृतिरित्यनेन च पूर्वं च संबाधः। अत एव वाचस्पतिना नेषामनाकरत्वमुक्तम्। सा
करत्वेपि जातिमात्रविप्रादिविषयं देशान्तरविषयं युगान्तरविषयं वास्तु। तेन गौतमीये रात्रिशब्दे
नाहोरात्रपरः। रात्रिमात्रावशिष्टे इति मिताक्षरोक्तेश्च। ननु कविरुक्तेरिवान्यथा व्याख्या युक्ता।
माधवस्तु। अनिर्गतदशाहमिति पूर्वस्वरेरथविरोधादुपेक्ष्य इति अस्मत्पितृचरणास्तु बौधाय
नीये आनवमाद्दिवसादिति द्वितीयाशौचस्य नवमे दिने प्रथमस्य दशममेवाहुः। व्याहारिकृतेः पू
र्वशेषापवादत्वात्तस्य चन्यायतो द्वितीयदिनादेव प्रवृत्तेः। अत ऊर्ध्वमिति दशमरात्रिपरं। शंखलि
खितावुक्तौ देवलोक्तौ चाहःशेषदशमेह्नि चातीते रात्रौ पतेदित्यर्थः। दशम्यां पितानामकुर्यादिति
वत्। तेन न मन्वाद्यैर्विरोधो नापि मिताक्षरादेरित्याहुः। अपरार्के निर्णयामृते त्वरसोप्येवं। यत्तु त्रै
वर्णाद्ये। आद्यन्तभागद्वयं यावत्सूतकस्य तु सूतके। द्वितीये पतिते त्वाद्यात्सूतकाच्छुद्धिरिष्यते।
अत ऊर्ध्वं द्वितीयात्तु सूतकान्ताच्छुचिः स्मृतः। एतदेव विचार्यं स्यान्मृतके मृतकान्तरे। सूतकस्यान्त
रे पतत्सूतकं प्रति पद्यते॥ सूतकस्यान्तरे वाथ मृतकं यत्र विद्यते। मृतकान्ते भवेत्तत्र शुद्धिर्वर्णेषु सर्व
श इति। अस्यार्थस्तत्रैवोक्तः॥ पूर्वाशौच परमहोरात्रस्य दिनरूपे आद्यभागद्वये त्याशौचपाते पू
र्वेणशुद्धिः। भागद्वयादूर्ध्वं रात्रौ सूतकान्तरे द्वितीयात्। पूर्वं भिन्नात्सूतकान्तात् त्र्यहादिरूर्ध्वा शुद्धि
रिति। अपरार्के त्वाशौचकालं त्रिधा विभज्य निर्गुणविषयत्वेनेदमुक्तं। अस्य वचनस्य निर्मूल
त्वोक्तिरत्नोक्तिरेव। अतः पूर्वाशौचान्त्यरात्रावन्याशौचे होरात्रद्वयमधिकं। रात्रेरन्त्ययामे तु दिन
त्रयमिति शूद्रचरणोपदिष्टः पंथाः॥ एतत्सवर्णाशौचसंपाते एव। असवर्णाशौचे त्रिरात्रादिसंपाते तु पूर्व
शेषेणैव शुद्धिः। द्विरात्रादिवृद्धेः पूर्ववाक्ये दशाहविषयत्वादपवादाभावे शेषशुद्धेरेव सामान्य
तः प्रवृत्तेः॥ षडशीतौ तु दशाहान्तेहपातेपि द्वित्रिदिनवृद्धिरुक्ता॥ रात्रिशेषपदाशौचं पूर्वान
धिकमापन्नेन। ऊर्ध्वं दिनद्वयं पूर्वो यामशेषे दिनत्रयमिति। अनधिक समन्यूनं वा। तन्नुच्छं॥ त
स्य निर्मूलत्वादन्नेपक्षिण्यादिपातेपि द्विरात्रादिवृद्ध्यापत्तेश्च। पूर्वाशौचानवच्छिन्नद्वित्रिदिनमध्ये
धिकाशौचान्तरपाते तु वर्धितस्याल्पत्वादधिकेनैव शुद्धिः। न च वर्धितस्य पूर्वशेषत्वं शंकनीयं॥
रात्रिशेषे पूर्वशेषशुद्ध्यपवादे नैमित्तिकवृत्तिन्यायोज्जीवनात्। अपवादाभावे उत्सर्गस्य प्राप्तेः। अ
पवाद माह शंखः॥ मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता। पितुः शेषेण शुद्धिः स्यान्मातुः कुर्या
त्तु पक्षिणीं। पादत्रयं स्पष्टम्॥ तुर्यस्य त्वयमर्थः। पित्राशौचमध्ये मातृमृतौ पित्राशौचान्ते मातुः पक्षि
णीमधिकां कुर्यादिति॥ तत्राशुद्धावित्युक्तेरामहादेः पितुराशौचाभावान्मातृमरणे न पक्षिणी।
किंतु पूर्णमेवाशौचं। इयं च पक्षिणीतृतीयादिपरानामद्दिनद्वये प्रति निमित्तं नैमित्तिकावृत्तिस्या

पूर्वशेषाच्छुद्धिः ॥ नदाहाभिरः ॥ सूतके सूतकं चेत्स्यात्मृतके त्वथ सूतकं तत्राधिकृत्य मृतकं शौचं कुर्या
न्न सूतकं ॥ षट्त्रिंशन्मते ॥ शावाशौचे समुत्पन्ने सूतकं तु यदा भवेत् । शावेन शुध्यते सूती न सूती शावशो
धिनी ॥ चतुर्विंशतिमतेऽपि ॥ मृतेन शुध्यते जातं न मृतं जातकेन तु ॥ अतो यदा दशाह जननमध्ये त
दंते वा अहादिशावं तदा पूर्वेण शुद्धावपि निमित्तमस्पृश्यत्वं भवत्येव ॥ मरणोत्पत्तियोगे तु गरीयो
मरणं भवेदिति कौर्मोक्तेश्च ॥ गौतमव्याख्यायां रुद्रोऽपि ॥ सूतकाद्द्विगुणं शावं शावाद्द्विगुणमार्तवं
आर्तवाद्द्विगुणा सूती ततोऽपि शववाहकः ॥ अत्र पूर्वस्य पूर्वेणानंतरोत्तरनिवृत्तिरस्पृश्यत्वाधिक्या
दित्यर्थः ॥ षडशीतावपि ॥ स्वभाववहुतरेत्तु न्यूनशावविशोधिनीति ॥ रात्रिशेषादौ तु वर्द्धनं द्विरात्रादि
नैरागंतुके ॥ सूतेर्बहुत्वं न स्वभावेनातः तत्र न्यूनशवस्यापि न पूर्वेण शुद्धिरिति वक्तुं स्वभावेनात
त्रन्यूनशावस्यापि न पूर्वेण शुद्धिरिति वक्तुं स्वभावे इत्युक्तं ॥ वाह्ये ॥ नागंतुके इत्याहोभिः शौचमप
नुपपन्नं ॥ नत्वपातनिमित्तं न शावरन्यस्य शोधनमिति ॥ एवं नवपक्षाः ॥ परात्तु अहाद्यल्पाशौचमध्ये
सजातीयं विजातीयं वा दीर्घकालमुत्तरं तदा पूर्वं नाकार्यं न पूर्वेण शुद्धिः ॥ स्वल्पाशौचस्य म
ध्ये तु दीर्घाशौचं भवेद्यदि । न पूर्वेण विशुद्धिः स्यात्स्वकालेनैव शुध्यतीति ॥ उशनसोक्तेः ॥ तेन त्र्यहादि
शावमध्ये दशाहादिसूतकेऽपि न पूर्वेण शुद्धिरित्यपरार्कः ॥ शावनिमित्तमस्पृश्यत्वं तु भवत्येव ॥ शुद्धि
विवेके तु शावेन शुध्यते सूतिरिति माशकेलत्रापुत्रणशौचनिवृत्तिरुक्ता ॥ तन्न ॥ उत्तरस्य कालाधि
क्येन वलवत्त्वात् ॥ माधवीयेप्येवमपि ॥ अथ शुद्धिमदाशौचपश्चिमे न समापयेत् । यथा त्रिरात्रे संक्रांते
दशाहस्य विशेषः ॥ आशौचं पुनरागच्छेत्तत्समाप्य विशुध्यतीति ॥ हारीतोऽपि ॥ गुरुणा लघुमध्ये
तु लघुना नैव तद्भवेदिति ॥ गुरुत्वलघुत्वं च कालकृतमेव ॥ स्वल्पानुरोधात् ॥ एतच्च हरदत्तेन स्पष्टमुक्तं ॥ मि
ताक्षरायामप्येवं ॥ यत्तु अघानां यौगपद्ये तु ज्ञेया शुद्धिर्गरीयसी ॥ मरणोत्पत्तियोगे तु गरीयो मरणं भवे
दिति हारीतकौर्मादिवचनं तत्स्पृश्यत्वाभिप्रायं शावस्य गुरुत्वं तेषां क्वचिदल्पकालेनापि दीर्घकाला
शौचनिवृत्तिमाह ॥ देवलः ॥ परतः परतोऽशुद्धिरघवृद्धौ विधीयते ॥ स्याच्चेत्पंचतमादह्नः पूर्वेणैवात्र
शिष्यते ॥ अस्यार्थः ॥ अघवृद्धौ दीर्घाशौचे परतोऽशौचे च शुद्धिः परतोऽशौचं यदि पूर्वाशौचमुत्तरस्य पंच
दिना परतोऽनुवर्तते ॥ तदा पूर्वेणैव शुद्धिः ॥ पूर्वस्मादाशौचादधिककालस्यापि तेः पूर्वशेषाच्छुद्धि
रित्यर्थः ॥ यथा षण्मासगर्भपातनिमित्तषडहाशौचमध्ये दशाहपाते पूर्वेणोत्तरनिवृत्तिः ॥ यथा वा त्र्य
हमध्ये स्रावपातनिमित्तचतुरहपंचाहयोरिति कश्चित् ॥ तन्न ॥ दशाहावधि पूर्वशेषशुद्ध्यादेकवा
क्यविरोधात् ॥ षष्ठादिदिने तु पूर्णाशौचं मम रात्रौ तु स्यादहस्तनो विरोधाच्च ॥ अस्मद्गुरवस्तु पंचतमा
दह्न आनंतर्येऽत्र्यूनं ॥ अहादिनेत्स्यात्तदाक्षिप्तविषये पूर्वेणैवाशुद्धिः शिष्यते ॥ दशाहादिरात्रिशेषे
त्र्यहादल्पाशौचानां परस्परं रात्रिशेषसंपाते च तदूर्ध्वादिवृद्धिरित्यर्थमाहुः ॥ क्वचित्पूर्वशेषेणाशु
द्धेरपवादमाह गौतमः ॥ रात्रिशेषे सति द्वाभ्यां प्रभाते तिसृभिरिति ॥ प्रभाते त्वयामे रात्रिशेषे त्वहा
च्छुद्धिर्यामशेषे शुचिस्त्र्यहादिति शातातपोक्तेः ॥ इदं शावांते सूतकपाते सजातीये वा तुल्ये ॥ अ
न्ये चित्तु ॥ रात्रिशब्दः अहोरात्रपरः ॥ अहःशेषे द्वाभ्यां प्रभाते तिसृभिरिति शंखलिखितोक्तेः ॥

॥ अथ यदि दशरात्राः सन्निपतेयुराद्यं दशरात्रमाशौचं ॥ ॥ आनवमाद्दिवसात्

पनुव्रतीप्रेतंनव्रतेनवियुज्यतेइतिमनूक्तेः निर्हरणमंत्यकर्मपरं। एवंमातामहस्य। यथाव्रतस्थोपिसुतःपितुः
पांक्रियांनृप तथामातामहस्यापिदौहित्रःकर्तुमर्हतीत्यपरार्केभविष्योक्तेः। मातापित्रोरुपाध्याया
चार्ययोरौर्ध्वदेहिकं। कुर्वन्मातामहस्यापिव्रतीनभ्रश्यतेव्रतात् इतिकालादर्शोक्तेः। तत्रांत्यकर्मनिमित्तमस्य
पुत्रदशाहमस्त्येव। सगोत्रोवाऽसगोत्रोवायोग्निंदद्यात्सखेनरः सोपिकुर्यान्नवश्राद्धंशुद्धेतुदशमेहनी
तिदिवोदासोक्तवचनात्। अतएवब्रह्मचारिणःशवकर्मणाव्रतान्निवृत्तिरन्यत्रमातापित्रोर्गुरोश्चेति
गौतमीयेऽत्रन्निवृत्तेरेवपर्युदासोनाशौचस्य। संध्यादिकर्मलोपस्तुनास्ति। नत्यजेत्सूतकेकर्मब्रह्मचा
रीस्वकंक्वचित् इतिछंदोगपरिशिष्टात्। पित्रोर्गुरोर्विपत्तौतुब्रह्मचार्यपियःसुतः। सव्रतस्थोपिकुर्वीत
अग्निकुंडोदकक्रियां। तेनाशौचमकर्तव्यंसंध्याचैवनलुप्यते। अग्निकार्यंचकर्तव्यंसायंप्रातश्च
नित्यशइतिचंद्रिकायां॥ संवर्तश्च॥ अत्रकर्मानधिकाररूपाशौचनिषेधएव। अपरार्कमाधवादय
स्तु।एकाहमाशौचमाहुः। आचार्यंवाप्युपाध्यायंगुरुंवापितरंचवा। मातरंवास्वयंदग्ध्वाव्रतस्थस्त
त्रभोजनं। कृत्वापततिनोतस्मात्प्रेतान्नंतत्रभक्षयेत् अन्यत्रभोजनंकुर्यान्नचतैःसहसंवसेत्। ए
काहमशुचिर्भूत्वाद्वितीयेहनिशुध्यतीतिब्राह्मोक्तेः। तदन्नभोजनेतुप्रायश्चित्तंपुनरुपनयनमाशौ
चंच॥ दिवोदासादयस्तु। ब्राह्मोक्तेः॥ प्रथमेऽह्निसंध्यादिलोपः। ब्रह्मचारीयदाकुर्यात्पिंडनिर्वपणं
पितुः। तावत्कालमशौचंस्यात्पुनःस्नात्वाविशुध्यतीति। प्रजापतिवचनात् द्वितीयाहादौपिंडदान
कालएवास्यास्पृश्यत्वमात्रंनान्यदित्याहुः। दशाहमस्पृश्यत्वेपिकर्मांगस्नानविधानार्थमेतदितियुक्तं।
अंत्यकर्माकरणेतुब्रह्मचारिणः। पित्रादिमरणेप्याशौचाभावएव। सोपिब्रह्मचर्यकालएव। समा
वर्तनोत्तरंतुपूर्वमृतानामप्याशौचंभवत्येव। आदिष्टीनोदकंकुर्यादाव्रतस्यसमापनात्। समाप्तेतूदकं
दत्वात्रिरात्रमशुचिर्भवेदितिमनूक्तेः। तत्रापिविकल्पः। पितर्यपिमृतेनैषांदोषोभवतिकर्हिचित्
आशौचंकर्मणोंतेस्यात्त्र्यहंवाब्रह्मचारिणामितिछंदोगपरिशिष्टात्॥ यथाकृतजीवच्छ्राद्धेन
किमप्याशौचंनकार्यमितिहेमाद्रिः शुद्धितत्वेकौर्मे॥ सद्यःशौचंसमाख्यातंदुर्भिक्षेवाप्युपद्रवे डिं
बाहवहतानांचविद्युतापार्थिवैर्द्विजैः। उपद्रवेत्यमरके॥ उपसर्गमृतेचैवसद्यःशौचंविधीयतेइ
ति। पराशरोक्तेः। उपसर्गोन्यमरकइतिशूलपाण्यनिरुद्धभट्टादयः॥ मरीचियाज्ञवल्क्यावपि। आ
पद्यपिचकष्टायांसद्यःशौचंविधीयतेइति। मरणसमयेपिनाशौचं। तथाचशुद्धिरत्नाकरेदक्षः
स्वस्थकालेत्विदंसर्वंसूतकंपरिकीर्तितं। आपद्गतस्यसर्वस्यसूतकेपिनसूतकं। अतःसतिवैरा
ग्येसंन्यासोप्यातुरस्यभवतीतिकेचित्॥ ॥अथकर्मिणः॥ ॥त्रिंशच्छ्लो
कां। तत्तत्कार्येषुसत्रिव्रतिनृपवद्दीक्षितर्त्विक्स्वदेशभ्रंशापत्स्वप्यनेकश्रुतिपठनभिषक्कारुशि
ल्पानुगाणां। संप्रारब्धेषुदानोपनयनयजनश्राद्धसुरप्रतिष्ठा। चूडातीर्थार्थयात्राजपपरिणयना
द्युत्सवेष्वेतदर्थे। नाशौचमितिशेषः। सत्रीअन्नसत्रवान्। मुख्यसत्रस्यदीक्षितपदान्निर्देशः॥ व्रती
अनंतव्रतादिनियमवान्। तत्रमीनांव्रतेइतिविष्णूक्तेः॥ प्रचेताः कारवःशिल्पिनोवैद्यादासीदासा
स्तथैवच राजानोराजभृत्याश्चसद्यःशौचाःप्रकीर्तिताः। कारवःसूपकारादयः। शिल्पिनःचैलनिर्णेज
काद्याः आतुरस्यव्याधिनाशार्थंदानादौतुलादानादेः। प्रारंभोनांदीश्राद्धंसंकल्पोवा। यजनंतडागो

यापवादत्वादिति चरणाः॥ सपिंडाघशौचेन मातापित्रोराशौचापगमो नास्त्येव॥ एवं भर्तुरपि।
रजःपंचपस्विनी दशमदिनात्पूर्वं मातृमरणे ज्ञेया। दशमाहोत्तरं तु स्नानेनैवामातृमरणेऽप्यह महस्तु
च्छितापस्विनी निष्क्रियेत्॥ तत्र संस्कारोपनयनादिप्रत्याहारादिश्रुतिबाधापत्तेः। यत्तु एकत्र
देयाः षट् देयास्त्वादौ श्रुतसंख्याबाधापत्तेः। समुच्चयो निरस्तो द्वादशी। गृहस्थिलयोरन्तर्गतेः। सुतस्य
लघुशुद्धिरित्युक्तेश्च। मातुस्त्वारोहणे तु तपस्विनी। यदा नारी विशेदग्निं प्रियस्य पितृवाक्यात् त
दाशौचं विधातव्यं भर्तृशौचक्रमेण हीति पृथ्वीचंद्रोदये लघुहारीतोक्तेः। मत्रैव पदर्शनीयमेव॥
मृतं पतिमनुव्रज्य पत्नी चेद्दहनं गता तत्र तपस्विनी कार्या पत्न्या देवशुध्यति पुत्रोन्येनाप्य वर
लस्मात्तावदेवाशुचिस्तयोः नवश्राद्धं च पिंडं च पृथक्पतुःसमापयेत्। गृहीमानो चानासुआरणंभिनुः
संस्कारे मातुः सपिंडस्य वा मरणे नायं निर्णयः। अग्निज्ञानकालाद्दिवमानं निमित्तस्य चन सव्यना
त। द्वादशवर्षोत्तरं संस्काराशौचमध्ये सपिंडमरणेप्येवं। यत्तु परार्केनाम। सोन्येर वादा त साध्वी
स्त्रीन भवेदात्मघातिनी। अहाशौचे निवृत्तिश्राद्धं समाप्ते नियमस्त्वकरिष्यति। तन्नं तु राशौचान्तरमन्वा
रोहणे त्रिरात्रमेव परमिति पृथ्वीचंद्रः। आनन्तरस्त्रिपादानुगमनेऽप्याशौचपरमित्यपरार्के। उ
क्तत्वात्स्वीयो गौडास्तु। भर्त्राशौचान्तरमन्वारोहणे त्रिरात्रे। सहगमने तु संपूर्णं। शुद्धहत्यस्य सद्यः शौ
चेन्वारोहणे गौडास्तोक्ते त्रिरात्रत्वाद्भर्तुरपि सहैवलपिंडदानं। एकचितेनानुसहः शौचमित्याहुः। अन्य
त्वायुक्तं। पूर्वशेषेणाशुद्धेरप्रवादात्त्वरमुक्तं षडशीत्यां। पूर्वाशौचेन या शुद्धिः सूतके मृतकेपि च। स
निकामग्निदेहित्वा मतस्य च सुतानपि। निर्णयामत्स्यांति संग्रहेपि। इत्थं विशुद्धिरुदितानकाम
ग्निंदविना। इदं मूलेन दाहकरणे। मातुलादिसंबंधेदाहमात्रकरणे तु त्रिरात्रमेवेत्युक्तं प्राक्। एत
त्रि सूतकाद्द्विगुणं शावं शावाद्द्विगुणमार्तवं आर्तवाद्द्विगुणा सूतिस्ततोपि शवदाहकः। तथाशौ
च। संपाते पिन शावजननं निमित्तकार्यमिति वदः। आशौचेनुसमुत्पन्ने पुनरन्यत्प्रसवेत् कालस्था
त्कालिकी शुद्धिः पूर्वाशौचेन शुध्यतीति प्रजापतिः स्मृतेः॥ आशौचेद्वितीयेपि॥ शातातपः॥ अंत
र्दशाहे जननात्पश्चात्स्यान्मरणं यदि। प्रेतमुद्दिश्य कर्तव्यं पिंडदानं यथाविधि। मार्कंडेयेन पिंडनु
मध्ये चेज्जननं भवेत्। तथैवाशौचपिंडांस्तु शेषान् दद्याद्यथाविधि॥ मातुःपक्षिणिमध्ये पितुरेकाद
शाहं न कुर्यात्। आद्यश्राद्धमशुद्धोपि कुर्यादेकादशेहनीति स्मृतेः। केचित्तिरस्कृत्यादिपरं। वि
प्रादेरत्वाशौचान्तरे एकादशाहश्राद्धं नेत्याहुः। अत एव विज्ञानेश्वरेण दशमपिंडमुक्त्वा एकादशे
येशुचिर्भवेदिति शुचित्वं महैकोद्दिष्टे गविप्रनिमंत्रणपरमिति वदता तत्र श्राद्धे हेरंगत्वं दर्शितं। एवं
वृषोत्सर्गशय्यादावपि। देवयाज्ञिकेनत्वाशौचान्तरेपि भवत्येवेत्युक्तं॥

॥अथाशौचापवादः॥ ॥सप्रपंचः॥ कालतः कर्मतः स्वयमतः मृतेदे
यतः विधानाच्च॥ आद्यो ब्रह्मचार्यादिषु नैष्ठिकानां वनस्थानां यतीनां ब्रह्मचारिणां नाशौचं
कीर्तितं सद्भिः पतिते च मृते तथा इति कौर्मोक्तेः। तत्पदेशावे निदर्शनपाठः। आशौच
मंत्यकर्मोपलक्षणं। ब्रह्मचारी न कुर्वीत शवदाहादिकाः क्रियाः। यदि कुर्याच्चरेत्कृच्छ्रं पुनःसं
स्कारमेव चेति देवलोक्तेः॥ एतन्मित्रापतिरिक्तविषयं। आचार्यं स्वमुपाध्यायं मातरं पितरं गुरुं। निर्हृ

समनुव्रतीयेतेन व्रतेन विमुच्यते इति मनूक्तेः निर्हरणमंत्यकर्मपरं एवं मातामहस्य। यथाव्रतस्थोपि सुतः पितुः
कुर्यात्क्रियां नृप तथा मातामहस्यापि दौहित्रः कर्तुमर्हतीति अपरार्के भविष्योक्तेः। मातापित्रोरुपाध्याया
चार्ययोरौर्ध्वदैहिकं कुर्वन्मातामहस्यापि व्रती न भ्रश्यते व्रतादिति कालादर्शोक्तेः। तत्रांत्यकर्मनिमित्तमस्य
सत्वं दशाहमस्त्येव। सगोत्रो वा सगोत्रो वा योग्निं दद्यात्सखे नरः सोपि कुर्यात्नवश्राद्धं शुद्धे तु दशमेहनी
ति दिवोदासोक्तवचनात्। अत एव ब्रह्मचारिणः शवकर्मणो व्रतान्निवृत्तिरन्यत्र मातापित्रोर्गुरोश्चेति
गौतमीयेपि व्रतनिवृत्तेरेव पर्युदासो नाशौचस्य। संध्यादिकर्मलोपस्तु नास्ति तत्प्रेतसूतकेकर्मब्रह्मचा
रिणः स्वयं कृत्वेति दिवोदासोक्तगृह्यपरिशिष्टात्। पित्रोर्गुरौ विपन्नेपि ब्रह्मचार्यपि यः सुतः। सव्रतस्थोपि कुर्वीत
अग्निं कुंडोदकक्रियां। तेनाशौचमकर्तव्यं संध्या चैव न लुप्यते। अग्निकार्यं च कर्तव्यं सायंप्रातश्च
नित्यश इति चंद्रिकायां।। संवर्तश्च।। अत्र कर्मानधिकाररूपाशौचनिषेध एव। अपरार्के माधवाद्य
ला एकाहमाशौचमाहुः। आचार्यं वाप्युपाध्यायं गुरुं वा पितरं च वा। मातरं वा स्वयं दग्ध्वा व्रतस्थस्त
त्र भोजनं। कृत्वा पतति नो तस्मात्प्रेतान्नं तत्र भक्षयेत्। अन्यत्र भोजनं कुर्यान्न च तैः सह संवसेत्। ए
काहमशुचिर्भूत्वा द्वितीयेहनि शुध्यतीति ब्राह्मोक्तेः। तदन्नभोजने तु प्रायश्चित्तं पुनरुपनयनमाशौ
चं च।। दिवोदासादयस्तु ब्राह्मोक्तेः।। प्रथमेह्नि संध्यादिलोपः। ब्रह्मचारी यदा कुर्यात्पिंडनिर्वपणं
पितुः। तावत्कालमशौचं स्यात्पुनः स्नात्वा विशुध्यतीति। प्रजापतिवचनात् द्वितीयाहादौ पिंडदान
काल एवास्पृश्यत्वमात्रं नान्यदित्याहुः। दशाहमस्पृश्यत्वेपि कर्मांगस्नानविधानार्थमेतदिति युक्तं।
अंत्यकर्माकरणे तु ब्रह्मचारिणः पित्रादिमरणेप्याशौचाभाव एव। सोपि ब्रह्मचर्यकाल एव। समा
वर्तनोत्तरं तु पूर्वमृतानां त्रिरात्रमशौचं भवत्येव। आदिष्टी नोदकं कुर्यादाव्रतस्य समापनात्। समाप्ते तूदकं
दत्वा त्रिरात्रमशुचिर्भवेदिति मनूक्तेः। तत्रापि विकल्पः। पितर्यपि मृते नैषां दोषो भवति कर्हिचित्
आशौचं कर्मणोन्ते स्यात् त्र्यहं वा ब्रह्मचारिणामिति छंदोगपरिशिष्टात्।। यथाकृतजीवच्छ्राद्धेन
किमप्याशौचं न कार्यमिति हेमाद्रिः शुद्धितत्वे कौर्मे।। सद्यः शौचं समाख्यातं दुर्भिक्षे चाप्युपद्रवे डिं
बाहवहतानां च विद्युता पार्थिवैर्द्विजैः। उपद्रवेन्यमरके।। उपसर्गमृते चैव सद्यः शौचं विधीयत इ
ति पराशरोक्तेः। उपसर्गोन्यमरक इति शूलपाणिनिरुक्तमदनरत्नयः।। मरीचियाज्ञवल्क्यावपि। आ
पद्यपि च कष्टायां सद्यः शौचं विधीयत इति। मरणसमयेपि नाशौचं। तथा च शुद्धिरत्नाकरे दक्षः
स्वस्थकाले त्विदं सर्वं सूतकं परिकीर्तितं। आपद्गतस्य सर्वस्य सूतकेपि न सूतकं। अतः सति वैरा
ग्ये संन्यासोप्यातुरस्य भवतीति केचित्।। ।।अथ कर्मतः।। ।।त्रिंशच्छ्लो
क्यां। तत्कार्येषु सत्रिव्रतिनृपवद्दीक्षितर्त्विक्स्वदेशभ्रंशापन्नस्वप्नेकश्रुतिपठनभिषक्कारुशि
ल्पानुगानां। संप्रारब्धे सुदानोपनयनयजनश्राद्धयुद्धप्रतिष्ठा चूडातीर्थार्थयात्राजपपरिणयना
द्युत्सवेष्वेतदर्थे। नाशौचमिति शेषः। सत्री अन्नसत्रवान्। मुख्यसत्रस्य दीक्षितपदात्सिद्धेः।। व्रती
अनंतव्रतादिनियमवान्। तद्व्रतीनां व्रते इति विष्णूक्तेः।। प्रचेताः कारवः शिल्पिनो वैद्या दासीदासा
स्तथैव च राजानो राजभृत्याश्च सद्यः शौचाः प्रकीर्तिताः। कारवः सूपकाराद्याः शिल्पिनः चैलनिर्णेज
काद्याः आतुरस्य व्याधिनाशार्थं दानादौ तुलादानादेः प्रारंभो नांदीश्राद्धं संकल्पो वा। यजनं तडागो

त्सर्गकोटिहोमादिः लघुविष्णुः ॥ व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे । आरब्धे सूतकं न स्यादनारब्धे तु सू
तकं । आरंभो वरणं यज्ञे संकल्पो व्रतसत्रयोः । नांदीश्राद्धं विवाहादौ श्राद्धे पाकपरिक्रियेति । पाकस्य
परिसमाप्तेः । क्रियापाकप्रोक्षणमिति शुद्धिप्रदीपः तन्मंदं दृढयोगाद्बलवत्त्वात् । तीर्थेति । आ
शौचे श्राद्धिकतीर्थयात्रा । विवाहदुर्गयज्ञेषु यात्रायां तीर्थकर्मणि । न तत्र सूतकं तद्वत्कर्म य
ज्ञादि कारयेदिति पैठीनसिस्मृतेः । अत्र विशेषमाह जपः पुरश्चरणादिस्तोत्रपाठः । अवि
च्छेदेन संकल्पितहरिवंशश्रवणादिश्च ॥ अत एवोक्तं ब्राह्मे ॥ गृहीतनियमस्यापि न स्यादन्य
स्य कस्यचिदिति एवं देवपूजादि । मदनपारिजातेप्येवं । शिवविष्ण्वर्चने दीक्षा यस्य चाग्निप
रिग्रहः । श्रौतकर्माणि कुर्वीत स्नातः शुद्धिमवाप्नुयात् । सोऽशुद्धिकाले मंत्रमुक्त्वा वत्सान जपोदे
वार्चनविधिः कार्यो दीक्षान्वितैर्नरैः । नालिप्यते स लेपेन सूतकेनापि तात्मना । राघवभट्टीये ना
रदः ॥ अथ सूतकिनः पूजा वक्ष्यते ह्यागमचोदिता । स्नात्वा नित्यं च निर्वर्त्य मानसं क्रिययाथ
वै । बाह्यपूजाक्रमेणैव ध्यानयोगेन पूजयेत् । यदि कामी न वेत्कामी नित्यमेवं तदाचरेत् । यत्तु
नृसिंहकल्पे । सदा मंत्रं जपन्मुक्त्वा यदि स्यादशुचिर्नरः मनसा विहितस्तत्र स्मरेन्मंत्रं न तद्वचेत्
तन्मूत्राद्यशौचपरं । रामार्चनचंद्रिकायां । अशुचिर्वा शुचिर्वापि गच्छंस्तिष्ठन्स्वपन्नपि । मंत्रैक
शरणो विद्वान्मनसैव सदाभ्यसेत् । कालनियमाभावेतु । स्तोत्रहरिवंशादिहेयमेव । उत्सवोप
यायात्रादि सूतनाशौचे । अयमाशौचाभावोऽनन्यगतित्वे आर्तौ चवेपः ॥ अत्र मूलमाकरे स्प
ष्टं । अत्र दीक्षितस्यावभृथान्तमेवाशौचाभावः । तदादिनाशौचमस्त्येव । तेन वैतानोपास
नाकार्या इति वैतानत्वेऽप्यवभृथादिनं भवत्येव । अत एवोक्तं माधवीये ब्राह्मे ॥ तद्वद्धीनदीक्षायस्यै
विप्रास्यमहामखे स्नानं त्ववभृथे यावत्तावत्तस्य न सूतकमिति वैतानोपासनाः कार्या इति अन्ये नेव सि
द्धेः । ऋत्विजां दीक्षितानां चेति । पुनर्दीक्षितग्रहणं यजमानेऽस्वयंकर्तृत्वार्थे स्नानशास्त्रार्थं चेति । वि
ज्ञानेश्वरः ॥ वस्तुतस्तु दीक्षणीयासंस्कृतस्य प्रागवभृथात्कर्मसाध्यर्थं दीक्षितग्रहणं । तेन ततः
निषेधपूर्वेऽप्येव । यत्तु आरंभो वरणं यज्ञे इति । तदृत्विक्परं तथा च छंदोगपरिशिष्टे । नदीक्षिणया
परं यज्ञेन कृच्छ्रादितपश्चरन्निति । शुद्धितत्त्वेप्येवं । ऋत्विजां च मधुपर्कोत्तरमाशौचाभावः । गृही
तमधुपर्कस्य यजमानान्नमृत्विजः । पश्चादशौचे पतिते न भवेदिति निश्चयः । इति वा स्याद्य न
एव गर्गाङ्गारः । चतुर्णां वरणोपस्येऽन्येषामाशौचे अग्रगमितमित्याह । एवं स्मार्ते पितुलाकोटि
होमादौ मधुपर्केऽसत्तिदोषाभावो ज्ञेयः ॥ यत्तु आरंभो वरणं यज्ञ इति तत्रापि मधुपर्कोत्तरं ज्ञेयं तेन
नाधाने पिपशुबंधादौ तदभावादन्यैर्भवतीति सिद्धं । अपवादांतरमाह याज्ञवल्क्यः ॥ वैतानो
पासनाः कार्याः क्रियाश्च श्रुतिचोदनात् । तत्त्यागमात्रे स्नानोत्तरं स्वयं कर्तव्यं । श्रौते कर्मणि तत्
कालं स्नातः शुद्धिमवाप्नुयात् । इति स्मृतेः ॥ त्यागातिरिक्तं तु श्रौते स्मार्ते चान्यस्यैव कर्तृत्वं सूतके
मृतके चैव चव्यशक्तौ श्राद्धभोजने । प्रवासादिनिमित्तेषु हावयेन्न तु हापयेदिति बृहस्पत्युक्तेः ॥ वि
स्मान्नित्यवैतानवर्ज्यं शालाग्नौ चैके न्यएतानि कुर्युरिति पैठीनसिस्मृतेश्चेति विज्ञानेश्वरः
एकमहणं पूजार्थं तेन स्मार्तं कार्यमेवेति हारलतायां । दाक्षिणात्यास्तु विकल्पमाहुः ॥ अपरा

र्मादिनिबंधास्तुश्रौतंसर्वंस्वयंकार्यंस्मार्तंत्यागातिरिक्तंऽन्यस्यैवकर्तव्यं।त्यागमात्रंतुस्वयं।कर्मवैता
निकंकार्यंस्नानोपस्पर्शवान्स्वयमितिहारीतोक्तेः।दर्शंचपूर्णमासंचकर्मवैतानिकंचयत् सूतके
पिसजन्मोहात्याद्यग्निश्चीयतोद्विजइतिमरीच्युक्तेः।जन्महान्योर्वितानस्यकर्मत्यागोनविद्यतेशा
लाग्नौकेवलोहोमःकार्यएवान्यगोत्रजैरितिजावालोक्तेश्चेत्याहुः।आशार्केप्येवं।सूतके तुसमु
त्पन्नेस्मार्तंकर्मकथंभवेत् पिंडयज्ञंचरुंहोममसगोत्रेणकारयेदितिजातूकर्ण्योक्तेश्च चरुःस्मा
र्तस्थालीपाकः।अवणाकर्मादिश्चेतिविज्ञानेश्वरः।प्रारब्धंतुसपिंडेनापिवार्यं।नचतत्र मेकु
र्वाणःसनाभ्योप्यशुचिर्भवेदितिमनूक्तेः।छंदोगपरिशिष्टेपि।होमंश्रौतेतुवर्तव्यःशुष्कान्नेनफ
लेनवा अकृतंहावयेत्स्मार्तंतदभावेकृताकृतं।अकृतंव्रीह्यादिकृतान्नकृतंतंडुलादि।स्मार्तेहो
मादौतुविकल्पोज्ञेयः।शालाग्नौचैकेइतिमाधुक्तेः।यदाकरणंतदान्यद्वारा।अत्रेदंतत्त्वम् वैश्वं
देवादीनांदशाहमहोमेपिनाग्निविच्छेदस्तेनैकार्यं।तेन्निरीपाद्यैःकर्पंचतत्रत्तानहू यमा
नोग्निर्लौकिकःसंपद्यतइतिसुदर्शनभाष्यवचनात्।समारूढत्वग्नौनेनाग्निकार्यं।किंतुपु नरा
नमेवसमारोपःप्रत्यवरोह      योरणौवाप्रवादाभावादनन्यकर्तृकत्वाच्च अन्यथापुनराधा
नमपिस्यात्।यत्त्वाश्वलायनः।।नैवापिसूतकेशावेपर्वणीष्टिमहापदि।उष्मवत्यांचभार्यायांन
कुर्यात्तांकदाचनस्मार्तोग्निःसूतकेशावेस्वयंनजुहुयाद्द्विजः।श्रौताग्निस्तुसहकृत्वासमाप्ते वास्त
यहुनेदिति।तदपिसमारूढपरं।तदाहसएव।स्मार्तोग्निरात्मनोन्येषामभावेसूतकादिषु।।समा
रोप्यनदेतेनुविहृत्यजुहुयात्स्वयमिति।तथामनुः।।नत्यहेनाग्निशुक्तिपाइति।वैश्वदेवस्य त्वग्नि
साध्यत्वेपिवचनान्निवृत्तिः।विप्रोदशाहमासीनवैश्वदेवविवर्जितइतिसंवर्तोक्तेः।यद्यपिपंच
यज्ञविधानंतुनकुर्यान्मृत्युजन्मनोरितिनैवोक्तेः।श्वेनिषेधोव्यर्थः।तथाप्यापस्तंबादी नांवै
श्वदेवस्यपंचयज्ञभिन्नत्वात्पृथङ्निषेधः।हरदत्तस्त्वाशौचेपिवह्नैवैश्वदेवःकार्यः।तस्यब्राव
णाधायोपदात्माशुचिर्यदेशइतिब्रह्मयज्ञस्यैवाशौचेविशिष्यनिषेधात्।संध्यादीनामप्यपवाद
माह।अपरार्केपुलस्त्यः।।संध्यामिष्टिंचरुंहोमंयावज्जीवंसमाचरेत्।नत्यजेत्सूतकेवापित्य
जन्गच्छेदधोद्विजः।सूतकेमृतकेचैवसंध्याकर्मसमाचरेत्।मनसोच्चारयेन्मंत्रान्प्राणायाम
मृतेद्विजः।।यत्तुचंद्रिकायांजावालः।।संध्यांपंचमहायज्ञान्नैत्यकंस्मृतिकर्मच।तन्मध्येहाप
यत्तेषांदशाहांतेपुनःक्रियेति।।यच्चसंवर्तः।सूतकेकर्मणांत्यागःसंध्यादीनांविधीयते।।य
च्चविष्णुपुराणे।सर्वकालमुपास्यानुसंध्ययोःपार्थिवेष्यते।अन्यत्रसूतकाशौचविभ्रमातुर
भीतितःइतितत्पूर्णसंध्यापरं।अर्ध्यांतामानसीसंध्याकुशवारिविवर्जितेतिशुद्धिदीपेच्यवनो
क्तेः।।पैठीनसिस्त्वर्घ्येमंत्रोच्चारणमाह।सूतकेसावित्र्यांजलिमक्षिप्यप्रदक्षिणंकृत्वासूर्यं ध्याय
नमस्कुर्यात्।प्रयोगपारिजातेभरद्वाजोपि।सूतकेमृतकेकुर्यात्प्राणायाममंत्रकं।तथामा
र्जनमंत्रांस्तुमनसोच्चार्यमार्जयेत्।गायत्रींसम्यगुच्चार्यसूर्या ध्यंचनिवेदयेत्।मार्जनंतुन
वाकार्यमुपस्थानंनचैवहि।यहणेश्राद्धादावप्याशौचापवादमाहव्याघ्रः।।स्मार्तकर्मपरित्यागो
राहोरन्यत्रसूतकेइति।लैंगेपि।सूतकेमृतकेचैवनदोषोराहुदर्शने।तावदेवभवेच्छुद्धिर्यावन्मु

येनैवतस्यशुद्धिर्नेचान्यथा।एतद्बुद्धिपूर्वे।सर्वेपाकरणेतुमाधवीयेवशिष्ठः।यः आत्मत्यागिनांकुर्या
त्स्नेहात्प्रेतक्रियांद्विजः।सतप्तकृच्छ्रसहितंचरेच्चांद्रायणव्रतं।अज्ञानेतु॥कृत्वाग्निमुदकंस्ना
नंस्पर्शनंवहनंकथां रज्जुच्छेदाश्रुपातंचतप्तकृच्छ्रेणशुध्यतीतिशेषः।प्रत्येकंबुद्धिपूर्वेएतद्दि
तेमदनपारिजातः।प्रत्येकंतुस्पर्शाश्रुणोर्मिताक्षरायां।तच्चैवंकेवलस्पर्शमश्रुवापातेतप
देपूर्वोक्तानामकारीचेदेकरात्रमभोजनं।एकरात्रंतुनाश्नीयात्त्रिरात्रंबुद्धिपूर्वकमितिमाधवीये
उक्तत्वात्।अन्येषुसर्वत्र।एषाममंत्रमेवैनंयोवहेद्दहेत्तोपिवा।कटोदकक्रियांकृत्वाकृच्छ्रसां
तपनंचरेत्।अज्ञानेत्वर्द्धं।एतदनाहिताग्नेः।आहिताग्नेःकृच्छ्रएवेतिमाधवः॥मिताक्षरायां
आत्मनस्त्यागिनांनास्तिपतितानांतथाक्रिया तेषामपितथागंगातोयेसंस्थापनंहितं।आ
हिताग्नेस्तुविशेषोहेमाद्रौभविष्ये।वैतानेप्रक्षिपेदग्नीनावसथ्यंचतुष्पथे।पात्राणितुदहेदग्नौ
सामिकेपापकर्मणि॥छंदोगपरिशिष्टेपि।महापातकसंयुक्तोदैवात्स्यादग्निमान्यदि।पुत्रा
दिःपालयेदग्नीन्युक्तश्चादोषसंक्षयात्।प्रायश्चित्तंनकुर्याद्यःकुर्वन्वाम्रियतेयदि।गृह्यंतेनि
र्वापयेच्छ्रौतमप्स्वस्येत्सपरिच्छदः।पात्राणिदद्याद्विप्रायदहेदप्स्वेववाक्षिपेत्।माधवीयेपरा
शरः॥आहिताग्निर्मृतोविप्रश्चांडालेनात्मघातकः।दहेनंब्राह्मणंविप्रोलोकाग्नौमंत्रवर्जिते
प्राजापत्यंचरेत्पश्चाद्विप्राणामनुशासनात्।दग्ध्वास्थीनिपुनर्गृह्यक्षीरेणप्रक्षालयेत्ततः।स्वेना
ग्निनास्वमंत्रेणपृथगेवपुनर्दहेत्।हेमाद्रौतु।दाहयित्वाशवंतेषांशूद्रैर्विधिपूर्वकमित्युक्तं।ए
तद्बुद्धिपूर्वमरणेज्ञेयं।तालेप्रेत्यापिगच्छंतियेकेचात्महनोजनाइति।अनावात्महननेएवंदो
षोक्तेः।प्रमादमरणेत्वाशौचादिसर्वंभवत्येव।तदाहांगिराः॥ ॥अथकश्चित्प्रमादेनम्रियेता
ग्न्युदकादिभिः।तस्याशौचंविधातव्यंकर्तव्याचोदकक्रिया।नान्येपि।प्रमादादपिनिःशंकस्त्व
कस्माद्विधिचोदितः।शृंगिदंष्ट्रिनखिव्यालविषविद्युज्जलादिभिः।चंडालैरथवाचौरैर्निह
तोवापिकुत्रचित्।तस्यदाहादिकंकार्यंयस्मान्नपतितस्तुसइति॥प्रमादमरणेत्रिरात्रमाशौच
मितिगौडाः।शुद्धितत्त्वादयः।दशाहादितिदाक्षिणात्याः।अस्यापवादोहेमाद्रौभविष्ये।प्रमादा
दिच्छयाचापिनकुर्यात्सर्पतोमृते।नागपूजांविनानकुर्यादित्यर्थः॥बौधायनोऽपि।बुद्धिपूर्वा
त्स्वहंतॄणांक्रियालोपोविधीयते।क्रियात्मकर्म।तत्तद्धर्मेणनिमित्तदानादिकार्यं।तच्चविष्णुप्र
काशादेशानानयीयेच।व्याघ्रेणनिहतेविप्रेविप्रकन्यांविवाहयेत्।सर्पदष्टेनागबलिर्देयःसर्प
श्चकांचनः।चतुर्निष्कमितंहैमंगजंदद्याद्गजेहते।राज्ञाविनिहतेदद्यात्पुरुषंतुहिरण्मयं।चोरेण
निहतेधेनुंवैरिणानिहतेवृषं वृषेणनिहतेदद्याद्यथाशक्त्याचकांचनं॥शय्यामृतेप्रदातव्या
शय्यातूलिसमन्विता।निष्कमात्रसुवर्णस्यविष्णुनासमधिष्ठिता शौचहीनेमृतेचैवद्विनिष्कं
स्वर्णजंहरिं।संस्कारहीनेचमृतेकुमारंसुप्रदापयेत्।निष्कमात्रस्वर्णमितंदद्यादश्वंहयाहतेऽणु
नाहतेक्षेत्रपालंस्थापयेन्निजशक्तितः।सूकरेणहतेदद्यान्महिषंदक्षिणान्वितं।कृमिभिश्च
मृतेदद्याद्गोधूमान्पंचखारिकाः।वृश्चिकस्पृष्टेदद्याल्लोचनांवस्त्रसंयुतं शृंगिणानिहतेदद्या
द्वृषभंवस्त्रसंयुतं।शकटेनहतेदद्यादश्वंसोपस्कारान्वितं।भृगुपातेमृतेचैवप्रदद्याद्धान्यपर्वतं

अग्निना निहते कार्यमुदपानं स्वशक्तितः। दंष्ट्रिणा निहते चैव कर्त्तव्या सदने सभा। शृंगेण निहते
दद्यात्महिषीं दक्षिणान्वितां। अश्मना निहते दद्यात्सवत्सां गां पयस्विनीं। विषेण च मृते दद्यात्
मेदिनीं हेमनिर्मितां। उद्बंधनेन च मृते कपिं कनकनिर्मितं। मृते जलेन वरुणं हेमं दद्याद्धि निष्कजं
विषूचिकामृते स्वादु भोजयेच्च शतं द्विजान्। घृतधेनुः प्रदातव्या कंठे कवले मृते। काशश्वासेन
च मृते अष्टकृच्छ्रं व्रतं चरेत्। अतीसारमृते लक्षं गायत्र्या मंत्रतो जपेत्। शाकिन्यादिग्रहहते
जपेद्रुद्रं पयो दिनं। विद्युत्पातेन निहते विद्यादानं समाचरेत्। अंतरिक्षमृते कार्यं वेदपारायणं तथा
सच्छास्त्रपुस्तकं दद्यादस्पृश्यस्पर्शतो मृते। पतितेन च मृते कुर्यात्प्राजापत्यांस्तु षोडश। मृते चाप्यप
हितेन कृच्छ्राणां नव निंचरेत्। एवं कृते विधाने तु विदध्यादौर्ध्वदेहिकं। तथा वैधमरणेऽपि न दोषः
तदाह तु मनुर्वृद्धगार्ग्यौ॥ वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः। आत्मानं घातयेद्यस्तु भृग्व
ग्न्यनशनांबुभिः। तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसंचयः। तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमा
चरेदिति हेमाद्रौ विष्णुधर्मेपि। नरस्तु व्याधिरहितो न त्यजेदात्मनस्तनुं। असूर्या नाम ते लोका
अंधेन तमसावृताः। तांस्ते प्रेत्याभिगच्छंति ये के चात्महनो जनाः। अरिष्टे समनो ज्ञात्वा मृत्युका
लमुपस्थितं। व्याधितो भिषजा त्यक्तः शूरो वायुषि चात्मनः। यथायुगानुसारेण संत्यजेदात्मनस्तनुं
तस्मिन्काले तनुत्यागाद्यथेष्टं फलमाप्नुयात्। आयुर्वस्तु पुराणेषु मरणाभ्यासनस्य च। नेति गौडना
मपपाठः॥ उत्तरार्धे असंगतेः॥ क्षत्रियस्य तु संग्रामे मृते मंत्रैरयोचितः॥ अपरार्के ब्रह्मगर्गः॥ जो
जीवितुं न शक्नोति महाव्याध्युपपीडितः। सोऽग्न्युदकमहायात्रां कुर्वन्नाभ्युदयं लभेत्। अतोऽनेनैवस्य
मारणवचो निचयात्प्रयागातिरिक्ते विधिस्त्वरोगाद्युपहतानामधिकारः। सोपि जीर्णवानप्रस्थ
स्यैवेति विज्ञानेश्वरदेवयाज्ञिकादयः॥ अत एव मिताक्षरायां भृगुपातानशनादिकं वानप्रस्थ
स्यैवोक्तं॥ मनुरपि॥ आसां महर्षिचर्याणां त्यक्त्वान्यतमया तनुं। वीतशोकभयो विप्रो ब्रह्मभ
यामकल्मत इति। तेनान्यत्रापि न द्विषयतेव। मूले काश्यादिति केचित्। तन्न॥ वानप्रस्थमरणाशौ
चनिषेधात्॥ तेन गृहस्थादिपरमेवेदं तेन पतेनोधिकारः। काम्ये न धिकारात्र। नैमित्तिक
त्वे त्वकरणे दोषाभावनित्यता च स्यात्॥ प्रयागे तु रोगिणां च॥ यत्तु॥ शूद्राश्च स्त्रियो वैश्याश्चांत्य
जाश्च तथाधमाः॥ एते त्यजेयुः प्राणांस्तु नैव वर्जोपि द्विजन्मपतिर्ब्राह्मणस्तु ब्रह्महा नाम
हा भवेदिति॥ तन्निर्मूलमिति मदनः॥ तत्त्वं तु हेमाद्रौ व्रतकांडे लिखनान्निर्मूलत्वं चिंत्यमेव। ब्रा
णानुपतित्वेति भृगुपातमात्रपरमुक्तं। ब्राह्मणस्याप्यनुज्ञातमिति॥ वक्ष्यमाणविरोधाच्च। मा
त्स्यपुराणे। अब्राह्मणो वा स्वर्गादिमहाफलजिगीषया। प्रविशेज्ज्वलनं तोयं कुर्यादनशनं तथा
तत्प्रयागातिरिक्तपरमिति केचित्। हेमाद्रौ तु नदर्थे प्रयागवटशाखाद्यारिन्युक्तेः ब्राह्मणस्यापि भे
पिनेति मतीयते। माधवीये अपरार्के चादिपुराणे। दुश्चिकित्स्यैर्महारोगैः पीडितस्तु पुमानपि। प्रवि
शेज्ज्वलनं दीप्तं करोत्यनशनं तथा। अगाधतोयराशिं च भृगोः पतनमेव च। गच्छेन्महापथं वापि
तुषारगिरिमादरात्। प्रयागवटशाखाग्राद्देहत्यागं करोति वा। स्वयं देहविनाशस्य काले प्राप्ते महाम
तिः। उत्तमान्प्राप्नुयाल्लोकान्नात्मघाती भवेत्क्वचित्। एतेषामधिकारस्तु सर्वेषां सर्वजंतुषु। न

एणमथनारीणां सर्ववर्णेषु सर्वदा। देहशमरणेपि यो जीवनांकुत्रचिद्भवेत्। अशौचंस्यान्महतेपावकज्वा
नलहतेतथा। नारायणंसंस्मरेद्यस्तु तस्मात्स्यानभियक्रियः॥ काष्ठपाषाणमध्यस्थो जान्हवीजलम
ध्यगः। अविमुक्तोन्मुखस्तस्य कर्ममूलगतोहरः॥ प्रणवंतारकं ब्रूते नान्यथाकुत्रचित्क्वचित्॥ हेमा
द्रौचैवं। अत्र प्राप्तकाले इत्युक्तेरप्राप्तमरणकालानां स्त्रियाअन्वारोहणेसंग्रामे वाशौचम्। पृथ्वी
चंद्रस्तु तत्रापि त्र्यहमाह। शुद्धितत्त्वादिगौडग्रंथेष्वप्येवं। एतच्च वृद्धादिमरणं कलौनिषिद्धं। भृग्वग्निप
तनैश्चैव वृद्धादिमरणं तथेति माधवेन पृथ्वीचंद्रेण च कलिवर्ज्येषूक्तेः। नचात्र यावदुक्तनिषेधः। वि
शिष्टोद्देशोवाक्याभेदात्। नचकलौवानप्रस्थाश्रमनिषेधादेवसिद्धेर्मरणनिषेधोव्यर्थइतिवाच्यं
सर्ववर्णेष्विप्त्यादिभिर्लिङ्गैस्तस्यापिप्राप्तेः। काम्यंभवत्येव। यैवेनन्वोविसर्जनीतिश्रुतः संन्यास
कोचायोगात्। नचैयस्त्वाभाविकं प्रत्युपराधीरपदोक्तेः। मात्स्यभारतादिषु नलोकवचनाज्ञातन
वेदवचनादपि मतिरुत्क्रमणीयातेप्रयागमरणं प्रतीत्युक्तेः। अतएवविष्णुधर्मेरोग्यादिमरणमुक्तो
क्तेः यथाशुगानुसारेणसंत्यजेदात्मनस्तनुमिति। कार्यामप्युक्तं मात्स्ये। अग्निप्रवेशमेकुर्युरविमु
क्तेविधानतः प्रविशंतिमुखंतेमेतिः संदिग्धवचनेते। हेमाद्रौ विवस्वान्। सर्वेंद्रियविमुक्तस्यस्व
व्यापारस्यमस्यच। नापश्चिन्नमनुज्ञातमग्निपातोमहापथः। धर्मार्जनासमर्थस्य कर्तुःपापानि
तस्यच। ब्राह्मणस्याप्यनुज्ञातं तीर्थेप्राणविमोक्षणं। अपरार्केचैवं। सहगमनं कलौभवत्येव।
कलौनान्यागतिस्त्रीणां सहानुगमनादृतेइति॥ ब्रह्मवैवर्त्तात्। एतेनमरणांतिकप्रायश्चित्तं
काशीखंडादौचानुवर्णस्यतत्तुत्यागविधयश्चयुगांतरपराएव। प्रयागेपिविस्थलीसेतौस्कांदे।
यथाकथंचित्तीर्थेस्मिन्प्राणत्यागंकरोतियः। तस्मान्माघानदीपोतनप्राप्नुयादीप्सितान्यपि॥ पा
द्मेविष्णुः॥ देहत्यागंतथावीराः कुर्वंतिममसन्निधौ। मत्तनुंप्रविशन्त्येवनपुनर्जन्मतेनराः॥ कौर्मे
व्याधितोयदिवादीनः क्रुद्धोवापिभवेन्नरः। गंगायमुनमासाद्ययस्तुप्राणान्परित्यजेत्। ईप्सिता
न्लभतेकामान्वदंतिमुनिपुंगवाः। तथा॥ यागनिर्योगयुक्तस्यसत्त्वस्थस्यमनीषिणः। स्याग
तिःत्यजतःप्राणान्गंगायमुनसंगमे॥ वाराहे॥ तत्रयोमुंचतिप्राणान्वटमूलेषुसुंदरि। सर्वलो
कानतिक्रम्यममलोकंप्रपद्यते॥ तथा॥ अकामोवासकामोवावटमूलेषुसुंदरि। शीघ्रप्राणान्
प्रमुंचेत्तपदीव्हेतरमांगतिं॥ तथा॥ पंचयोजनविस्तीर्णेप्रयागस्यतुमंडले। व्यतीतान्पुरुषा
न्सप्तभविष्यांश्चचतुर्दश॥ नरस्तारयतेसर्वान्यस्तुप्राणान्परित्यजेत्॥ ब्राह्मे॥ ध्यात्वाविष्णु
पदांभोजंप्रयागेविमुनत्सरः। तनुंत्यजतिवैमाघेनस्यमुक्तिर्नसंशयः॥ दुष्कृतोपिदुराचारोब्र
ह्महत्यादिपातकी। हरिंध्यात्वात्यजेद्देहंप्रयागेमुक्तिमाग्भवेत्। भविष्योत्तरे॥ समाःसहस्रा
णितुसप्तवैजलेदशैकमग्नौपतनेचषोडश। महाहवेषष्टिरशीतिगोग्रहे अनाशकेभारतचा
क्षयागतिरितिसामान्यतोपिफलं। एवमन्येविषयाज्ञेयाः॥ यत्तुगौडाः॥ प्रयागादिमरणंब्रा
ह्मणभिन्नविषयमित्याहुः। तन्नपितामहचरणैःप्रयागविधौ कृतमितिनात्रोच्यते। अ
त्रदशाहमाशौचं त्रिरात्रस्यमाप्तकालगोचरत्वादितिमदनः। युक्तंतुत्रिरात्रं॥ दिवोदासीयेऽ
प्येवमशुद्धिस्तत्त्वेपिकश्यपः॥ अनशनमृतानामग्निहतानामग्निजलनविषाणांभृगुसं

वचनमस्तिपुत्रकर्तृकसर्वप्रायश्चित्तादिविप्लवापत्तेः। प्रागुक्तबौधायनवचनाच्चेतिदिक्॥ इदंप्रायश्चि
त्तार्हाणामेव। प्रायश्चित्तानर्हाणांतुपतितोदकमात्रंकार्यमितिकेचित्॥ मदनपारिजातादिस्वर
सोप्येवम्॥ वस्तुतस्तुतदर्हानर्हयोर्वचनेनुपादानादविशेषात्तत्रापिनारायणबलिर्यथाश्राद्धंचे
तियुक्तं। पतितोदकविधिस्तु। पित्राद्यतिरिक्तविषयइत्यपरे। सयथा॥ हेमाद्रौब्राह्मे॥ पतितस्य
तुकारुण्याद्यस्तृप्तिंकर्तुमिच्छति। सहिदासींसमाहूयसर्वेगांदत्तचेतनां। अशुद्धघटहस्तांताम
थावृत्तब्रवीत्यपि॥ हेदासीमच्छमूल्येनतिलानानयसत्वरं। तोयपूर्णंघटंचेमंसतिलंदक्षिणामु
खी। उपविश्यतुवामेनचरणेनततःक्षिप। कीर्तयेत्पातकीसंज्ञांत्वंपिबेतिमुहुर्वदेत्। निशम्यत
स्यवाक्यंसालब्धमूल्याकरोतितत्। एवंकृतेभवेत्तृप्तिःपतितानांनचान्यथेति। इदंचमृताहे
कार्यं। पतितस्यदासीमृताह्निपदाघटंविवर्जयेदेतावतापमुपचरितोभवतीतिमदनरत्नेविष्णू
क्तेः। इदंचात्मत्यागिविषयं। आत्मत्यागिनःपतितास्तेनाशौचोदकभाजःस्युरित्युपक्रम्यविष्णु
नाएतस्याभिधानादितिगौडाः। उपलक्षणत्वात्सर्वेषामितितुयुक्तं। यत्तुकश्चिदाह। यःपतितो
घटस्फोटेनबाध्यतेबहिःकृतस्तद्विषयाणिक्रियानिषेधवाक्यानि। जीवत्येवतस्मिंस्तत्कर्म
णःकृतत्वात्। पुनःकरणाभावाद्दिति। सबंधुत्यागेनजातवैराग्यस्यकृतप्रायश्चित्तस्याप्यकर
णापत्तेर्भिन्नाक्षरादिविरोधमपश्यन्मूर्खैरप्युपेक्षणीयः। नचकृतघटस्फोटस्यसंग्रहविधिर्नि
तिवाच्यं। मनुनाकृतस्यघटस्फोटस्यत्यागमुक्त्वाप्रायश्चित्तेतुचरितेपूर्णंकुंभमपांनवं॥ तेनैवसा
र्द्धंप्रास्येयुः स्नात्वापुण्येजलाशये। इत्युक्तेः। अन्यथाप्रायश्चित्तमात्रेणतत्संगात्। अतोघटस्फो
टेनबहिःकृतस्यापिपित्रादेस्त्वतेनारायणबलिः॥ निषेधास्तुपित्राद्यादिपराइतितत्त्वं। केचि
त्तुनारायणबलौकृतेप्यंतकर्म्मसपिंडनवर्ज्जंकार्यं। गोब्राह्मणहतानांचपतितानांतथैवच। ऊ
र्ध्वमाब्दमतीतानांनैवकार्यासपिंडनेतिवचनात्। ब्राह्मणादिहतेतातेपतितेसंगवर्ज्जितइति।
श्राद्धप्रकाशोक्तेश्चेत्याहुः। तेहेमाद्रिस्थपूर्वोक्तषट्त्रिंशन्मतविरोधात् निर्मूलत्वाच्छ्राद्धप्रका
शस्यवृद्धिश्राद्धविषयत्वादुपेक्ष्याः॥ नारायणबलिस्तुहेमाद्र्यनुसारेणोच्यते। तत्रादौक्रिया
निबंधेगारुडेतर्पणमुक्तं। कार्यंपुरुषसूक्तेनमंत्रैर्वावैष्णवैरपि। दक्षिणाभिमुखोभूत्वाप्रेतंविष्णु
मितिस्मरन्। अनादिनिधनोदेवःशंखचक्रगदाधरः। अक्षय्यःपुंडरीकाक्षप्रेतमोक्षप्रदोभवेति
शुक्लैकादश्यांदेशकालौसंकीर्त्यामुकगोत्रस्यामुकस्यादुर्मरणात्मघातज दोषनाशार्थं। औ
र्ध्वदेहिकेसंप्रदानत्वयोग्यतासिध्यर्थंनारायणबलिंकरिष्येइतिसंकल्प्यब्रह्माणंविष्णुंशिवंयमं
प्रेतंपंचकुंभेषु॥ विष्णुःस्वर्णमयःकार्योरुद्रस्ताम्रमयस्तथा ब्रह्मारौप्यमयस्तत्रयमोलोहमयोभ
वेत्। प्रेतोदर्भमयःकार्यइतिगारुडोक्तासुहेमीषुवाप्रतिमासुषोडशोपचारैःपुरुषसूक्ते
नाभ्यर्च्याग्निप्रतिष्ठाप्यचरुंपुरुषसूक्तेनप्रत्यृचंनारायणायेदमितिहुत्वा देवानामग्रेदक्षिणा
ग्रदर्भेषुविष्णुरूपंप्रेतंस्मरन्। नामगोत्राभ्यांमधुघृततिलयुतान्दशपिंडान्यज्ञोपवीत्येवअमु
कगोत्रअमुकप्रेतविष्णुरूपायतेपिंडउपतिष्ठतामितिदत्वाकुशैःपुरुषसूक्तेनाभिमंत्र
येतेयममितिसूक्तेनपिंडानतुमंत्रशंखोदकेनचाभिषिच्याभ्यर्च्यामुकशर्माणममुकगोत्रंवि

यामदेशांतरमृतानांजातदंतानांचत्रिरात्रमिति। स्वेच्छामरणेतुप्रायश्चित्तेपि। पूर्वोक्तत्वान्महादेहदा
शौचादिनिषेधस्थलदानीमेवावत्सरांतेतुसर्वमौर्ध्वदेहिकंकुर्यात्॥ गोब्राह्मणहतानांचपतितानां
तथैवच। ऊर्ध्वंसंवत्सरात्कुर्यात्सर्वमेवौर्ध्वदेहिकमिति हेमाद्रौषट्त्रिंशन्मतात्। एवंम्लेच्छीकृ
तानामपिगयाश्राद्धमपिकार्यं॥ ब्रह्महाचकृतघ्नश्चगोघातीपंचपातकी सर्वेतेनिष्कृतिंयांति
गयायांपिंडपातनादित्यग्निपुराणात्। एवंब्राह्मेपि॥ किंचपतितानांतुगतेसंवत्सरेक्वचित्
देशधर्म्मप्रमाणत्वात्गयाकूपेस्वबंधुभिः। मार्तंडपादमूलेवाश्राद्धंहरिहरौस्मरन्। सर्पदे
त्यर्थः। तत्रवर्षमध्येकृत्यमुक्तंपराकेवापुराणे॥ शुक्लपक्षेतुद्वादश्यांकुर्याच्छुक्लेतुवत्सरं। द्वा
दशाहानिवाकुर्यात्शुक्लेचप्रथमेहनि। छागलेयः॥ नारायणबलिःकार्योलोकगर्हाभयान्न
रैः। तथातेषांभवेच्छौचंनान्यथेत्यब्रवीद्यमः॥ व्यासः॥ नारायणंसमुद्दिश्यशिवंवायत्प्रदीयते
तस्यशुद्धिकरंकर्मतद्भवेन्नेतरत्तथेति। स्वात्मघातादिप्रायश्चित्तंकृत्वाकार्यः॥ तदुक्तंहेमा
द्रौषट्त्रिंशन्मते। कृत्वाचांद्रायणंपूर्वंक्रियाकार्यायथाविधिः॥ नारायणबलिःकार्योलोकग
र्हाभयान्नरैः। पिंडोदकक्रियाःपश्चात्तर्पणोत्सर्गादिकंचयत्। एकोद्दिष्टानिकुर्वीतसपिंडीकर
णंतथा। द्विवोढाशीर्षच्छेदशातातपस्तु। पतितेवमृतेशुश्रोभाजाः तत्त्वेनोऽशः॥ मृतेवापत्यर
हितेकृच्छ्राणांनवतिंचरेत्॥ इत्याह इदंप्रायश्चित्तार्हपित्रादिविषयं। इदंयेरपरित्यक्तापेवम्
दाविष्णादिनः। यातयंतिस्वमात्मानंचांडालादिहताश्चये। तेषांपुत्राश्चपौत्राश्चद्दमपासनभिभु
ताः। पयाश्रद्धत्तनच्चुतिविष्णुनामप्रतिष्ठितं। तथातेसंभवस्पामितमस्कृत्यस्वयंभुवे। इतिहे
माद्रौनेवोक्तेः। तत्रैवबौधायनोपि॥ नारायणबलिंव्याख्यास्यामोभिशस्तपतितात्मत्या
गिनांब्राह्मणहतानांचद्वादशवर्षाणित्रीणिवावारेमरणयत्रयस्यतत्रतत्रकुर्वीतेति। एत
यरिशिष्टेतु। चांडालादित्याद्युक्त्वादग्ध्वाशरीरमेतस्यसंस्थाप्यास्थीनियत्नतः। प्रायश्चित्तंतु
कर्तव्यंपुत्रेश्चांद्रायणत्रयमित्युक्तं। मदनरत्ने॥ ब्राह्मणहतानांचद्वादशवर्षाणित्रीणिवाकु
र्वीतेति। मदनरत्नेब्राह्मे॥ प्रमादादपितिःशंकःत्वकस्माद्विधिचोदितः चांडालेर्ब्राह्मणैश्चौ
रैर्निहतोयत्रकुत्रचित्। तस्यदाहादिकंकार्यंयस्मान्नपतितस्तुसः चांद्रायणंतप्तकृच्छ्रद्व
यंतस्यविशुद्धये। महाकृच्छ्रत्रयंचदशकृत्वातुविधिनादहेत्। बुद्धिपूर्वमृतानांतुत्रिंशत्कृच्छ्र
समाचरेदित्युक्तम्॥ स्मृतिरत्नावल्यांतद्विगुणंप्रायश्चित्तंकृत्वायोगप्यहास्तर्वकार्यमित्युक्तं
आत्मनोघातशुद्ध्यर्थंचरेच्चांद्रायणद्वयं। तप्तकृच्छ्रचतुष्कंचत्रिंशत्कृच्छ्राणिवापुनः। अर्वाक्
संवत्सरात्कुर्योद्दहनादिप्रयोदितं। कृत्वानारायणबलिमनित्यत्वात्तदायुध इति। इदंचात्मवध
निमित्ततज्ज्ञातिवधप्रायश्चित्तेनसमुच्चितंकार्यं। अतएवबौधायनेनोक्तं। द्वादशवर्षाणित्री
णिवेति। मदनपारिजाते। सत्पथसारेच। ब्रह्महादीनांतद्योग्यंप्रायश्चित्तंकृत्वानारायणबलिः
कार्यइत्युक्तम्। एवंम्लेच्छीकृतानामपि॥ यत्तुकश्चिदाह पुत्रकृतेनप्रायश्चित्तेनपितुःपापनाशे
मानाभावात्। आत्मघातेतुवचनादस्तु। महापातकेतुकथंस्यादिति। सत्यमेवात्मवधप्रायश्चि
त्तस्यजातिवधनिमित्तेनसमुच्चयं। वदन्हृदयमूस्पृशः। नहिजातिवधनिमित्तंपुत्रैःकार्यमिति

वचनमस्ति पुत्रकर्तृकसर्वप्रायश्चित्तादिविप्लवापत्तेः। प्रागुक्तबौधायनवचनाच्चेति दिक्। इदं प्रायश्चि
त्तार्हाणामेव। प्रायश्चित्तानर्हाणां तु पतितोदकमात्रं कार्यमिति केचित्॥ मदनपारिजातादिस्वर
सोऽप्येवम्॥ वस्तुतस्तु तदर्हानर्हयोर्वचनेऽनुपादानादविशेषात्तत्रापि नारायणबलिर्गयाश्राद्धं चे
त्युक्तं। पतितोदकविधिस्तु पित्राद्यतिरिक्तविषय इत्यपरे। स यथा॥ हेमाद्रौ ब्राह्मे॥ पतितस्य
तु कारुण्याद्यस्तृप्तिं कर्तुमिच्छति। स हि दासीं समाहूय सर्वदा दत्तवेतनां। अशुद्धघटहस्तां तां
तथा वक्तं ब्रवीत्यपि। हे दासि गच्छ मूल्येन तिलान्नानय सत्वरं। तोयपूर्णं घटं चेमं सतिलं दक्षिणामु
खी। उपविश्यानुवामेन चरणेन ततः क्षिप। कीर्तयेत्यातकी संज्ञां त्वं पिबेति मुहुर्वद। निशम्य त
स्य वाक्यं सा लब्धमूल्या करोति तत्। एवं कृते भवेत्तृप्तिः पतितानां न चान्यथेति। इदं च मृताहे
कार्यं। पतितस्य दासी मृताह्नि पदा घटं विवर्जयेदेतावता यमुपचरितो भवतीति मदनरत्ने विष्णू
क्तेः। इदं चात्मत्यागिविषयं। आत्मत्यागिनः पतितास्ते नाशौचोदकभाजः स्युरित्युपक्रम्य विष्णु
ना एतस्याभिधानादिति गौडाः। उपलक्षणत्वात्सर्वेषामिति तु युक्तं। यत्तु कश्चिदाह। यः पतितो
घटस्फोटेन बान्धवैर्बहिःकृतस्तद्विषयाणि क्रियानिषेधवाक्यानि। जीवत्येव तस्मिंस्तत्कर्म
णः कृतत्वात् पुनःकरणाभावादिति। सबंधुत्यागेन जातवैराग्यस्य कृतप्रायश्चित्तस्याप्यकर
णापत्तेर्भिन्नाक्षरादिविरोधमपश्यन्मूर्खैरनुपेक्षणीयः। न च कृतघटस्फोटस्य संग्रहविधिर्ने
ति वाच्यं। मनुना कृतस्य घटस्फोटस्य त्यागमुक्त्वा प्रायश्चित्ते तु चरिते पूर्णकुंभमपां नवं॥ तेनैव सा
र्द्धं प्रास्येयुः स्नात्वा पुण्ये जलाशये। इत्युक्तेः। अन्यथा प्रायश्चित्तमात्रेण तत्संग्रहात्। अतो घटस्फो
टेन बहिःकृतस्यापि पित्रादेरदृष्टेन नारायणबलिः॥ निषेधास्तु पितृघ्नादिपरा इति तत्त्वं। केचि
त्तु नारायणबलौ कृतेऽप्यंतकर्म सपिंडनवर्जं कार्यं। गोब्राह्मणहतानां च पतितानां तथैव च। व्यु
त्क्रमाच्च प्रमीतानां नैव कार्या सपिंडनेति वचनात्। ब्राह्मणादिहते ताते पतिते संगवर्जिते इति।
श्राद्धकाण्डोक्तेश्चेत्याहुः। तद्धेमाद्रिस्थपूर्वोक्तषट्त्रिंशन्मतविरोधात् निर्मूलत्वाच्छ्राद्धका
ण्डस्य वृद्धिश्राद्धविषयत्वाच्चोपेक्ष्यं॥ नारायणबलिस्तु हेमाद्र्याद्यनुसारेणोच्यते। तत्रादौ क्रिया
निबंधे गरुडे तर्पणमुक्तं। कार्यं पुरुषसूक्तेन मंत्रैर्वा वैष्णवैरपि। दक्षिणाभिमुखो भूत्वा प्रेतं विष्णु
मिति स्मरन्। अनादिनिधनो देवः शंखचक्रगदाधरः। अक्षय्यः पुंडरीकाक्ष प्रेतमोक्षप्रदो भवेति
शुक्लैकादश्यां देशकालौ संकीर्त्यामुकगोत्रस्यामुकस्य दुर्मरणजनितदोषनाशार्थं और्
र्ध्वदैहिके संप्रदानत्वयोग्यतासिद्ध्यर्थं नारायणबलिं करिष्य इति संकल्प्य ब्रह्माणं विष्णुं शिवं यमं
प्रेतं पंचकुंभेषु॥ विष्णुः स्वर्णमयः कार्यो ब्रह्मा ताम्रमयस्तथा। रुद्रो रौप्यमयस्तद्वद्यमो लोहमयो भ
वेत्। प्रेतो दर्भमयः कार्य इति गारुडोक्तासु सर्वासु हैमीषु वा प्रतिमासु षोडशोपचारैः पुरुषसूक्ते
नाभ्यर्च्याग्निं प्रतिष्ठाप्य चरुं पुरुषसूक्तेन प्रत्यृचं नारायणायेदमिति हुत्वा देवानामग्रे दक्षिणा
ग्रदर्भेषु विष्णुरूपं प्रेतं स्मरन्। नामगोत्राभ्यां मधुघृततिलयुतान् दश पिंडान् यज्ञोपवीत्येव अमु
कगोत्रामुकशर्मन् प्रेत विष्णुरूपायं ते पिंड उपतिष्ठतामिति दत्वा कुशैः पुरुषसूक्तेनाभिमंत्र
यत्ते यममिति सूक्तेन पिंडाननुमंत्र्य शंखोदकेन चाभिषिच्याभ्यर्च्यामुकशर्मणोऽमुकगोत्रस्य दि

नोद्दंडादिदंडत्रयोक्तेः। यस्यैते नियता दंडाः स त्रिदंडीति चोच्यते इति स्मृतेः। बौधायनः। नारायण
बलिश्चास्य कर्तव्यो द्वादशेऽहनि॥ अस्य पार्वणेन समुच्चयो ज्ञेयः। तं च स एवाह। कृत्वा विष्णो
र्महापूजां पायसं विनिवेदयेत्। अग्नौ हुत्वानु तच्छेषं व्याहृतीभिः समाहितः। यतीन् गृहस्था
न्साधून्वा निमंत्र्य द्वादशावरान्। अभ्यर्च्य गंधपुष्पाद्यैर्मंत्रैर्द्वादशनामभिः। संभोज्य हव्यं नान्ते
न दक्षिणां च निवेदयेत्। त्रयोदशं द्विजश्रेष्ठमात्मसंज्ञं यतेंद्रियं। विष्णुं यथा तथाभ्यर्च्य पाद्याद्यै
श्च विधानतः। दद्यात्पुरुषसूक्तेन गंधपुष्पादिकं क्रमात्। वस्त्रालंकरणादीनि यथाशक्ति प्र
दापयेत्। उच्छिष्टसन्निधौ तस्य दर्भानास्तीर्य भूतले। भूर्भुवः स्वः स्वधा युक्तैस्तस्मै दद्याद्बलि
त्रयं। अश्वमेधसहस्रस्य वाजपेयशतस्य च। यत्फलं तल्लभेद्देवं यत्नकर्तेति यतिक्रियां॥ शौन
कस्तु॥ शौनकोऽहं प्रवक्ष्यामि नारायणबलिं परं। चंडालादुदकात्सर्पात् ब्राह्मणाद्वैद्युताद
पि॥ दंष्ट्रिभ्यश्च पशुभ्यश्च रज्जुशस्त्रविषाश्मभिः। देशांतरमृतानां च मृतानां चैव साधने॥
जीवच्छ्राद्धं मृतानां च कनिष्ठानां तथैव च। यतीनां योगिनां पुंसामन्येषां मोक्षकांक्षिणां।
पुण्यायाध्यक्षयायोयं द्वादशेऽहनि कारयेत्। द्वादश्यां श्रवणे वांते पंचम्यां पर्वणोस्तु वेत्युक्त्वा
पूर्वोक्तं सर्वं विधिमुक्त्वा तो देवेति षड्भिः पुरुषसूक्तेन च मंत्रैश्च पायसं हुत्वा केशवादिद्वा
दशनामभिस्तद्रूपिणो विप्रे द्वादश विप्रान्संभोज्य तैरेव द्वादशपिंडान्दद्यादित्यधिकमाह
पुत्रमृते तु प्रागुक्तं॥ कृतजीवच्छ्राद्धे मृते सपिंडैराशौचादि कार्यं न वा॥ तदुक्तं हेमाद्रौ लैंगे
मृते कुर्यान्न कुर्याद्वा जीवन्मुक्तो यतः स्वयं॥ कालेगते द्विजः भूमौ खनेद्वापि दहेन्न वा। एवं कृ
तमशेषं च कृत्वा दोषो न विद्यते जीवत्यपि विशेषस्तत्रैवोक्तः। नित्यनैमित्तिकं यत्तु कुर्याद्वा
संत्यजेन्न वा। बांधवैरपि मृते तस्य नैवाशौचं विधीयते। सूतकं च न संदेहः स्नानमात्रेण शुध्य
ति॥ एतद्योगोविषयं च। योगमार्गे रतोपि वेति तस्याप्युक्तेः। तथा॥ आहिताग्नेः शोषितमृते
तदस्थिदाहात्पूर्वं पुत्रादीनामाशौचं संध्यादिकर्मलोपश्च नास्ति। अनग्निमत उत्क्रांतेराशौ
चादि द्विजातिषु। दाहादग्निमतो विद्याद्विदेशस्थे मृते सति इति स्मृतेः॥ आहिताग्नेर्दाहात्प्रा
गपि दशाहः। संस्कारांगं च भिन्नो दशाहः इति भूतस्वामीरामांडारख्य॥ तच्चिंत्यं॥ मूले वक्ष्या
द्वचोविरोधाच्च॥ एतन्मयायुक्तं। अत्र देहस्यैव संभवे दाह। आहिताग्नौ विदेशस्थे मृते सति क
लेवरं। निर्धयं नाग्निभिर्यावत्तदीयैरपि दह्यते। इति ब्राह्मोक्तेः॥ तदभावे छंदोगपरिशि
ष्टे। विदेशमरणेऽस्थीनि आहृत्याभ्यज्य सर्पिषा। दाहयेदूर्णया च्छाद्य पात्रन्यासादि पूर्ववत्।
अस्थामलाभे पर्णानि शकलान्युक्तयावृता। दाहयेदस्थिसंख्यानि ततः प्रभृति सूतकं॥
हेमाद्रौ षट्त्रिंशन्मते॥ कुर्यात्प्रेतमयं प्रेतं दर्भैस्त्रिशतषष्टिभिः। पालाशीभिः शमिद्भिर्वा सं
ख्या चैवं न कीर्त्तिताः। भविष्ये। चत्वारिंशत् शिरःस्थाने ग्रीवायां तु दशैव तु। बाह्वोश्चैव श
तं दद्याद्विंशतिं च तथोरसि। उदरे विंशतिं दद्यात्त्रिंशतं कटिदेशयोः। ऊर्वोश्चैव शतं दद्या
त्त्रिशतं जानुजंघयोः। पादांगुलीषु दश वै एषा चैव प्रकल्पना। मदनरत्ने पत्रपार्श्वैः॥ शि
रस्यशीत्यर्द्धं दद्यात् ग्रीवायां तु दशैव तु बाह्वोश्चैव शतं दद्यात् दश चैवांगुलीषु च॥ उरसि

नोदंडादिदंडत्रयोक्तेः। यस्मैतेनियतादंडाः सन्निदंडीतिचोच्यतेइतिस्मृतेः। बौधायनः नारायण
बलिश्चास्यकर्तव्योद्वादशेहनि॥ अस्यपार्वणेनसमुच्चयोक्षेपः। तत्रचसएवाह। कृत्वाविष्णो
र्महापूजांपायसंविनिवेदयेत्। अग्नौहुत्वानुतच्छेषंव्याहृतीभिःसमाहितः। यतीन्ब्रह्मस्था
न्साधून्वानिमंत्र्यद्वादशावरान्। अभ्यर्च्यगंधपुष्पाद्यैर्मंत्रैर्द्वादशनामभिः। संभोज्यहव्येनान्ते
नदक्षिणांचनिवेदयेत्। त्रयोदशंद्विजश्रेष्ठमात्मसंज्ञंयतेंद्रियं। विष्णुंयथातथाभ्यर्च्यपाद्यार्घ्य
श्चविधानतः। दद्यात्पुरुषसूक्तेनगंधपुष्पादिकंक्रमात्। वस्त्रालंकरणादीनियथाशक्तिप्र
दापयेत्। उच्छिष्टसन्निधौतस्यदर्भानास्तीर्यभूतले। भूर्भुवःस्वःस्वधायुक्तैस्तस्मैदद्यादृति
त्रयं। अश्वमेधसहस्रस्यवाजपेयशतस्यच। यत्फलंतल्लभेदेवंयत्करोतियतिक्रियां। शौन
कलु॥ शौनकोहप्रवक्ष्यामिनारायणबलिंपरं। चंडालादुदकात्सर्पात्ब्राह्मणाद्वैद्युतादपि॥ दंष्ट्रिभ्यश्चपशुभ्यश्चरज्जुशस्त्रविषाश्मभिः। देशांतरमृतानांचमृतानांचैवसाधनं। जीवच्छ्राद्धंमृतानांचकनिष्ठानांतथैवच। यतीनांयोगिनांपुंसामन्येषांमोक्षकांक्षिणां।
उपायाद्यक्षयार्थायद्वादशेहनिकारयेत्। द्वादश्यांश्रवणेवांतेपंचम्यांपर्वणोलं[illegible]
शैर्गंतसर्वेविधिमुक्त्वाततोदेवतिषड्भिः पुरुषसूक्तेनचयमसूक्तेनपायसंहुत्वाकेश[illegible]
दशनामभिस्तद्रूपिणोपितृद्वादशविप्रान्संभोज्यतैरेवद्वादशपिंडान्दद्यादित्युक्त[illegible]
उद्भृतेतुप्रागुक्तं॥ कृतजीवच्छ्राद्धेमृतेसपिंडेराशौचादिकार्यंनवा॥ तदुक्तंहेमा[illegible]
रतेकुर्यात्क्रियांद्वाजीवन्मुक्तोयतःस्वयं॥ कालेगतेद्विजःभूमौखनेद्वापिदहे[illegible]
समशौचंचकृत्वादोषोनविद्यते जीवत्यपिविशेषस्तत्रैवोक्तः। नित्यनैमित्तिकं[illegible]
सत्यजेत्तवा। बांधवेपिमृतेतस्यनैवाशौचंविधीयते। सूतकंचनसंदेहःस्नानमा[illegible]
नि॥ स्नानयोगौविषयंच। योगमार्गरतोपिवेतितस्याप्युक्तेः तथा॥ आहिता[illegible]
तरस्थिदाहात्पूर्वंपुत्रादीनामाशौचं। संध्यादिकर्मलोपश्चनास्ति। अनग्नि[illegible]
चादिद्विजातिषु। दाहादग्निमतोविद्याद्विदेशस्थेमृतेसती। निस्तते॥ आ[illegible]
गपिदशाहः। संस्कारांगंचभिन्नोदशाहः इतिभृत्तस्वामीरामांडारश्च॥ त[illegible]
दर्भोविरोधाच्च॥ एततप्रागुक्तं। अत्रदेहस्यैवसंभवेदाह। आहिताग्नेविद[illegible] नुच
लेवरं। निधेयंनाग्निभिर्यावत्तनदीयैरपिदह्यते। इतिवाह्लोक्तेः॥ तद[illegible] नुजी
श। विदेशमरणेस्थीनिआहृत्याभ्यज्यसर्पिषा। दाहयेद्दर्भिषाच्छाद्य[illegible] निमित्त
शस्यामलाभेपर्णोनिशकलान्युक्तयावृता दाहयेदस्थिसंख्या[illegible] स्येऽनी
हेमाद्रौषड्विंशन्मते॥ कुर्याद्दर्भमयंप्रेतंदर्भैस्त्रिशतषष्टिभिः। पा[illegible] तस्मादप
स्याचैवंभवतीतिताः। भविष्ये॥ चत्वारिंशतशिरःस्थानेग्रीवायां[illegible] त्तत्रात्मह
तद्दद्यात्द्विंशतिंचतथोरसि। उदरेविंशतिंदद्यात्त्रिंशतंकटिदे[illegible] चाहशौनक
त्रिंशतंजानुजंघयोः। पादांगुलीषुदशवैएषाचप्रेतकल्पना[illegible] चम्यांवापिव
रस्यशीर्षदेदद्यात्ग्रीवायांतुदशैवतु वाहोश्चैवशतंदद्यात्[illegible] यरेत्कृष्णाश्व

त्रिंशतं दद्यात्त्रिंशतं जठरे देयं। द्वादशार्द्धं वृषणयोरष्टार्द्धं शिश्न एव तु। ऊर्वोश्चैकशतं दद्यात्त्रिंशतं
जंघयोर्द्वयोः। पादांगुलीषु दद्याद्दश एतत्प्रेतस्य कल्पनं। मस्तके नारिकेलं तु अलाबु तालुके त
था। पंचरत्नं मुखे न्यस्य जिह्वायां कदलीफलं। चक्षुषोस्तु कपर्दौ द्वौ नासिकायां तु कालकं। क
र्णयोर्मल्लपत्राणि केशे वटप्ररोहकाः। नालकं कमलानां तु आंत्रस्थाने विनिर्दिशेत्। मृत्तिकां तु
वसास्थाने हरितालकगंधकौ शुक्रे तु पारदं दद्यात्पुरीषे पित्तलं तथा। संधीषु तिलपिष्टं तु मां
से स्याद्यवपिष्टकं मधु स्याल्लोहितस्थाने त्वचः स्थाने मृगत्वचः। स्तनयोर्गुंजके देये नासायां श
तपत्रकं। कमलं नाभिदेशे स्यात् वृन्ताकं वृषणाश्रिते। लिंगे च रक्तमूलं तु परिधानं दुकूलकं
गोमूत्रं गोमयं गंधं सर्वौषध्यादि सर्वत इति। क्रियानुबंधे गारुडेप्येवमुक्त्वान्यदपि। घृतं नाभ्य
मदेयं स्यात्कौपीने वस्त्रमुत्तमं। मौक्तिकं स्तनयोर्मूर्ध्नि कुंकुमेन विलेपनं। सिंदूरं नेत्रकोणेषु तां
बूलाद्युपहारकैः। सर्वौषधियुतं कृत्वा ध्यायेद्वै यथोदितां। इदं निरग्नेरपि॥ तत्रैव वृद्धमनुः।
प्रोषितस्य तथा कालो गतश्चेद्द्वादशाब्दिकः। प्राप्ते त्रयोदशे वर्षे प्रेतकर्माणि कारयेत्। रहस्य
ति॥ यस्य न श्रूयते वार्त्ता यावद्द्वादशवत्सरान्। कुशपुत्रकदाहेन तस्य स्यादवधारणा॥ भ
विष्ये॥ पितरि प्रोषिते यस्य न वार्त्ता नैव चागमः। ऊर्ध्वं पंचदशाद्वर्षात्कृत्वा तत्प्रतिरूपकं। कु
र्यात्तस्य तु संस्कारं यथोक्तविधिना ततः। तदादीन्येव सर्वाणि प्रेतकार्याणि कारयेत्। द्वादश
वर्षप्रतीक्षा पितृभिन्नविषये ज्ञेया। मदनरत्ने उक्तं। रत्नकारिकायां तु॥ तस्य पूर्ववयस्कस्य विंशाद
र्ध्वतः क्रिया। ऊर्ध्वं पंचदशाद्वा तु मध्यमे वयसि स्थिते। द्वादशाद्वत्सरादूर्ध्वमुत्तरे वयसि स्थि
ते। चांद्रायणत्रयं कृत्वा त्रिंशत्कृच्छ्राणि वा सुतः। कुशैः प्रतिकृतिं दग्ध्वा कामाशौचादिका
क्रिया इत्युक्तं पराशरः। देशांतरगतो नष्टस्तिथिर्न ज्ञायते यदि। कृष्णाष्टमी त्वमावास्या कृष्णा
चैकादशी तथा। उदकं पिंडदानं च तत्र श्राद्धं च कारयेत्। इदं मासज्ञाने॥ तत्राहिताग्नेः शर्वो
शौचं॥ स्वनाहिताग्नेस्तु त्रिरात्रं। अनाहिताग्नेर्देहस्तु दाह्यो गृह्याग्निना स्वयं। तदलाभे प
लाशानां वृन्तैः कार्यः पुमानपि। वेष्टितव्यस्तथा पत्नात्कृष्णसारस्य चर्मणा। ऊर्णासूत्रेण
बध्वा तु प्रलेप्तव्यो यवैस्तथा। सुपिष्टैर्जलसंमिश्रैर्दग्धव्यश्च तथाग्निना। असौ स्वर्गाय लोका
य स्वाहेत्युक्त्वा सबांधवैः। एवं पर्णशरं दग्ध्वा त्रिरात्रमशुचिर्भवेदिति ब्राह्मोक्तेः। इदं त्रिरात्रं
न दशाहमध्ये दाहे तत्र शेषितकालशुद्धिः स्यादित्युक्तेः। किंतु तदूर्ध्वं। तत्र पत्नीपुत्रयोः पूर्वमग
हीताशौचयोर्दशाहाद्येव। गृहीताशौचयोस्तु त्रिरात्रं। पत्नी मृते भर्तर्येवं। सपत्न्योश्चैव
मिति स्मृत्यर्थसारे। अन्यसपिंडानां तु सर्वत्र पर्णशरदाहे त्रिरात्रं॥ तदाहांगिराः॥ देशांतरस्थ
तं श्रुत्वा नाशौचं चेत्कथं चन। कालात्ययेपि कुर्वीत दाहकाले दिनत्रयमिति स्मृत्यर्थसारे तु॥
गृहीताशौचानां स्नानमात्रमुक्तं। बह्वृचपरिशिष्टेपि॥ ॥ अथातोतसंस्कारः
सवेदं तद्दशाहं स्यात्तत्रैव सर्वं समापयेदूर्ध्वमाहिताग्नेर्दाहात्सर्वमाशौचं कुर्यात्क्रमेण यथा
कालमन्ये तु पत्नीपुत्रयोः पूर्वमगृहीताशौचयोः कर्मांगं त्रिरात्रमिति॥ षडशीतावप्येवं। वि
श्वादर्शे तु। प्रतिकृतिदहने त्वपि देशांतरे त्रिरात्रमित्युक्तं। द्वादशवर्षादिप्रतीक्ष्योत्तरं दाहे तु उ

त्रादीनांसर्वेषांत्रिरात्रमेवेतिकल्पतरुदिवोदासादयः॥ ॥अथप्रेतसंस्कारेकालः॥
हेमाद्रौगार्ग्यः॥अन्त्यस्यशवसंस्कारेदिनंनैवविशोधयेत्। अशौचमध्येसंस्कारेदिनंशोध्यंनसं
भवे। अशौचविनिवृत्तौचेत्पुनःसंक्रियतेमृतः॥ संशोध्यैवदिनंग्राह्यमूर्ध्वंसंवत्सराद्यदि॥ प्रेतका
र्याणिकुर्वीतश्रेष्ठंतत्रोत्तरायणम्। कृष्णपक्षस्तत्रापिवर्ज्यमेतत्तुदिनत्रयम्। वाराहे॥ चतुर्थाष्टमगे
चंद्रेद्वादशेचविवर्जयेत्। प्रेतकृत्यंव्यतीपातेवैधृतौपरिघेतथा। करणेविष्टिसंज्ञेचशनैश्चर
दिनेतथा। त्रयोदश्यांविशेषेणजन्मतारात्रयेतथा। जन्मदशमैकोनविंशति॥ जन्मतारात्र
ये॥ भारते॥ नक्षत्रेषुनकुर्वीतयस्मिन्जातोभवेन्नरः। नप्रौष्ठपदयोःकार्यंतथाग्नेयेचभार
त॥ दारुणेषुचसर्वेषुप्रत्यरेचविवर्जयेत्। कश्यपः। भरण्यार्द्रामघाश्लेषामूलंत्रिचरणानिच
प्रेतकृत्येतिदुष्टानिधनिष्ठापंचपंचकं फाल्गुनीद्वितयंरोहिण्यनुराधापुनर्वसुः। आषाढेद्वेवि
शाखाचभानिद्विचरणानिच। एतानिकिंचिदुष्टानिसंभवेसतिवर्जयेत्॥ ज्योतिर्नारदः॥ च
तुर्दशींतिथिंनंदांभद्रांशुक्रारवासरौ॥ सितेज्ययोरस्तमयंत्र्यंघ्रिभंविषमांघ्रिभं॥ शुक्लपक्षं
चसंत्यज्यपुनर्दहनमुत्तमं। वसूत्तरार्द्रेतःपंचनक्षत्रेषुत्रिजन्मसु। पौष्णत्वाष्ट्रयोश्चैवदहनात्
कुलनाशनं॥ अस्यापवादमाह। गनैववैजवापः॥ प्रेतस्यसाग्नेर्दग्धस्यपात्रैस्त्वेकादशेह
नि। नक्षत्रतिथिवारादिशोधनीयंनकिंचन॥ युगमन्वादिसंक्रांतिदर्शेनेनक्रियापदि। दे
वोद्यपतितानांतुनक्षत्रादिनशोधयेत्॥ विश्वप्रकाशेपि॥ गुरुभार्गवयोर्मौढ्येपौषमासेम
लिम्लुचे। नातीतःपितृमेधःस्यात्कर्यागोदावरींविना॥ दानमपितत्रैवोक्तं॥ भद्रायांभूमिदा
नंस्यात्त्रिपादर्क्षेहिरण्यदः। वारेषुनतद्द्योंतुवासोदानंविधीयते। धनिष्ठापंचकस्थेतेपंच
रत्नानिदापयेत्। एकाशीतिपलंकांस्यंतदर्धंवातदर्धकम्॥ नववस्त्रंत्रिपलंवापिदद्याद्वि
शायशक्तितइत्यलंप्रसंगेन॥ हेमाद्रौवृद्धमनुः। अमृतंमृतमाकर्ण्यकृतंयस्यौर्ध्वदेहिकं
प्रायश्चित्तमसौस्नात्वाकृत्वाग्नीनादधीतिच। जीवन्यदिसआगच्छेत्घृतकुंभेनिमज्ज्यतं। उ
द्धृत्यस्नापयित्वास्यजातकर्मादिकारयेत्॥ द्वादशाहंव्रतचर्यात्रिरात्रमथवास्यतु। स्नात्वोद्व
हेत्तांभार्यामन्यांवातदभावतः। अग्नीनाधायविधिवद्व्रात्यस्तोमेनवायजेत्। अथेंद्राग्नेनप
शुनागिरिंगत्वाचतत्रतु। इष्टिमायुष्मतींकुर्यादीप्सितांश्चक्रतूंस्ततः। अनाहिताग्नेस्तुवरः
प्रेतवार्त्तामात्रश्रवणेदाहःआश्वलायनः॥ सुरभयएवयस्मिन्जीवेन्मृतशब्दइति। यस्यतुजीवत
एवमृतिवार्त्तांश्रुत्वास्त्रियासहगमनंकृतंतदातद्देहमेव। भर्तृमरणज्ञानस्यैवनिमित्तत्वा
त्प्रमाणात्वस्यगौरवेणायुक्तत्वाच्चेतिकेचित्। तन्न॥ मरणज्ञानस्यनिमित्तत्वेअतीताना
गतयोरपितथात्वापत्तेः। भर्तुर्वैधदाहाभावेनतस्याःसहगमनाभावाच्च। तस्मादाशौच
वत्। ज्ञानमरणस्यैवनिमित्तत्वं। नचात्रतदस्ति। परंकाम्यंमरणमस्तु। अतश्चात्महनन
दोषोस्तीतितातपादाः। तथासर्पसंस्कारःकृतेत्रिरात्रमाशौचं। तद्विधिंचाहशौनकः॥
अथवक्ष्यामिसर्पस्यसंस्कारविधिमुत्तमं। सिनीवाल्यांपौर्णमास्यांपंचम्यांवापिकार
येत्॥ कृतसर्पवधोविप्रःपूर्वजन्मनिवायदि। वधंप्रत्यापयेत्पापीचरेत्कृच्छ्रांश्चतुर्दे

त्रिंशतं दद्यात्त्रिंशतं जठरे ददेत्। द्वादशार्धं वृषणयोरष्टार्धं शिश्न एव तु। ऊर्वोश्चैकशतं दद्यात्त्रिंशतं
जंघयोर्द्वयोः। पादांगुलीषु दद्यादेतत्प्रेतस्य कल्पनं। मस्तके नारिकेलं तु अलाबुं तालुके त
था। पंचरत्नं मुखे न्यस्य जिह्वायां कदलीफलं। चक्षुषोस्तु कपर्दौ द्वौ नासिकायां तु कालकं। क
र्णयोर्न्यस्य पत्राणि केशे वटप्ररोहकाः। नालकं कमलानां तु अंत्रस्थाने विनिर्दिशेत्। मृत्तिकां तु
वसार्थं तु हरितालकगंधकौ शुक्रे तु पारदं दद्यात्पुरीषे पित्तलं तथा। संधीषु तिलपिष्टं तु मां
से स्याद्यवपिष्टकं मधु स्याल्लोहितस्थाने त्वचस्थाने मृगत्वचः। स्तनयोर्गुंजके देये नासायां श
तपत्रकं। कमलं नाभिदेशे स्यात् वृंताके वृषणाश्रिते। लिंगे च रक्तमूलं तु परिधानं दुकूलकं
गोमूत्रं गोमयं गंधं सर्वौषध्यादि सर्वतः इति। क्रियानुबंधे गारुडेऽप्येवमुक्त्वान्यदपि। घृतं नाभ्या
मदेयं स्यात्कोपने च त्रपु स्मृतं। मौक्तिकं स्तनयोर्मूर्ध्नि कुंकुमेन विलेपनं। सिंदूरं नेत्रकोणेषु तां
बूलाद्युपहारकैः। सर्वौषधियुतं कृत्वा पूजां चैव यथोदितां। दहेन्निरग्नेरपि॥ तत्रैव वृद्धमनुः॥
प्रोषितस्य तथा कालो गतश्चेद्द्वादशाब्दिकः। प्राप्ते त्रयोदशे वर्षे प्रेतकर्माणि कारयेत्। बृहस्प
तिः॥ यस्य न श्रूयते वार्ता यावद्द्वादशवत्सरान्। कुशपुत्रकदाहेन तस्य स्यादवधारणा॥ भ
विष्ये॥ पितरि प्रोषिते यस्य न वार्ता नैव चागमः। ऊर्ध्वं पंचदशाद्वर्षात्कृत्वा तत्प्रतिरूपकं। कु
र्यात्तस्य तु संस्कारं यथोक्तविधिना ततः। तदादीन्येव सर्वाणि प्रेतकार्याणि कारयेत्। द्वादशा
ब्दप्रतीक्षा पितृभिन्नविषये निमग्नरत्ने उक्ता। रत्नकारिकायां तु॥ तस्य पूर्ववयस्कस्य विंशाब्दो
र्ध्वं ततः क्रिया। ऊर्ध्वं पंचदशाब्दात्तु मध्यमे वयसि स्मृता। द्वादशाद्वत्सरादूर्ध्वमुत्तरे वयसि स्मृ
ता। चांद्रायणत्रयं कृत्वा त्रिंशत्कृच्छ्राणि वा सुतैः। कुशैः प्रतिकृतिं दग्ध्वा कार्याशौचादिका
क्रिया इत्युक्तं पराशरः। देशांतरगतो नष्टस्तिथिर्न ज्ञायते यदि। कृष्णाष्टमी ह्यमावास्या कृष्णा
चैकादशी तथा। उदकं पिंडदानं च तत्र श्राद्धं च कारयेत्॥ इदं मासज्ञाने॥ तत्राहिताग्नेः अ
शौचं॥ अनाहिताग्नेस्तु त्रिरात्रं। अनाहिताग्नेर्देहस्तु दाह्यो गृह्याग्निना स्वयं। तदलाभे प
लाशानां वृन्तैः कार्यः पुमानपि। वेष्टितव्यस्तथा पत्नात्कृष्णसारस्य चर्मणा। ऊर्णासूत्रेण
बध्वा तु प्रलेप्तव्यो यवैस्तथा। सुपिष्टैर्जलसंमिश्रैर्दग्धव्यश्च तथाग्निना। असौ स्वर्गाय लोका
य स्वाहेत्युक्त्वा सबांधवैः। एवं पर्णशरं दग्ध्वा त्रिरात्रमशुचिर्भवेदिति ब्राह्मोक्तेः। इदं त्रिरात्रं
न दशाहमध्ये दाहे तत्र शेषितेकालशुध्येदित्युक्तेः। किंतु तदूर्ध्वं। तत्र पत्नीपुत्रयोः पूर्वमग
हीताशौचयोर्दशाहाद्येव। गृहीताशौचयोस्तु त्रिरात्रं। पत्नीमृतौ भर्तुश्चैवं। सपत्न्योश्चैव
मिति स्मृत्यर्थसारे। अन्यसपिंडानां तु सर्वेषां पर्णशरदाहे त्रिरात्रं॥ तदाहांगिराः॥ देशांतरम
तं श्रुत्वा नाशौचं चेत्कथंचन। कालात्ययेऽपि कुर्वीत दाहकाले दिनत्रयमिति स्मृत्यर्थसारे तु॥
गृहीताशौचानां स्नानमात्रमुक्तं। बह्वृचपरिशिष्टेऽपि॥ ॥ अथातीतसंस्कारं
सर्वे दत्तदशाहं स्यात्तत्रैव सर्वं समाप्य ऊर्ध्वमाहिताग्नेर्दाहात्स्वमाशौचं कुर्यात्क्रमेण यथा
कालमन्येषु पत्नीपुत्रयोः पूर्वमगृहीताशौचयोः कर्मांगं त्रिरात्रमिति॥ षडशीतावप्येवं। वि
श्वादर्शे तु। प्रतिकृतिदहने त्वभिदेशांतत्रिरात्रमित्युक्तं। द्वादशवर्षादि प्रतीक्ष्योक्तं दाहे तु पु

त्रादीनां सर्वेषां त्रिरात्रमेवेति कल्पतरुदिवोदासादयः॥ ॥ अथ प्रेतसंस्कारे कालः॥
हेमाद्रौ गार्ग्यः॥ प्रत्यक्षशवसंस्कारे दिनमेव विशोधयेत्। अशौचमध्ये संस्कारे दिनशोधं न सं
भवेत्। अशौचविनिवृत्तौ चेत्पुनः संस्क्रियते मृतः। संशोध्यैव दिनं ग्राह्यमूर्ध्वं संवत्सराद्यदि। प्रेतका
र्याणि कुर्वीत श्रेष्ठं तत्रोत्तरायणम्। कृष्णपक्षश्च तत्रापि वर्जयेत्तु दिनत्रयं। वाराहे॥ चतुर्थ्यष्टमगे
षष्ठीं द्वादशीं च विवर्जयेत्। प्रेतकृत्यं व्यतीपाते वैधृतौ परिघे तथा। करणे विष्टिसंज्ञे च शनैश्चर
दिने तथा। त्रयोदश्यां विशेषेण जन्मताराद्वये तथा। जन्मदशमैकोनविंशति॥ जन्मताराश्च
पं॥ भारते॥ नक्षत्रे तु न कुर्वीत यस्मिन् जातो भवेन्नरः। न प्रोष्ठपदयोः कार्यं तथाग्नेये च भार
ते॥ दारुणेषु च सर्वेषु प्रत्यरे च विवर्जयेत्। कश्यपः॥ भरण्यार्द्रामघाश्लेषामूलं त्रिचरणानि च
प्रेतकृत्ये तु दुष्टानि धनिष्ठाद्यं च पंचकं फाल्गुनीद्वितयं रोहिण्यनुराधा पुनर्वसुः। आषाढे द्वि
शाखा च भानि द्विचरणानि च। एतानि किंचिद्दुष्टानि संभवे सति वर्जयेत्। ज्योतिर्नारदः॥ च
तुर्दशीं तिथिं नंदां भद्रां शुक्रारवासरौ सितेज्ययोरस्तमयं त्रिभे विषमांघ्रिभं॥ शुक्लपक्षं
च संत्यज्य पुनर्दहनमुत्तमं। वसुत्रयादितः पंचनक्षत्रेषु त्रिजन्मसु। पौष्णब्राह्मद्वयोश्चैव दहनात्
कुलनाशनं॥ अस्यापवादमाह। तत्रैव वैजवापः॥ प्रेतस्य सा स्याद्दग्धस्य नात्र त्वेकादशेऽह
नि। नक्षत्रतिथिवारादि शोधनीयं न किंचन॥ युगमन्वादिसंक्रांतिदर्शे प्रेतक्रिया यदि। दे
वादपतिता न तत्र नक्षत्रादि न शोधयेत्॥ विश्वप्रकाशेपि॥ गुरुभार्गवयोर्मौढ्ये पौषमासे म
लिम्लुचे नातीतः पितृमेधः स्याद्यदा गोदावरीं विना॥ दानमपि तत्रैवोक्तं॥ भद्रायां भूमिदा
नं स्यात्त्रिपादर्क्षे हिरण्यदः। वारेषु नत्र दुर्गां तु वासोदानं विधीयते। धनिष्ठापंचकमृते पंच
रत्नानि दापयेत्। एकाशीतिपलं कांस्यं तदर्धं वा तदर्धकम्॥ नवषट्त्रिपलं वापि दद्याद्वि
भवशक्तितः। अलं प्रसंगेन॥ हेमाद्रौ वृद्धमनुः। अमृतं मृतमाकर्ण्य कृतं यस्यौर्ध्वदेहिकं
प्रायश्चित्तमसौ कृत्वाग्नीनादधीत च। जीवन्यदि समागच्छेद्घृतकुंभे निमज्य तं। उ
द्धृत्य स्नापयित्वास्य जातकर्मादि कारयेत्॥ द्वादशाहं व्रतचर्या त्रिरात्रमथवास्य तु। स्नात्वोद्व
हेत्तां भार्यां अन्यां वा तदभावतः। अग्नीनाधाय विधिवद्व्रात्यस्तोमेन वा यजेत्। अथैंद्राग्नेन प
शुना गिरिं गत्वा च तत्र तु। इष्टिमायुष्मतीं कुर्यादीप्सितांश्च क्रतूंस्ततः। अनाहिताग्नेस्तु चरुः
मृतवार्तामात्रश्रवणे स्याप्वलापनः। सुरभपश्च यस्मिन् जीवेन्न शब्द इति। यस्य तु जीवत
एव मृतिवार्तां श्रुत्वा स्त्रिया सहगमनं कृतं तद्दानद्वैधमेव। भर्तृमरणज्ञानस्यैव निमित्तत्वा
त्ममारणत्वस्य गौरवेणायुक्तत्वाच्चेति केचित्। तन्न॥ मरणज्ञानस्य निमित्तत्वे अतीताना
गतयोरपि तथात्वापत्तेः। भर्तुर्वैधदाहाभावेन तस्याः सहगमनाभावाच्च। तस्मादशौचव
वत्। ज्ञानमरणस्यैव निमित्तत्वं। नचात्र तदस्ति। परं काम्यं मरणमस्तु। अत आत्महनन
दोषोऽस्तीति तातपादाः। तथा सर्पसंस्कारे कृते त्रिरात्रमाशौचं। तद्विधिं चाह शौनकः॥
अथ वक्ष्यामि सर्पस्य संस्कारविधिमुत्तमं। सिनीवाल्यां पौर्णमास्यां पंचम्यां वापि कार
येत्॥ कृते सर्पवधे विप्रः पूर्वजन्मनि वा यदि। वधप्रख्यापयेमापी चरेत्कृच्छ्रांश्चतुर्दे

श विभाय लोहदंडं च तन्मूल्यं वापि दापयेत्। याज्ञवल्क्योपि॥ उरगेष्वायसो दंड इति। मूल्यमाह॥
निष्कत्रयं द्विनिष्कं वा निष्कमेकं कनीयसं अनुमत्यादिकर्तॄणां निष्कमर्द्धेन दंडकं। इदं स्वर्णरू
प्ययोः शक्त्या ज्ञेयं। संस्कारमाह। भिंगुर्व्रीहिगोधूमतिलपिष्टेन वा पुनः। कृत्वा सर्पाकृतिं शू
र्पे निधाय प्रार्थयेद्द्विजं॥ एहि पूर्वं मृतः सर्प अस्मिन् पिष्टे समाविश। संस्कारार्थमहं भक्त्या प्र
र्थयामि समाहितः। वस्त्रोपवीतगंधाद्यैः संपूज्य च हरेद्द्विजः॥ कुर्यात्संस्कारसंकल्पं नारायणा
ग्रपुरःसरं। यज्ञोपवीतिना कार्यं सर्पसंस्कारकर्मसु। लौकिकाग्निं प्रतिष्ठाप्य समिदाधानमा
चरेत्। ततोग्नेरग्निदिग्भागे भूमिं संप्रोक्ष्य वारिभिः। चितिं कृत्वाथ संस्तीर्य कुशैराग्नेयकाष्ठ
कैः। पर्युक्ष्याग्निं परिस्तीर्य परिषिच्य समर्चयेत्। कृत्वेध्माधानमाघारौ चक्षुषी च यथाविधि।
सर्पं गृहीत्वा यत्नेन चितिमारोपयेत्सुधीः। स्रुवेण जुहुयादाज्यमग्नौ व्याहृतिभिस्त्रिभिः। सर्पा
स्ये जुहुयादाज्यं व्याहृत्या च समग्रया। आज्यशेषं स्रुवेणैव सर्पदेहे निषेचयेत्। चमसस्थैर्जलैः
सर्पं व्याहृत्याभ्युक्ष्य पाणिना। अग्ने रक्षाण इत्यनया सर्पायाग्निं प्रदापयेत्॥ उपतिष्ठेद्दत्मा
नेन नमोस्तु सर्पमंत्रतः। ज्ञानतोऽज्ञानतो वापि कृतः सर्पवधो मया। पूर्वजन्मनि वा सर्प त्वं वै क्ष
न्तुमर्हसि। क्षीराज्येन ततश्चाग्निं प्रोक्ष्य व्याहृतिभिर्जलैः। नास्थिसंचयनं कुर्यात्स्नात्वा च
स्वगृहं व्रजेत्। ब्रह्मचर्यादिकं कार्यं त्रिरात्राशौचमिष्यते। सचैलं तु चतुर्थेह्नि स्नात्वा विप्रान्
समर्चयेत्। सर्पानंतस्तथा शेषः कपिलो नाग एव च। कालिकः शंखपालश्च भूधरश्चेति नाम
भिः गंधपुष्पासनैर्धूपदीपाद्यैरर्चयेद्द्विजान्। घृतपायसभक्ष्यैश्च द्विजानष्टौ च भोजयेत्। एवं
कृते विधानेन सर्पसंस्कारकर्मणि। सर्पहिंसाकृतात्पापान्मुच्यते नात्र संशय इति॥

॥इति सर्पसंस्कारः॥ ॥कचित्तु जीवतोप्यन्त्यकर्माशौचं कार्यम्। यथा प्रायश्चित्ता
निच्छोः पतितस्य घटस्फोटे॥ पतितस्योदकं कार्यं सपिंडैर्बांधवैः सह। निंदितेहनि सायाह्ने
ज्ञात्यृत्विग्गुरुसन्निधौ। दासीघटमपां पूर्णं पर्यस्येत्प्रेतवत्पदा। अहोरात्रमुपासीरन्नाशौचं बा
धवैः सहेति मनूक्तेः। निंदितेह्नि रिक्तादौ। अपरार्के वसिष्ठोपि॥ वेदविप्लावकः शूद्रयाजकोत्तम
वर्णावर्णपतितास्तेषां पात्रनिनयनमपात्रसंकरादृश्यात्। पात्रमादाय सोऽसवर्णापुत्रो वा बंधु
रसदृशो वा गुणहीनः सव्येन पादेन प्रवृत्ताग्रान् दर्भान् लोहितान्वोपस्तीर्य पूर्णपात्रमस्मै
निनयंति नेतारश्चास्य प्रकीर्णकेशा ज्ञातयोन्वालभेरन्नपसव्यं कृत्वा गृहेषु स्वैरमापद्येरन्नत
ऊर्ध्वं तेन न धर्मेषु सलक्ष्मीणस्तं धर्मयेंतरति। उत्तमवर्णा ब्राह्मणादयस्तेषां वर्गः समूहस्त
स्मात्पतिता ब्रह्महादयः अपात्रसंकरः कुत्सितपात्रसमूहः। प्रवृत्ताग्राः छिन्नाग्राः। स्वैरम
येच्छं धर्मादिकार्यं कुर्युः। अस्माद्वचनसामर्थ्यात्पात्रनिनयनात् प्राक् पतितज्ञातीनां धर्मे
कार्येष्वधिकारो वास्तीत्यपरार्कः॥ तस्य विद्यागुरून्योनिसंबंधांश्च संनिपात्य सर्वाण्युदका
दीनि प्रेतकार्याणि कुर्युः। पात्रं चास्य विपर्यस्येयुर्दासः कर्मकरो वाऽवकरादमेध्यं पात्रमा
नीय दासीघटात् पूरयित्वा दक्षिणामुखः पदा विपर्यस्येदमुदकं करोमीति नामग्राहं सर्वे
ऽन्वालभेरन्। प्राचीनावीतिनो मुक्तशिखा विद्यागुरवो योनिसंबंधाश्च वीक्षेरन्। अप३१५९

ग्रामेत्र विप्रे स्युरिति गौतमोक्तेश्च। उदकादिमुक्तेर्दाहनिवृत्तिः। तेन कार्याण्येकादशाहश्राद्धं
नि। दास्याहृतो वा घटो दासीघटः। तेनोदकेनामेध्यं पात्रं पूरयित्वा दासादिस्पृष्टं वामपादेन कु
र्यादिति हरदत्तः। अत्र नामग्राहं वचनमुदकादिनिषेधकार्ये तदन्यत्वार्थं। तेन तत्तूष्णीं भवति॥ एत
त्प्रायश्चित्तानिच्छोः। तस्य गुरोर्बान्धवानां राज्ञश्च समक्षं दोषानभिख्याप्य तमनुभाष्य पुनः पुन
श्चार्यं लभस्वेति संवदेत। यद्यनवस्थितमतिः स्यात्ततोऽस्य पात्रं विपर्यस्येदिति शंखोक्तेः। जीवं
मेवोद्दिश्य पिंडोदकश्राद्धानि नान्यदन्यदीपपरार्के। कृतप्रायश्चित्तस्य घटस्फोटे कृतेऽपि संग्र
हविधिमाह गौतमः॥ यस्तु प्रायश्चित्तेन शुद्ध्येत्तस्मिन्शुद्धे शातकुंभमयं पात्रं पुण्यतमाद्ध्रदात्पूरयित्वा
स्रवंतीभ्यो वा तत एनमुपस्पर्शयेयुरथास्मै तत्पात्रं दद्युस्तत्संप्रतिगृह्य जपेच्छंतायोः शांता पृथिवी
शांतं विश्वमंतरिक्षं यो रोचनस्तमिह गृह्णामीत्येतैर्यजुर्भिः पावमानीभिस्तरत्समंदीभिः कूष्मां
डीभिश्चाज्यं जुहुयाद्धिरण्यं दद्याद्गां वाचार्याय यस्य तु प्राणांतिकं प्रायश्चित्तं स मृतः शुध्येत्। स
र्वाण्येव तस्मिन्नुदकादीनि प्रेतकर्माणि कुर्युरेतदेव शांत्युदकं सर्वेषूपपातकेष्विति। घटस्फो
टेन प्राणांतिकप्रायश्चित्ते कृते तु मृत एव शुध्येन्न तत्र संग्रहविधिः। अतस्तेन विनापि प्रेतकर्म
कुर्यादित्यर्थः। उपपातकेष्वपि घटस्फोटे कृते एवं कार्यमित्यर्थः॥ याज्ञवल्क्यः॥ चरितव्रत आ
याते निनयेरन्नवं घटं जुगुप्सेरन्न चाप्येनं संवसेयुश्च सर्वशः। कृतघटस्फोटस्यैवायं परिग्रहवि
धिरिति मिताक्षरामाधवापरार्केच। अन्यथा प्रायश्चित्तमध्ये तत्संसर्गात्। मनुरपि घटस्फोटमुक्त्वा
निवर्तेरन्न तस्मात्संभाषणासहासनेरित्युक्त्वा। प्रायश्चित्ते तु चरिते पूर्णकुंभमपां नवं तेनैव सा
र्द्धं प्रास्येयुः स्नात्वा पुण्ये जलाशये इति तच्च कृतप्रायश्चित्तं। अपरार्के वसिष्ठोऽपि। पतितानां चरित
व्रतानां प्रत्युद्धारो यथाप्युदाहरंति॥ अग्रेऽभ्युद्धरतां गच्छेत्क्रीडन्निव हसन्निव। पश्चात्पातयतो
गच्छेच्छोचन्निव रुदन्निव। प्राचार्यमातापित्रोर्हंतारस्तत्प्रसादादपगतपापा एषां तेषां प्रत्यापत्तिः
पूर्णाद्ध्रदात्पूत्वा हैमं काञ्चनपात्रं माहेयं वाद्भिः पूरयित्वापो हि ष्ठीयाभिरेनमद्भिरभिषिंचेयुः। सर्वेण
वाभिषिक्तस्य प्रत्युद्धारः पुत्रजन्मना व्याख्यात इति। प्रत्युद्धारः परिग्रहः। तत्रोद्धरतां हसन्निवाग्र
तः स्यात्। पातयतां घटस्फोटं कुर्वतां शोचन्निव पश्चाद्गच्छेत्॥ मातापित्रादिहंतॄणां परिग्रहो
न कार्यः। तत्प्रसादे सति चीर्णव्रतानां कार्यः। प्रवृत्तनिर्हरः। पुत्रजन्मनेत्यभिषेकोत्तरं जातक
र्मादयः संस्काराः पुत्रजन्मवत्कार्या इत्यपरार्कव्याख्यौ॥ अतएव विज्ञानेश्वरः॥ घटेऽपवर्जि
ते ज्ञातिमध्यस्थो यवसं गवां दद्यात्प्रथमं गोभिः सत्कृतस्य हि सन्निपेत्यगवां भक्षणाभा
वे पुनरेतां चरेदित्येतत्स्मृतेरेव चरितव्रतविधौ विशेषायमिति तदनु घटस्फोटोत्तरं परिग्रहवि
धि पुनः संस्कारो भवतीति सिद्धं॥ तथा जीवच्छ्राद्धकृते हेमाद्रौ बोधायनः॥ तत्राशौचं दशाहं स्या
दिप्तं नवयोगेन। एवं सापवादे आशौचे उक्ते प्रतिशाखभिन्ने प्रत्यक्कर्मणि साधारणं किंचिदुच्यते
तत्राधिकारिणः प्रागुक्ताः। सर्वाभावे धर्मपुत्रो वा कार्यः। अपुत्रेण सुतः कार्यो यादृक्तादृक्प्रय
त्नतः। पिंडोदकक्रियाहेतोर्नामसंकीर्तनाय च इति मात्स्यवचनात्। गृह्यपरिशिष्टे। कर्त्रदेशविष
ये विशेषो मैत्रायणीयगृह्यपरिशिष्टे। स्वगृहे विषये तु पिता या मातरं स्मृतः। केनापि तत्र चार्थ

मग्निपिंडोदकादिकं पुनः संचयनात्प्राक्चेत्तदूर्ध्वं समाचरेत्। स्वगृहे तत्र वा सर्वं प्रेतकार्यं सपिंड
ने॥ तथा॥ भयस्थानेथवा मार्गे मृतस्तत्र च संस्कृतः। न तिष्ठति जनः पिंडं तत्र तत्र च वर्तयेत्। प्रेते गृ
हो स्थिसंचयनं च संस्कारस्तस्मिन्कृते तत्र च। भयादिना स्थानमशक्तौ यत्र यत्र प्रेतकार्यकृद्गच्छे
त्तत्र तत्रैव पिंडोदकदानादि सपिंडनांतं समापयेदिति श्राद्धसंकल्पः। तदेवं परिशिष्टयोर्विरोधे यथा
चारमापन्नापदादिभेदेन व्यवस्था ज्ञेया। केचित्तस्यापवादत्वमाहुः। असगोत्रः सगोत्रो वा यदि
स्त्री यदि वा पुमान्। प्रथमेहनि यो दद्यात्स दशाहं समापयेत्। दद्यात्पिंडमिति शेषः॥ भविष्ये॥ प
त्राद्येदीयते पिंडस्तेन सर्वं समापयेत्॥ ब्राह्मेपि॥ प्रथमेहनि यो दद्यात्प्रेतायान्नं समाहितः। अन्नं न
वस्तु चान्येषु स एव प्रददात्यपि॥ विज्ञानेश्वरस्तु॥ केचित्तु अग्निदद्यादिति व्याचक्षते। सगोत्रो
वासगोत्रो वा योग्निं दद्यात्सखे नरः। सोपि कुर्यान्नवश्राद्धं शुध्येत्तु दशमेहनीति। दिवोदासीयव
चनाच्च। तत्रैव॥ दृष्ट्वा स्थानस्थमासन्नमर्धोन्मीलितलोचनं। भूमिस्थं पितरं पुत्रो यद्दिदानं प्र
दापयेत्। तद्धि विशिष्टं गयाश्राद्धादश्वमेधशतादपि॥ तानि यथा॥ मोक्षदेहि हृषीकेश मोक्षदे
हि जनार्दन। मोक्षधेनुप्रदानेन मुकुंदः प्रीयतां मम। इति मोक्षधेनुमंत्रः। ऐहिकामुष्मिकं यच्च सप्तज
न्मार्जितं त्वघम्। तत्सर्वं शुद्धिमायातु गामेतां ददतो मम। इति। ऋणधेनोः॥ आजन्मोपार्जितं पा
पं मनोवाक्कायकर्मभिः। तत्सर्वं शुद्धिमायातु गोप्रदानेन केशव। इति पापधेनो। भारते॥ शुक्ल
पक्षे दिवा भूमौ गंगायां चोत्तरायणे। धन्यास्तात मरिष्यंति हृदयस्थे जनार्दने। हेमाद्रौ वाराहे॥
व्यतीपातेथ संक्रांतौ तथैव ग्रहणे रवेः। पुण्यकालास्तदा सर्वे यदा मृत्युरुपस्थितः॥ व्यासः॥
आसन्नमृत्युना देया गौः सवत्सा तु पूर्ववत्। तदभावे तु गौरेव नरकोत्तारणाय वै। तदा यदि त्वश
क्तो दातुं वैतरणीं तु गां। शक्तोन्यो रुक्तदा दत्वा दद्याच्छ्रेयो मृतस्य तु। मदनरत्ने जातूकर्ण्यः॥
उत्क्रांत्यादीनि दानानि दद्याद्वा मृतस्य तु। गोभूतिलहिरण्याज्यवासो धान्यगुडानि च। रू
प्यं लवणमित्याहुर्दशदानान्यनुक्रमात्। एतानि दशदानानि नरेणामृत्युजन्मनोः। कुर्या
दभ्युदयार्थं तु प्रेते मिहि परत्र वै॥ ब्राह्मे॥ ताम्रपात्रं तिलैः पूर्णं प्रस्थमात्रं द्विजाय तु। सहिरण्यं च
यो दद्यात्कृष्णं वित्तानुसारतः। सर्वपापविशुद्धात्मा लभते गतिमुत्तमां। उत्क्रांतिवैतरण्यौ च
दशदानानि चैव हि। प्रेते पितृत्वमापन्ने शवधर्मेण दाहयेत्। तत्रैव परिशिष्टे। म्रियमाणस्य क
र्णे तु पुण्यमंत्रान् जपेत्ततः। क्रियानिबंधे गारुडे त्वष्टौ दानान्युक्तानि। तुलसी सन्निधौ कृत्वा शाल
ग्रामशिलां तथा। तिललोहं हिरण्यं च कार्पासं लवणं तथा॥ सप्तधान्यं क्षितिं गावो एकैकं पा
वनं स्मृतमिति। दशदानवैतरणीधेनूत्क्रांतिधेनुदानादि मदनरत्नेपि पद्धतौ ज्ञेयं। कर्त्रा
त्मकर्माधिकारार्थं त्रीन् कृच्छ्रान् कुर्यादिति तत्रैवोक्तं। अत्र देवयाज्ञिकेन मुमूर्षोर्मधुपर्कदा
नमुक्तं। तदुक्तं वाराहे। दृष्ट्वा तु विह्वलं सेनं यममार्गानुसारिणं। प्रयाणकाले तु नरो मंत्रेण वि
धिपूर्वकं॥ मधुपर्कं त्वरन्नग्र्यमिमं मंत्रमुदाहरेत्। गृहाण चेमं मधुपर्कमाद्यं संसारनाशनक
रं त्वमृतेन तुल्यं। नारायणेन रचितं भगवत्प्रियाणां देहेषु शांतिकरणं सुरलोकपूज्यं। अनेनै
व सुमंत्रेण दद्याच्च मधुपर्ककं। नरस्य मृत्युकाले तु परलोकसुखावहं॥ ॥अथ दुर्मरणादि

दासीये॥ चांडालादिमृते विशेषस्तत्रैव स्मृतेऽपि वा कृच्छ्रातिकृच्छ्रं चांद्रेण शुद्धिस्तत्र प्रकीर्तिता
एवं जानीयाज्जाबालिः॥ शूद्रेण दग्धो यो विप्रो न लभेच्छाश्वतीं गतिं। प्रायश्चित्तं प्रकुर्वीत ब्राह्मणः
पशुद्वये। चांद्रायणं पराकं च प्राजापत्यं विशोधनं इत्यकारिकायां॥ उदक्यासूतिकावापिय
दि प्रेतं स्पृशंति हि तस्येव विधिरादिष्टो व्यासेनैव महात्मना। एष स्मृतिकौतुके। मदनरत्ने स्मृत्यं
तरे॥ ऊर्ध्वोच्छिष्टाधरोच्छिष्टोभयोच्छिष्टेन तथैव च। दुःस्पर्शास्पर्शनेनैव खड्गादिमरणेऽपि वा। श्वा
दिक्रव्यादसंस्पर्शे कृमिकीटोद्भवेऽपि वा। एतद्दोषानुसारेण प्रायश्चित्तं समाचरेत्॥ कृच्छ्रं त्रिप
पंचदशाश्चांद्रत्रयमथापि वा। शुध्येत्तदानीं संपाद्य स्वधर्मेण दाहयेत्॥ रत्नकारिकायां
विद्वांयां मरणे चैव त्रींस्त्रीन् कृच्छ्रान् प्रकल्पयेत्। सप्तांत्यजैस्तु संस्पृष्टो मृतो दैवान्नकथंचन॥
एकत्रिंशता कृच्छ्रैः शुद्धिरुक्ता मनीषिभिः। कुणपे त्वर्द्धदग्धे तु चितास्पृष्टांत्यजादिभिः। तत्स्प
र्शने दूषणं च त्रिभिः कृच्छ्रैर्विशुध्यति धर्मप्रदीपे तु॥ चांडालसूतिकोदक्यास्पृष्टे प्रेते तथैव च
तस्य पापविशुद्ध्यर्थं कृच्छ्रान् पंच दशाचरेत् इत्युक्तं॥ मनुः॥ अस्वर्ग्या ह्याहुतिः सा स्यात् शू
द्रसंपर्कदूषिता॥ अत्रापि कृच्छ्रत्रयं। अस्पृश्यस्पर्शने चैवं ज्ञेयं॥ तत्रैव कर्मप्रदीपे। रात्रौ वा
शेषे वाग्नियत्नेन द्विजातयः। दाहं कृत्वा यथान्यायं ह्यापिंडं निर्वपेत्सुतः॥ रजस्वलागर्भिण्या
दौ मृते तु वक्ष्यामः। निर्णयामृते मदनपारिजाते च धर्मः। संध्यायां वा तथा रात्रौ दाहः पार्थिव
केनैव नवश्राद्धं वनौकुर्यात् कृतं निष्फलतां व्रजेत्। एतद्दिनमृतस्य॥ दिनमृतस्य तु सा रा
त्रिदाहनिषेधार्थमिति। अन्ये त्विष्टुतौ भट्टाः रात्रिनिषेधार्थं। पानुस्कांदे॥ यदि रात्रौ दहे
त्तस्य समाप्तिं दहनस्य तु। परेऽहनि तु दिने सर्वं कार्यं तस्योदकक्रिया। दग्धस्य तु न चेत्कार्या रात्रौ
जातूदकक्रियेति। तन्निर्मूलं॥ रात्रिमृतस्य तु तत्रैव संग्रहे॥ रात्रौ दग्ध्वा तु पिंडांश्च कृत्वा वपन
वर्जितं वपनं नेष्यते रात्रौ श्वस्तनी वपनक्रियेति॥ वपनं तु मातः॥ तच्च सर्वैः पुत्रैः कार्यं। ग
यायां भास्करक्षेत्रे मातापित्रोर्गुरोर्मृते। आधाने सोमयागे च वपनं सप्तसु स्मृतमिति मिता
क्षरायां स्मृतेः। मरणस्थानं गत्वान्यैर्मित्रिकमिदं। तदेवं संग्रहवचनेन परेद्युः कृच्छ्रतेती
पवत्। तेन कस्यचिद्दाहागत्वोक्तिश्चिंत्या। मदनरत्ने गालवः॥ प्रथमेऽहनि कर्तव्यं वपनं चानु
भाविनां। प्रेतस्य केशश्मश्रु आदि वापयित्वा प्रदाहयेत्। आशौचांते तु पुनः कार्यं। विधिवला
त्। मदनपारिजातेऽप्येवं। तेन सर्वस्यास्य निर्मूलत्वोक्तिरेवा स्मृतिरत्नावल्यां॥ प्रायश्चित्तं
चैव न कृच्छ्रान् कृत्वा दहेत्सुतः॥ मदनरत्ने गिराः। ऊर्ध्वोच्छिष्टाधरोच्छिष्टे त्वंतरिक्षमृतेऽपि
च। कृच्छ्रत्रयं प्रकुर्वीत आशौचे मरणेऽपि च॥ ॥अथ साग्नेर्विशेषः॥ कारिकायां॥
कालपक्षे प्रमीयेत यद्यग्निमानत आहुतीः॥ शेषास्तु जुहुयाद्दर्शपर्यंताः पक्षहोमवत्। प्रतिप
न्नमानहोमांता इत्यर्थः। यथाहिताग्निरपरपक्षे म्रियेताहुतिभिरेनं पूर्वपक्षं हरेयुरित्याश्वला
यनोक्तेः। तदानीमेव जुहुयात्। प्रातःकालाहुतीरपि। सकृद्गृहीतमंत्रं भिन्नतंत्रे च होमयोः
दर्शं चापि प्रकुर्वीत स्थालीपाकं तदैव तु। छंदोगपरिशिष्टे। इतामासाय माकृत्वा दुर्बलं चेद्ध
ही भवेत्॥ प्रातर्होमस्तदेवस्याज्जीवेच्चेत्स्वपनं नेवा। इदं तु कृष्णपक्षपरं॥ दुर्बलो मुमूर्षुः॥ त्रि

मग्निपिंडोदकादिकं पुनः संचयनात्प्राक्तेषु कृच्छ्रं कृत्वा चरेत्। स्वगृहे तु त्रिरात्रं सर्वं शेषं कार्यं सपिंड
नं॥ तथा॥ अयस्यां नेत्यवामार्गे मृतस्तत्र च संस्कृतः। न तिष्ठति जनः पिंडं जनस्तत्र च वर्त्तयेत्। मंत्रेण दा
होस्थिसंचयनं च संस्कारस्तस्मिन्कृते न तु च। भयादिना स्थानुमशक्तौ पत्रपुत्रेण कार्यं कृच्छ्रं
तत्र तत्रैव पिंडोदकदानादिसपिंडनांतं समापयेदिति श्राद्धसंकल्पः। तदेवं परिशिष्टयादिरोधे यथा
चारमापदनापदादिभेदेन व्यवस्था ज्ञेया। केचित्तु सापवादत्वमाहुः। असगोत्रः सगोत्रो वा यदि
स्त्री यदि वा पुमान्। प्रथमेहनि यो दद्यात्स दशाहं समापयेत्। दद्यात्पिंडमिति शेषः॥ भविष्ये॥ प
त्राद्यैर्दीयते पिंडस्तैः सर्वं समापयेत्॥ ब्राह्मेपि॥ प्रथमेहनि यो दद्यात्स्नात्वा यत्नसमाहितः। अन्नं न
वसु चान्येषु सर्वं पदं दात्यपि॥ विज्ञानेश्वरस्त्वयं तु॥ केचित्तु अग्निदद्यादिति व्याचक्षते। सगोत्रो
वा सगोत्रो वा योग्निं दद्यात्सखे नरः। सोपि कुर्यान्नवश्राद्धं सुप्ये तु दशमेहनीति। दिवोदासीये व
चनाच्च। तत्रैव॥ दृष्ट्वा स्थानस्थमासन्नमर्थोन्मीलितलोचनं। भूमिस्थं पितरं पुत्रो यच्छिद्दानं प्र
दापयेत्। तद्धि शिष्टं गयाश्राद्धादश्वमेधशतादपि॥ तानि यथा॥ मोक्षदे हि हृषीकेश मोक्षदे
हि जनार्दन मोक्षधेनुप्रदानेन मुकुंदः प्रीयतां मम इति मोक्षधेनुमंत्रः। ऐहिकामुष्मिकं यच्च सप्तज
न्मार्जितं ऋणम्। तत्सर्वं शुद्धिमायातु गामेतां ददतो मम इति। ऋणधेनोः॥ आजन्मोपार्जितं पा
पं मनोवाक्कायकर्मभिः। तत्सर्वं शुद्धिमायातु गोप्रदानेन केशव इति पापधेन्वा भारते॥ शुक्ल
पक्षे दिवा भूमौ गंगायां चोत्तरायणे। धन्यास्ते ते मरिष्यंति हृदयस्थे जनार्दने। हेमाद्रौ वाराहे॥
व्यतीपाते त्वथ संक्रांतिस्त्वयं वा ग्रहणे रवेः। पुण्यकालास्तदा सर्वे यदा मृत्युरुपस्थितः॥ व्यासः॥
आसन्नमृत्युना देया गौः सवत्सा तु पूर्ववत्। तदभावे तु गौरेव नरकोत्तारणाय वै। तदा यदि न श
क्तोति दातुं वैतरणीं तु गां। शक्तोन्यो रुक्रुदत्त्वा दद्याच्छ्रेयो मृतस्य तु। मदनरत्ने जातूकर्ण्यः॥
उत्क्रांत्यादीनि दानानि दद्याद्दद्यान्मृतस्य तु। गोभूतिलहिरण्याज्यवासोधान्यगुडानि च। रू
प्यं लवणमित्याहुर्दश दानान्यनुक्रमात्। एतानि दश दानानि नराणां मृत्युजन्मनोः कुर्या
त्सुदयार्थं तु मेनेयिहि परत्र वै॥ ब्राह्मे॥ ताम्रपात्रं तिलैः पूर्णं प्रस्थमात्रं द्विजाय तु। सहिरण्यं च
यो दद्यात्कृच्छ्रविज्ञानुसारतः। सर्वपापविशुद्धात्मा लभते गतिमुत्तमां। उत्क्रांतिवैतरण्यौ व
दशदानानि चैव हि। प्रेते पितृत्वमापन्ने सर्वं शवधर्मेणालस्येत्। तत्रैव परिशिष्टे॥ म्रियमाणस्य क
र्णे तु पुण्यमंत्रान् जपेत्ततः। क्रियानिबंधे गारुडे त्वष्टौ दानानि उक्तानि। तुलसीसन्निधौ कृत्वा शाल
ग्रामशिलां तथा। तिललोहं हिरण्यं च कार्पासं लवणं तथा॥ सप्तधान्यं क्षितिर्गावो एकैकं पा
वनं स्मृतमिति। दशदानवैतरणीधेनूत्क्रांतिधेनुदानादिप्रकृतांतेष्टिपरतो ज्ञेयाः। कर्त्ता
नं कर्माधिकारार्थं त्रीन्कृच्छ्रान्कुर्यादिति तत्त्वोक्तौ। अत्र देवयाज्ञिकेन मुमूर्षोर्मधुपर्कदा
नमुक्तं। तदुक्तं वाराहे। दृष्ट्वा तु विह्वलं सेनं यममार्गानुसारिणं। प्रयाणकाले तु नरो मंत्रेण वि
धिपूर्वकं॥ मधुपर्कं त्वरन्गृह्य इमं मंत्रमुदाहरेत्। गृहाण चेमं मधुपर्कमाद्यं संसारनाशनक
रं त्वमृतेन तुल्यं। नारायणेन रचितं भगवत्प्रियाणां सदैव शांतिकरणं सुरलोकपूज्यं। अनेनै
व तु मंत्रेण दद्याच्च मधुपर्ककं। नरस्य मृत्युकाले तु परलोकसुखावहं॥ ॥अथ दुर्मरणादि

पत्नीमप्रशस्विनीं। इज्येव बहुविधैर्यज्ञैः सह भ्रातृभिरच्युत इत्यादीनि तानि पूर्वाग्निष्वेवाग्निहोत्रादि
परणि। नत्वपत्नीकस्याधानार्थानि। क्रतुविधीनामाधानाप्रयोजकत्वात्। अपत्नीकस्याधा
नाप्रवृत्तिरिति मानवपरिशिष्टाच्च। सोमो न भवत्येव। अपत्नीकोऽप्यसोमप इति श्रुतेः। यत्तु भार
द्वाजापस्तंबसूत्रं॥ दारकर्मणि यद्यशक्त आत्मार्थमन्याधेयमिति। अस्यार्थः॥ पुनर्विवाहा
शक्तौ मदग्न्याधेयं पूर्वं कृतमस्ति तद्दाहार्थमेवान पत्न्यै दद्यादिति। ब्राह्मणभाष्यापरार्कौ शूल
केणमांडारादित्वमप्येवम्। त्रिकांडमंडनस्तु पक्षद्वयमाह। अन्येऽप्यपत्नीकस्याधानमाहुस्त
दाधानविधेः। वृद्धयाज्ञवल्क्यः॥ आहिताग्निर्यथान्यायं दग्धव्यस्त्रिभिरग्निभिः। अनाहि
ताग्निरेकेन लौकिकेनापरो जनः॥ मनुः॥ एवंवृत्तां सवर्णां स्त्रीं द्विजातिः पूर्वमारिणीं॥ दा
हयेदग्निहोत्रेण यज्ञपात्रैश्च धर्मवित्। कारिकायाम्॥ पत्नीमपि दहेदेवं भर्तुः पूर्वं मृताय
दि। अनग्निकां दहेदेवं कापालेन हविर्भुजा॥ छंदोगपरिशिष्टे॥ अनयैवावृता नारी दग्ध
व्या व्यवस्थिता। अग्निप्रदानमंत्रोऽस्या न प्रयोज्य इति स्थितिः॥ इदं छंदोगानामेव। तथा।
अग्निनैव दहेद्भार्यां स्वतंत्रां पतितां न चेत्। तदुत्तरेण पात्राणि दाहयेत्पृथगंतिके। इदमपि तेषामे
व॥ आशौचप्रकाशे मनुः॥ विधुरं विधवां चैव कपालस्थाग्निना दहेत्। ब्रह्मचारियतिं चैव द
उत्तपनाग्निना। तुषाग्निना दग्धव्यः कन्यका बाल एव च। अग्निवर्णं कपालं तु कृत्वा तत्र वि
निः क्षिपेत्। करीषादि ततो वह्निर्जातोऽयं सकपालजः। अनुपनीते यद्यपि जातमरण्यग्निः कै
श्चिदुक्तस्तथापि तस्य कलौ निषिद्धत्वादयमेव ज्ञेयः। स्मृत्यंतरे॥ गृहस्थो ब्रह्मचारी च विधुरो वि
धवाः स्त्रियः। औपासनश्चोत्तपनस्तुषाग्निश्च कपालजः॥ उत्तपनस्तु॥ दर्भाग्नेरग्निं तु पक्वा स
गर्दभैस्तु संयुतः। पुनर्दर्भैस्तृतीयोऽग्निरेष उत्तपनः स्मृतः॥ यमः॥ यस्यानयति शूद्रोऽग्निं तृणं का
ष्ठं हवींषि च। प्रेतत्वं च सदा तस्य स चाधर्मेण लिप्यते॥ देवलः॥ चांडालाग्निरमेध्याग्निः सूतिका
ग्निश्च कर्हिचित्। पतिताग्निश्चिताग्निश्च न शिष्टग्रहणोचिताः॥ पश्चिमोत्तरपूर्वैस्तु यथासं
ख्यं द्विजातयः॥ दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत्। अनुप्रातिलोम्येन क्रमः॥ पूर्वामुखस्तु
नेतव्यो ब्राह्मणो बांधवैर्गृहात्। उत्तराभिमुखो राजा वैश्यः पश्चान्मुखस्तथा। दक्षिणाभिमु
खः शूद्रो निर्हर्तव्यः स्वबांधवैरित्यादि पुराणादिस्तु परार्के॥ तेन त्रिंशत्सोक्युक्तोऽनुलोमक्र
मो ज्ञेयः॥ आश्वलायनः॥ ज्येष्ठप्रथमाः कनिष्ठजघन्या गच्छेयुः॥ अथाधानोत्तरं द्वितीय
विवाहे कृते यजमानमरणे श्रौतस्मार्ताग्न्योः संसर्गः॥ बौधायनसूत्रे॥ अथ यद्याहिता
ग्नेर्भार्यं विंदेत प्राक्संयोगात् म्रियेतोपासनं संपरिस्तीर्याज्यं विलाप्य चतुर्गृहीतं गृही
त्वा समिद्वत्यग्नौ जुहोति प्रामितसंकल्पे थ्यामिति मिंदाहुती व्याहृतीश्च हुत्वाथैतमग्निं
मयं ते योनिर्ऋत्विय इति॥ समिधि समारोप्य गार्हपत्ये समिधमभ्यादधाति भवतं नः समनसा
विति गार्हपत्य आज्यं विलाप्य चतुर्गृहीतं गार्हपत्ये जुहोत्यग्नावग्निश्चरति प्रविष्ट इत्यपरं च
तुर्गृहीत्वा चितिः स्रुगिति संग्रहमग्नौ जुहोत्यथ गार्हपत्ये स्रुवाहुती जुहोति ब्राह्मण एकहोते
ति दशभिरथ प्राचीनावीत्यन्वारब्धे वचने जुहोति ये समाना ये सजाता इति द्वाभ्यामथ तत्रैव

जुहूं च दक्षिणे हस्ते वामे तूपभृतं न्यसेत्। श्रोत्रे तूलूखलं दद्यात्पृष्ठे च मुसलं न्यसेत्। उरसि क्षिप्य द
षदं तंडुलाज्यतिलान्मुखे। श्रोत्रे च प्रोक्षणीं दद्यादाज्यस्थालीं च चक्षुषोः। कर्णे नेत्रे मुखे घ्राणे
हिरण्यशकलं न्यसेत्। अग्निहोत्रोपकरणमशेषं तत्र निक्षिपेत्। प्रचेताः॥ स्नानं प्रेतस्य पुत्रा
धैर्वस्त्राद्यैः पूजनं ततः। नग्नदेहं दहेन्नैव किंचिद्देयं परित्यजेत्॥ यमः॥ प्रेतं दहेच्छुभैर्गंधैः स्ना
पितं स्रग्विभूषितं॥ आश्वलायनसूत्रे संस्थिते मेना ऽलकाएन कुर्वंति केशश्मश्रुलोमनखा
निवापयंति नलदेनानुलिंपंति नलदमालां प्रतिमुंचंतीति। माधवीये प्राह्णे। शरीरे पिनद्ध
मोनग्नः कस्यांचिद्दायदि॥ तथा॥ निःशेषस्तु न दग्धव्यः शेषं किंचित्त्यजेन्नरः। दाहकाले भि
नाशेत्। मदनरत्ने पत्रपार्श्वः॥ यजमानः मृते क्वापि चिता दोवा प्रवेशितः। वर्षाद्यभिहते नौनु
कथं प्रेतविकल्पना। शेषं दग्ध्वा प्रदग्धे तु निर्मथ्ये वानुकारयेत्॥ क्रियानिबंधे॥ उदधारम
विच्छिन्नां सिंचेत्कर्त्ता प्रदक्षिणं। स्कंधाद्धृतेन कुंभेन पादतः परिनिश्चितः॥

॥अथ पर्णशरदाहे कृते नाष्टिनाशे पश्चात्तद्देहलाभे मदनरत्ने ब्राह्मे॥ अदग्धपर्णे
दग्ध्वेषा न्यासेक्कते सति। गते चाग्निपुनर्देहो यदृश्येत लभेत वा क्वचित्। तदाद्दग्धव्यकाष्ठेन
निर्मथ्य तं दहेद्यद्यर्धदग्धकाष्ठं तु न लभ्यते तदा तदस्थिखंडं तु निःक्षिप्य महाजले। दश
एकदा मृतौ विशेषमाह आपस्तंबः॥ तथैव प्रेतसहैव पितृमेधो द्विवचनलिंगान्मंत्रान्संधा
नि। पितृमेधो दाहांतकर्म। दाहांतमेव तंत्रत्वमिति बोधायनोक्तेः॥ अस्थिसंचयनमपि ए
। उदकपिंडदानादि पृथगेव सहगमनेप्येवं॥ तदाह मदनरत्ने॥ भाष्यार्थसंग्रहकारः॥ ए
कालमृतौ भार्याभर्त्तारौ चेद्द्वयोः। तत्रैव दहनं कुर्यात्पिंडश्राद्धं पृथक्पृथक्। एककाले
तौ जायापतीयदि तदापितुः। विभज्याग्निक्रियां कुर्यादिति यत्तदसांप्रतं। दाहादनंतरं तत्र
निमात्तिकसंमतं। मृतं पतिमनुव्रज्य या नारी ज्वलनं गता। अस्थिसंचयनं तस्या भर्तुः स
रेवहि। कौकसानां तु संस्कारोन्याय सिद्धोपि नो मतः एककालमृतेष्वेवं कौकसानां वि
स्मृतः। न च श्राद्धसपिंडं तं भिन्नकालमृतौ यथा। कपर्दिकारिकापि॥ मृते भर्त्तरि तद्दाहा
कपत्नी म्रियते यदि। पत्न्या वा भर्त्तृप्रमीतायां दाहात्प्रागपि निर्गतः। तत्र तंत्रेण दाहः स्या
नेषु हितमुच्यते। कौकसानां तु संस्कारः पृथगेव तयोर्भवेत्। एकाह मृतयोर्युगपत्सपिंडश्राद्ध
कं तयोः॥ मृतं पतिमनुव्रज्य पत्नी चेदनलं गता। तत्रापि दाहस्तंत्रेण पृथगस्थिक्रिया भवे
अस्थिसंचयनं पृथक्त्व विकल्पः॥ सहगमने सर्वत्र पाकैक्यमाह प्रचेताः॥ एकचितां स
दौ भ्रीयेते दंपती यदि। तंत्रेणान्नपरं कुर्यात्पृथक्पिंडं समाचरेत्॥ ॥अथोद
ने॥ वसिष्ठः॥ शरीरमग्निसंयोग्यानवेक्ष्यमाणा अपोभ्युपयंति सव्योत्तराभ्यां पा
णिभ्यामुदकक्रियां कुर्वंत्ययुग्माः॥ आपस्तंबः॥ मातुश्च योनिसंबंधेभ्यः पितुश्चासप्तमात्पु
रुषाद्यावत्तेषां संबंधो ज्ञायते तेषां प्रेते उदकक्रियेति। गर्भान्परिहाप्याधरिवन्तरात्। चर्षांन
प्रज्विनेत्यर्थः। याज्ञवल्क्यः॥ सप्तमाद्दशमाद्वापि ज्ञातयोऽभ्युपयंत्यपः। अपनः शोशुचद
घमनेन पितृदिङ्मुखाः। सकृत्प्रसिंचंत्युदकं नामगोत्रेण वाग्यताः॥ सप्तमाद्दशमाद्वा दिवसा

स्रुवाहुतिं जुहोत्यग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः स्वाहेत्यथ यज्ञोपवीती द्वादशगृहीतेन
स्रुवं पूरयित्वा पुरुषसूक्तेनाहवनीये जुहोत्यथ स्रुवाहुतीर्जुहोत्यग्नये विविचये स्वाहाग्नये व्रतप
तयेऽग्नये पवमानायाग्नये पावकायाग्नये शुचये स्वाहा॥ अग्नये पथिकृते स्वाहाग्नये तनुष
नये वैश्वानरायेत्यथ चतुर्गृहीतं जुहोति मनो ज्योतिरित्यत ऊर्ध्वं प्रेतकर्म प्रतिपद्यते। आहि
ताग्नौ विदेशमृते पथिकृतीष्टिर्मृताग्निहोत्रे तदाहुः पात्रयोजनञ्च कल्पसूत्रादिभ्यः स्मृति
नामहकृतपद्धतौ ज्ञेयमिति। बह्वृचकर्मण्युपरम्यते। सामगानां तु मदनरत्ने छंदोगपरिशि
ष्टे च। दुर्बलं स्नापयित्वा तु शुद्धचैलाभिसंवृतं। दक्षिणाशिरसं भूमौ बर्हिष्मत्यां निवेशयेत्।
घृतेनाभ्यक्तमाप्लाव्य शुद्धवस्त्रोपवीतिनं। चंदनोक्षितसर्वांगं सुमनोभिर्विभूषयेत्। हिरण्य
शकलान्यस्य क्षिप्त्वा छिद्रेषु सप्तसु। मुखेष्वथापिधायैनं निर्हरेयुः सुतादयः। आमपात्रेऽन्न
मादाय प्रेतमग्निपुरःसरं। एकोऽनुगच्छेत्तस्यार्धमर्धं पथ्युत्सृजेद्भुवि। ऊर्ध्वमादहनं कार्यमा
सीनो दक्षिणामुखः। सव्यं जान्वाच्य शनकैः सतिलं पिंडदानवत्॥ अथ पुत्रादिराप्लुत्य
कुर्याद्दाहचयं महत्। ततो ज्ञानं निपात्यैनं दक्षिणाशिरसं मुखे। आज्यपूर्णां स्रुवं दद्याद्दक्षि
णाग्रां नसि स्रुवं पादयोरधरां प्राचीमरणीमुरसी तरां। पार्श्वयोः शूर्पचमसौ सव्यदक्षिण
योः क्रमात्। मुसलेन तु न्यसेद्भुजं प्रेतस्योर्वोरुलूखलं। चान्यो वा लौकिके चैवं त्यजन्नग्नेरण्यं विधि
अपसव्येन कृत्वैतत् वाग्यतः पितृदिङ्मुखः। अथाग्निं सव्यमारभ्य दद्याद्दक्षिणतः शनैः
अस्मात्त्वमधिजातोसि त्वदयं जायतां पुनः। असौ स्वर्गाय लोकाय स्वाहेति परिकीर्तयन्।
तथा॥ एवमेवाहिताग्नेश्च पात्रन्यासादिकं भवेत्। कृष्णाजिनादिकं चात्र विशेषो गृह्यचो
दितः। तत्रैव। अनयैवावृता नारी दग्धव्या या व्यवस्थिता। अग्निप्रदानमंत्रोस्या न प्रयो
ज्य इति स्थितिः। इदं छंदोगानामेव। पात्रन्यासोक्तेरुत्तानदेहस्त्वसाग्निकपरं। निरग्निस्तु
पुमानधोमुखः स्त्री तूत्तानादाह्या। सगोत्रजैर्गृहीत्वा तु चितामारोप्यते शवः। अधोमु
खो दक्षिणादिक्चरणस्तु पुमानिति। उत्तानदेहा नारी तु सपिंडैरपि बंधुभिरित्यादिपुरा
णादिति। शुद्धितत्त्वहारलतादयः। उत्तरसिरस्त्वसामगेतरपरं। दाहे त्वग्निदानेऽयं मं
त्रः। कृत्वा तु दुष्कृतं कर्म जानता वाप्यजानता। मृत्युकालवशं प्राप्य नरं पंचत्वमागतं। धर्मा
धर्मसमायुक्तं लोभमोहसमावृतं। दहेयं सर्वगात्राणि दिव्यान्लोकान्स गच्छतु। ज्वल
मानं महावह्निं शिरःस्थाने प्रदापयेत्। चतुर्वर्णेषु संस्थानमेवं भवति पुत्रके। अत्र क्रिया
निबंधे गारुडे षट्पिंडदानमुक्तं। मृतस्योत्क्रांतिसमये षट्पिंडान्क्रमशो ददेत्। मृतस्था
ने तथा द्वारि चत्वरे तार्क्ष्यकारणात्। विश्रामे काष्ठचयने तथा संचयने च षट्। तथा श्रा
द्धे देयानुषट्पिंडा दशपिंडा दशाहिकाः। स्थाने चार्द्धपथे नीते चितायां शवहस्तके। श्म
शानवासिभूतेभ्यः षष्ठं संचयने तथा। ततः त्वं भूतकृज्जगद्योनेस्त्वं लोकपरिपालकः। उ
क्तः संहारकस्तस्मादेनं स्वर्गं मृतं नय। इत्यग्निं दत्त्वा। अस्मात्त्वमिति मंत्रेणार्द्धदग्धे आ
ज्याहुतिरुक्ता। आहिताग्नेरुपरणारः शम्यां शिश्ने विनिःक्षिप्य अरणीं मुष्कयोरपि॥

गुह्ये चदक्षिणेहस्ते वामेतूपभृतंन्यसेत्। श्रोणेरुलूखलंदद्यात्पृष्ठे चमुशलंन्यसेत्। उरसिक्षिप्यदृ
षदंतंडुलाज्यतिलान्मुखे। श्रोत्रेचप्रोक्षणींदद्यादाज्यस्थालींचचक्षुषोः। कर्णेनेत्रेमुखेघ्राणे
हिरण्यशकलंन्यसेत्। अग्निहोत्रोपकरणमशेषंतत्रनिक्षिपेत्। प्रचेताः॥ स्नानंप्रेतस्यशुद्धा
र्थैर्वस्त्राद्यैःपूजनंततः। नग्नदेहंदहेन्नैवकिंचिद्देयंपरित्यजेत्॥ यमः॥ प्रेतंदहेच्छुभैर्गंधैःस्ना
पितंस्रग्विभूषितं॥ आश्वलायनसूत्रे। संस्थितेनालकाएनकुर्वंतिकेशश्मश्रुलोमनखा
निवापयंतिनलदेनानुलिंपंतिनलदमालांप्रतिमुंचंतीति। माधवीयेब्राह्मे। दरिद्रोपिनरःशु
भेनग्नःकस्यांचिदापदि॥ तथा॥ निःशेषस्तुनदग्धव्यःशेषंकिंचित्त्यजेन्नरः। दाहकालेग्नि
नाशेन। मदनरत्नेपद्मपार्श्वः॥ यजमानेमृतेक्वापिचितादीवाप्रवेशितः। वर्षाद्यभिहतेग्नौतु
कर्षप्रेतविकल्पना। शेषंदग्ध्वाप्रदग्धेषुनिर्मथ्येवानुकारयेत्॥ क्रियानिबंधे॥ उदधाराग्नि
विच्छिन्नांसिंचेत्कर्ताप्रदक्षिणं। स्कंधाद्दत्तकुंभेनपादतःपरिनिश्चितः॥

॥अथपत्नीप्रभृतिदाहेनाग्निनाशेपश्चाद्देहलाभेमदनरत्नेब्राह्मे॥ अदेपत्नी
नरश्चैवान्यासक्तेसति। गतेवह्निपुनर्देहोयद्यर्धेलभतेक्वचित्। तदाहृत्यचकाष्ठेनता
निर्मथ्यतंदहेत्। यद्यर्धदग्धकाष्ठंतुनलभ्येतेनदाहतःस्थिखंडंतुनिःक्षिप्तव्यंमहाजले॥ दंप
त्योरेकदामृतौविशेषमाहआपस्तंबः॥ तथैवचैतेसहैवपितृमेधो द्विवचनलिंगान्मंत्रान्संधा
रयति। पितृमेधोदाहांतकर्म। दाहांतमेकतंत्रत्वमितिबोधायनोक्तेः॥ अस्थिसंचयनमपिए
का। उदकपिंडदानादिपृथगेवसहगमनेप्येवं॥ तदाहमदनरत्ने॥ भाष्यार्थसंग्रहकारः॥ ए
ककालमृतौभार्याभर्तारौयदिचेद्द्वयोः। तंत्रेणदहनंकुर्यात्पिंडश्राद्धंपृथक्पृथक्। एककाले
मृतौजायापतीयदितदापितुः। विभज्याग्निक्रियांकुर्यादितियत्तदसांप्रतं। दाहांतमेकतंत्रत्व
मितियाज्ञिकसंमतं। मृतंपतिमनुब्रज्यायानारीज्वलनंगता। अस्थिसंचयनात्तस्याभर्तुःसं
स्कारएवहि। कीकसानांतुसंस्कारोन्यापसिद्धोपिनोमतः एककालमृतेप्येवंकीकसानांवि
धिःस्मृतः। नवश्राद्धसपिंडांतंभिन्नकालमृतौयथा। कपर्दिकारिकापि॥ मृतेभर्तरिलद्दाहा
त्प्राक्पत्नीम्रियतेयदि। पत्न्यावाभावश्रमीतापीदाहादर्वाक्पतिर्मृतः। तत्रतंत्रेणदाहःस्या
त्तेषुद्वित्वमुच्यते। कीकसानांतुसंस्कारःपृथगेवतयोर्भवेत्। एकाहमृतयोर्युगपन्नवश्राद्धा
दिकंतयोः॥ मृतपतिमनुव्रज्यपत्नीचेद्दहनंगता। तत्रापिदाहस्तंत्रेणपृथगस्थिक्रियाभवे
त्। अस्थिसंचयनपृथक्त्वेविकल्पः॥ सहगमनेसर्वत्रपाकैक्यमाहप्रचेताः॥ एकचित्यांस
मारूढौम्रीयेतेदंपतीयदि। तंत्रेणश्रपणंकुर्यात्पृथक्पिंडंसमावपेत्॥ ॥अथोद

कदानं॥ वसिष्ठः। शरीरमग्निसंयोज्यानवेक्ष्यमाणाअपोभ्युपयंतिसव्येतराभ्यांपा
णिभ्यामुदकक्रियांकुर्वंत्ययुग्माः॥ आपस्तंबः॥ मातुश्चयोनिसंबंधेभ्यःपितुश्चासप्तमात्पु
रुषाद्यावतांवासंबंधोज्ञायतेतेषांप्रेतेषूदकक्रियेति। गर्भान्यरिहाप्यापरिवत्सरात्। वर्षोन
बालान्वितेत्यर्थः। याज्ञवल्क्यः॥ सप्तमाद्दशमाद्वापिज्ञातयोभ्युपयंत्यपः। अपनःशोशुचद
घमनेनपितृदिङ्मुखाः। सकृत्प्रसिंचंत्युदकंनामगोत्रेणवाग्यताः। सप्तमाद्दशमाद्वादिवसा

दादेतमिति विज्ञानेश्वरः॥ कात्यायनः। सप्तमाद्दशमात्पुरुषादित्याहुः॥ सप्तमात्पुरुषाद्दशमाद्वा
समानग्रामवासी यावत्संबंधमनुस्मरेदिति पारस्करोक्तेः॥ मंत्रः स्नानांगमेवेति हेमाद्रिः॥ प्रचे
ताः॥ प्रेतस्पर्शी धवा यथावदुदकमवतीर्य नो पर्षेयुरुदकांते शमिं वेयुरपसव्यं यज्ञोपवी
तवाससो दक्षिणामुखा ब्राह्मणस्योदङ्मुखाः प्राङ्मुखाश्च राजन्यवैश्ययोः॥ सएव॥ नदी
कूलं ततो गत्वेत्युक्त्वा॥ सचेलं तु ततः स्नात्वा शुचिः प्रयतमानसः पाषाणं तत आदाय विप्रे
दद्याद्दशांजलीन्। द्वादश क्षत्रियो दद्यात् वैश्यः पंचदश स्मृताः॥ त्रिंशत् शूद्राय दातव्यास्ततः
संप्रविशेद्गृहं। ततः स्नानं पुनः कार्यं गृहशौचं च कारयेत्॥ प्रेतस्नाने विशेषः। शुद्धितत्त्वे आ
दिपुराणे॥ आदौ वस्त्रं च प्रक्षाल्य तेनैवाच्छादितस्ततः। कर्तव्यं तैः सचेलं तु स्नानं सर्वमला
पहं। पूर्वं परिहितं वस्त्रं प्रक्षाल्य पुनः परिधाय स्नायादित्यर्थः। अपनरंतिवा सह स्नानामिक
याजलालोडनं। अवतरणोत्तरं सरत्वोक्तेयथावालेपुरस्कृत्ये निवीधायनीयं। जलाद
त्थानपरमिति॥ हारलतायां॥ आश्वलायनः। सव्यावृतो व्रजंत्यनीक्षमाणा यत्रोदकमह
प्लवंति तत्राप्यसकृदुन्मज्ज्यैकांजलिमुत्सृजंति तस्य गोत्रं नाम गृहीत्वेति। प्रचेतसा त्वहमंजलि
त्रयमप्युक्तं। त्रिः प्रत्येकं कुर्युः प्रेतस्याप्त्विति तथा। दिने दिने जलीन् पूर्णान्प्रदद्यात्प्रेतकार
णात्। तावद्वृद्धिश्च कर्तव्या यावत्पिंडः समाप्यते। एकवृद्धिस्त्रिकवृद्धिर्वेत्यर्थः। मदनरत्ने भर
द्वाजगृह्ये तु द्विकवृद्धिरप्युक्ता। आशौचांते प्रदद्यात्तु प्रेतपुत्रस्तिलांजलीन्। प्रथमेह्नि सकृद्द्या
त्पिंडपत्राकृताद्विवा। त्रीन्दद्याद्द्वितीयेह्नि तृतीये पंचमेव च। चतुर्थे सप्त संख्यास्तु पंचमे नव
चोत्सृजेत्। षष्ठेह्नि चैकादश वा सप्तमे तु त्रयोदश। अष्टमे पंचदशकान्नवमे दश सप्त च। एको
नविंशतिं चाथ शतांजलिमतः परं केचिद्दशांजलीनाहुः केचिदाहुः शतांजलीन्। पंचपंचा
शतं चान्ये स्वशाखोक्तव्यवस्थया। अशक्तौ गौतमः। प्रथमतृतीयसप्तमनवमेषूदकक्रियेति॥
छंदोगपरिशिष्टे॥ अथानवेक्षमेणार्यं सर्वे चैव शवस्पृशः। गोत्रनामपदांते तु तर्पयामीत्यनंत
रं। दक्षिणाग्रान्कुशान्कृत्वा सतिलं तु पृथक्पृथक्। विष्णुपुराणे॥ सपिंडीकरणादर्वाक्पृथग्भिः
पितृक्रिया॥ सपिंडीकरणादूर्ध्वं द्विगुणं विधिवद्भवेत्॥ रामायणे॥ इदं पुरुषशार्दूल विमलं
दिव्यमक्षयं पितृलोकेषु पानीयमद्दत्तमुपतिष्ठतां॥ दानवाक्यविकल्पः॥ याज्ञवल्क्यः॥ का
मोदकं सखिप्रत्ता स्वस्रीयश्वशुरर्त्विजां। कामं कुर्यात्। प्रेतत्वेच्छायां देयमन्यथा नेत्यर्थः। शं
खपारस्करौ॥ आचार्ये चैवमातामहयोश्च स्त्रीणां चाप्रत्तानां कुर्वीरंस्ताश्च तेषामिति। द्विवच
नान्मातामहयोश्च अपि। शंखलिखितौ॥ उदकक्रियाकामश्वशुरमातुलयोः शिष्ये सह
ध्यायिनि राजनि चेति। वृद्धमनुः॥ क्लीबाद्या नोदकं कुर्युस्तेनास्त्या विधर्मिणः। गर्भभर्तृद्रुह
श्चैव सुरापश्चैव योषितः॥ याज्ञवल्क्यः। नब्रह्मचारिणः कुर्युरुदकं पतितास्तथा॥ षट्त्रिंशन्मते
स्त्रीयाचारादपि भ्रष्टाः पतिताश्चैव दूषिताः। न कुर्युरुदकं नैव तेभ्योप्यन्ये न चैव हि॥ मदनरत्ने ह
[illegible] जातीनां नकामतः। प्रत्तानां नैव कन्यानां नित्यमे सलिलक्रिया। अपरा
[illegible] ॥ अपयात्रिनः कृतपरस्कोटनम
स्नानं संग्रहविधौ कृते आशौचादर्वाक् कुर्यादेवमाशौचप्रकाशः॥ ॥अथाशौचे नियमाः

याज्ञवल्क्यः॥ इतिसंश्रुत्यगच्छेयुर्गृहंबालपुरःसराः विदश्यनिंबपत्राणिनियताद्वारिवेश्मनः
आचम्याग्न्यादिसलिलंगोमयंगौरसर्षपान्। प्रविशेयुःसमालभ्यकृत्वाश्मनिपदंशनैः॥ प्र
वेशनादिकंकर्मप्रेतसंस्पर्शिनामपि। क्रीतलब्धाशनाभूमौस्वपेयुस्तेपृथक्क्षितौ॥ इदंचाद्ये
न्हि। वसिष्ठः॥ अधःप्रस्तरेत्र्यहमनश्नंतआसीरन्। क्रीतोत्पन्नेनवावर्तेरन्॥ शुद्धितत्वेवैजवा
पः। शमीपालभन्ते शमीपापंशमयत्विति। अश्मानमस्येवस्थिरोभूयासमितिअग्निमग्निर्नः
शर्मयच्छत्विति। ज्योतिर्मिताक्षरायांमज्जनुपस्पर्शनः क्रीतलब्धाचान्यगेहादेकान्नमलवण
मेकरात्रंदिवाभुंजीरंस्त्रिरात्रंचकर्मोपरमणम्। क्रीताद्यशनमुपवासाशक्तस्य। आश्वलाय
नसूत्रे॥ नैतस्यांरात्र्यामन्नंपचेतक्रीतोत्पन्नेनवावर्तेरंस्त्रिरात्रमक्षारलवणाशिनः स्युर्द्वादश
रात्रंवेत्याह। अशक्तौरत्नाकरे। आपस्तंबः। भार्यापरमगुरुसंस्थायांचाकालभोजनानिकुर्वी
रन्। यदामृतिः परदिनेतावत्कालमित्यर्थः॥ बृहस्पतिः॥ अधःशय्यासनादीनामलिनाभो
गवर्जिताः। अक्षारलवणान्नाःस्युर्नेत्यक्रीताशनास्तथा। भोगोभ्यंगतांबूलादिः। क्षारःप
रिभाषायामुक्तः॥ यत्तुमार्कंडेयपुराणे॥ तैलाभ्यंगोबांधवानामंगसंवाहनंचयत्। तेनचा
प्याय्यतेजंतुर्यच्चाश्नंतिसबांधवाः। प्रथमेन्हितृतीयेचसप्तमेनवमेतथा वस्त्रत्यागंबहिःस्ना
नंकृत्वादद्यात्तिलोदकमिति॥ तदंत्यदिनपरं। अशौचांतेतिलकल्कैःस्नात्वागृहंप्रविशेयुरिति
विष्णूक्तेः। विष्णुपुराणेत्वस्थिसंचयोर्ध्वंभोगोप्युक्तः। शय्याशनोपभोगस्तुसपिंडानामपीष्य
ते अस्थिसंचयनादूर्ध्वंसंयोगस्तुनयोषितां॥ भारते॥ तिलान्ददतपानीयंदीपंददतजाग्र
त ज्ञातिभिःसहभोक्तव्यमेतत्प्रेतेषुदुर्लभं॥ मनुः॥ मांसाशनंचनाश्नीयुःशयीरंश्चपृथक्
क्षितौ। देवयानीयेकारिकायां॥ लवणंक्षीरमाषान्नाश्यमांसानिपायसं। वर्जयेद्दाहनान्ते
षुबालवृद्धातुरैर्विना। उपवासोगुरौप्रेतेपत्न्याःपुत्रस्यवाभवेत्। मरीचिः॥ प्रथमेन्हितृती
येन्हिचतुर्थेसप्तमेतथा। ज्ञातिभिःसहभोक्तव्यमेतत्प्रेतेषुदुर्लभं। भोजनंचदिवैव। दिवा
चैवतुभोक्तव्यममांसंमनुजर्षभइति। विष्णुपुराणात्॥ क्रीतलब्धादिवान्नमश्नीयुरि
तिपारस्करोक्तेश्च॥ मदनरत्नेहारीतः॥ पाषाणमृन्मयेषुपर्णपुटकेषुवाश्नीरन्। देवजानीये
ब्राह्मे। शुद्धितत्वेआदिपुराणे॥ आशौचमध्येयत्नेनभोजयेच्चस्वगोत्रजान्। अन्यदिनेतुमद
नरत्नेब्राह्मे। यस्ययस्यतुवर्णस्ययद्यत्स्यात्पश्चिमंत्विह। सतत्रगृहशुद्धिंचवस्त्रशुद्धिंकरो
त्यपि। अंत्यकर्मकालीनवस्त्रयोस्तुनैवोक्तं। ग्रामाद्बहिस्ततोगत्वाप्रेतस्पृष्टेतुवाससी। अं
त्यानामाश्रितानांचत्यक्त्वास्नानंकरोत्यथेति। शंखः। दानंप्रतिग्रहोहोमःस्वाध्यायःपितृक
र्मच। प्रेतपिंडक्रियावर्जमाशौचेविनिवर्तते॥ काठकगृह्ये॥ प्रत्नशरणेक्रमस्तत्रान्वहं
महाबलिंकुर्यादितिपारस्करः। तदानीमेववस्त्रंतंडुलंदीपंकांस्यभाजनंप्रेतायदद्यात्
आशौचप्रकाशेभरद्वाजः॥ वासोन्नंचजलकुंभंप्रदाप्यकांस्यभाजनं। नग्नप्रच्छादने
श्राद्धेब्राह्मणायनिवेदयेत्॥ भृगुः॥ तिलोदकंतथापिंडान्नग्नप्रच्छादनादिकं॥ ग
तोनकुर्यान्नसंध्यायांयदिकुर्यान्निरर्थकं॥ ॥अथप्रेतपिंडः॥ यद्यपि

हेमाद्रौ पारस्करेण॥ ब्राह्मणे दश पिंडाः स्युः क्षत्रिये द्वादश स्मृताः। वैश्ये पंचदश प्रोक्ताः शूद्रे त्रिंशत्प्रकीर्ति
तास्तुक्ता। तथापि नेभ्यः सर्ववर्णेभ्यः पिंडान्दद्याद्दशैव हि इति तेनैवोक्तेः सर्वेषां दशैव ज्ञेयाः॥ म
दनरत्नेप्येवं॥ तथा च हेमाद्रौ ब्राह्मपाद्मयोः। सूतकाशौचतुल्यास्तु वर्णानां कचिदेव हि। दशा
धर्मानुसरत्नसमेत पिंडान्वपन्यपितृस्त्रा विप्रान्येषु दशम पिंडो नम्बर्ष उक्तः। देयस्तु दशमः पिंडो रा
ज्ञां वै द्वादशेहनि। वैश्यानां वै पंचदशे देयस्तु दशमस्तथा। शूद्रस्य दशमः पिंडो मासे पूर्णे हि दीय
ते इति। युद्धमृतादेरशौचे त्र्यहादौ च तेनैवोक्तं। सद्यःशौचे प्रदातव्याः सर्वेपि युगपत्तथा॥ देवने
क्येपि न संताप्यप्रजापत्यवत्तेन किंतु दशपिंडान्पृथग्दद्यात्। शिरस्त्वाद्येन पिंडेनेति दश
त्वावच्छिन्नानामेव शरीरोत्पादकत्वात्। त्र्यहाशौचे प्रदातव्यः प्रथमस्त्वेक एव हि। द्वितीयेहनि
चत्वारस्तृतीये पंच चैव हि। अत्रैव प्रकारांतरमाशुक्तं॥ शतातपः॥ आशौचस्य च ह्रासेपि पिंडा
न्दद्याद्दशैव तु। तत्रैकपात्रे सकृन्मंत्रात्दशपिंडान्दद्यात्॥ उत्तरीयशिलापात्रकर्तृद्रव्यविपर्य
ये पूर्वदत्तांजलीन्दद्यात्पूर्वपिंडांस्तथैव चेति। गृह्यकारिकायां पात्रविपर्यये दोष उक्तः॥ शिला
विपर्यये घटस्फोटादेनोवृत्तिः॥ अक्षाभ्यंजनादिपदकर्मणः एकाहापनीतपनवदस्य योजकत्वा
त्। तद्दत्वात्र लौकिकग्रहणं॥ केचित्तु॥ नवान्यान्वय भांडानित्यारुकं चक्रनत्वेति भवेन सोक्तेः
पात्राणेकत्वमाहुः। क्रियाकर्त्रन्यसेन्यनशेषः समापनीयः। एवं क्रियाप्रवृत्तानां यदि कश्चिद्वि
पद्यते। तद्धुनाकार्यास्सर्वैर्वा सहकारिभिरिति शुद्धितत्वे वृहस्पतिस्मृतेः। पत्न्याः कर्तृत्वे तु रजो
दर्शने च तदंते कुर्यात्। शावाद्विगुणमार्तवमित्युक्तेः। आशौचांते स्नात्वैव कर्तृरत्नाश्चेत्यन्येन
क्रियाः सर्वा वर्जनीयाः। कर्तुर्विपर्ययात्। कालातिक्रमयोगाच्च॥ वाराहे॥ स्थंडिले प्रेतभागं तु द
द्यात्पूर्वाह्न एव तु। कृत्वा तु पिंडसंकल्पं नामगोत्रेण सुंदरि॥ मरीचिः॥ प्रेतपिंडं बहिर्दद्याद्दर्भमंत्र
विवर्जितं। प्रागुदीच्यां चरुं कृत्वा स्नातः प्रयतमानसः॥ दर्भवर्जं नमस्त्वनीत परं। असंस्कृता
नां भूमौ पिंडं दद्यात्। संस्कृतानां कुशेष्विति प्रचेतसोक्तेः॥ मितास्रापांसत्यंतरे॥ भूमौ माल्यं पि
डं पानीयं सुफलं वाद्यं पुनः पुनः॥ फलमूलेन पायसेन शाकेन गुडेन वा। तिलमिश्रं दर्भे तु
पिंडं दक्षिणतो हरेत्। तु लोपदेकं प्रचलंतं धूपदीपनयेवच। शालिनाशाकुभिर्वापि शाकेर्वाप्य
थ निर्वपेत्। प्रथमेहनि यद्द्रव्यं तद्देयं दशाहिकं। मदनरत्ने मात्स्ये॥ तैजसं मृन्मयं वाथ पात्रं
संपोष्य सत्वतः। लौकिकाग्नावधिश्रित्य पचेदन्नं घृतप्लुतं। स्नात्वाथ तिलसंमिश्रं प्रदद्याद्दर्भ
संस्तरे। शुद्धितत्वे देवजानीये ब्राह्मे॥ प्रथमेहनि यो दद्यात्प्रेतायान्नं समाहितः। अन्नेन व
सुचान्येषु सर्वत्र ददात्यपि। मृण्मये भांडमादाय नववस्त्रातः सुसंयतः॥ तंडुलप्रसृतिं तत्र त्रिः प्र
क्षाल्य पचेत्स्वयं। सपवित्रतिलैर्मिश्रं कृमिकेशविवर्जितं। द्वारे पार्श्वे ततः क्षिप्त्वा तु ग्रावमो
रमृत्तिका॥ भूपपश्चस्तरे दर्भान्याम्याग्रान्दक्षिणामुखान्। ततोवनेजनं दद्यात्संस्मरन्गोत्रना
मनि। तिलसर्पिर्मधुक्षीरैः संसिक्तं जलमेव हि॥ दद्यात्प्रेताय पिंडं तु दक्षिणाभिमुखस्थितः॥
अर्घ्यैः पुष्पैस्तथा धूपैर्दीपैस्तोयैश्च शालिभिः। ऊर्णातंतुमयैः शुद्धैर्वासोभिः पिंडमर्चयेत्। दिव
से दिवसे देयः पिंड एवं क्रमेण तु॥ सद्यःशौचे प्रदातव्याः सर्वेपि युगपत्तथा॥ अत्राशौचे पिंडदान

मांसत्वचः पिंडाः समाहितैः। द्वितीये चतुरो दद्यादस्थिसंचयनं तथा। त्रींस्तु दद्यात्तृतीयेह्नि वस्त्रादि
क्षालयेत्ततः। दशाहेपि च दातव्यः प्रथमे त्वेक एव हि। एकस्तोयांजलिस्त्वेवं पात्रमेकं च दीयते
द्वितीये द्वौ तृतीये त्रीनित्यायुक्ता। एवं स्युः पंचपंचाशत्तोयस्यांजलयः क्रमात्। तोयपात्राणि
तावंति संयुक्तानि तिलादिभिरिति॥ पात्रकुम्भः॥ अत्राहःपदमहोरात्रपरं। तेन रात्रावपि देय
इति गौडाः। दिवसपदाद्रात्रौ नेति मैथिलाः॥ सत्यव्रतोक्तेः सपिंडेन दशपिंडाः कृताः पुत्रागमे
पि स न दद्यात्। असगोत्रः सगोत्रो वेति शातातपोक्तेः। दाहकर्तैव दशाहं कुर्यादिति मिताक्षरायां॥
शुद्धितत्त्वे माधवीये॥ असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान्। पश्चाग्निदानात्प्रेतस्य पिं
डं दद्यात्स एव हीति। तत्रैव। एकेनैव तु पिंडेन देहो निष्पद्यते यतः। कृतस्य करणायोगात्पुनर्नी
वर्तयेत्क्रियां। शुद्धिप्रकाशे माधवीयेपि। निवर्तयति यो मोहात्क्रियामन्यनिवर्तितां। विधिघ्न
स्तेन भवति पितृहा चोपजायते। तस्मान्येन क्रिया येन केनापि च कृता यदि। न तां निवर्तयेत्प्राज्ञः
सतां धर्ममनुस्मरन्निति॥ आदिपुराणे॥ पितृशब्दं स्वधां चैव न प्रयुंजीत कर्हिचित्। अमुं शब्दं
तथा वेदं प्रयत्नेन विवर्जयेत्। उपतिष्ठतामयं पिंडः प्रेतायेति समुच्चरेत्॥ क्रियानिबंधे व्यासः॥
प्रेताय पिंडं दत्वा तु ततोश्नीयाद्दिनात्यये। भविष्ये॥ ओदनामिषशक्तूनां शाकमूलफलादिषु।
प्रथमेहनि यद्दद्यात्तद्दद्यादुत्तरेहनि। गृहद्वारे श्मशाने वा तीर्थे देवगृहेपि वा। यत्राद्यं दीयते पिंड
स्तत्र सर्वं समाचरेत्। ब्राह्मे। शिरस्त्वाद्येन पिंडेन प्रेतस्य क्रियते सदा। द्वितीयेन तु कर्णाक्षिनासि
काश्च समासतः। गलांसभुजवक्षांसि तृतीयेन यथाक्रमं। चतुर्थेन तु पिंडेन नाभिलिंगगुदा
नि च। जानुजंघे तथा पादौ पंचमेन तु सर्वदा। सर्वमर्माणि षष्ठेन सप्तमेन तु नाड्यः। दंतलोमा
न्यष्टमेन वीर्यं तु नवमेन च। दशमेन तु पूर्णत्वं तृप्तता क्षुद्विपर्यय इति। याज्ञवल्क्येन तु॥ पिंडय
ज्ञकृतादेयं प्रेतायान्नं दिनत्रयमित्युक्तेः। अत्र फलतारतम्यं ज्ञेयं। इति विज्ञानेश्वरः॥ तेनाप्य
हाशौचपरत्वं देवयाज्ञिकोक्तं चिंत्यं। आशौचस्य ह्रासेपि पिंडान्दद्याद्दशैव त्विति वचनात्त्र
दिनत्रयावश्यकत्वार्थमिति हारलतादयः॥ शातातपः॥ जलमेकाहमाकाशे स्थाप्यं क्षीरं च
मृण्मये। पारस्करः॥ मृण्मये तां रात्रिं क्षीरोदके विहायसि निदध्युः। प्रेतात्र स्नाहीत्युदकं पिब चे
दं क्षीरं। इदं रात्राविति गौडाः॥ गारुडे तु॥ अपक्वे मृण्मये पात्रे दुग्धं दद्याद्दिनत्रयमिति उक्तम्॥
हेमाद्रौ पाद्मे तु त्र्यहमित्युक्तम्। तस्मान्निधेयमाकाशे दशरात्रं पयो जलं। सर्वतापोपशांत्यर्थं मध्वश्र
मविनाशनं॥ देवजानीये कालिकायां। तत्र प्रेतोपकृतये दशरात्रमखंडितं। कुर्यान्नदीपं तैलेन
पाथः पात्रं च मार्त्तिकं। भोज्याभोजनकाले तु भक्तमुष्टिं च निर्वपेत्। नामगोत्रेण संबुध्याथ स्त्र्यापि
तृप्यत्ववत्। शातातपः॥ भूलोकात्प्रेतलोकं तु गंतुमध्वं समाचरेत्। तत्राधेयं हि भवति मृतस्य मनु
जस्य तु॥ ॥अथ दशाहमध्ये दर्शपातनिर्णयः॥ ॥भविष्ये॥ म
ध्ये त्वाशौचतंत्रस्तु यदि दर्शो न पद्यते। समाप्य चोदकं पिंडान्स्नानमात्रं समाचरेत्॥ ऋष्यशृंगः॥
आशौचमंतरा दर्शो यदि स्यात्सर्ववर्णिनां। समाप्तिमेव तंत्रस्य कुर्यादित्याह गौतमः॥ पैठीनसिः॥
आमेदापेव कर्तव्या प्रेतपिंडोदकक्रिया। द्विरंत्वेव कुर्याणः पुनः स्नानं समश्नुते॥ मातापित्रोस्तु

श्लोकगौतमः॥ अंतर्दशाहेदर्शश्चेत्तत्रसर्वंसमापयेत्। पित्रोस्तुयावदाशौचंदद्यात्पिंडंजलांजली
न्। इदमपिअहमध्येदर्शपाते॥ तदूर्ध्वंतुदर्शेतुपित्रोरपितत्रैवसमाप्यमेव। पित्रोराशौचमध्येतुप
ञ्चदर्शःसमापयेत् तावदेवोत्तरंतंत्रंपर्यवसेत्अहान्यपि इतिगालवोक्तेः। अन्येषांतुअहमध्ये
स्यासमाप्तिरिति। पराशरमाधवीयेनिर्णयामृतेचोक्तं। कालादर्शेपि॥ दर्शोदशाहमध्येस्यादूर्ध्वं
तंत्रंसमापयेत्। त्रिरात्रादुत्तरंपित्रोर्मृतावितिविनिश्चयः। मदनपारिजातेतुगालवीयमापदनौ
रसपुत्रादिविषयं। अहोर्ध्वमपिपित्रोर्नैतत्रसमाप्तिरित्युक्तं। मदनरत्नेप्येवं। ममतुदेशाचारव्य
वस्थेतिप्रतिभाति॥ ॥अथास्थिसंचयः॥ ॥तत्राश्वलायनेन॥
कृष्णपक्षेएकादश्यांदर्शेयुग्मासुपादाफाल्गुनीप्रोष्ठपदाभिन्नर्क्षेष्ठितं। तदाशौचमध्येसंभवेत्
तऊर्ध्वंचभागवद्गृह्यकारिकायां। आशौचमध्येतुमदनरत्नेसंवर्तः। प्रथमेह्नितृतीयेवासप्तमे
नवमेतथा अस्थिसंचयनंकार्यंदिनेतद्गोत्रजैःसह। छंदोगपरिशिष्टे॥ अपरेद्युस्तृतीयेवा
अस्थिसंचयनंभवेदिति। द्वितीयेप्युक्तं। विष्णुकात्यायनौ। संचयनंचतुर्थ्यामिति। माधवीये
यमः॥ भौमार्कमंदवारेषुतिथियुग्मेविवर्जयेत्। वर्जयेदेकपादर्क्षेद्विपादर्क्षेस्थिसंचयं प्रशस्त
जन्मनक्षत्रेत्रिपादर्क्षेविशेषतः॥ ब्राह्मे॥ चतुर्थेब्राह्मणानांतुपंचमेहनिभूभृतां। नवमेवैश्यजा
तीनांशूद्राणांदशमात्परं। दशमेहनीतिवापाठः॥ शौनकः। पलाशेश्चास्थिदाहेचसद्यःसंचय
नंभवेत्। काम्यमरणेतुतस्यत्रिरात्रमाशौचं। द्वितीयेन्हस्थिसंचयस्तूक्तः। अंगिराः॥ अशीभूतं
तयोर्हिश्यपःशुचिर्नकरोतिचेत्। देवतानांतुयजनंतत्शापत्वयदेवताः। तद्विषिःस्वस्वस्त्वेभर
क्ततोलेपः। हेमाद्रौनागरखंडे॥ नीलास्थिसंचयनस्यार्थंतानिमेशृणुसांप्रतं। यत्रस्थानेभवेन्मृत्युः
तत्रश्राद्धंप्रकल्पयेत्। एकोद्दिष्टंततोमार्गेविश्रामोयत्रकारितः। ततःसंचयनस्यार्थेतृतीयश्रा
द्धमिष्यते॥ अपरार्केमदनरत्नेचब्राह्मे॥ सद्यःशौचेतथैकाहेसद्यःसंचयनंभवेत्। अहाशौचेतु
तीयेन्हिकर्तव्यस्त्वस्थिसंचयः। तत्रैवश्मशानदेवतायागंचतुर्थेदिवसेचरेत्। मृण्मयेषुचभां
डेषुकुंभेषुकलशेषुवा। सुपक्वैर्भक्ष्यभोज्यैश्चपायसैःपानकैस्तथा। फलैर्मूलैर्वेनान्यैश्चभक्ष्याः
कृत्वाद्देवताः। धूपोदीपस्तथामाल्यमर्घ्यंदेयंत्वरान्वितैः। तत्रपात्राणिश्रयाणिश्मशाना
ग्नेःसमंततः निवेदयद्भिर्वक्तव्यैःसर्वैस्तद्दहकैः। नमःक्रव्यादमुखेभ्योदेवेभ्यःइतिसर्वदा
येत्रश्मशानेदेवाःस्युर्भगवंतःसनातनाः। तेस्मत्सकाशाद्गृह्णंतुबलिमष्टांगमक्षयं। प्रेतस्या
स्यशुभाँल्लोकान्प्रयच्छंतुचशाश्वतान्। अस्माकमायुरारोग्यंसुखंचददताचिरं। एवंकृ
त्वाबलिंसर्वंक्षीरेणाभ्युक्ष्यवाग्यतः। एवंदत्वाबलिंचैवदद्यात्पिंडत्रयंबुधः। एकंश्मशा
नवासिभ्यःप्रेतायैवतुमध्यमं। तृतीयंतत्सखिभ्यश्चदक्षिणासंस्थमादरात्। ततोयज्ञियवृ
क्षोत्थांशाखामादायवाग्यतः। प्रेतस्यास्थीनिगृह्णातिप्रधानांगोद्भवानिच। शिरसोवक्ष
सःपाण्योःपार्श्वाभ्यांचैवपादतः। पंचगव्येनसंस्थाप्यक्षौमवस्त्रेणवेष्ट्यवा निक्षिप्यमृण्म
येभांडेनवेसाच्छादनेशुभे। अरण्येवृक्षमूलेवाशुद्धेसंस्थापयत्यपि। गृहीत्वास्थीनितद्भ
स्मनीत्वातोयेविनिःक्षिपेत्। ततःसंमार्जनंभूमेःकर्तव्यंगोमयांबुभिः पूजाचपुष्पधूपाद्यै

नैलिभिः पूर्ववत्क्रमात् इति ॥ ॥ अथ तीर्थे अस्थिक्षेपविधिः ॥ ॥ तत्रैव ॥ त
स्थानाच्छनकैर्नीत्वा कदाचिज्जाह्नवीजले । कश्चित्क्षिपति सत्पुत्रो दौहित्रो वा सहोदरः । मातुः
कुलं पितृकुलं वर्जयित्वा नराधमः । अस्थीन्यन्यकुलस्थस्य नीत्वा चांद्रायणं चरेत् । तत्रैव मदनो
द्धारणे ॥ अस्थीनि मातापितृपूर्वजानां नयंति गंगामपि ये कथंचित् सद्भक्तिभावेन सदापि यस्मा
द्भूतास्तेषां तु तीर्थानि फलप्रदानि । स्नात्वा ततः पंचगव्येन सिक्त्वा हिरण्यमध्वाज्यतिलैश्च यो
ज्यः । ततस्तु मृत्पिंडपुटे निधाय पश्यन् दिशं प्रेतगणोपगूढां । नमोस्तु धर्माय वदन्प्रविश्य जलं स
मे प्रीतो भवत्विति क्षिपेच्च । उत्थाय भास्वंतमवेक्ष्य सम्यक् सदक्षिणां विप्रमुखाय दद्यात् । एवं कृते प्रेत
पुरस्थितस्य स्वर्गे गतिः स्यात्तु महेंद्रतुल्या ॥ यमः ॥ गंगातोये तु यस्यास्थि क्षिप्यते शुभकर्मणः
न तस्य पुनरावृत्तिर्ब्रह्मलोकात्सनातनात् ॥ तथा ॥ अस्तंगते गुरौ शुक्रे तथा मासे मलिम्लुचे
गंगायामस्थिनिःक्षेपं न कुर्यादिति गौतमः ॥ दशाहांतर्न दोषः । दशाहाभ्यंतरे यस्य गंगातोयेऽ
स्थि मज्जति । गंगायां मरणं यादृक् तादृक् फलमवाप्नुयादिति मदनरत्ने वृद्धमनूक्तेः । शौनको
ह वक्ष्याम्यस्थिक्षेपविधिं क्रमात् । आदौ ग्रामाद्बहिर्गत्वा स्नानं कृत्वा सचैलकं । प्रोक्षयेत्
पंचगव्येन भुवं मंत्रैर्विचक्षणः ॥ गायत्र्याद्यैः पंचगव्यमंत्रैर्निखातास्थिभूमिं प्रोक्षयेदित्यर्थः । उप
सर्पादिभिर्मंत्रैः प्रार्थनं खननं तथा । मृत्तिकोद्धरणं चास्थ्नां ग्रहणं च यथाक्रमं । उपसर्पेति चतु
र्भिर्मंत्रैः क्रमेण प्रार्थनादिकं । स्नात्वास्थिशुद्धिं कुर्वीत एतो न्विंद्रेति सूक्ततः । स्पृष्ट्वास्थि स्नात
तः स्नानं पंचगव्येन शुध्यति । दश स्नानानि कुर्वीत तत्तन्मंत्रैर्विचक्षणः ॥ गोमूत्रं गोमयं क्षीरं द
धि सर्पिः कुशोदकं । भस्म मृन्मधु वार्दीनि मंत्रतः स्नानि वै दश । कुशैः संमार्जयेदस्थीन्यतो दे
वेति मंत्रतः । एतो न्विंद्रं शुचीवेति तत्तं महे हरतीति च । पावमानीर्ममाग्ने च रुद्रसूक्तं यथाक्रमं ।
एतैः कुशैर्मार्जनं हेमश्राद्धं ततः कुर्यात्प्रेतमुद्दिश्य मंत्रतः । पिंडदानं प्रकुर्वीत ततश्च तिलत
र्पणं । अस्थिक्षेपांगं चेदं ॥ अजिनं कंबलो दर्भा गोकेशाः शाणमेव च । भूर्जपत्रं ताडपत्रं स
प्तधा वेष्टनं स्मृतं । हेमं च मौक्तिकं रूप्यं प्रवालं नीलकं तथा । निक्षिपेदस्थिमध्ये तु शुद्धिर्भव
ति नान्यथा ॥ ततो होमं प्रकुर्वीत तिलाज्येन विचक्षणः ॥ उदीरतेति सूक्तेन हुनेदष्टोत्तरं शतं
ततो गत्वा क्षिपेत्तीर्थे स्पर्शदोषो न विद्यते । मूत्रपुरीषाचमनं कुर्वन्नास्थि निधारयेत् ॥ अत्र द
शदानवैतरणीऋणमोक्षपापधेनुदानमुक्तं दिवोदासीये । काशीखंडे ॥ धनंजयोपि धर्मात्मा
मातृभक्तिपरायणः । आदायास्थीन्यतो मातुर्गंगामार्गस्थितो भवेत् । पंचगव्येन संस्नाप्य त
था पंचामृतेन वै । यक्षकर्दमलेपेन लिप्त्वा पुष्पैः प्रपूज्य च । आवेष्ट्य तत्र वस्त्रेण ततः पट्टांबरेण
च । ततः सुरक्तवस्त्रेण ततो मांजिष्ठवाससा । नेपालकंबलेनाथ मृदा चाथ विशुद्धया । ताम्रसं
पुटके कृत्वा मातुरस्थीन्यथोद्वहेत् । व्यासः ॥ पट्टवस्त्रं च कौशेयं मांजिष्ठं श्वेतवस्त्रकं । कंबलं
शाणपत्रं च अजिनं च ततोत्तरं । एषां विकल्पः ॥ अत्र श्राद्धविशेषस्त्रिस्थलीसेतौ दिवोदा
सीये च ज्ञेयः । संचयनोत्तरं श्राद्धमाहाश्वलायनः । श्राद्धमस्मै दद्युरिति । स्मृत्यर्थसारे ॥ संच
यने कृते मनुष्यलोकं गच्छतः । पाथेयश्राद्धमनेन कार्यमिति । अनुपनीतस्यापि संचयनं ॥

॥ ॥अथनवश्राद्धं॥ पृथ्वीचंद्रोदयेत्रंगिराः॥ प्रथमेन्हितृतीयेचपंच
मेसप्तमेतथा। नवमैकादशेचैवतन्नवश्राद्धमुच्यते। शिवस्वामी॥ नवश्राद्धानिपंचाहुराश्वलाय
नशाखिनः। आपस्तंबाःषडित्याहुर्विभाषाचेतरेषुहि॥ पंचैकादशाहिकंविना। मरणाद्विष
मेषुदिनेष्वेकैकंनवश्राद्धंकुर्यादानवमात्दिनवमं। विच्छिद्यनैकादशे। तत्कुर्यादितिमदनर
त्ने बौधायनोक्तेः। भविष्ये॥ नवसप्तविशांराज्ञांनवश्राद्धान्यनुक्रमात्। आद्यंतयोर्वर्णयोस्तु
षडित्याहुर्महर्षयः॥ हेमाद्रौवृद्धवसिष्ठः॥ अलब्ध्वातुनवश्राद्धमेतत्तान्येवमुच्यते। अर्वाक्तु
द्वादशाहस्यलब्ध्वानातिदुष्कृतं॥ अतःषडेव॥ एतान्येवविषमश्राद्धानीत्युच्यंते॥ नागरखं
डेतु॥ पंचमेसप्तमेतद्वदष्टमेनवमेतथा। दशमैकादशेचैवनवश्राद्धानितानिवैस्मृतं॥ कात्या
यनस्तु॥ चतुर्थेपंचमेचैवनवमैकादशेतथा। यदन्नंदीयतेजंतोस्तन्नवश्राद्धमुच्यते। प्रथमे
सप्तमेचैवेत्याद्यपरेव्यासपाठः॥ बह्वृचानांतु। नवश्राद्धंदशाहानिनवमिश्रंतुषड्ऋतूनित्युक्तं
नारायणवृत्तौ॥ दीपिकायां॥ अथतदनुपादाद्येचतुर्थेदिनेश्राद्धं। पंचमसप्तमाष्टनवदिक्
रुद्रेष्वयुग्मद्विजैः। प्रथमेन्हितृतीयेन्हिपंचसप्तनवस्वपि। द्वौद्वौपिंडौप्रदातव्यौशेषेष्वेकैकंविष्म
सेत्। एकोविषमश्राद्धेष्वयवपिंडश्चैकइतिहाविमर्शः। अत्रशाखाभेदाद्व्यवस्था। आपर्के
भविष्ये॥ नवश्राद्धंत्रिपक्षंचषण्मासंमासिकानिच। नकरोतिसुतोयस्तुतस्याधःपितरोग
ताः॥ वाराहे॥ गतोसिदिव्यलोकंत्वंकृतांतविहितात्पथः। मनसावायुभूतेनविप्रेत्वाहं
नियोजये॥ पूजयिष्यामिभोगैस्त्वामेवंविप्रंनिमंत्रयेत्। आवाहनेपितृत्वेवा। इहलोकंपरित्य
ज्यगतोसिपरमांगतिम्। मनसावायुभूतेनविप्रेत्वाहंनियोजयेइति। तत्रैवबह्वृचपरिशिष्टे।
अनूदकमधूपंचगंधमाल्यविवर्जितं। नवश्राद्धममंत्रंचपिंडोदकविवर्जितं। उदकमर्घ्यं। पिं
डोदकंशुंधंतांपितरइत्यवनेजनादि। एकोद्दिष्टेतुसर्वेषुनस्वधानाभिरम्यतां नाग्नौकरणमंत्र
श्चएकंवाथतिलोदकं। अन्यमन्येषुसर्वेषुनस्वधानाभिरम्यतां स्वस्त्यस्तुविसृजेदेवंसकृन्मणाव
वर्जितं। एकोद्दिष्टस्यपिंडेतुअत्रशब्दोनविद्यते। पितृशब्दंनकुर्वीतपितृहाचोपजायते। सपिं
डनात्प्रागितिहेमाद्रिः। तेनतेनैवस्वधांप्रयुंजीतत्रैनशब्ददशाहिकेइति। तत्राष्टगंगाक्षौदशाहि
कोत्तरेकादशाहेस्वधाप्रयोगएवेतिहारलताप्रराला॥ रत्नावल्यां॥ आशीर्वोद्विगुणाद्भोज
याशीःस्वस्तिवाचनं। पितृशब्दःस्वसंबन्धशर्मशब्दस्तथैवच। पात्रालंभोवगाहश्चउल्मुकोल्ले
खनादिकं। तृप्तिप्रश्नश्चविकिरःशेषप्रश्नस्तथैवच। प्रदक्षिणविसर्गश्चसीमांतगमनंतथा।
अष्टादशपदार्थांश्चप्रेतश्राद्धेविवर्जयेत्। अत्रस्वधापितृनमः। स्वशाखेनतिलोसीतिमंत्रेप्रेतशब्दो
हेनतूष्णींवातिलावपनं। तूष्णीमर्घ्यदानं। अमुष्मैस्वाहेतिप्रेतनाम्नापाणिहोमः। नाम्नाएकपिं
डःपितृपतमंत्रेऊहः। अनुमंत्रणादिवमंत्रकं। अभिरम्यतामितिविसर्जनं॥ एतन्नवश्राद्धमेकैकं
कोद्दिष्टेषु। नवश्राद्धेत्वमंत्रकं। सर्वमितिनारायणवृत्तिः। क्रियानिबंधे। उत्तानेस्थापयेत्तत्रएकोद्दि
द्दिष्टेसदाबुधः। न्युब्जंतुपार्वणेकुर्यात्तस्योपरिकुशान्न्यसेत्। नवश्राद्धगृहेकामंभार्यापुत्राप
योपिवा। सपिंडीकरणंतानिप्रेतश्राद्धानिमासिके। तानिस्युर्लौकिकेवन्हौविनाहस्ताश्वलाय

नः॥ इदं संभवेन्नेन कार्यं। नवश्राद्धेषुपक्षिद्वयंगृह्यपरिशिष्टेवपनं। दंपत्योरुक्तशेषंचननत्तुजीवत्कर्हि
चित्॥ इतिऋंगिरोवचनलिंगात्। द्वाभ्यांनदानुक्तकाभ्यांशुद्धिःस्यात्तुविवेकिनामितित्रास्लेउक्तं।
विध्रेचनिर्णयामृतेकएवः॥ नवश्राद्धंमासिकंचपद्यदंतरितंभवेत्। ततदुत्तरस्मात्तंत्रआद्वतुषेयं
प्रचक्षते। हेमाद्रौगालवः। शावेतुसूतकंचेत्स्यात्त्रिणयीचमृतौतथा। तच्छ्राद्धानिदेयानिय
थाकालंयथाक्रमं॥ निशायामाशौचांतेद्यहरद्वौ। अन्वारोहणेतुनवश्राद्धानिसर्वाणिसपिं
डीकरणंपृथक्। एकएववृषोत्सर्गोगौरेकात्रदीयते। आशौचांत्यदिनेकार्यमुक्तंशास्त्रे। यस्य
यस्यतुवर्णस्ययद्यस्यात्पश्चिमंत्वहः। सततवस्त्रशुद्धिंचगृहशुद्धिंकरोत्यपि समाप्यदशमंपिंडंगे
नस्पृष्टेनुवाससी। अत्यानामाश्रितानांचसत्क्रास्नानंकरोतिच। श्मश्रुलोमनखानांचयच्चान्यं
नत्रहात्यपि। गौरसर्षपकल्केनतिलकल्केनसंयुतं। शिरःस्नानंततःकृत्वातोयेनाचम्यवाग्य
तः। वृषभंगांसुवर्णंचस्पृष्ट्वाशुद्धोभवेन्नरः॥ क्रियानिबंधेगृह्यकारिकायां॥ अत्रपिंडत्रयंदद्यु
स्तत्सखिभ्यस्तथाद्विजं। येनायनत्रयमनहत्तनीयवयमापवै। तथा॥ कर्त्रात्रमार्थिताःसंतोज्ञा
तिसंबंधिबांधवाः। दद्युरभ्यंगतःपूर्वंतीर्थेनधर्मोदकांजलीन्। पूर्ववन्नामगोत्राभ्यांतिममो
नेहकश्चन। मदनरत्नेविष्णुहारीतौ॥ आशौचांतेकृतश्मश्रुकर्मणस्तिलकल्कैःसर्षपकल्कै
र्वास्नाताःशुक्लवाससोगृहंप्रविश्यशांतिंकृत्वाब्राह्मणपूजनंकुर्युरिति॥ देवलः॥ द
शमेहनिसंप्राप्तेस्नानंग्रामाद्बहिर्भवेत्। तत्रत्याज्यानिवासांसिकेशश्मश्रुनखानिच। अपरा
र्केबृहस्पतिः॥ नवमेवासंसांत्यागोनखरोम्णांतथांतिमे। तत्रैवव्यासः॥ आशौचांत्यदिनेक्षौ
रंजनन्यांचगुरौमृते। एतन्मितान्यवयसामित्याहआपस्तंबः॥ अनुभाविनांचपरिवापनमिति
अनुभाविनःकनिष्ठाइतिविज्ञानेश्वररत्नाकरादयः॥ आशौचमनुभवतांपुंसांसर्वाशौचेषुमुं
डनं। आत्रयानरयतेद्विजन्मनांदारकर्ममृतसूतकेषुच। वंधमोक्षमखदीक्षणेष्वपिक्षौर
मिष्टमखिलेषुचोडुषु। इतिरत्नमालोक्तेर्जननाशौचेपीतिशुद्धितत्वादयः। अत्रदेशाचारतो
व्यवस्था। परंशिखावर्जं। केशश्मश्रुलोमनखानिवापयीतशिखावर्जमितिगोभिलोक्तेः
यत्त्वापस्तंबः। नसमावृत्तावपेयुरन्यत्रविहारादित्येके। विहारोदर्शादियागः। तेनविनास
मावृत्तागृहस्थानवपेयुरित्यर्थः॥ यथाछिनत्तियःकेशान्तमाहुर्ब्रह्मघातिनमिति। तन्के
शश्मश्रुधारयतामग्न्याभवतिसंततिरितिदानधर्मोक्तकाम्यपरं। अनुभाविनःपुत्रादय
एवेत्येके। पुत्रःपत्नीचवपनंकुर्योदंतेयथाविधि॥ पिंडदोतोचितिन्योपिकुर्यादित्थंसमा
हितइत्यपरार्केव्यासोक्तेः। यत्तुमिताक्षरायां। द्वितीयेहनिकर्तव्यंक्षुरकर्मप्रयत्नतः। तृती
येपंचमेवापिदशमेवाप्रदानतइति। त्यागप्रदानतइतिचतुर्थ्यादीनि। तत्प्रथमदिनेऽसंभ
वेज्ञेयं। अलुप्तकेशोयःपूर्वंसोत्रकेशान्प्रवापयेत्। द्वितीयेन्हितृतीयेन्हिपंचमेसप्तमेपिवा।
यावत्श्राद्धंप्रदीयेततावदित्यपरंमतमितिमाधवीये। मदनरत्नेवोधायनोक्तेः। मदनपारि
जातेतु। दशमेप्रथमेचसमुच्चयउक्तः। यत्तुदशमंपिंडंमुत्सृज्यरात्रिशेषेशुचिर्भवेदितितद्दे
कादशाहश्राद्धांगविप्रनिमंत्रणार्थंज्ञेयं॥ ॥अथैकादशाहः॥ मनुः

॥ ॥अथनवश्राद्धं॥ पृथ्वीचंद्रोदयेआंगिरसः॥ प्रथमेन्हितृतीयेचपंच
मेसप्तमेतथा।नवमैकादशेचैवतन्नवश्राद्धमुच्यते।शिवस्वामी॥ नवश्राद्धानिपंचाहुराश्वलाय
नशाखिनः।आपस्तंबाःषडित्याहुर्विभाषान्वितरेषुहि॥ पंचैकादशाहिकंविना।मरणाद्विष
मेषुदिनेष्वेकैकंनवश्राद्धंकुर्यादानवमाद्दिनवं।विच्छिद्यैनैकादशे।तत्कुर्यादितिमदनर
त्नेबौधायनोक्तेः।भविष्ये॥ नवसप्तविशंराजन्नवश्राद्धान्यनुक्रमात्।आद्यंतयोर्वर्णयोस्तु
षडित्याहुर्महर्षयः॥हेमाद्रौवृद्धवसिष्ठः॥ अलब्ध्वातुनवश्राद्धंप्रेतत्वान्नैवमुच्यते।अर्वाक्तु
द्वादशाहस्यलब्ध्वातरतिदुष्कृतं॥ अत्रःषडेव॥ एतान्येवविषमश्राद्धानीत्युच्यंते॥ नागरखं
डेतु॥ पंचमेसप्तमेतद्वदष्टमेनवमेतथा।दशमैकादशेचैवनवश्राद्धानितानिवैत्युक्तं॥ कात्या
यनस्तु॥ चतुर्थेपंचमेचैवनवमैकादशेतथा।यदत्रदीयतेजंतोस्तन्नवश्राद्धमुच्यते।प्रथमे
सप्तमेचैवेत्याद्यपरेव्यासपाठः॥ बह्वृचानांतु।नवश्राद्धंदशाहानिनवमिश्रंतुषड्ऋतूनित्युक्तं
नारायणवृत्तौ॥ दीपिकायां॥ अथतदनुपादाद्येचतुर्थेदिनेश्राद्धं।पंचमसप्तमाष्टनवदिक्
रुद्रेषुयुग्मद्विजैः।प्रथमेन्हितृतीयेन्हिपंचसप्तनवस्वपि।द्वौद्वौपिंडौप्रदातव्यौशेषेष्वेकंतुविस
र्जेत्।एकोविषमश्राद्धेष्वपवपिंडश्चैकइतिहाविन्यर्थः।अत्रशाखाभेदाद्यवस्था।अपरार्के
भविष्ये॥ नवश्राद्धंत्रिपक्षंचषण्मासंमासिकानिच।नकरोतिसुतोयस्तुनस्यात्पितरोस्य
ताः॥ वाराहे॥ गतोसिदिव्यलोकंत्वंकृतांतविहितात्पथः॥ मनसावायुभूतेनविप्रेत्वाहं
नियोजये॥ पूजयिष्यामिभोगैस्त्वामेवंविप्रनिमंत्रयेत्।आवाहनेपितृश्चैव।इहलोकंपरित्य
ज्यगतोसिपरमांगतिम्।मनसावायुभूतेनविप्रेत्वाहंनियोजयइति।तत्रैवबह्वृचपरिशिष्टे।
अनूदकमधूपंचगंधमाल्यविवर्जितं।नवश्राद्धममंत्रंचपिंडोदकविवर्जितं।उदकमर्घ्यं।पि
डोदकंशुंधंतांपितरइत्यवनेजनादि।एकोद्दिष्टेषुसर्वेषुनस्वधानाभिरम्यता।नाग्नौकरणमंत्र
श्चएकंवाथतिलोदकं।अन्नपात्रेषुसर्वेषुनस्वधानाभिरम्यता।स्वस्त्यस्तुविसृजेद्दर्भेसकृन्नवणव
र्जितं।एकोद्दिष्टस्यपिंडेतुअत्रशब्दोनविद्यते।पितृशब्दंनकुर्वीतपितृहाचोपजायते।सपि
डनात्प्रागितिहेमाद्रिः।नेननैवस्वधांप्रयुंजीतप्रेतशब्दंदशाहिकेइति।कल्पतरौतुदशाहि
कोक्तेरेकादशाहेस्वधाप्रयोगएवेतिहारलताप्रणेता॥ रत्नावल्यां॥ आशीर्वादंद्विगुणदर्भभोज
याशीःस्वस्तिवाचनं।पितृशब्दःस्वसंबन्धशर्मशब्दस्तथैवच।पात्रालंभोवगाहश्चउल्मुकोल्ले
खनादिकं।तृप्तिप्रश्नश्चविकिरःशेषप्रश्नस्तथैवच।प्रदक्षिणाविसर्गश्चसीमांतगमनंतथा।
अष्टादशपदार्थांश्चप्रेतश्राद्धेविवर्जयेत्।अत्रस्वधापितृनमःस्वशब्देनतिलोसीतिमंत्रेप्रेतशब्दो
हेनतूष्णींवातिलावपनं।तूष्णींपर्युक्षणं।अग्नौस्वाहेतिप्रेतनाम्नापाणिहोमः।नाम्नाएकःपि
डः।पितृपतृमंत्रेऊहः।अनुमंत्रणादिषुमंत्रकाअभिरम्यतामितिविसर्जनं।एतन्नवश्राद्धवर्जै
कोद्दिष्टेषु।नवश्राद्धेत्वमंत्रकं।सर्वमितिनारायणवृत्तिः।क्रियानिबंधे।उक्तानंत्याद्येनाप्येको
द्दिष्टेसदाबुधः।न्युब्जंतुपात्रंकुर्वीततस्योपरिकुशान्न्यसेत्।नवश्राद्धगृहेकामंभार्यापशाप
योपिवा।सपिंडीकरणंतानिप्रेतश्राद्धानियानिवै।तानिस्युर्लौकिकेवह्नावित्याहस्माश्वलाय

मरं विष्णूक्तेः॥ प्रायुक्तशंखादिवचनानां चानाकरत्वादिति वदंतः। कल्पतरुवाचस्पतिप्रमुखाः
सर्वे महानिबंधविरोधादुपेक्ष्याः॥ उशनाः॥ अहाशौचेपि कर्तव्यमाद्यमेकादशेहनि॥ अती
तविषयेसद्य अहोर्ध्वं वा तदिष्यते। याज्ञवल्क्यः॥ एकोद्दिष्टं दैवहीनमेकार्घैकपवित्रकं। आ
वाहनाग्नौकरणरहितं त्वपसव्यवत्। उपतिष्ठतामित्यक्षय्यस्थाने विप्रविसर्जने। अभिरम्य
तामिति वदेत् ब्रूयुस्तेभिरताः स्महेति। स्वदितमिति तत्र प्रश्नसुस्वदितमिति अनुज्ञावचनं।
इति कात्यायनः॥ अग्नौकरणनिषेधोन्यपरः। बह्वृचानां तु सर्वैकोद्दिष्टेषु तद्भवत्येवेत्युक्तं प्रा
क्। प्रथमे पात्रे संस्रवान्नित्यस्य तन्नीयेण पिधानस्य च बाधान्न पात्रन्युब्जनेति शूलपाणिः
प्रचेताः॥ नात्र पात्रालंभो नाशिषः प्रार्थयेत्। अत्र विशेषो हेमाद्रौ वायवीये॥ प्रमस्तु कर्मनुकर्त
व्यं न स्वच्छंदस्तथैव च। स्नपनाभ्यंजनं दद्याद्भोजयेद्विधिपूर्वकं। तथा॥ उपवेश्यासने भद्रे
छत्रं तत्र प्रकल्पयेत्। पश्चादुपानहौ दद्यात्सर्वाण्याभरणानि च॥ विष्णुः॥ दक्षिणांतेष्वाद्य
मुक्त्वा दत्त्वा स्वप्योदकेषु च रंगुलपृथ्वीस्तावदंतरास्तावदधःखाता वितस्त्यायतास्तिस्रः
कर्षूः कुर्यात्॥ कर्षूणां समीपेऽग्नित्रयमाधाय परिस्तीर्य एकैकस्मिन्नाहुतित्रयं जुहुयात् सोमाय पि
तृमते स्वधा। नमोऽग्नये कव्यवाहनाय यमायांगिरस्वते इति स्थानत्रये प्राग्वत्। पिंडनिर्वपणं दधि
मधुघृतमांसैः कर्षूत्रयं पूरयित्वैतत्तमइति जपेत्। शेषं नवश्राद्धवत्। अत्र साग्नेरप्यनेवैश्वदे
वमित्युक्तं प्राक्। दंदशाहकर्त्रा पुत्रेण वा कार्यमित्युक्तं। क्रियानिबंधे गरुडकारिकायां तिलोसि
सोमदेवत्यः प्रेतं लोकान् हि नीनकं। मंत्रमुक्त्वा तिलानेवं प्रक्षिपेदर्घ्यपात्रतः। दक्षिणामुदकुं
भं वस्त्रान्नं दत्त्वा तथैव गां। तस्मै दद्यात्तु तच्छेषं तद्भांडान्यपि भाजनं। विप्राभावेग्नावेकोद्दिष्टं तु।
अग्नौ पायसं श्रपयित्वाज्यभागांतेन देवेश्राद्धप्रयोगः। कृत्वाग्नौ मेनमावाह्य गंधाद्यैः संपूज्य
पृथिवी ते पात्रमित्यादिनान्नं संकल्प्योदीरतामवरइत्यृगभिश्चतुरावृत्ताभिर्द्वात्रिंशदाहुतीर्हु
त्वा पिंडदानादिश्राद्धं समापयेदिति। याज्ञवल्क्यः॥ एतत्सपिंडीकरणमेकोद्दिष्टं स्त्रिया अपि
॥ ॥ अथ वृषोत्सर्गः॥ सच नित्यकाम्यः॥ नकरोति वृषोत्सर्गं सुतीर्थे वा
जलांजलिं। नददाति सुतो यस्तु पितुरुच्चार एव सः। उच्चारः पुरीषं एष्टव्या बहवः पुत्रा यद्येकोपि
गयां व्रजेत्। यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत्। इति मात्स्यकौर्म्योक्तेः॥ एकादशेन्हि प्रेतस्य
यस्य नोत्सृज्यते वृषः। प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपीति। षट्त्रिंशन्मते निंदाश्रुतेः। एवं
कृत्वाश्ववाप्नोति फलं वाजिमखोदितं। यमुद्दिश्योत्सृजेन्नीलं स लभेत परां गतिं वृषोत्सृष्टः
पुनात्येव दशातीतान्दशापरान्। इति॥ देवीपुराणभविष्यादौ फलश्रुतेश्च॥ अयं द्वादशा
हेप्युक्तो भविष्ये। चैत्र्यां वापि तृतीयायां वा वैशाख्यां द्वादशेन्हि वेति। विष्णुधर्मे तु मृताहेप्युक्तः।
विषुवद्वितये चैव मृताहे बांधवस्य चेति। अयं गृहे न कार्यः॥ न गृहे मोचयेन्नीलं कामयन्शुक्ल
फलमिति कालिकापुराणात्॥ कामधेनौ॥ वत्सराभ्यंतरेपि जीवे वृषोत्सर्गकर्मणि दृष्टि
र्वीत तदन्यत्र समारभेत्॥ तल्लक्षणमाह मात्स्ये॥ लोहितो यस्तु वर्णेन मुखे पुच्छे च पांडुरः
रविषाणाभ्यां स नीलो वृष उच्यते। श्वेतवर्णस्तु मुख्यादीनि प्रमाणानि यस्य वाप्ये

विप्रः शुध्यत्यपः स्पृष्ट्वा क्षत्रियो वाहनायुधे। वैश्यः प्रतोदं रश्मीन्वा यष्टिं शूद्रः कृतक्रियः। शुद्धिन
त्वं देवलः॥ अथाहः सु निवृत्तेषु स्नाताः कृतमंगलाः। आशौचाद्विप्रमुच्यंते ब्राह्मणान्स्व
स्ति वाच्य च। याज्ञवल्क्यः॥ आद्यमेकादशेहनि। क्षत्रियाद्येराशौचेप्येकादशेह्नि श्राद्धं कार्यं।
आद्यश्राद्धमशुद्धोपि कुर्यादेकादशेहनि। कर्तुस्तत्कालिकी शुद्धिरशुद्धिः पुनरेव स इति हेमा
द्रौ शंखोक्तेः। पैठीनसिः॥ एकादशेह्नि यच्छ्राद्धं तत्सामान्यमुदाहृतं। चतुर्णामपि वर्णानां
सूतकं तु पृथक् पृथक्॥ यत्तु मरीचिः॥ आशौचांते ततः सम्यक् पिंडदानं समाप्यते। ततः श्रा
द्धं प्रदातव्यं सर्ववर्णेष्वयं विधिरिति। तत्सर्ववर्णानां दशाहाशौचपरं। यत्तु विष्णुः॥ अथाशौ
चापगम इति॥ पंचगौडग्रंथे हारीतः॥ शौचे भूते एकोद्दिष्टं कुर्यात्। यच्च वैजवापः। ऊर्ध्वं दश
म्या अपरेद्युरिति तद्विप्रविषयं। एतेन दशमपिंडोत्कर्षपक्षे अवयवपिंडसमाप्तौ कथमेका
दशाहे श्राद्धमिति मूर्खोक्तिः परास्ता। वचनादाशौचमध्ये तत्राप्यविरोधात्॥ भविष्ये॥
एकादशेभ्यो विप्रेभ्यो दद्यादेकादशेहनि। भोजनं तत्र चैकस्मै ब्राह्मणाय महात्मने॥ यत्तु मा
त्स्ये॥ एकादशेहनि तथा विप्रानेकादशैव तु। क्षत्रादिः सूतकांते तु भोजयेदयुजो द्विजानि
ति तद्द्वादशाहश्राद्धपरमिति मदनपारिजातः॥ गौडास्तु स्मार्तवचनात्क्षत्रियादीनामाशौचां
ते एवेत्याहुः॥ रामायणेपि॥ समतीते दशाहे तु कृतशौचो यथाविधिः। चक्रे द्वादशिकं श्राद्धं
त्रयोदशिकमेव च। द्वादशिकं द्वादशाहे नीते श्राद्धं। त्रयोदशिकं चतुर्दशाहविधेयसपिंडन
पाथेयादि। क्षत्रियाणां द्वादशाहाशौचे त्रयोदशेमहैकोद्दिष्टं चतुर्दशे सपिंडनं। द्विविध
वाक्यादेकादशाहाशौचांतरयोर्विकल्प इत्यके॥ अथ शौचादौ पुत्रजन्मादेरेकादशाहे
अन्येषामाशौचांत इति वयं कोऽस्मे॥ एकादशेह्नि कुर्वीत प्रेतमुद्दिश्य भावतः। द्वादशेवा
ह्नि कर्तव्यमनिंद्येप्यथवाहनि। निंद्ये तु क्रियाकाले उक्तं। एकादशे तु निषेधस्त्युक्तः प्राक्
बृहस्पतिः॥ वस्त्रालंकारशय्यादि पितुर्यद्वाहनादिकं। गंधमाल्यैः समभ्यर्च्य श्राद्धभोक्त्रे त
दर्पयेत्। श्रोत्रिया भोजनीयास्तु नव सप्त त्रयोदश। ज्ञानयोगाथवा निःस्वस्तथा चानिष्पयो
परो देवयाज्ञिकनिबंधे। एकादशाहे तु विप्रं सुप्रेतमावाह्य भोजयेत्। तत्राद्यापवशय्यादि द
द्यादाद्यमिति स्मृतं॥ विष्णुः॥ एकवन्मंत्रानूहेनैकोद्दिष्टे। बहुवचनांतानेकवचनांतान्वदे
दित्यर्थः। एतद्दृष्टार्थत्वे॥ अस्य विप्रगौणकालमाह। हेमाद्रौ बौधायनः। एकोद्दिष्टमथैवं
स्याद्द्वादशेहनि वा पुनः। अत ऊर्ध्वमयुग्मेषु कुर्वीताहःस्वशक्तितः। अर्द्धमासे यवा मासि
कृतौ संवत्सरेपि वेति॥ तत्रैव लघुहारीतः॥ एकोद्दिष्टं तु कुर्वीत पाकेनैव सदा स्वयं। अभा
वे पाकपात्राणां तदहः समुपोषणं। गोभिलः॥ ब्राह्मणं भोजयेदाद्ये होतव्यमनले यवा
पुनश्च भोजयेदेकं द्विरावृत्तिर्भवेदिति। एतदाद्यमासिकाब्दिकयोः सिद्ध्यर्थमिति भट्टाः
पुत्रजन्मादौ तु हेमाद्रौ पृथ्वीचंद्रोदये पैठीनसिः॥ सर्वशौचे पितृगतव्य प्रेतस्यैकादशेहनि। स
एव दिवसस्तस्य श्राद्धशय्यासनादिषु। एवमेकाहादौ॥ अतोऽत्र द्वितीयेह्नि एकादशाहे
वरं तदोद्धूलपाणिः स्मार्तगौडश्च परास्तः॥ एतेनाद्यमेकादशेहनीत्याशौचानंतरदिन

रजस्वलक्ष्यमाणं निशामय। तेनोपभुक्तं यत्किंचिद्वस्त्रवाहनभाजनं। यद्यदिष्टं च तस्यासीत्तत्तत्
सर्वं परिकल्पयेत्॥ तमेव पुरुषं हैमं तस्यां संस्थापयेत्तदा। पूजयित्वा प्रदातव्या मृतशय्याय
थोदिता॥ पाद्मे॥ मृतकाद्ये द्वितीयेऽह्नि शय्यां दद्याद्विलक्षणां। कांचनं पुरुषं तद्वत्फलवस्त्र
समन्वितं। संपूज्य द्विजदांपत्यं नानाभरणभूषितं। उपवेश्य तु शय्यायां मधुपर्कं ततो ददेत्
रजतस्य तु पात्रेण दधिदुग्धसमन्वितं। अस्थि ललाटिकं गृह्य सूक्ष्मं कृत्वा सपायसं। भोजये
द्विजदांपत्यं विधिरेष सनातनः॥ एवमेव विधिर्देयः पार्वती पैद्विजोत्तमैः। एतत्संनिग्रहेत
नैवोक्तं। गृहीतायां तु तस्यां वै पुनः संस्कारमर्हति॥ शय्यादानफलं भविष्ये। स्वर्गे पुरंदरपु
रे सूर्यपुत्रालये तथा। सुखं वसत्यसौ जंतुः शय्यादानप्रभावतः। आभूतसंप्लवं यावत्तिष्ठत्या
तंकवर्जित इति॥ ॥अथोदकुंभः॥ हेमाद्रौ स्मृतिसमुच्चये। एकादशा
हात्प्रभृति घटस्तोयान्नसंयुतः। दिने दिने प्रदातव्यो यावत्संवत्सरं सुतैः। लौगाक्षिः॥ यस्य संव
त्सरादर्वाक् सपिंडीकरणं भवेत्। मासिकं चोदकुंभं च देयं तस्यापि वत्सरं॥ उत्तरार्द्धे॥ तस्या
प्यन्नं सोदकुंभं दद्यात्संवत्सरं द्विजे इति याज्ञवल्क्यपाठः॥ सपिंडनापकर्षेऽस्यापकर्षशास्त्रं वा
धकमिदमिति शूलपाणिः॥ तन्न॥ प्रकृतिविकाराभावेन तदंतन्यायाविषयत्वात्॥ मात्स्ये॥
यावदब्दं च यो दद्यादुदकुंभं विमत्सरः। प्रेतायान्नसमायुक्तं सोऽश्वमेधफलं लभेत्॥ केचित्तु ये
कादशाहमारभ्याहुस्तन्निर्मूलं॥ अत्र देवयाज्ञिकः॥ सपिंडनापकर्षे सांवत्सरं॥ यावदुदकुंभ
मर्वागेव दद्यान्नोर्ध्वं। प्रेतलोकगतस्यान्नं सोदकुंभं प्रयच्छतेति। गोविंदराजधृतविष्णूक्तेः।
अन्ने चैव स्वशक्त्यानुसंख्यां कृत्वाब्दिकावधि। दानं ब्राह्मणे एकं घटादेर्निष्क्रयेण तु वा। अ
पि श्राद्धशतैर्दत्तैरुदकुंभं विना नराः। दरिद्रा दुःखिताः स्नानभ्रमंति च भवार्णवे। तेनापकृष्य
दातव्यं प्रेतस्याप्युदकुंभकामिति। गोभिलभाष्येऽस्मादाच्च। सपिंडनात्प्रागेव तस्य विधानादूर्ध्वं
निषेधादित्याह॥ तन्न॥ उदकुंभे पार्वणविधानानुपपत्तेरेवंव्याख्यायां मानाभावात् भिन्नास्व
रादिविरोधाच्च। वचनं यदि समूलं तदा तूपकर्षे विधत्ते। प्रेतश्राद्धानि सर्वाणि सपिंडीक
रणं तथेति हेमाद्रौ शंखापनोक्तेः। तस्याप्यन्नं सोदकुंभमिति। याज्ञवल्क्यविरोधाच्च॥ मद
नरत्ने गौतमः॥ अदैवं पार्वणं श्राद्धं सोदकुंभमधर्मकं। कुर्यात्प्रत्याब्दिकान् श्राद्धान् संकल्प
विधिनान्वहं। अधर्मकं ब्रह्मचर्यादिनियमहीनं। एतन्मासिकवदेकोद्दिष्टपार्वणेन वा कार्यं॥
अपरार्के तु॥ सपिंडीकरणे वृत्ते पृथक्त्वं नोपपद्यते। पृथक्त्वे तु कृते पश्चात्पुनः कार्यः सपिंडनेति
लघुहारीतोक्तेः। वपि॥ तस्याप्यन्नं सोदकुंभं देयं संवत्सरं द्विजे इति याज्ञवल्कीयेन स्येन्येकत्वोक्तेः
सपिंडनोत्तरमप्येकोद्दिष्टमेवेत्याह। अत्र पिंडदानं कृताकृतं। अहरहरन्नमस्मै ब्राह्मणायोद
कुंभं च। दद्यात्पिंडमप्येके निपृणंतीति हेमाद्रौ पारस्करोक्तेः। श्राद्धशब्दात्पिंडमात्रमिति गौडाः
॥ तन्न॥ अपि शब्दबाधापत्तेः। हारीतः॥ मृतेऽपि तरि वै पुत्रः पिंडमब्दं समाचरेत्। अन्नं कुंभं
च विप्राय प्रेतनिर्देशपूर्वकं। प्रेतशब्दोच्चारणेनेति हलायुधः॥ मदा॥ प्रेतस्य निर्देशो यत्र
तदेकोद्दिष्टं तद्धर्मित इत्यर्थः। अत्राशौचांतदिनाद्यावदब्दांतं वत्सरपूर्तेः शौचनाधिकारवि

नानिमस्यसोपिनीलउक्तोमात्स्यादौ॥ देवीपुराणे॥ चतस्रोवत्सिकाभद्रादेवासंभवतोपिवा। यतु
पठंति॥ वृषोत्सर्जनवेलायांवृषाभावेकथंचन। मृद्भिःपिष्टैश्चदर्भैर्वावृषंकृत्वाविमोचयेत्॥ नरा
कृतेवृषोत्सर्गोहोमवातत्रकारयेदिति। तन्निर्मूलं॥ तद्विधिर्हेमाद्रौभट्टकृतौचज्ञेयः। अत्रदेव
याज्ञिकेनवृषोत्सर्गात्पूर्वंपुरुषसूक्तेनविष्णुरूपिप्रेतोद्देशेनविष्णुतर्पणमुक्तं। तत्रमूलंचिंत्यं।
भास्करः॥ सव्येनपाणिनापुच्छंसमालंब्यवृषस्यतु दक्षिणेनापआदायसतिलाःसकुश
स्ततः। प्रेतगोत्रंसमुच्चार्यअमुकस्येइतिब्रुवन्। वृषएषमयादत्तस्तंतारयतुसर्वदा। सहेम
सतिलंभूमावित्युच्चार्यविनिक्षिपेत्॥ तथा॥ विधारयेत्ततंकश्चिन्नचकश्चनवाहयेत्।
नदोहयेच्चताधेनुंनेचकश्चनवंधयेत्। स्त्रीषुविशेषःसंग्रहे। पतिपुत्रवतीनारीभर्तुरग्रेमृता
यदि। वृषोत्सर्गंनकुर्वीतगांतुदद्यात्पयस्विनीं। पतिपुत्रयोःसाहित्यंविवक्षितं। अन्वारोहणे
पिंडदानमेवेत्युक्तंप्राक्। आशौचांतरेपिवृषोत्सर्गोयमासिकशय्यादिदद्यादेवेत्युक्तं। कि
मानिबंधेस्त्वंतरे। सूतकेमृतकेचैवद्वितीयमृतकेयदि। पिंडदानमकुर्वीतवृषोत्सर्गंतथैव
च। नहन्यात्सूतकंकर्मद्वादशैकादशाह्निकं। शुद्धोवायदिवाशुद्धःकुर्यादेवाविचारयन्निति।
॥ ॥अथपददानमुक्तं॥ देवजानीयेगारुडेएकादशाहंप्रक्रम्य। त
दन्हिदीयतेसर्वंद्वादशाहेविशेषतः। पदानिसर्ववस्तूनिवरिष्ठानित्रयोदश। योददातिमृतस्ये
हजीवतोप्यात्महेतवे। सुखीभूत्वामहामार्गेवैतनेयसगच्छति। तथा॥ आसनोपानहौछ
त्रमुद्रिकाचकमंडलु भाजनंभाजनाधारेवस्त्राण्यष्टविधंपदं। तथा॥ भाजनासनदाने
नमुद्रिकाभोजनेनवा। आज्यपञोपवीतेनपदंसपूर्णतांव्रजेत्॥ महिषीरथगोदानात्सु
खीभवतिनिश्चितं सर्वोपस्करयुक्तानिपदान्यत्रत्रयोदश। योददातिमृतस्येहजीवन्नप्या
त्महेतवे सगच्छतिपरंस्थानंमहाकष्टविवर्जितः। त्रयोदशपदानीत्थंप्रेतायद्दशमेहनि
दातव्यानियथाशक्तितेनासौप्रीणितोभवेत्। अन्नंचैवोदकंचैवोपानहौचकमंडलुं। छ
त्रंवस्त्रंतथायष्टिंलोहदंडंतथाष्टमं। अग्निष्टिकांचदीपंचतिलांस्तांबूलमेवच। चंदनं
पुष्पदानंचोपदानानिचतुर्दश। योश्वरथंगजंवापिब्राह्मणायप्रतिपादयेत्। समहिम्नानु
सारेणतत्तत्सुखमवाप्नुयादिति। अत्रमूलंचिंत्यं॥ ॥अथशय्यादानं॥
हेमाद्रौभविष्ये॥ तस्माच्छय्यांसमासाद्यसारदारुमयींदृढां। दंतपत्रचितांरम्यांहेमपादैर
लंकृतां। हंसतूलीप्रतिच्छन्नांशुभगंडोपधानिकां प्रच्छादनपटीयुक्तांगंधधूपादिवासितां
तस्यांसंस्थापयेद्धैमंहरिंलक्ष्म्यासमन्वितं। अत्रहरिस्थानेप्रेतं। उच्छीर्षकेघृतभृतंकलशं
परिकल्पयेत् तांबूलंकुंकुमंक्षौद्रंकर्पूरागुरुचंदनं। दीपिकोपानहच्छत्रचामरासनभाजनं॥
पार्श्वेषुस्थापयेद्भक्त्यासप्तधान्यानिचैवहि। शयनस्थस्यभवतियदन्यदुपकारकं भृंगारकर
कादर्शंतुपंचवर्णंवितानकं। मंत्रस्तु॥ यथानकृष्णशयनंशून्यंसागरजातया। शय्याममाप्य
शून्यास्तुतथाजन्मनिजन्मनि। यस्मादशून्यंशयनंकेशवस्यशिवस्यच। अद्वंतदेवदत्तेवं
तस्यसकलंमणीपत्यविसर्जयेत्। एकादशाहेपितथाविधिरेषप्रकीर्तितः। विशेषश्चात्र

रजन्यकथ्यमानेनिशामय। तेनोपभुक्तंयत्किंचिद्वस्त्रवाहनभाजनं। यद्यदिष्टंचतस्यासीत्तत्त
सर्वंपरिकल्पयेत्॥ तमेवपुरुषंहैमंतस्यांसंस्थापयेत्तदा। पूजयित्वाप्रदातव्यामृतशय्याय
थोदिता॥ पाद्मे॥ मृतकांतेद्वितीयेन्हिशय्यांदद्यात्सुलक्षणां। कांचनपुरुषंतद्वत्फलवस्त्र
समन्वितं। संपूज्यद्विजदंपत्यं नानाभरणभूषितं। उपवेश्यतुशय्यायांमधुपर्कंततोददेत्
रजतस्यतुपात्रेणदधिदुग्धसमन्वितं। अस्थिललाटिकंगृह्यसूक्ष्मंकृत्वासपायसं। भोजये
द्द्विजदांपत्यंविधिरेषसनातनः॥ एषएवविधिर्दृष्टःपार्वतीयैर्द्विजोत्तमैः। एतत्सत्रिग्रहेत
त्रैवोक्तं। गृहीतायांतुतस्यांवैपुनःसंस्कारमर्हति॥ शय्यादानफलंभविष्ये॥ स्वर्गेपुरंदरपु
रेसूर्यपुत्रालयेतथा। सुखंवसत्यसौजंतुःशय्यादानप्रभावतः। आभूतसंप्लवंयावत्तिष्ठत्या
तंकवर्जितइति॥ ॥अथोदकुंभः॥ हेमाद्रौस्मृतिसमुच्चये। एकादशा
हात्प्रभृतिघटस्तोयान्नसंयुतः। दिनेदिनेप्रदातव्योयावत्संवत्सरंसुतैः। लौगाक्षिः॥ यस्यसंव
त्सरादर्वाक्सपिंडीकरणंभवेत्। मासिकंचोदकुंभंचदेयंतस्यापिवत्सरं॥ उत्तरार्द्धे॥ तस्या
प्यन्नंसोदकुंभंदद्यात्संवत्सरंद्विजेइति याज्ञवल्क्यपाठः॥ सपिंडनापकर्षस्यापकर्षप्राप्तेर्बा
धकमिदमितिशूलपाणिः॥ तन्न॥ प्रकृतिविकारभावेनतदंतन्यायाविषयत्वात्॥ मात्स्ये॥
यावदब्दंचयोदद्यादुदकुंभंविमत्सरः। प्रेतायान्नसमायुक्तंसोश्वमेधफलंलभेत्॥ केचित्त्रयो
दशाहमारभ्याहुस्तन्निर्मूलं॥ अत्रदेवयाज्ञिकः॥ सपिंडनापकर्षेसांवत्सरं॥ यावदुदकुंभ
मर्वागेवादद्यात्तोर्ध्वं। येनलोकगतस्यान्नंसोदकुंभंप्रयच्छतेति। गोविंदराजधृतविष्णूक्तेः।
अन्नेचैवस्वशक्त्यानुसंख्यांकृत्वाब्दिकावधि। दातव्यंब्राह्मणेस्कंदघटादेनिष्क्रयंतुवा। अ
पिश्राद्धशतैर्दत्तैरुदकुंभंविनानराः। दरिद्रादुःखितस्तानभ्रमंतिचभवार्णवे। तेनापकृष्य
दातव्यंप्रेतस्याप्युदकुंभकमिति। गोभिलभाष्येस्कांदाच्च। सपिंडनात्प्रागेवतस्यविधानादूर्ध्वं
निषेधादित्याह॥ तन्न॥ उदकुंभेपार्वणविधानानुपपत्तेरेवंव्याख्यायांमानाभावान्मितास
रादिविरोधाच्च। वचनंयदिसमूलंतदाद्रव्यापकर्षंविधत्ते। प्रेतश्राद्धानिसर्वाणिसपिंडीक
रणंतथेतिहेमाद्रौशंखापनोक्तेः। तस्याप्यन्नंसोदकुंभमिति। याज्ञवल्क्यविरोधाच्च॥ मद
नरत्नेगौतमः॥ अदैवंपार्वणंश्राद्धंसोदकुंभमधर्मकं। कुर्यात्प्रत्याब्दिकान्श्राद्धानसंकल्प
विधिनान्वहं। अधर्मकंब्रह्मचर्यादिनियमहीनं। एतन्मासिकवदेकोद्दिष्टंपार्वणंवाकार्यं॥
अपरार्केतु॥ सपिंडीकरणेवृत्तेपृथक्त्वंनोपपद्यते। पृथक्त्वेतुकृतेपश्चात्पुनःकार्यासपिंडनेति
लघुहारीतोक्ता। वपि। तस्याप्यन्नंसोदकुंभंदेयंसंवत्सरंद्विजेइतियाज्ञवल्कीयेनस्यैकत्वोक्तेः
सपिंडनोत्तरमप्येकोद्दिष्टमेवेत्याह। अत्रपिंडदानंकृताकृतं। अहरहरन्नमस्मैब्राह्मणायोद
कुंभंच। दद्यात्पिंडमप्येकेनिपृणंतीतिहेमाद्रौपारस्करोक्तेः। श्राद्धाशक्तौपिंडमात्रमितिगौडाः
॥ तन्न॥ अपिशब्दबाधापत्तेः। हारीतः॥ मृतेपितरिवैपुत्रःपिंडमब्दंसमाचरेत्। अन्नंकुंभं
चविप्रायप्रेतनिर्देशधर्मतः। प्रेतशब्दोच्चारणेनेतिहलायुधः॥ मद्य॥ प्रेतस्यनिर्देशोयत्र
तदेकोद्दिष्टंतद्धर्मतइत्यर्थः। अत्राशौचांतदिनाद्यावद्वर्षांतंवत्सरपूर्तेः शौचेनाधिकारिवि

शेषणं। तेन मृतिदिनमारभ्यैतन्न कार्यमिति केचित्। तन्न॥ हेमाद्रिस्थवचोविरोधात्। मध्ये आशौ
चादिना बाधे तु लोप एव दार्शवत्। तथा प्रथमाब्दे दीपदानमुक्तं स्कंदे जानीये गारुडे॥ मृताहं दीप
को देयो मार्गे तु विषमे नरः। यावत्संवत्सरं वापि मृतस्य सुखलिप्सया। प्राङ्मुखोदङ्मुखं दीपं दे
यागारे द्विजालये। कुर्यादुदङ्मुखं विप्रो मार्गे संकल्प्य सुस्थितः॥ ॥अथ मासिका
नि॥ ॥तानि वृद्धौ नैव सपिंडनं कार्यं। तथा च गोभिललौगाक्षी॥ आद्यानि षोडश
दत्वा नैव कुर्यात्सपिंडनं। श्राद्धानि षोडशापाद्य विदधीत सपिंडनं॥ तानि त्वाह जातूकर्ण्यः
द्वादश प्रतिमास्यानि आद्यषाण्मासिके तथा। त्रैपक्षिकाब्दिके चेति श्राद्धान्येतानि षोडश। आ
द्यषाण्मासिकाब्दिकशब्दाः ऊनमासिकोनषष्ठोनाब्दिकपराः। हेमाद्रौ तु सपिंडीकरणं चैव इ
त्येतच्छ्राद्धषोडशमित्युत्तरार्धे पाठः। तदा आद्यमूनमासिकं द्वादशाहे। षाण्मासिकमूनष
ष्ठोनाब्दिकमित्यर्थः। कात्यायनस्त्वन्यथाह॥ द्वादश प्रतिमास्यानि आद्यषाण्मासिके तथा।
सपिंडीकरणं चैवमित्येतच्छ्राद्धषोडशं। एकाहेन तु षाण्मासा यदा स्युरपि वा त्रिभिः। न्यूनाः
संवत्सरश्चैव स्यातां षाण्मासिके तदा। द्विवचनादूनषष्ठोनाब्दिके इत्यर्थमाह। पृथ्वीचंद्रः। व्या
सस्त्वन्यथाह॥ द्वादशाहे त्रिपक्षे च षाण्मासे मासिकाब्दिके। श्राद्धानि षोडशैतानि संस्मृता
नि मनीषिभिः। द्वादशाहपदमूनमासिकपरं॥ तस्य द्वादशाहे प्रयुक्तेरिति कालादर्शः॥ मद
नरत्ने भविष्ये त्वन्यथोक्तं॥ नृणां तु मृतदेहानां श्राद्धाः षोडश सर्वदा। चतुर्थे पंचमे चैव नवमै
कादशे तथा। ततो द्वादशभिर्मासैः श्राद्धा द्वादश संख्यया इति। चतुर्थ्यादीनि दिनानि। भविष्ये
त्वन्यथोक्तं॥ अस्थिसंचयनं श्राद्धं त्रिपक्षे मासिकानि तु। रिक्तयोश्च तथा तिथ्योरिति न्यूनष
ष्ठोनाब्दिकपरमिति हेमाद्रिः। अत्र देशकुलशाखाभेदाद्व्यवस्थेति सर्वे निबंधाः॥ गालवः
ऊनषाण्मासिकं षष्ठे मासे वाप्यूनमासिकं। त्रैपाक्षिकं त्रिपक्षे स्यादूनाब्दं द्वादशे तथा। ऊन
मासिके तु गोभिलः॥ मरणाद्द्वादशाहे स्यान्मासे न्यूने वोनमासिकं॥ मदनरत्ने कालादर्शे च श्लो
कगौतमः॥ एकद्वित्रिदिने न्यूने त्रिभागेनोन एव च। श्राद्धान्यूनाब्दिकादीनि कुर्यादित्याह गौ
तमः॥ क्रियानिबंधे तु॥ सार्धे एकादशे मासे सार्धे वै पंचमे तथा॥ ऊनाब्दमूनषाण्मा
सं भवेत्तां श्राद्धकर्मणीत्युक्तं। तत्र मूलं चिंत्यं॥ ऊनेषु वर्ज्यान्याह मरीचिः॥ द्विपुष्करे च नंदा
सु सिनीवाल्यां भृगोर्दिने। चतुर्दश्यां च नोनानि कृत्तिकासु त्रिपुष्करे। ज्योतिषे। त्रिपादृक्ष
तिथिभद्रा भौमेज्यरविभिः सह। तदा त्रिपुष्करो योगो द्विपाद्योगे द्विपुष्करः॥ गालवः॥ त्रिभि
र्वा दिवसैरूनं त्वेकेन द्वितयेन वा। श्राद्धाद्विषष्ठमासेषु कुर्यादूनाब्दिकाब्दिकं। एकन्यूनपक्षे
पंचम्यां मृतस्य तृतीयां त्रिभिर्न्यूने प्रतिपदि। द्व्यूने द्वितीयायामिति केचित्। माधवस्तु॥ षा
ण्मासिकाब्दिके श्राद्धे स्यातां पूर्वेद्युरेव ते। मासिकानि स्वकीये तु दिवसे द्वादशेपि वेति॥ पै
ठीनसिवाक्ये ऊनषाण्मासिकमूनाब्दिकं च मृताहे पूर्वेद्युः कार्यमित्यर्थमाह पूर्वेद्युर्मृताह
दित्यर्थः। मासिकानि स्वकीये तु दिवसे त्वत्र केचित्पठंति। मदनरत्नेप्येवं याज्ञवल्क्यः॥
मृताहनि तु कर्तव्यं प्रतिमासं तु वत्सरं। प्रतिसंवत्सरं चैवमाद्यमेकादशेहनि। अत्राद्यमासि

शेषणे। तेन मृतिदिनमारभ्यैतत्कार्यमिति केचित्। तन्न॥ हेमाद्रिस्थतद्वचोविरोधात्। मध्ये आशौ
चादिना बाधे तु लोप एव दीपदानस्य। तथा प्रथमाब्दे दीपदानमुक्तं देवजानीये गारुडे॥ मृताहे दीप
कोदेयो मार्गे तु विषमे नरैः। यावत्संवत्सरं वापि पितॄन्सुखलिप्सया। प्राङ्मुखोदङ्मुखं दीपं दे
वागारे द्विजालये। कुर्याद्याम्यमुखं पित्र्ये त्वद्भिः संकल्पसुस्थितं॥ ॥अथ मासिका
नि॥ ॥तानि चैकैकस्मिन्नेव सपिंडने कार्याणि। तथा च गोभिलः लोगाक्षी॥ श्राद्धानि षोडशा
दत्वा नैव कुर्यात्सपिंडनं। श्राद्धानि षोडशापाद्य विदधीत सपिंडनं॥ तानि चाह जातूकर्ण्यः
द्वादशप्रतिमास्यानि आद्यषाण्मासिके तथा। त्रैपक्षिकाब्दिके चेति श्राद्धान्येतानि षोडश॥ आ
द्यषाण्मासिकाब्दिकशब्दाः ऊनमासिकोनषष्ठोनाब्दिकपराः॥ हेमाद्रौ तु सपिंडीकरणं चैवइ
त्येतच्छ्राद्धषोडशमित्युत्तरार्द्धे पाठः। तदा आद्यमूनमासिकं द्वादशाहे। षाण्मासिकं ऊनष
ष्ठोनाब्दिकरूपमित्यर्थः। कात्यायनस्त्वन्यथाह॥ द्वादशप्रतिमास्यानि आद्यषाण्मासिके तथा।
सपिंडीकरणं चैवेत्येतच्छ्राद्धषोडशः। एकाहेन तु षाण्मासा यदा स्युरपि वा त्रिभिः। न्यूनाः
संवत्सरश्चैव स्यातां षाण्मासिके तदा॥ द्विवचनादूनषष्ठोनाब्दिके इत्यर्थमाह। पृथ्वीचंद्रः। व्या
सस्त्वन्यथाह॥ द्वादशाहे त्रिपक्षे च षाण्मासे मासिकाब्दिके। श्राद्धानि षोडशैतानि संस्मृता
नि मनीषिभिः। द्वादशाहपदमूनमासिकपरम्। तस्य द्वादशाहे प्रयुक्तेरिति कालादर्शः॥ मद
नरत्ने श्राद्धेत्वन्यथोक्तं॥ नराणां तु प्रपन्नदेहानां श्राद्धाः षोडश सर्वदा। चतुर्थे पंचमे चैव नवमै
कादशे तथा। ततो द्वादशभिर्मासैः श्राद्धा द्वादश संख्ययेति। चतुर्थ्यादीनि दिनानि। भविष्ये
त्वन्यथोक्तं॥ अस्थिसंचयनं श्राद्धं त्रिपक्षे मासिकानि तु। रिक्तपोश्च तथा तिथ्योरिति न्यूनष
ष्ठोनाब्दिकपरमिति हेमाद्रिः। अत्र देशकुलशाखाभेदाद्व्यवस्थेति सर्वे निबंधाः॥ गालवः
ऊनषाण्मासिकं षष्ठे मासे वाप्यूनमासिकं। त्रैपाक्षिकं त्रिपक्षस्याप्यूनाब्दं द्वादशे तथा। ऊन
मासिके तु गोभिलः॥ मरणाद्द्वादशाहे स्यान्मासस्त्वेवोनमासिकं॥ मदनरत्ने कालादर्शे च शौ
कगौतमः॥ एकद्वित्रिदिने रूने त्रिभागेनोन एव च श्राद्धान्यूनादिकादीनि कुर्यादित्याह गौ
तमः॥ क्रियानिबंधे ऋतुस्तु॥ सार्द्धे एकादशे मासे सार्द्धे वै पंचमे तथा॥ ऊनाब्दमूनषाण्मा
सं भवेतां श्राद्धकर्मणीत्युक्तं। तत्र मूलं चिंत्यं॥ ऊनेषु वर्ज्यान्याह मरीचिः॥ द्विपुष्करे च नंदा
सु सिनीवाल्यां भृगोर्दिने। चतुर्दश्यां च नो नानि कृत्तिकासु त्रिपुष्करे। ज्योतिषे। त्रिपाद्दक्ष
त्रिपिभद्रा भौमनरविभिः सह। तदा त्रिपुष्करो योगो द्विपायोगे द्विपुष्करः॥ गालवः॥ त्रिभि
र्वा दिवसैरूने त्वेकेन द्वितयेन वा। आद्यादि पंचमासेषु कुर्यादूनाब्दिकाब्दिकं। एकन्यूनपक्षे
पंचम्यां मृतस्य तृतीयां त्रिभिर्न्यूने प्रतिपदि। द्व्यूने द्वितीयायामिति केचित्। माधवस्तु॥ षा
ण्मासिकाब्दिके श्राद्धे स्यातां पूर्वेद्युरेव ते। मासिकानि स्वकीये तु दिवसे द्वादशेऽपि वेति॥ पै
ठीनसिवाक्ये ऊनषाण्मासिकमूनाब्दिकं च मृताहे पूर्वेद्युः कार्यमित्यर्थमाह पूर्वेद्युर्मृताहा
दित्यर्थः॥ मासिकानि स्वकीये तु दिवसे इत्युक्तेः रुद्रमेव शक्तं। मदनरत्ने प्येवं याज्ञवल्क्यः॥
मृताहनि तु कर्त्तव्यं प्रतिमासं तु वत्सरं प्रतिसंवत्सरं चैवमाद्यमेकादशेऽहनि। अत्राद्यमासि

हनिर्वर्त्ये पूर्वे दर्शे यथाविधि॥ अकुर्वीतान्निमान्‌ विप्रो मातापित्रोः सपिंडनं॥ आशौचांतमथ
दर्शयोर्मध्ये कस्मिंश्चिदित्यर्थः। पित्रादीनां सपत्नीकानां देवतात्वे मातुरपि॥ तत्रानुप्रवेशान्मा
तुरपि साकं दर्शे न सपिंडनं युक्तमित्यपरार्कः। एवं पितामहादेरपि सपिंडनं प्राग्दर्शात्कार्यं तेनापि
ना पार्वणयोगात्। द्वादशाहे वा कार्यं। साग्निकस्तु यदा कर्त्ता प्रेतश्चानग्निमान्भवेत्। द्वादशाहे
भवेत्कार्यं सपिंडीकरणं सुत इति गोभिलोक्तेः। साग्नेः प्रेतस्य तु त्रिपक्षे प्रेतश्चेदाहिताग्निः स्यात्
कर्त्ता नग्निर्यदा भवेत्। सपिंडीकरणं तस्य कुर्यात्पक्षे तृतीयके इति सुमंतूक्तेः। साग्नेः मदनरत्ने
लघुहारीतोपि अनग्निस्तु यदा वीरो भवेत्कुर्यात्तदा गृही। प्रेतश्चेदग्निमांस्तु स्यात्त्रिपक्षे वै सपिंडनं
द्वयोः साग्निकत्वे द्वादशाह एव। साग्निकस्तु यदा कर्त्ता प्रेतो वाप्यग्निमान्भवेत्॥ द्वादशाहे तद
कार्यं सपिंडीकरणं पितुरिति तेनैवोक्तेः द्वयोरनग्नित्वे तु भविष्ये। सपिंडीकरणं कुर्यात् यजमान
स्त्वनग्निमान्। अनाहिताग्नेः प्रेतस्य पूर्णे ऽब्दे भरतर्षभ द्वादशाहे त्रिषण्मासे त्रिपक्षे वा त्रिमासि
एकादशे पि वा मासि मंगलस्याप्युपस्थितौ। कात्यायनगोभिलौ। यदहर्वा वृद्धिरापद्यते। तद्वृ
दिने एवेति वाचस्पतिः तत्र प्रातर्वृद्धिनिमित्तकमिति। नियमात्सपिंडनस्य चापराह्णकालीनत्वेन
पूर्वेद्युर्वा प्राप्तेः। वृद्धिदिने तत्पूर्वदिने चेति श्रीदत्तः स्मार्त्तगौडस्तु वृद्धिपूर्वं वर्षांत्यश्राद्धस्य सपि
डस्य प्रेतत्वनाशसहकारितेन परेद्युर्विध्याद्यभावे पितत्कर्तृत्वता निश्चयसहितमेव कालांतरक्रि
यमाणवृद्धिपूर्वे स्मरणसहकृतं प्रेतत्वनाशकमित्याह। तच्चान्यकाले कृतस्य फलाजनकत्वात्। ए
तन्निमित्तनिश्चय एवाधिकार इत्यभावे पि तत्स्मृतिरिति मिश्रोक्तिः परास्ता॥ वृद्धिपूर्वदिनस्य
वर्षांतस्य च कालांगत्वेन निमित्तत्वाभावात्। तेन पुनः कार्यमित्यन्ये। मदनरत्ने ऽप्येवं॥ निरग्नि
कः सपिंडत्वं पितुर्मातुश्च धर्मतः। पूर्णे संवत्सरे कुर्याद्वृद्धिर्वा यदहर्भवेत्॥ चतुर्विंशतिमते॥
सपिंडीकरणं चाब्दे पूर्णे ऽभ्युदये पि वा। द्वादशाहे तु केषांचिन्मतं चैकादशे तथा। पृथ्वीचंद्रोदये
बौधायनः॥

॥अथ सपिंडीकरणम्॥

त्रिपक्षे वा तृतीये वा मासि
षष्ठे चैकादशे वा द्वादशाहे वै द्वादशाहे वेति। एतत्प्रक्रमे विष्णुः॥ मासिकार्थं द्वादशाहे श्राद्धं
कृत्वा त्रयोदशे ऽह्नि वा। कुर्यान्मंत्रवर्ज्यं हि शूद्राणां द्वादशे ऽह्नि संवत्सराभ्यंतरे यद्यधिमासो भवेत्तदा
मासिकार्थं दिनमेकं वर्धयेदिति आशौचोत्तरं द्वादशाहस्तु मासिकानि तेषु वा यद्द्वादशाहे
ऽप्यून मासिकादीनि कृत्वा त्रयोदशे ऽह्नि सपिंडनं कुर्यात्। अधिमासे तु चतुर्दशे ऽह्नि कुर्यात्॥ शू
द्रस्य त्रयोदशे द्वादशे ऽह्नीत्यस्य मासिकानां दिनपरत्वादिति पृथ्वीचंद्रः। पैठीनसिः संवत्सरेणसज्ञे
नेन वमे मासि इत्येके अत्र साग्नेरनवोक्तः कालाभावे त्रिपक्षादि संवत्सरांता अनुकल्पा ज्ञेयाः। कल्प
तरुस्त्वग्ने वृद्धिनिश्चयस्य सर्वे पकर्षप्रकार इत्याह। तन्न॥ यदहर्वेति सातं अश्रुते यद्यपि वृद्धिनि
मित्तोपकर्षो निरग्नेरेवोक्तस्तथापि साग्नावपि ज्ञेयः। उक्तकालासंभवे वर्षांतादिगौणकालव
द्वृद्धेरपि प्राप्तेः वक्ष्यमाणगोभिलवचनात्। अयातयामत्वान्न भवेत्तु तत्स्यान्विति दोषस्तु न विशे
षाच्च। अपरार्के पृथ्वीचंद्रादिस्मृतिसारे ऽप्येवं। अत्र वृद्धिपदं चूडोपनयनविवाहमात्रपरं। सीमंतादौ
तु वृद्धिश्राद्धलोप एवेत्याचार्यचूडामणिः। पुंसवनाद्यन्नप्राशनांतेष्वावश्यकेष्वपकर्ष इति। आ

स्तानि द्वादशाहादौ सपिंडनात्पूर्वं कृतान्यपि वृद्धिं विनापकर्षे पुनः स्वकाले कार्याणि ॥ यस्य संवत्सरा
दर्वाक् सपिंडीकरणं कृतं न मासिकं चोदकुंभं च देयं तस्यापि वत्सरमिति मदनरत्ने त्वंगिरसोक्तेः
न चेदं मासिकानामपकर्षं विधत्ते। किंतु सपिंडनोर्ध्वं स्वकालानुष्ठानमेवेति वाच्यं श्राद्धानि
षोडशादत्वा नतु कुर्यात्सपिंडनामिति विरोधात्। यस्य संवत्सरादर्वाग्विहिता तु सपिंडता॥ वि
धिवत्तानि कुर्वीत पुनः श्राद्धानि षोडशेति माधवीये गोभिलोक्तेश्च। अर्वाक् संवत्सराद्यस्य सपि
ंडीकरणं कृतं। षोडशानां द्विरावृत्तिं कुर्यादित्याह गौतमः इति तत्रैव सपिंडनागोभिलोक्तेः। षोड
शत्वं चैकादशाहसपिंडनपक्षे। तत्राद्यमासिकस्य कालसत्वात्। अन्यपक्षे तु यथासंभवं ज्ञेयं
॥ यत्तु दीपिकायां॥ अनुमासिकानि तु चरेत्तान्येव सापिंड्यतः अतः पश्चाद्द्वादशेत्युक्ते रूनानां
न पुनः कृतिरित्युक्तं तदेतद्विरोधाच्चिन्त्यं॥ यत्तु गौडाः॥ सपिंडीकरणानानुशेयामेनन्त्रिमावधे
रिति शातातपोक्तेर्मासिकानां प्रेतत्वविमोक्षार्थत्वात्सपिंडनापकर्षेण तदन्यायेन तेषाम
प्यपकर्षान्मासिकानां न पुनः कृतिः। यत्तु मासिकं चोदकुंभं चेति लौगाक्ष्यादिवचनं तन्निर्मूलं।
समूलत्वेपि दार्शपरत्वमाहुः। तदुक्तवक्ष्यमाणवचोनिचयविरोधान्मूर्खोऽत्युपेक्ष्यः॥ यत्तु मिता
क्षरायां सपिंडनोर्ध्वं स्वकाले एव कार्याणि। अपकर्षस्त्वनुकल्प इत्युक्तम्। तदपि पूर्वविरोधा
च्चिन्त्यं। तेन वृद्धिं विनापकर्षे पुनः कृतिः। अर्वाक् संवत्सराद्यस्य सपिंडीकरणं भवेत्। प्रेतत्वमिह त
स्यापि ज्ञेयं संवत्सरं नृपेत्यग्निपुराणात्। वृद्धिनिमित्तापकर्षे त्वस्येव तन्निवृत्तिः। अन्यथा वृद्ध्य
संभवादिति शूलपाणिः॥ कार्ष्णाजिनिः सपिंडीकरणादर्वाग् पकृष्य कृतान्यपि। पुनरप्यपकृ
ष्येत वक्ष्यंत्तरनिषेधनात्। निषेधं चाह कात्यायनः। निर्वर्त्य वृद्धितंत्रं तु मासिकानि तु तन्त्रयेत्।
अयातयाममरणं न भवेत्पुनरस्य त्विति। द्विरनुष्ठानं चोत्तरेषामेव तत्र पूर्वेषां स्वकालकृतानां।
तदाह माधवीये कार्ष्णाजिनिः। अर्वागब्दाद्यत्र यत्र सपिंडीकरणं कृतं। तदूर्ध्वं मासिकानां स्या
द्यथाकालमनुष्ठितिः॥ हेमाद्रौ शंखायनः॥ प्रेतश्राद्धानि शिष्टानि सपिंडीकरणं तथा। अ
पकृष्यापि कुर्वीत कर्तुं नांदीमुखं द्विजः। वृद्धिं विनापकर्षदोषमाहोशनाः॥ वृद्धिश्राद्धविही
नस्तु प्रेतश्राद्धानि यश्चरेत्। स श्राद्धी नरके घोरे पितृभिः सह मज्जतीति॥ आधानेपकर्षमाह
हेमाद्रावुशनाः। पितुः सपिंडीकरणं वार्षिके मृतिवासरे। आधानाद्युपसंप्राप्तावेतत्स्यागपि व
त्सरात्। विशेषस्तूक्तो विवाहनिर्णये कएवः॥ नवश्राद्धं मासिकं च यद्यदूनतरं भवेत्। त
त्तदुत्तरसातंत्र्यादनुष्ठेयं प्रचक्षते॥ गारुडेपि॥ आपद्यपकृतं तत्तु कुर्यादूर्ध्वं मृतेहनि॥

॥ ॥ अथ सपिंडीकरणं॥

माधवीये हारीतः॥ यातु पूर्वममावास्या
मृताहाद्दशमी भवेत्। सपिंडीकरणं तस्यां कुर्यादेवं सुतोग्निमान्॥ मृताहादूर्ध्वं दशमी स्यादद
र्शात्पूर्वगा॥ सपिंडीकरणं कुर्वीत पूर्वदर्शेग्निमान्सुतः। परतो दशरात्रस्य पूर्णत्वदर्शयेतरे
इति कार्ष्णाजिनिस्मृतेः। आहिताग्नेस्तेन विना श्रौतपिंडपितृयज्ञासिद्धेः। तदाह गालवः। स
पिंडीकरणमेतत्तेनैकं पदमाश्रिते। आहिताग्नेः सिनीवाल्यां पितृयज्ञः प्रवर्तते। मदनरत्ने
प्रजापतिः। नासपिंड्याग्निमान्पुत्रः पितृयज्ञं समाचरेत्। अपरार्के कात्यायनः॥ एकादशा

हनिर्वर्त्यमपूर्वं दर्शाद्यथाविधि॥ अकुर्वीतानग्निमान्विशेषमातापित्रोः सपिंडनं॥ आशौचांतसमय
दर्शयोर्मध्ये कस्मिंश्चिदहनीत्यर्थः। पित्रादीनां सपत्नीकानां देवतात्वे मातुरपि। तत्रानुप्रवेशान्मा
तुरपि पृथक्सपिंडनं नापेक्षितमिति कल्पतरुः। एवं पितामहादेरपि सपिंडनप्राप्त्याशौचकार्याणि तेन वि
नापार्वणयोगात्। द्वादशाहे वा कार्यं। साग्निकस्तु यदा कर्ता प्रेतश्चानग्निमान्भवेत्। द्वादशाहे
भवेत्कार्यं सपिंडीकरणं सुतैरिति गोभिलोक्तेः। साग्नेः प्रेतस्य तु त्रिपक्षे प्रेतश्चेदाहिताग्निः स्यात्
कर्तानग्निर्यदा भवेत्। सपिंडीकरणं तस्य कुर्यात्पक्षे तृतीयके इति सुमंतूक्तेः। साग्नेः मदनरत्ने
लघुहारीतः पित्रनग्निस्तु यदा वीरभवेत्कुर्यात्तदा गृही। प्रेतश्चेदग्निमांस्तस्या त्रिपक्षे वै सपिंडनं
द्वयोः साग्निकत्वे द्वादशाह एवा साग्निकस्तु यदा कर्ता प्रेतो वाप्यग्निमान्भवेत्॥ द्वादशाहे तदा
कार्यं सपिंडीकरणं पितुरिति तेनैवोक्तेः द्वयोरनग्नित्वे तु भविष्ये। सपिंडीकरणं कुर्यात्यजमान
स्त्वनग्निमान्। अनाहिताग्नेः प्रेतस्य पूर्णे ह्यब्दे भरतर्षभ द्वादशाहे त्रिपक्षे वा षण्मासे त्रिमासि वा
एकादशेपि वा मासि मंगलस्याप्युपस्थितौ। कात्यायनगोभिलौ। यदहर्वा शुद्धिरापद्यते। तच्च शुद्धि
दिन एवेति वाचस्पतिः। तत्र प्रातः शुद्धिनिमित्तकमिति। नियमात्सपिंडनस्य चापराह्णकालीनत्वेन
पूर्वेत्यवाधापत्तेः। वृद्धिदिने तत्पूर्वदिने चेति मिश्रीदत्तः। स्मार्तेगोऽस्तु वृद्धिः पूर्वं वर्षांत्यश्राद्धस्य सपिं
डस्य प्रेतत्वनाशे सहकारीतनपरेद्युर्विधा द्व्यभावे पितृत्वकर्तव्यतानिश्चयसहितमेव कालांतरक्रि
यमाणवृद्धिपूर्वेसरासह कृतं प्रेतत्वनाशकमित्याह। तत्रत्र काले कृतस्य फलाजनकत्वात्। एते
ननिमित्तनिश्चयवत एवाधिकार इत्यभावे पितृत्वस्तिरिति मिश्रोक्तिः परास्ता॥ वृद्धिपूर्वदिनस्य
वर्षांतस्य च कालांगत्वेन निमित्तत्वाभावात्। तेन पुनः कार्यमित्यन्ये। मदनरत्ने पुलस्त्यः॥ निरग्नि
कः सपिंडत्वं पितुर्मातुश्च धर्मतः। पूर्णे संवत्सरे कुर्याद्वृद्धिर्वा यदहर्भवेत्॥ चतुर्विंशतिमते॥
सपिंडीकरणं चाब्दे संपूर्णेभ्युदयेपि वा। द्वादशाहे तु केषांचिन्मते चैकादशे तथा पृथ्वीचंद्रोदये
बौधायनः॥ ॥अथसपिंडीकरणम्॥ त्रिपक्षे वा तृतीये वा मासि
षष्ठे चैकादशे वा द्वादशाहे वै कादशाहे वेति। एतन्मतमेव विष्णुः। मासिकार्थं द्वादशाहे श्राद्धं
कृत्वात्र योदशेन्हि वा कुर्यान्मंत्रवर्जं हि शूद्राणां द्वादशेन्हि संवत्सराभ्यंतरे यद्यधिमासो भवेत्तदा
मासिकार्थं दिनमेकं वर्धयेदिति। आशौचोत्तरे द्वादशाहः सुमासिकानि तथैवाद्य एद्वादशाहे
नैयून मासिकादीनि कृत्वा त्रयोदशेन्हि सपिंडनं कुर्यात्। अधिमासे तु चतुर्दशेन्हि कुर्यात्॥ शू
द्रे तु पंचदशे द्वादशे न्हीत्यसमासिकान्यादि तत्परत्वादिति पृथ्वीचंद्रः। पैठीनसिः संवत्सरांते सज्जे
तेनव मेमासी तस्येके अत्र साग्नेरनवोक्तेः कालाभावे त्रिपक्षादिसंवत्सरांता अनुकल्पा ज्ञेयाः। कल्प
तरुस्त्वेवं वृद्धिनिश्चयस्य सर्वे पक्षे प्रकारस्त्वाह। तन्न॥ यदहर्वैति स्मार्ते ग्रथने पैद्यपि वृद्धिनि
मित्तोपकर्षो निरग्नेरेवोक्तस्तथापि साग्नावपि ज्ञेयः। उक्तकालासंभवे वर्षांतादिगौरवकालत्व
वृद्धेरपि मासेः वत्समासागोभिलवचनात्। अथा तेषामप्येतं न संवेत्तु तस्यत्विति दोषस्तु न्यविशे
षाच्च। अपरार्के पृथ्वीचंद्रादिस्वरसोप्येवं। अत्र वृद्धिपदं चूडोपनयनविवाहमात्रपरं। सीमंतादे
तु वृद्धिश्राद्धलोपस्त्वेवेत्याचार्यचूडामणिः। पुंसवनाद्यन्नप्राशनांते ष्वावश्यकेष्वपकर्षः इति। आ

ऽन्तिके रजसि सागरेपि॥ बृहस्पतिः। अन्वाधेयो भवेद्यस्मिन्कृते वृद्धिकर्मणि। तच्चि मित्तमात्रय
पित्रोः कुर्यात्सपिंडनं। गर्भाधानस्य कृत्यत्वे तरेपि संभवात्। अन्यथा श्राद्धं परान्नं च गर्भपालनं च मै
थुनं। इति देवलेन अमावास्यायां मैथुननिषेधाच्च। नतत्रापकर्ष इति श्राद्धकौमुद्यादयः। तत्रेदं तत्त्व
मातुर्ये भार्यामिति निषेधाद्वृत्यर्थं वर्णापकर्षस्तत्त्वद्वयेन पि हिति मैथुने दोषाभावाच्च
पितामहमरणे गौत्रस्य वृद्धौनापकर्षः तस्य महागुरुत्वाभावात्। तत्र तदूर्ध्वं भो वृद्धिश्राद्धमिति
श्राद्धचंद्रिका॥ तन्न। आतावेता दौतदभावेप्यपकर्षोक्तेः। तेन निर्देशोप्युपलक्षणं आह॥
आनंत्यात्कुलधर्माणां पुंसां चैवायुषः क्षयात्॥ अस्थितत्वाच्छरीरस्य द्वादशाहः प्रशस्यते॥ एत
दाशौचांततृतीयदिनोपलक्षणं। सर्वेषामेव वर्णानामाशौचांते सपिंडनमिति निर्णयामृते का
त्यायनोक्तेः सर्वेषामिति त्रैवर्णिकपरं। शूद्राणां त्वाशौचमध्येमंत्रवर्जं हि शूद्राणां द्वादशेहनि की
र्तित मिति विष्णूक्तेः। एतद्दर्शश्राद्धकारिशूद्रविषयमित्यपरार्के कल्पतरौ च वृद्धमनुः। द्वादशेह
नि विप्राणां आशौचांते तु भूभुजां। वैश्यानां तु त्रिपक्षाद्वा अथवा स्यात्सपिंडनं। निर्णयामृते गोभि
लः। द्वादशाहादिकालेषु प्रमादादननुष्ठितं। सपिंडीकरणं कुर्यात् कालेषूत्तरभाविषु। इदं साग्नि
रुक्तकालासंभवे गौणकालविधानार्थमिति मदनपारिजातः मदनरत्नेप्येवं॥ ऋष्यशृंगः॥
सपिंडीकरणं श्राद्धमुक्तकालेन चेत्कृतं। मैत्रे हस्ते च रोहिण्यां मैत्रभे वा समाचरेत्। कालाद
र्शेपि॥ एकादशेन्हि द्वादशे त्रिपक्षे वा त्रिमासि वा। षष्ठे चैकादशे वाब्दे संपूर्णे वानुभागने।
सपिंडीकरणस्यैत्यष्टौ कालाः प्रकीर्तिताः॥ साग्नौ कर्तुर्यमावाद्यौ पैतेसाग्नौ तृतीयकः।
अनग्नेस्तु द्वितीयाद्याः सप्तकालामुनीरिताः। रोहिणीरौद्रहस्तेषु मैत्रभे वापि तच्चरेत्॥ नारद
संहितायां तु॥ सपिंडीकरणं कार्यं वत्सरे वार्द्धवत्सरे। त्रिमासे वा त्रिपक्षे वा मासि वा द्वादशेहि
चेत्युक्तं। वत्सरे तीतेप्येवं ततः सपिंडीकरणं वत्सरात्परतस्त्वित मिति भविष्योक्तेः। पितुः सपिंडी
करणं वार्षिके मृतवासरे इत्युशनसोक्तेश्च। पूर्णे संवत्सरे पिंडः षोडशः परिकीर्तितः। तेनैव च
सपिंडत्वं तेनैवाब्दिकमिष्यते इति हेमाद्रौ वचनाच्च॥ अस्यानाकरत्वोक्तिर्मूर्खोक्तिरेव। यत्तु
पूर्णे संवत्सरे कुर्यात्सपिंडीकरणं सुतः। एकोद्दिष्टं च तत्रैव मृताहनि समापयेदिति धवलनिबंधे
जावाल्युक्तेः॥ पुत्रः सपिंडनं कृत्वा कुर्यात्स्नानं सचैलकं। एकोद्दिष्टं ततः कुर्यात्कृतपनति
वारमेवेति स्वल्पमात्स्योक्तेश्चाब्दिकं तद्दिने पुनः कार्यमिति केचित्। तेन मूलत्वाद्धेमाद्रिवि
रोधाच्चोपेक्ष्याः। षोडशत्वं च सपिंडनस्य षोडशश्राद्धांतर्भावपक्षे सन्तद्वसारेतु वर्षांत
तद्दिने संवत्सरविमोकश्राद्धं सपिंडनं च कृत्वा परेद्युर्मृताहे वार्षिकं कार्यमित्युक्तं। गौडास्त्व
प्येवमाहुः। तत्पूर्वं विरोधाच्चिंत्यं। तच्च पुत्रे सति नान्यः कुर्यात्। श्राद्धानि षोडशादत्त्वा नतु
कुर्यात्सपिंडनं। सोभिताव सिने पुत्रः कालादतिविलंबयीति। वायवीयोक्तेः। षोडशश्राद्ध
नां वर्षादूर्ध्वं कालाभावे पिता न्यदत्त्वा न तु कुर्यात्। किंतु दत्त्वैव तानि। यदि कनिष्ठश्चावा दि
नाकृतानि तदा सपिंडनमेव कुर्यादित्यपरार्कः। सपिंडनेतु कनिष्ठानां नैवाधिकार इत्यर्थः।
तत्रैव॥ अज्ञानादथवा मोहात्यकृता चेत्सपिंडना। तत्रापि विधिवत्कार्या कालादतिचि

रादपि॥ तेष्वपि ज्येष्ठस्यैवाधिकारः॥ ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः इति मनूक्तेः। अपरार्के
प्रचेता अपि॥ एकादशाद्याः क्रमशो ज्येष्ठस्य विधिवत्क्रियाः॥ कुर्युर्नैकैकशः श्राद्धमाब्दिकं तु
पृथक्पृथक्॥ मरीचिः॥ सर्वेषामनुमतं कृत्वा ज्येष्ठेनैव तु यत्कृतं। द्रव्येण चाविभक्तेन सर्वैरेव
कृतं भवेत्॥ यत्तु वाचस्पतिशूलपाणिभ्यामुक्तं द्रव्यदानानुमत्याभावे कनिष्ठैः पृथक्कार्यमि
ति॥ तन्न॥ एवकारस्य तदभावेपि पृथक्करणाभावार्थत्वात्॥ अपरार्के॥ ज्येष्ठे सति कनि
ष्ठानामनधिकाराच्च। अतस्तेषां प्रत्यवायमात्रं आहिताग्निः कनिष्ठस्तु कुर्यादेव। अन्यथा पितृ
यज्ञासिद्धेः॥ एवमावश्यकवृद्धावपि कनिष्ठोन्यः सपिंडो वा कुर्यात्। भ्राता वा भ्रातृपुत्रो वा सपि
ण्डः शिष्य एव च। सहपिंडक्रियां कृत्वा कुर्यादभ्युदयं ततः। तथैव काम्यं यत्कर्म वत्सरात्प्रथमादृते
इति मदनरत्ने लघुहारीतवचनात्। वृद्ध्यनंतरं प्रथमाब्दमध्येपि काम्यं कुर्यात्। वृद्ध्यभावे तु प्रथ
माब्दमध्येपि काम्यं कुर्यात्। वृद्ध्यभावे तु प्रथमाब्दादूर्ध्वमेवेत्यर्थः। काम्योक्तेरनावश्यकेष्टापूर्ता
दीनां नापकर्षः। एतद्भ्रातृपुत्रादिसंस्कारे प्राप्ताधिकारस्य नांदीश्राद्धाधिकारार्थं। अभ्युदयपदं च
नांदीश्राद्धनिमित्तकर्ममात्रपरमिति हेमाद्रिः॥ तेन ज्येष्ठे देशांतरस्थे कनिष्ठः सपिंडनं विनैव वृ
द्धिं कृत्वा पुत्रसंस्कारं कुर्यादिति। श्रीदत्तोक्तिः परास्ता॥ भ्रातृशिष्याद्युक्तेर्नांदीश्राद्धे अदेवता
मात्रपरोऽपकर्ष इत्यपास्तं। अस्य क्रममात्रपरत्वाद्वृद्धिकर्त्रैव सपिंडनं कुर्यादिति न नियम इति गौ
डाः। अत एव कन्याया मातृमरणे भ्रात्रा पिंडने कृते पितुर्दानाधिकारः। शूलपाणिस्तु। महागुरौ
तु भूते वृद्धिकर्म न युज्यते इति निषेधात् मृतस्य भार्यादेः सपिंडनं कृत्वा न पुत्रकन्यादेरभ्युदयं कुर्या
दित्याहुः। स्वपुत्रसंस्कारे संस्कार्यपितुः सपिंडनं विना वृद्धौ देवतात्वाभावादित्याह। तन्न॥ देवताभ
पुत्रापकर्षस्य निरस्तत्वात्। वृद्धिं विना कनिष्ठेन कृते तु विदेशस्थेन ज्येष्ठेन पुनः कार्यं। यवीय
सा कृतं कर्म प्रेतशब्दं विहाय तु। तस्यापि सापि कर्तव्यं सपिंडीकरणं पुनरिति स्मृतेः। ज्येष्ठेन वा
कनिष्ठेन सपिंडीकरणे कृते। आद्यपादे मातापित्रोः कनिष्ठेनेति वा पाठः। देशांतरगतानां च
पुत्राणां तु कथं भवेत्। श्रुत्वा तु वपनं कार्यं दशाहांतं तिलोदकं। ततः सपिंडीकरणं कुर्यादे
कादशेहनि। द्वादशाहेन कर्तव्यमिति शातातपोऽब्रवीदिति वचनान्तु निर्णयः। सिंगाभट्टीयेप्ये
वं। पूर्ववचने त्वत्र च मूलं चिंत्यं स्मृत्यर्थसारे तु विभक्ता वृद्धिकामाश्चेत्पुत्राः पृथक्सपिंडीकरणं
कुर्युरित्युक्तं। अत्र दत्तकस्य तत्पुत्रादीनां च विशेषः प्रागुक्तः। केचित्तु। वृद्धिं विनापि कनिष्ठस्य
सपिंडनमाहुः। मातापित्रोर्मृते काले ज्येष्ठे देशांतरस्थिते। कनिष्ठेन प्रकर्तव्यं सपिंडीकरणं त
देति कार्ष्णाजिनिस्मृतेः। गते वारोधिते ज्येष्ठे पित्रा वाभेषिते सति। षण्मासान्ते निवृत्ते तु तदा
कार्यं कनीयसा। संवर्तः॥ पुनः सपिंडीकरणं श्राद्धं पार्वणवच्चरेत्। अर्घ्यसंयोजनं नैव पिंड
संयोजनं न चेति। तद्वचसां निर्मूलत्वात्प्रोषितावसिते पुत्रे इत्यादिविरोधाच्चोपेक्ष्याः। क्रममृतौ
तु हेमाद्रौ ब्राह्मे। मृते पितरि यस्याथ विद्यते च पितामहः। तेन देयास्त्रयः पिंडाः प्रपितामहपूर्वे
काः। तेभ्यस्तु पैतृकः पिंडो नियोक्तव्यस्तु पूर्ववत्। मातर्यथ मृतायां च विद्यते च पितामही। प्रपि
तामहीपूर्वे तु कार्यस्तत्राप्ययं विधिः। एवं पितामहजीवने तत्पित्रादिभिर्ज्ञेयं॥ तदाह सुमंतुः।

त्रयाणामपिपिंडानामेकेनापिसपिंडने। पितृत्वमश्नुतेप्रेतःइतिधर्मोव्यवस्थितः। यत्तुव्युत्क्रमात्प्रमी
तानांनैवकार्यासपिंडतेति। तन्मातापितृभर्तृभिन्नविषयं। व्युत्क्रमेणमृतानांचसपिंडीकृतिरि
ष्यते। यदिमातापित्रादिपिताभर्त्तानैषविधिःस्मृतःइतिमाधवीये स्कांदोक्तेः। मदनरत्नादौचैवं।
अत्रप्रपितामहादिभिःपितुःसपिंडनेकृतेपितामहेमृतेतत्सपिंडनेसतिपुनस्तेनसहपितुःसपि
डनंकार्यमितिहेमाद्रिमतमाह। अन्येनैतन्मन्यंते। तच्चेत्तुपितुःसपिंडनाभावेपितामहेनसहपु
नःकार्यं। ततस्तत्वेत्रयाणामपिपिंडानामेकेनासपिंडने। पितृत्वमश्नुतेप्रेतइतिधर्मोव्यवस्थि
तः॥ ॥इतिविष्णुधर्मोक्तेः। पितामहेप्रपितामहेवापुत्रांतरैःसंस्कृतेप्यसंस्कृताभावे
वपितुःसपिंडनंकुर्यात्। असंस्कृतौनसंस्कार्यौपूर्वौपौत्रप्रपौत्रकौ। पितरंतत्रसंस्कुर्यादिति
कात्यायनोक्तेरितिहेमाद्रिपरिशिष्टात्। असंस्कृतौत्यक्तावितिकेचित्। सपिंडीकृताविति तु
तत्वं। अतएवोक्तंतत्रैव। पापिष्ठमपिशुद्धेनशुद्धंपापकृतापिवा। पितामहेनपितरंसंस्कुर्यादि
तिनिश्चयः। पापिष्ठमहत्तसपिंडनेनतुपतितादि। अभिशस्तपतितभ्रूणघ्नस्त्रियश्चाभिचारि
णी। नसंसृजेदितिदेवजवाचोक्तेः। पापकर्मिणोनसंसृजेरन्निति गौतमोक्तेश्चेत्युक्तंनिर्णयामृते
पूर्वयोःपुत्राभावेतुपौत्रःकुर्यादेव। पितामहपितुःपश्चात्पंचत्वंयदिगच्छति। पौत्रेणैकादशा
हादिकर्तव्यंश्राद्धषोडशान्वितं। तेनैवपौत्रेणकर्तव्यंप्रत्यब्दंत्वपितामहः पितुःसपिंडनांकृत्वाकुर्यान्मा
सानुमासिकमितिकात्यायनोक्तेः। अपरार्केप्येवं। तेनसपिंडनस्यानित्यत्वादकृतसपि
डनयोरेवपार्वणानुप्रवेशइतिपूर्वोक्तिःपरास्ता॥ कृतेसपिंडीकरणेमृतःपार्वणभाग्भवेत्इति
हारीतविरोधाच्चेतिकेचित्। पुत्रांतराभावेपितामहवार्षिकमप्याहुः। तन्मात्रषोडशाद्यतिमि
यमात्। इत्युत्पन्नाभवत्येवपितामहस्यचेद्यादेकोद्दिष्टंनपार्वणमिति। वाचस्पतिस्तुगौतमोक्तेः।
त्रयाणांयौगपद्येत्वमाभान्यात्पितुःसपिंडनंकृत्वा पूर्वयोःकुर्यात् पितामहःमृतेदशाहांतःपितृ
मृतौपितुःसंस्कारंकृत्वा पितामहस्यपुनःसर्वमावर्तयेत्। कृतेदशाहेनैवअशक्त्यापित्रातुल्ला
तेनपौत्रेणपितामहश्राद्धेप्रक्रांतेपितृमृतौतदाशौचंवृहत्त्वेवपौत्रःपितामहकर्मकुर्यात्। प्रक्रां
तत्वादिति। मदनपारिजातपृथ्वीचंद्रौ। यत्तु। उत्तरात्रितयेरौद्रेरोहिण्यांयाम्यत्वाष्ट्रयोःपितृभेषु
चाग्निभेश्रप्रस्तुकर्मसकलंचवर्जयेत्। येनकार्यमपिवृद्धिमानइतिसपिंडनप्रकरणेपाठान्मुख्य
कालेनिषिद्धेस्मिन्सपिंडनापकर्षः। सर्वकालेषुतद्धेतन्नद्वाभ्येवइत्युक्तमाद्योक्तानषोडशश्रा
द्धानिकार्याणीतिवाचस्पतिमिश्राः॥ तन्न॥ अस्यपरिभाषात्वेनसावकाशकर्मपरत्वात्
अस्यप्रेतमात्रदैवत्यभावाच्च॥ ॥अथस्त्रीणामुच्यते॥ हेमाद्रौ
वृहस्पतिः॥ भर्तृगोत्रेणनाम्नाचमातुःकुर्यात्सपिंडनम् यत्तुभविष्ये। पितृगोत्रसमुत्पन्न
नकुर्याद्भर्तृगोत्रतइति। तदासुरादिविवाहोढापरं। आसुरादिविवाहेषुपितृगोत्रेणधर्मवि
दितिवृहच्छातातपोक्तेः। तच्चानेकपक्षेषुपितामह्यापत्न्यामातामहेनवाराहोक्तेः। तत्रव्य
वस्थोक्ता। भविष्ये॥ जीवत्पितापितामह्यामातुःकुर्यात्सपिंडनं पितरिभ्रियमाणेतुतेनैवान्य
रेतेसति। ग्रंथः॥ मातुःसपिंडीकरणंकथंकार्यंभवेत्सुतैः। पितामह्यादिभिःसार्धंसपिंडी

करणंस्मृतं। येनकेनापिमातुःसापिंड्येपुत्रान्वष्टकादौमातुः॥श्राद्धंपृथगुक्तं तत्रपितामह्यासहका
र्यंनांदीमुखाष्टकाश्राद्धेगयायांचमृतेहनि। पितामह्यादिभिःसार्द्धंमातुःश्राद्धंसमाचरेदिति
शातातपोक्तेः। अपुत्रायास्तुपैठीनसिः। अपुत्रायांमृतायांतुपतिःकुर्यात्सपिंडनं। श्वश्र्वादिभिः
सहैवास्याःसपिंडीकरणंभवेत्॥ यत्तुलघुहारीतः॥ पुत्रेणैवतुकर्तव्यंसपिंडीकरणंस्त्रियाः।
पुत्रहीनस्यपुनस्त्वन्येभ्रातृपुत्रादयोपिचेति॥ यच्चमार्कंडेयपुराणे॥ सपिंडीकरणंस्त्रीणांपुत्रा
भावेनविद्यतेइति। तत्पुत्रपत्यभावेज्ञेयं। अत्रसपत्नीपुत्रोपिज्ञेयः। बह्वीनामेकपत्नीनामे
काचेत्पुत्रिणीभवेत्। सर्वास्तास्तेनपुत्रेणप्राहपुत्रवतीर्मनुरितिमनूक्तेरेतत्परत्वात्॥ यत्तुशा
तातपः॥ मृतेपितरिमातुस्तुनचकार्यासपिंडता। पितुरेवसपिंडस्थैतस्यास्त्वपिकृतंभवेदिति
तद्दशाहपरं। केषांचिद्व्याप्तमितिहेमाद्रिः॥ अन्वारोहणेतुभर्त्रैवसापिंड्यं। एतामनुगतानां
पुंसातेनसहपिंडताम्॥ अर्हतिस्वर्गवासंचयावदाभूतसंप्लवमितिशातातपोक्तेः। पत्याचैके
नकर्तव्यंसपिंडीकरणंस्त्रियाः। सामृतापिहितेनैक्यंगतामंत्राहुतिव्रतैरितियमोक्तेश्च। अ
त्रैकशब्दःपितामह्यादिपक्षनिवृत्त्यर्थः। पतिपरंवर्गपरं। सपिंडनस्यपार्वणैकोद्दिष्टरूप
त्वादितिमाधवः। कल्पतरुमदनरत्नादयः। अन्येतुनैवेकेनाहुः। स्वेनभर्त्रासहैवास्याःसपिंडी
करणंभवेदित्येवकारश्रवणात्। पृथ्वीचंद्रोदयेपिविकल्पउक्तः इदंतुतत्त्वं। यत्तुहेमाद्र्यादि
मतेद्वयोरेकःपिंडीतद्वर्गेणसह यत्तुमाधवपृथ्वीचंद्रादिमतेपृथक्पिंडस्तदेकेनपत्यैव
वचनाच्चैकेनापि। अतोमातृपिंडमसपिंडीकृतेनैवपतिपिंडेनसंयोज्यैकाकृतपिंडद्वयंतत्पि
त्रादिभिःसंयोजयेत्। अंत्यपक्षएवयुक्तः। इत्यर्थसारे। अन्वारोहणेनेकदिनमरणेस्त्रियाः
सपिंडनंनास्तिभर्तुःकृतेस्त्रियाअपिकृतंभवतीत्युक्तेस्तन्मतांतरमस्तु। इदंब्राह्म्यादिविवाहेषु
ज्ञेयं। आसुरादिषुतुशातातपः। तन्मात्रातत्पितामह्यातत्पश्चाद्वासपिंडनं आसुरादिविवा
हेषुविप्रान्ततायापित्राभवेत्। मातामह्यामातुःपितामह्यातत्पितामह्यावेत्यर्थः। सुमंतुः॥
पितापितामहेयोज्यःपूर्णेसंवत्सरेसुतैः। मातामातामहेतद्वदित्याहभगवाञ्छिवः। इदमा
सुरादिपरं। पुत्रिकापुत्रपरंचेत्युक्तंप्राक्। हेमाद्रिस्तु ब्राह्म्यादिष्वपिसर्वत्रदेशभेदाद्विकल्प
माह। अतएवगुर्जरेषुकोकिलमतानुसारिणांमातृमातामहमातामहाइतिश्राद्धप्रयो
गःसपिंडनंचदृश्यते। हेमाद्रावापस्तंबोपि॥ कोकिलस्ययथापुत्राअन्यसंचयजीवितः
पुष्टास्तेस्वकुलंयांतिएवंनारीमृतासती। यदपिविज्ञानेश्वरेणमातामहेनमातुःसापिंड्ये
पितृश्राद्धवन्मातृश्राद्धंनित्यमित्याह। यच्चवृद्धिश्राद्धेछंदोगपरिशिष्टेषड्भ्यःपितृभ्य
स्तदनुश्राद्धदानमुपक्रमेदिति। तद्विषयमेवमातुःपृथक्श्राद्धाभावात्। अतएवहेमाद्रौ
भविष्ये। मातुःसपिंडनंप्रक्रम्यउद्दिनेतुदिनेचैवहोमभेदोयथाभवेत्। तथाकुलक्रमा
यातमाचारंचाचरेद्बुधइत्युक्तं। अस्यवृद्धावपवादमाह। तत्रैवव्याघ्रपादः। कुर्यान्मातामह
हश्राद्धंसर्वदामातृश्चैवकं। विधिज्ञविधिमास्थायपरश्चौमातामहादितः। केचिदेतत्पु
त्रिकापुत्रपरमाहुः। पत्युःसापिंड्यमाह। लौगाक्षिः॥ सर्वाभावेस्वयंपत्न्यःस्वभर्तॄणाम

नधिकारीत्यर्थः। गृहस्थः सपिंडोपीत्यर्थः। अतएव येन कर्मारप्यनिवर्तेत्तेचरेन्नाभ्युदयक्रियां। आच
तुर्थात्तनः पुंसि पंचमे शुभदं भवेदिति ज्योतिषे उक्तं माधवीये देवलः। प्रमीतौ पितरौ यस्य देहस्तस्या
शुचिर्भवेत्। नदैवं नापि वा पित्र्यं यावत्पूर्णो न वत्सरः इदं वर्षांत सपिंडनपरं तथैव कार्यं यत्कर्मैव
सरास्यथमादते। इति लघुहारीताद्येकवाक्यत्वात्। वृद्धिनिमित्तापकर्षेतु वर्षमध्येपि॥ काम्यादि
भवत्येवेति गौडाः। पित्र्यं सपिंडनं। अतएव लौगाक्षिः॥ अन्येषां येन कार्यां बंधकत्वात्। आद्यं
श्राद्धमशुद्धोपि कुर्यादेकादशेहनीत्युक्तेश्च। एकं सपिंडनं पत्न्यादेरत्यपवादः। माधवीये ऋष्यशृंगः
पत्न्याः पुत्रस्य नप्तुश्च भ्रातृतत्तनयस्य च॥ स्नुषायास्तत्सुतस्यापि पित्रोश्च संयात मरणं यदि। अर्वागब्दात्
मातृपितृपूर्वं सापिंड्यमाचरेत्। लौगाक्षिः॥ पत्नी पुत्रस्तथा पौत्रो भ्राता तत्पुत्रकावपि। पितरौ च य
द्येकस्मिन्म्रियेरन्वा सरेतदा। आद्यमेकादशे कुर्यात्रिपक्षे तु सपिंडनं। यत्तु निबंधे। महागुरुनि
पाते तु येन कार्यं यथाविधिः। कुर्यात्संवत्सरादर्वागेकोद्दिष्टं न पार्वणं। भृगुः॥ माता चैव तथा
भ्राता भार्या पुत्रस्तथा स्नुषा। एषां मृतौ चरेच्छ्राद्धमन्यस्य न पुनः पितुः॥ एतदपि सपिंडनपरं।
पितुर्मृतावन्यस्य श्राद्धं न चरेदित्यर्थः। शुद्धितत्वे श्राद्धकौमुद्यां च देवलः॥ अन्यश्राद्धं परान्नं च
गंधमाल्यं च मैथुनं। वर्जयेद्गुरुपाते तु यावत्पूर्णो न वत्सरः। पारस्करभाष्ये बृहस्पतिः॥ पितुर्युपर
ते पुत्रो मातुः श्राद्धान्निवर्तते। मातर्यपि च वृत्तायां पितुः श्राद्धादृते सदा। समं पितरं विनान्यश्राद्धं
नेत्यर्थः। शुद्धितत्वे देवलः। महागुरुनिपाते तु कामं किंचिन्न चाचरेत्। आर्त्विज्यं ब्रह्मचर्यं च
देवपूजाक्रियां तथा एतत्सपिंड नात्प्रागिति केचित्। केचित्तु पित्रोरब्दमशौचं स्यात् षण्मासं मा
तुरेव च। त्रैमासिकं तु भार्यायास्तदर्धं भ्रातृपुत्रयोरिति स्मृतेः। सपत्नमातुरप्यर्धमाहुः। श्राद्धकौ
मुदीकारस्तु। द्वयोरेव महागुर्वोरब्दमेकमशौचकं। नान्यासामधिकाशौचं स्वजातिविहिता कि
लेति। समूहज्वात्कुर्यापविरोधान्निर्मूलमाह। हेमाद्रौ भविष्ये। गयाश्राद्धं मृतानां तु पूर्णे संवत्प्र
शस्यते त्रिस्थलीसेतौ गारुडे। तीर्थश्राद्धं गयाश्राद्धं श्राद्धमन्यच्च पैतृकं। अब्दमध्ये न कुर्वीत म
हागुरुविपत्तिषु। इदं चार्थं सपिंडनाभावे। वृद्ध्या सपिंडनापकर्षे त्वब्दमध्ये दर्शादिकार्यमेव। पितुः
सपिंडनं कृत्वा कुर्यान्मासानुमासिकमिति छंदोगपरिशिष्टात्। सपिंडीकरणादूर्ध्वं प्रेतः पार्वण
भुग्भवेदिति मात्स्यात्। ततः प्रभृति वै प्रेतः पितृसामान्यमश्नुते। विंदते पितृलोकं च ततः श्राद्धं
प्रवर्तते इति हारीताच्चेति शूलपाणिः॥ यत्तु कात्यीयं सपिंडीकरणादूर्ध्वं न दद्यान्मासिकं।
एकोद्दिष्टविधानेन दद्यादित्याह शौनक इति तत्रैकोद्दिष्टविधिना न दद्यादित्यन्वयः। तृतीयपादेन
पार्वणे विकल्प उक्तः। अत्रेदं तत्वं। वृद्धिं विनार्वागपि सपिंडनापकर्षे पितृत्वप्राप्तौ वर्षांत एव
कृते सपिंडीकरणे नरः संवत्सरात्परं। प्रेतदेहं परित्यज्य भोगदेहं प्रपद्यत इति विष्णुधर्मोक्तेः।
अर्वाक्संवत्सराद्यस्य सपिंडीकरणं भवेत्। प्रेतत्वमपि तस्यापि विज्ञेयं वत्सरं नृपेत्यग्निपुराणा
च्च। तेन तत्काले पितृद्वितैव विश्वेषामनधिकारः वृद्धिनिमित्तेत्वनंतरमेव। अर्वाक्संवत्सराद्वृद्धौ
पूर्णे संवत्सरेपि वा। ये सपिंडीकृतास्तेषां न तेषां पृथक् क्रियेति। शातातपोक्तेः तथैव काम्य
मिति हेमाद्रिश्च हारीतोदिवशाच्चैवमिति। तथा। अस्थिक्षेपं गयाश्राद्धं श्राद्धं चापरपक्षिकं।

प्रथमेऽब्दे न कुर्वीत कृते पितुः सपिंडने। अस्यापवादः। अस्थिक्षेपं गयाश्राद्धं श्राद्धं चापरपाक्षिकं। प्रथ-
मेऽब्देऽपि कुर्वीत यदि स्याद्भक्तिमान्सुतः। भक्त्याप्याहृतद्वानिर्तिमदनपारिजाते स्थः। अन्येत्वे-
वाशुनमाहुः। तत्वं तु यदीदं समूलं तदा वृद्धिविनायकर्षपूर्वं। रघार्थेनुपरमिति योज्यं पतितानां
गयायां विशेषो नाहे॥ क्रियते पतितानां च गते संवत्सरे क्वचित्। देशधर्मप्रमाणत्वाद्गयाश्राद्धं
स्वबंधुभिः॥ ॥अथ विधानानि॥ तत्र पंचकमृते मदनरत्ने गारुडे।
आदौ कृत्वा धनिष्ठार्धमेतन्नक्षत्रपंचके। रेवत्यंते सदा दुष्यमशुभं दाहकर्मणि। शवस्य तु समी-
पे तु क्षेप्तव्याः पुत्तलास्तदा। दर्भमय्यास्तु चत्वार ऋक्षमंत्राभिमंत्रिताः। ततो दाहः प्रकर्तव्यस्तैश्च
पुत्तलकैः सह। सूतकांते ततः पुत्रैः कार्यं शांतिकपौष्टिकं। पंचकेषु मृतो योऽपि न गतिं लभते नरः।
तिलांश्चैव हिरण्यं च तमुद्दिश्य घृतं ददेत्। क्रियानिबंधे भाजनोपानहौ छत्रं हेममुद्रां च वासांसि
दक्षिणा दीयते विप्रे सर्वपातकमोचनी। मदनरत्ने गार्ग्यः। यदि भद्रा तिथीनां स्यात्तत्र भौमश-
नैश्चरे। त्रिपादर्क्षेऽत्र संयोगो द्वयो योगे हि पुष्करः। द्वित्रिपुष्करयोगे तु मृतिर्मृत्यंतरं बहु। दहने
मरणे चैव त्रिगुणं स्यात्त्रिपुष्करे। खननेऽप्येवमेव स्याद्दत्तदोषोपशांतये तिलपिष्टैर्यवैर्वापि शरी-
रं कारयेत्ततः। शूर्पे निधाय पालकं तद्दाहयेत् येन पारिपेत्रित द्दाहे मंत्रमाह बौधायनः। अस्मात्त्व-
मिति मंत्रेण तिलपिष्टमद्दाहयेत्। द्वित्रिपुष्करयोर्दोषस्त्रिभिः कृच्छ्रैर्व्यपोहति। यास्वेव मरणं
चेत्स्याद्गृहे वा विधुनर्मृतिः। सुवर्णं दक्षिणां दद्यात्कांस्यवस्त्रमयापि वा। वासवं धनिष्ठा। ब्राह्मे॥
कुंभमीनस्थिते चंद्रे मरणं यस्य जायते। न तस्योर्ध्वगतिर्दृष्टा संततौ न शुभं भवेत्। ततस्य दाहक-
र्तृणो विनाशात् स्वेषु जंतुषु। अथवा तद्दिने कार्यो दाहस्तु विधिपूर्वकं। धनिष्ठापंचके जीवो
मृतो यदि कथंचन। त्रिपुष्करे याम्यभे वा कुलजान्मारयेद्ध्रुवं। तत्रानिष्टविनाशार्थं विधानं समु-
दीर्यते। दर्भाणां प्रतिमा कार्याः पंचोर्णासूत्रवेष्टिताः। यवपिष्टेनानुलिप्तास्ताभिः सह शवं द-
हेत्। प्रेतवाहः प्रेतसखः प्रेतपः प्रेतभूमिपः। प्रेतहर्ता पंचमस्तु नामान्येतानि चक्रमात्॥ प्र-
प्रतिमाः गंधपुष्पैः पूजयित्वा। प्रथमां शिरसि द्वितीयां नेत्रयोः तृतीयां वामकुक्षौ चतुर्थीं ना-
भौ पंचमीं पादयोर्न्यस्य तदुपरि नामभिर्घृतं हुत्वा यमाय सोमं त्र्यंबकमिति मंत्राभ्यां प्रत्येकता
म्नाज्यं हुनेदिति भट्टाः। सूतकांते ततः पुत्रैः कुर्याच्छांतिकपौष्टिके। कांस्यपात्रस्थितं तैलं वी-
क्ष्य दद्याद्द्विजन्मने। ब्रह्मविष्णुमहेशेंद्रवरुणमीयते ततः। मासमुद्गयवव्रीहिप्रियंग्वादि शप-
च्छुतिः। स्वर्णदानं रुद्रजाप्यं तत्सहोमो द्विजार्चनं। गोभूदानं षडशीतकुर्याद्दोषोपशांतये॥ अप-
रार्के। धनिष्ठापंचकमृते पवित्राणि तत्सुखे। भाषाहुनिरूप यत्तत्र हुते हवनपानिति। ततो नि-
र्हरणं कुर्यादेषसाग्नेर्विधिः स्मृतः। इतरं निखनेद्देव जले वा प्रतिपादयेत्। त्रिपादर्क्षे मृतेन हृद्धि-
रण्यं शाकलं सुखे। तस्य पिष्टमयं कुर्यात् पुरुषं त्रितयं ततः। होमयेन्नियुक्तरूपां तथा वहवपा-
मिति। कार्यो वहंचकार्यो संक्रामुभं गतिप्राप्य च। निर्वाप्य सभिसंस्कुर्यात्तच्छवमग्नो वाऽयथावत्स-
जेत्। तत्रैव। कनकहीरकनीलपद्मरागमौक्तिकं। पंचरत्नमिदं प्रोक्तं ऋषिभिः पूर्वदर्शिभिः।
रत्नानां चाप्यभावे तु स्वर्णे वा प्रोक्तमेव वा। सुवर्णस्याप्यभावे तु आज्यं गेयं विचक्षणैः। मदन-

तेप्येवं। तथा। एकादशपलं कांस्यं तदर्द्धं वा तदर्द्धकं। नवषट्त्रिपलं वापि दद्याद्विप्राय शक्तितः
तथान्यत्र॥ स्वगृह्योक्तविधानेन कृत्वाग्नेः स्थापनं ततः। अन्वाधानं निर्वपणं देवतानां तथाहुतिः
यमाय धर्मराजाय मृत्यवे चांतकाय च। वैवस्वताय कालाय सर्वभूतक्षयाय च। औदुंबराय दध्ना
यनीलाय परमेष्ठिने। वृकोदराय चित्राय चित्रगुप्ताय वै क्रमात्। विधिना वपनं कृत्वा एकैकामा
हुतिं हुनेत्। कृष्णां गां कृष्णवस्त्रं च हेमनिष्कसमन्वितां। दद्याद्विप्राय शांताय प्रीतो भवतु मे यमः
त्रिपादृक्षेप्येतदेव श्रवणे। पुनर्वसूत्तराषाढाकृत्तिकोत्तरफाल्गुनि। पूर्वाभाद्रविशाखा च ज्ञेय
मेतत्त्रिपादभं। मयूरचित्रे गर्गः॥ मृतः श्मशानं यो नीत उपजीवति मानवः। गृहे यस्य प्रविष्टः सोऽति
ष्ठेद्यः कदाचन। अचिरान्मृत्युमायाति हृतदारपरिग्रहः। तत्र शांतिं प्रवक्ष्यामि धर्मराजमतं यथा
सक्षीराणां घृताक्तानामग्नेर्हुत्वा सुखं व्रजेत्। औदुंबरीणां विधिवत्ततः शांतिकृता भवेत्। सावि
त्र्यष्टसहस्रेण क्षीरशांतिं च कारयेत्। कपिलां तिलकांस्यं च दत्वा तेभ्यः शुद्धिरिति॥

॥ ॥अथ ब्रह्मचारिमृतौ॥ शौनकः॥ ब्रह्मचारिमृतौ रीतिं कथयामि
समासतः। तत्रावकीर्णदोषस्य प्रायश्चित्तप्रशांतये। द्वादशाब्दं वाप्यब्दं वा यथाशक्त्या समाचरेत्।
स्नातको ब्रह्मचारी च निधनं प्राप्नुयाद्यदि। संयोज्य चार्कविधिना संयोज्यौ तौ ततः परं। देशकालौ
स्मृत्वामुकगोत्रामुकनाम्नो मृतस्य ब्रह्मचारिणो व्रतविसर्गं करिष्ये। इत्युक्त्वा हेम्ना नांदीश्राद्धं कृ
त्वा स्थंडिलप्रतिष्ठाप्याधारांते च तस्य व्याहृतिभिरग्नये व्रतपतये व्रतानुष्ठानकाफलसंपादना
य विश्वेभ्यो देवेभ्यश्चाज्यं हुत्वा स्विष्टकृदादिसमाप्य पुनर्देशकालौ स्मृत्वार्कविवाहं करिष्ये इ
त्युक्त्वा हेम्ना नांदीश्राद्धं कृत्वार्कशाखां शवं च हरिद्रया लिप्त्वा पीतसूत्रेण वस्त्रयुग्मेन चावेष्ट्या
ग्निं प्रतिष्ठाप्याधारांते अग्नये बृहस्पतये विवाहविधियोजकाय च। यस्मै त्वा कामकामायेति का
माय स्वाहेत्येवं च तत्र आज्याहुतिर्हुत्वा व्यस्ताभिः समस्ताभिर्व्याहृतिभिश्चाज्यं हुत्वा स्विष्टकृदादिस
माप्यार्कशाखां शवं च दहेत्। विधानमालायां॥ येषां कुले ब्रह्मचारी निधनं प्राप्नुयाद्यदि॥ तत्
कुलं क्षयमाप्नोति सोपि दुर्गतिमाप्नुयात्॥ मृतस्य त्रिप्रमानस्य षडब्दं व्रतमाचरेत्। त्रिंशच्च ब्र
ह्मचारिभ्यो दद्यात्कौपीनकान्भवान्। दलपात्राः करीमात्राद्यात्कृष्णाजिनानि च। पादुकाछत्र
मालानि गोपीचंदनमेव च। मणिप्रवालमालाश्च भूषणादि समर्पयेत्। एवं कृते विधाने च विप्रः
कोपि न तापयेत्। अत्र मूलं मृग्यं॥ ॥ कुष्ठीमृतौ पद्मः॥ मृतस्य कुष्ठिनो देहं निख
नेद्दोषभूमिषु। वासरं त्रितयं पश्चाद्दह्यान्यत्तं रहेत्॥ न गंगाप्लवनं कार्यं निक्षेपविधिरुच्यते।
षडब्दव्रतपूर्णेन विधिनांते कृतुचोरत्। ततोऽस्थिसंचयं तस्य गंगायां वा क्षिपेत्सुधीः। षाण्मासि
ततः कुर्यान्मासिश्राद्धानि पावनान्। संकल्पविधिना केचिन्मन्वते नियमनोषिणः। इत्येतत्कुष्ठि
मरणे कथितं शास्त्रकोविदैः। शुद्धिस्त्वेवं भविष्ये॥ शृणु कुष्ठगणं विप्र उत्तरोत्तरतो गुरुं।
विचर्चिका तु दद्रुश्च श्वेतचर्चरीयस्तु तीयकः। विकर्षं गलितश्चोत्तरकस्त्वेतत्स्याष्टकमित्युक्त्वा
मृते च प्राप्ये तीर्थमथवा तत्र मूलकं। न पिंडोदकं कार्यं न च दानक्रियां चरेत्। वरणासीपुरे
मासीय पूतः कुष्ठी कदाचन। यदि तेहाचारे दाहं प्रतिश्राद्धं पणं चरेत्। अकृतप्रायश्चित्तदु

स्यादिदाहे प्रायश्चित्तं। अतएव कुनख्यादिवत्कुष्ठिनोपि द्वादशरात्रं शूलपाणिनोक्तं। अतएवान्यदीयकुष्ठिनो मरणांतमाशौचमुक्तं कौर्मे॥ क्रियाहीनस्य मूर्खस्य महारोगिण एव च। यथेष्टाचरणास्याहुर्मरणांतमशौचकं॥ महारोगास्तु॥ वातव्याध्यश्मरीकुष्ठमेहोदरभगंदराः। अर्शांसि ग्रहण्यित्यष्टौ महारोगाः प्रकीर्तिताः॥ इति॥ रजस्वलायास्तु शातातपः॥ रजस्वलायाः प्रेतायाः संस्कारादीनि नाचरेत्। ऊर्ध्वं त्रिरात्रात्स्नातां तां शवधर्मेण दाहयेत्। अतः प्रक्षाल्य काष्ठवद्धा नत्र्यहोर्ध्वं दहेत्। संकेते तु मदनरत्ने स्मृत्यंतरे॥ उदक्या सूतिका वापि मृता स्याद्यदि तां तदा। आशौचे त्वतिक्रांते दाहयेदंतरापदि। उद्धृतेन तु तोयेन स्नापयित्वा तु मंत्रतः। आपोहिष्ठेति तिसृभिर्हिरण्यवर्णाश्चतसृभिः पवमानानुवाकेन यदंतीति च सप्तभिः। ततः पंचपवित्रेण गोमूत्रेण यवा द्विजाः। स्नापयित्वान्यवसनेनाच्छाद्य शवधर्मतः। दाहादिकं ततः कुर्यात्प्रजापतिवचो यथा। पंचपवित्रमापोऽस्मानिति मिताक्षरायाम्। पंचभिः स्नापयित्वा तु गव्यैः प्रेतां रजस्वलां वस्त्रांतरावृतां कृत्वा दाहयेद्विधिपूर्वकं। गृह्यकारिकायां॥ अंतरिक्षमृतायेच वन्हावस्तुमनादतः॥ उदक्यासूतिकानारीचेद्वांडापरात्रपा। ततो यवपिष्टेनालिप्याष्टोत्तरशतघटोदकैः संस्नाप्य भस्मगोमयमृत्कुशोदकपंचगव्यैः शुद्धोदकैरापोहिष्ठापावमानीभिः संस्नाप्यान्यवस्त्रे घृते दहेदिति भट्टाः॥ अत्र प्रायश्चित्तमाह बौधायनः॥ उदक्यासूतिकान्यौ चेद्वांडापरात्रपमिति सूतिकायास्तु। मिताक्षरायां॥ सूतिकायां शतादानं कुर्यादूर्ध्वमिति याज्ञिकाः॥ कुंभे सलिलमादाय पंचगव्यं क्षिपेत्ततः। पुण्याभिरभिमंत्र्यापो वाचा शुद्धिं लभेत्ततः। तेनैव स्नापयित्वा तु दाहं कुर्याद्यथाविधि। अब्लिंगाभिर्मंत्रिताभिर्वामदेव्याभिरेव च। अन्ये त्ववाहरणमंत्रैः संस्नाप्य विधिना दहेत्। गृह्यकारिकायां॥ सूतिकामरणे प्राप्ते सर्वौषध्यनुलेपनं। अक्षतकीनुसंस्पृष्टः शूर्पेणानुशतं क्षिपेत्। प्रायश्चित्तविशेषस्तत्रैव। सूतिका तु यदा साध्वी विस्नाता मरणं गता। त्रिवर्षकृच्छ्रं पर्यंतं शुध्येन्न कृच्छ्रेण सर्वदा। इदं द्वितीयमहे। सूतिका तु यदा साध्वी विस्नाता मरणं गता। त्रिघटेनव द्विनादर्वाग्गोकादेन विशुध्यति। ऊर्ध्वं तु॥ सूतिका तु यदा नारी प्राणांश्चैव परित्यजेत्। मासमेकावधि यावत्त्रिभिः कृच्छ्रैर्विशुध्यति। गर्भिणीमृतौ तु मदनरत्ने शौनकः॥ गर्भिण्युदक्या संस्कारं शिशुसंस्कारमेव च प्रवक्ष्यामि समासेन शौनकोहं द्विजन्मनां। गर्भिणीमरणे प्राप्ते गोमूत्रेण जलैः सह आपोहिष्ठादिभिर्मंत्रैः प्रोक्ष्य भर्ता समाहितः। प्रेतं श्मशाने नीत्वाथोल्लिख्य सव्योदरं ततः पुत्रमादाय जीवश्चेत्तं नदत्वा सुतायतु। मृते तं च शाययेत्तस्या वामे निधाय च। उदरं चाव्रणं कुर्यात् पृषदाज्येन पूर्ववत्। मृद्दर्भकुशगोमूत्रैरापोहिष्ठादिभिस्त्रिभिः स्नाप्य चाच्छाद्य वासोभिः स्वधर्मेण दाहयेत्। तत्रैव षडशीतिमते। गर्भानिर्गर्भिण्यां मृतायां दक्षिणां शिरस्संनिधाय तस्या नाभिमानस्य मुद्रं तु तनुरंगुलं हिरण्यगर्भः समवर्ततेति छित्वा गर्भश्चेद्दशमासान्न तत्स्यास्निखनेत्। यदि जीवति तं मम पुत्रकेत्युक्त्वा। क्षेत्रियैवेति पंचभिः स्नापयित्वा हिरण्मयंतर्भोपभ्रमौ निधायाप्याहुतिभिरभिमंत्र्य पलेलनःशपरनिस्तनं पाययित्वा शिशुं मामं मापयेद्दर्भच्छेदस्थले शनाप्रभायेति पंचाहुतीर्हुत्वा मारणाय स्वाहा इमं स्वाहे

